॥ श्रीः ॥

श्रीमद्-

धर्मराजाध्वरीन्द्र-

विरचिता

# वेदान्तपरिभाषा

यादवपुर-विश्वविद्यालय-

दर्शनशास्त्राध्यापकेन

पण्डित-

श्रीपञ्चानन-भट्टाचार्य-शास्त्रिणा

विरचितया

परिभाषा-संग्रहाख्यया

व्याख्यया

सहिता

No. 112

आगमानुसन्धान-समिति-सम्पादक-

वदान्यवर-

श्रीयुक्त-विभुपद-घोष-

महाशयस्यार्थानुकूल्येन

श्रीपञ्चानन-भट्टाचार्य-शास्त्रिणा

सम्पादिता

त्र्यशीत्युत्तराष्टादशशत-शाकाब्दे

प्रकाशिता

मूल्यम् ६ षड् रूप्यकम्

—:: प्राप्तिस्थानम् ::—

आगमानुसन्धान-समिति
७/ए, चालतावागान लेन,
कलिकाता-६

चौखम्बा संस्कृत सीरिज् आफिस
पोस्ट वक्स नं०-८
वाराणसी-१

चौखम्बा विद्याभवन
चौक, पोस्ट वक्स नं०-६९
वाराणसी-१

संस्कृत पुस्तक भाण्डार
३८, कर्णवोयालिस् ष्ट्रीट्,
कलिकाता-६

संस्कृत बुक डिपो
१८/१, कर्णवोयालिस् ष्ट्रीट्,
कलिकाता-६

सर्वस्वत्वं सुरक्षितम्

ग्रन्थप्रकाशक-
श्रीसतीनाथ-भट्टाचार्यः
९, राजकृष्ण लेन,
कलिकाता-६

मुद्रणी-मुद्रक-
श्रीकार्त्तिक चन्द्र पण्डा
७१नं, कैलास वोस् ष्ट्रीट्,
कलिकाता-६

## अवतरणिका

अथ विदितमेवैतदधीत-साङ्ग-स्वाध्यायानां वेदान्तजनितापात-प्रतिपत्तिकानामात्मज्ञानं मोक्षसाधनमिति। तच्चात्मज्ञानं वेदान्तविचाररूप-श्रवणादिसाध्यम्। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति हि श्रुतिरात्मसाक्षात्कारमनूद्य श्रवणादिकं विदधतीममेवार्थं बोधयति। अथातो ब्रह्मजिज्ञासेति सूत्रं प्रणयन् भगवान् बादरायणोऽप्येनमेवार्थमनुवदति। स्मृतिरपि—श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः॥ इति। सोऽयं श्रवणादिरूपो वेदान्तविचारः प्रमेय-प्रयोजनावधारणमपेक्षते। न हि प्रमेय-प्रयोजनाभ्यामृते कस्यचिद् विचारेषु प्रवृत्तिरवकल्पते। अत एवोक्तं भट्टैः—ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥ इति। तच्च प्रमेय-प्रयोजन-परिज्ञानं प्रमाणायत्तमिति प्रमाण-प्रमेय-प्रयोजनान्यादौ यत्नतो ज्ञातव्यानि।

यद्यप्यतिवितत-गहनगम्भीरेषु सूत्र-भाष्य-तद्व्याख्यानेषु बहुविधेषु च प्रकरणग्रन्थेषु वेदान्तानुमतानि प्रमाण-प्रमेय-प्रयोजनान्युपनिबद्धानि, तथापि मन्दमतीनां तेभ्यस्तद्-ग्रहणं नैव सुकरम्, तेष्विदं प्रमाणमिदं प्रमेयमिदञ्च प्रयोजनमिति स्पष्टोल्लेखादर्शनात्। अतः सर्वतन्त्रस्वतन्त्रेण श्रीमद्धर्मराजाध्वरीन्द्रेण प्रमाण-प्रमेय-प्रयोजन-प्रदर्शनपरं **वेदान्तपरिभाषा**-नामधेयं प्रकरणमेकं विरचितम्। यत् स्वीयाशेष-सद्गुणैरुपस्कृतं व्याख्यानोपव्याख्यानैरुपोद्बलितं सर्वतो लब्धप्रतिष्ठं विजयते।

अस्य खलु प्रकरणस्याष्टौ परिच्छेदाः। तत्र परिच्छेद-षट्केषु प्रमाणषट्कं सप्तमे वेदान्तप्रमाण-प्रमेयं जीवब्रह्मैक्यमष्टमे च तदवधारणफलं सपरिकरं मोक्षं निरूपयद्भिरेतैर्ग्रन्थकारैः सूत्रभाष्याद्यर्थबोधेष्वस्माकं महत्साहायकमेवाचरितम्। अत एव युक्तमुक्तं तैः—तेन बोधाय मन्दानां वेदान्तार्थावलम्बिनीति।

भगवत्पादीय-सूत्रभाष्ये शुद्धाद्वैतोपपादकानि प्रस्थानघटकानि त्रीणि व्याख्यानान्युपलभ्यन्ते। तत्रैकं **पञ्चपादिका**नामधेयं भगवच्छङ्करशिष्येण श्रीमत्पद्मपादाचार्येण प्रणीतम्। द्वितीयं **भामत्य**भिधेयं सुराचार्यावतारेण षड्दर्शन-टीकाकृद्वाचस्पतिमिश्रेण रचितम्। तृतीयमनवद्यपद्यमयं **संक्षेपशारीरकं** भगवत्सर्वज्ञात्ममुनिविरचितम्। तदेतद् व्याख्यानत्रयं स्वमाहात्म्येन चतुर-चेतसां चेतसि चमत्कारमाविष्कुर्वदद्यत्वेऽपि लोकानामाश्चर्यभावमातनोति।

तत्र पञ्चपादिकायां यान्यसाधारणानि वेदान्त-प्रमेयाणि निगूढ़तयोपनिबद्धानि, तेषां तद्व्याख्याने विवरणे स्पष्टं प्रकाशनात् पञ्चपादिकातो विवरणस्यैव प्रसिद्धिः समधिकेति वेदान्तेषु त्रीणि प्रस्थानानि प्रसिद्धानि विवरण-प्रस्थानं भामतीप्रस्थानं संक्षेप-शारीरक-प्रस्थानञ्चेति। तान्येतानि व्याख्योपव्याख्याभिः सुसमृद्धान्युपलभ्यन्ते। अन्यानि च यानि भाष्यव्याख्यानान्तराण्युपलभ्यन्ते, तानि तावत् प्रायशो विवरणप्रस्था-नान्तर्भूतानि वेदितव्यानि। यद्यप्येतेषु प्रस्थानत्रयेषु वेदान्तानां परमतात्पर्यविषयीभूते-ऽद्वैते ऐकमत्यमेव परिलक्ष्यते न वैमत्यम्, तथापि तदुपायभूतेषु केषुचित् प्रसिद्धेषु व्यावहारिकप्रमेयेषु वैमत्यमप्यनुभूयते। तथा हि—ब्रह्मविचारस्याध्ययनविधिप्रयुक्तत्वं, कर्मणां विविदिषार्थत्वं, मनस इन्द्रियत्वं, श्रवणस्याविधेयत्वं, श्रवणमननयोर्निदिध्या-सनाङ्गत्वं, जीवस्यान्तःकरणावच्छिन्नत्वमज्ञानाश्रयत्वमज्ञानस्यानेकत्वमुपहितब्रह्मणो वृत्ति-विषयत्वमध्ययनविधेरर्थावबोधफलकत्वं, भूतानां त्रिवृतकृतत्वं, सादृश्यस्याध्यासकारणत्वं, शब्दस्यापरोक्षज्ञानाजनकत्वं, स्वाप्नप्रपञ्चस्य च मनःपरिणामत्वं भामतीकारा इच्छन्ति। विवरणकारास्तु तन्नेति। ते तु ब्रह्मविचारस्य श्रवणविधिविधेयत्वं, कर्मणां विद्यार्थत्वं, मनसोऽनिन्द्रियत्वं, श्रवणस्य विधेयत्वं, मनननिदिध्यासनयोः श्रवणाङ्गत्वं, जीवस्य प्रति-बिम्बत्वं, शुद्धस्याज्ञानाश्रयत्वमज्ञानस्यैकत्वं, शुद्धब्रह्मणो वृत्तिविषयत्वमध्ययनविधेरक्षरग्रह-णार्थत्वं, भौतिकानां पञ्चीकृतत्वं, सादृश्यस्याध्यासाकारणत्वं, शब्दस्यापरोक्षज्ञानजनकत्वं, स्वाप्नप्रपञ्चस्याविद्यापरिणामत्वञ्चाभ्युपगच्छन्ति। भाष्य-टीका-व्याख्यायामितोऽप्यन्यद् वैमत्यमुभयोर्बहुशः परिलक्ष्यते। न चानेन वैमत्येनाद्वैतस्य काचित् क्षतिरातन्यते, उपायभेदेऽप्युपेयस्यैक्यात्। अत एवोक्तं भगवत्सुरेश्वराचार्यैः—

यया यया भवेत् पुंसां व्युत्पत्तिः प्रत्यगात्मनि।
सा सैव प्रक्रियेह स्यात् साध्वी सा चानवस्थितेति॥

तमिमं विवरणप्रस्थानमवलम्ब्य रचितेऽस्मिन् प्रकरणे यद्यपि भामतीमतमपि क्वचित् क्वचिद् दर्शितम्। तथापि तन्मतेषु ग्रन्थकाराणां समादरो नैव लक्ष्यते। मनोऽनिन्द्रियत्व-ज्ञानगतप्रत्यक्षत्व-शाब्दापरोक्षत्व-जीवप्रतिबिम्बत्व-श्रवणविधेयत्वादीनां विशेषतो समर्थनं हि तेषां विवरणपक्षपातित्वं ज्ञापयति। विवरणपक्षपातिनामप्येषां क्वचित् क्वचित् तद्-वैमत्यमप्यनुभूयते। तथा हि—

(१) "बोधलक्षणमेव प्रामाण्य"मित्यष्टमवर्णकवाक्यात् "सर्वप्रमाणानामनधिगतार्थ-

गन्तृत्वादि"ति सप्तमवर्णक-वाक्याच्च विज्ञायते—विवरणकारा अनधिगतार्थविषयकबोधत्वं प्रमात्वमाहुः, परिभाषाकारास्त्वनधिगताबाधितार्थविषयकज्ञानत्वमिति।

(२) निद्रादिदोषसंस्कारोपप्लुतेनान्तःकरणेन मिथ्याध्यासनिमित्तकारणेनावच्छिन्नचैतन्यस्थाऽविद्याशक्तिः पुष्कलनिमित्तकारणसंसर्गादध्यासं प्रति पुष्कलकारणतामापद्यमाना मिथ्यार्थालम्बनाकारेण विवर्त्तत इति विवरण-प्रथमवर्णकवाक्याद् विज्ञायते—विवरणकाराः स्मृतेरप्रमात्वमाहुः, परिभाषाकारास्तु स्मृतेः प्रमात्वमिति।

(३) कोऽयं जीवो नाम? यस्य स्वरूपं त्वंपदेन लक्ष्यमाणं ब्रह्मैव वाक्यार्थः सम्पद्यते। ब्रह्मैवाविद्याप्रतिबिम्बितमिति वदाम इति विवरणनवमवर्णकवाक्याद् विज्ञायते—विवरणकारा अविद्याप्रतिबिम्बितचैतनस्य जीवत्वमाहुः, परिभाषाकारास्त्वन्तःकरणावच्छिन्नचैतन्यस्येति।

(४) प्राणलक्षण क्रियाशक्त्यंशं वा विहाय विज्ञानशक्त्यंशस्य वा लयः कल्प्यतामिति विवरण-प्रथमवर्णकवाक्याद् विज्ञायते—विवरणकारा अन्तःकरणस्य द्वैविध्यमिच्छन्ति, परिभाषाकारास्तु चातुर्विध्यमिति।

(५) शङ्खपीतिमादाविव कारणान्तरं वा कल्पयतीति विवरणप्रथमवर्णकवाक्याद् विज्ञायते—विवरणकारा सादृशस्याध्यासाकारणत्वमिच्छन्ति, परिभाषाकारास्त्वध्यासकारणत्वमिति।

(६) मूलाज्ञानस्यैवावस्थाभेदा रजताद्युपादानानि शुक्तिकादिज्ञानैः सहाध्यासेन निवर्त्तन्त इति विवरणप्रथमवर्णकवाक्याद् विज्ञायते—विवरणकाराः प्रातिभासिकाध्यासानामवस्थाज्ञानकार्यत्वमाहुः, परिभाषाकारास्तु तूलाज्ञानकार्यत्वमिति।

(७) मिथ्यात्वं स्फटिकलौहितस्य क्लृप्तप्रतीतिसत्तयोः कारणाभावादिति विवरणप्रथमवर्णकवाक्याद् विज्ञायते—विवरणकाराः स्फटिकलौहित्यस्यानिर्वचनीयत्वमंगीकुर्वन्ति, परिभाषाकारास्तु सत्यत्वमिति।

(८) ननु लिङ्गज्ञानं व्याप्तिस्मृतिश्च लिङ्गिज्ञानकारणं न संस्कार इति, नेत्याह—संस्कारानुद्बोध इति। ज्ञानद्वय-यौगपद्याभावादित्यर्थ इति विवरण-प्रथमवर्णकवाक्याद् विज्ञायते—विवरणकारा व्याप्तिज्ञानस्यानुमितिकारणतां नेच्छन्ति, परिभाषाकारास्त्वनुमितिकारणत्वमिति।

(९) किं तात्पर्यमर्थप्रमितिहेतुः किं वा प्रतिबन्धनिरासहेतुरित्यादि-विवरणचतुर्थ-

वर्णकवाक्याद् विज्ञायते—विवरणकारास्तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वं नेच्छन्ति, परिभाषाकारास्तु शाब्दबोधहेतुत्वमिति।

**(१०)** ननु ज्ञानाभावविषयोऽयमवभासः, न, अपरोक्षावभासत्वादहं सुखीतिवत्, अभावस्य च षष्ठप्रमाणगोचरत्वादिति विवरणप्रथमवर्णकवाक्याद् विज्ञायते—विवरणकारा अभावज्ञानस्य प्रत्यक्षत्वं नेच्छन्ति, परिभाषाकारास्तु प्रत्यक्षत्वमिति।

एवमन्यान्यपि यानि वैमत्यान्यनुभूतानि, तानि मया टीकायां यथास्थानं दर्शितानि, ग्रन्थभूयस्त्वभयान्नेह प्रदर्श्यन्ते।

कलिकाता-राष्ट्रिय-संस्कृतमहाविद्यालये वेदान्ताध्यापनावसरे छात्राणामनुरोधेनैतद्-ग्रन्थव्याख्यायां प्रवृत्ता अपि कलिकलुषैरुपहता निरुत्साहा ग्रन्थव्याख्याने विरतव्यापारा अपि येषां किल प्रातःस्मरणीयानां पुरुषधौरेयाणां सस्नेहोत्साहेनोपदेशेन च वयं पुनः प्रोत्साहिता ग्रन्थव्याख्याने प्रवृत्तास्तेषामस्मदा**चार्यचरणा**नामकालकालकवलितानां दोषनाशिन्या पवित्रया दृष्टया व्याख्यानमिदं नैव पूतमिति सखेदं विनिवेदयामः। येषां किलादर्शचरितानामाशीर्वादानुकूल्येन बहुविघ्नोपहतमपि व्याख्यानमिदं समाप्तिमाप्तम्, तेषां किलास्मद्**गुरुवर्याणां** तथा सुहृद्वराणां यादवपुरविश्वविद्यालयप्रधानदर्शन-शास्त्राध्यापकानां श्रीमद्-**गोपीनाथ-भट्टाचार्य**-महोदयानां प्राड्विवाकानामस्मत्प्राण-प्रदानां श्रीमद्-**विनायकनाथ-वन्द्योपाध्यायानां** तथा प्रख्यातचिकित्सकानामस्मदेकान्तहितैषिणां श्रीमज्**ज्योतिर्मय-वन्द्योपाध्याय**यानामृणजातं जीवनशतेनापि नैव शोधनीयमिति सविनयं विज्ञापयामः।

येषां किल महाभागानामर्थानुकूल्येन पुस्तकमिदं प्राकाश्यं नीतम्, ते सदाशयाः श्रीमन्तो **विभुपद-घोष**-महोदयाश्चिरं जीवेयुः।

ग्रन्थकर्त्तुर्मुद्रणशोधनं नैवोचितमिति जानतापि सहायरहितेन मया महतावधानेन मुद्रणशोधनं कृतम्, तथाप्यस्माकं दृष्टिदोषेण यन्त्राणां पेषणेन चानुस्वारविसर्गाणामुकारो-कारैकारैकाराणां षकार-पकारादीनां वर्णानां न्यूनातिरेकजा अशुद्धीः संशोध्य निवेद्य चोपकुर्वन्तु सन्त इति साञ्जलिबन्धमर्थयते—

१८८३ शाकाब्दे
महालयायाम्।

विदुषामनुचरः
**श्रीपञ्चानन-भट्टाचार्यः**

# विषयानुक्रमणिका

## प्रत्यक्षपरिच्छेदे—

## अनुमानपरिच्छेदे—



## उपमानपरिच्छेदे—



## आगमपरिच्छेदे—

## अर्थापत्तिपरिच्छेदे—



## अनुपलब्धिपरिच्छेदे—



## विषयपरिच्छेदे—

---

# परिभाषासंग्रहधृत-ग्रन्थानुक्रमणिका

| ग्रन्थः | ग्रन्थकारः | ग्रन्थः | ग्रन्थकारः |
|---|---|---|---|
| अद्वैतदीपिका | नृसिंहाश्रमः | तत्त्वचिन्तामणिः | गंगेशोपाध्यायः |
| अद्वैतरत्नरक्षणम् | मधुसूदनः | तत्त्वशुद्धिः | ज्ञानघनः |
| अद्वैतसिद्धिः | ,, | तन्त्रवार्त्तिकम् | कुमारिलभट्टः |
| आपस्तम्बधर्मसूत्रम् | आपस्तम्बः | तर्कताण्डवम् | व्यासतीर्थः |
| इष्टसिद्धिः | विमुक्तात्मा | तात्पर्यटीका | वाचस्पतिः |
| ऋक्संहिता | | तार्त्तिकरक्षा | वरदराजः |
| कणादसूत्रम् | महर्षि-कणादः | तैत्तिरीयोपनिषत् | |
| कल्पतरुः | अमलानन्दः | निरुक्तम् | यास्कः |
| कल्पतरुपरिमलः | अप्पयदीक्षितः | निरुक्तव्याख्या | दुर्गाचार्यः |
| किरणावली | उदयनाचार्यः | न्यायकन्दली | श्रीधराचार्यः |
| कूर्मपुराणम् | महर्षि-व्यासः | न्यायकुसुमाञ्जलिः | उदयनाचार्यः |
| केवलान्वयीदीधितिः | रघुनाथः | न्यायदर्शनम् | महर्षि-गौतमः |
| कौषीतक्युपनिषत् | | न्यायामृतम् | व्यासतीर्थः |
| खण्डनभूषामणिः | रघुनाथः | न्यायामृतप्रकाशः | श्रीनिवासाचार्यः |
| गूढ़ार्थदीपिका | मधुसूदनः | न्यायरत्नावली | ब्रह्मानन्दः |
| चरकसंहिता | चरकमुनिः | न्यायवार्त्तिकम् | उद्द्योतकरः |
| चित्सुखी | चित्सुखाचार्यः | पञ्चदशी | विद्यारण्यः |
| छान्दोग्योपनिषत् | | पञ्चपादिका | पद्मपादाचार्यः |
| छान्दोग्यभाष्यम् | शङ्कराचार्यः | पराशरसंहिता | पराशरः |
| छान्दोग्यभाष्यटीका | आनन्दपूर्णः | परिशुद्धिप्रकाशः | वर्धमानोपाध्यायः |
| जैमिनिसूत्रम् | महर्षि-जैमिनिः | पाणिनिसूत्रम् | पाणिनिः |
| टुप्टीका | भट्ट-कुमारिलः | प्रत्यभिज्ञाविमर्शिणी | अभिनवगुप्तः |
| तत्त्वकौमुदी | वाचस्पतिः | प्रमाणमाला | आनन्दबोधः |
| तत्त्ववैशारदी | ,, | प्रमाणसमुच्चयः | दिङ्नागः |
| तत्त्वदीपनम् | अखण्डानन्दः | प्रश्नोपनिषत् | |

| ग्रन्थः | ग्रन्थकारः | ग्रन्थः | ग्रन्थकारः |
|---|---|---|---|
| प्रश्नोपनिषद्भाष्यम् | शंकराचार्यः | योगसूत्रम् | पतञ्जलिः |
| बिन्दुसन्दीपनम् | | रामायणम् | वाल्मिकी |
| बृहदारण्यकभाष्य-वार्त्तिकम् | सुरेश्वराचार्यः | लघुचन्द्रिका | ब्रह्मानन्दः |
| | | वाक्यपदीयम् | भर्तृहरिः |
| ब्रह्मसिद्धिः | मण्डनाचार्यः | वार्त्तिकसूत्रम् | कात्यायनः |
| ब्रह्मसूत्रम् | बादरायणः | विवरणम् | स्वप्रकाशानुभवः |
| ब्रह्मसूत्रभाष्यम् | शंकराचार्यः | विवरणप्रमेयसंग्रहः | विद्यारण्यः |
| भगवद्गीता | महर्षि-व्यासः | विवरणभावप्रकाशिका | नृसिंहाश्रमः |
| भामती | वाचस्पतिः | विष्णुपुराणम् | महर्षिव्यासः |
| भाष्यवार्त्तिकम् | नारायणसरस्वती | विष्णुसंहिता | विष्णुः |
| भेदधिक्कारः | नृसिंहाश्रमः | शब्दशक्तिप्रकाशिका | जगदीशः |
| मत्स्यपुराणम् | महर्षिव्यासः | शावरभाष्यम् | शवरस्वामी |
| मनुसंहिता | मनुः | शुश्रुतसंहिता | शुश्रुताचार्यः |
| महाभारतम् | महर्षि-व्यासः | श्रीमद्भागवतम् | महर्षिव्यासः |
| मानमेयोदयः | नारायणः | श्वेताश्वतरोपनिषत् | |
| मानवोपपुराणम् | | श्लोकवार्त्तिकम् | कुमारिलः |
| मुण्डकोपनिषत् | | सिद्धान्तलेशसंग्रहः | अप्पयदीक्षितः |
| मैत्रायण्युपनिषत् | | सिद्धान्तबिन्दुः | मधुसूदनः |
| मैत्रेयोपनिषत् | | सुबालोपनिषत् | |
| याज्ञवल्क्यसंहिता | याज्ञवल्क्यः | सूर्यसिद्धान्तः | भास्कराचार्यः |
| युक्तिदीपिका | अज्ञातकर्त्तृकः | संक्षेपशारीरकम् | सर्वज्ञात्ममुनिः |

श्रीमद्-

धर्मराजाध्वरीन्द्र-विरचिता

# वेदान्त-परिभाषा

——*——

## प्रत्यक्ष-परिच्छेदः

**यदविद्या-विलासेन भूत-भौतिक-सृष्टयः ।**

परिभाषासंग्रहः

योगेन्द्रं ज्ञानदं नत्वा लक्ष्मणञ्च परं गुरुम् ।
वेदान्तपरिभाषायाः संग्रहः क्रियते मया ॥
ज्ञानार्ककिरणोद्दीप्त-विबुधाय न मे श्रमः ।
स्वात्मज्ञान-विबोधाय भवतीह ममोद्यमः ॥

ब्रह्मलक्षणं शास्त्रार्थमर्थाद् दर्शयन् प्रारिप्सित-शास्त्र-समाप्ति-प्रतिबन्धक-विघ्नव्यूह-विनाशाय शिष्टाचार-परिपालनाय च कृतं मङ्गलं श्रोतॄणां विद्याङ्गभाव-सम्पादनाय ग्रन्थतो निबध्नाति—**यदविद्ये**ति । यस्य अविद्या यदविद्या, तस्या विलासेनेति विग्रहः । अत्र यच्छब्देन तच्छब्दार्थस्य ब्रह्मणः परामर्शः । षष्ठ्यर्थस्त्वत्राश्रयाश्रयिभावः, ग्रन्थस्यास्य विवरणानुसारित्वात्, तन्मते च ब्रह्मणोऽविद्याश्रयविषयत्वात् । तथा चोक्तं विवरणे—"आत्माश्रयमात्मविषयञ्चाज्ञानमन्तरेणानात्मसु प्रतिविषयं भावरूपाज्ञानसद्भावे प्रमाणाभावादि"ति । संक्षेपशारीरके च—"आश्रयत्वविषयत्वभागिनी निर्विभाग-चितिरेव केवला । पूर्वसिद्ध-तमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः" ॥ इति । वाचस्पतिमते तु विषयविषयिभावस्तन्मते जीवस्याविद्याश्रयत्वाद् ब्रह्मणश्चाविद्याविषयत्वात् । तथा चोक्तं भामत्यां समन्वयाधिकरणे—"नाविद्या ब्रह्माश्रया किन्तु जीवे" इति । **अविद्या** च सत्त्वरजस्तमोरूपाऽनादिभावभूता ज्ञाननिवर्त्या, "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" इति श्वेताश्वतरोक्तेः, "तरति शोकमात्मविदि"ति छान्दोग्य-श्रुतेः, "अनादि भावरूपं यद् विज्ञानेन विलीयते । तदज्ञानमिति प्राज्ञा लक्षणं

**तं नौमि परमात्मानं सच्चिदानन्दविग्रहम् ॥ १**

संप्रचक्षते" ॥ इति प्रत्यक्तत्त्वप्रदीपिकोक्तेश्च । **विलासो** वैषम्यं, धर्माधर्मकृतो गुणानामङ्गाङ्गिभाव इति यावत् । यद्वा विलासोऽविद्यावृत्तिविशेष ईक्षणादिरूपः, "तदैक्षत बहु स्यां प्रजायेयेति तत् तेजोऽसृजते"ति छान्दोग्यश्रुतौ सृष्टेरीक्षणपूर्वकत्वोपदेशात्, "सृष्टिपूर्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यत" इति ग्रन्थकृदुक्तेश्च । तृतीयार्थः करणत्वम् ।

एतेन—"विलासः परिणामः, अभेदे तृतीये"ति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, तृतीयाया मुख्यार्थकत्वसम्भवेऽभेदार्थकत्व-कल्पनाया अन्याय्यत्वात् ।

तैत्तिरीयश्रुतिसूचितं ब्रह्मणस्तटस्थलक्षणमर्थाद् दर्शयन् नमस्कार्यस्योत्कर्षं दर्शयति—**भूते**ति । भूतञ्च भौतिकञ्च भूतभौतिके, तयोः सृष्टय इति विग्रहः । भवन्तीति वाक्यशेषः । भूतभौतिकपदं सृज्यमान-प्रपञ्चपरम् । सृष्टिपदं च सृष्टि-स्थिति-प्रलयपरम् । तेन तैत्तिरीयश्रुति-सूचितं ब्रह्मसूत्रानुशिष्टञ्च ब्रह्मणस्तटस्थलक्षणं लक्षितं भवति । तथा च यदाश्रिताया यद्विषयिण्याश्च त्रिगुणात्मिकाया अविद्याया विलासेन वैषम्येन साम्येन वा परिणामेण वृत्तिविशेषेण वा भूतभौतिकानां सृज्यमान-प्रपञ्चानां सृष्टयः सृष्टि-स्थिति-प्रलया भवन्तीति वाक्यार्थः सम्पद्यते । एतेन ब्रह्मणो विवर्त्तोपादानत्वाद् मायायाश्च परिणाम्युपादानत्वाद् ब्रह्मकारणवाद-सूचनेन चेतनानधिष्ठित-स्वतन्त्र-प्रधानकारणवाद-परमाणुकारणवादादयो वादा निराकृता वेदितव्याः, ईश्वराधिष्ठितादसमवायिकारण-रहितादेकस्मादज्ञानाद् विजातीयकार्योत्पत्तेः श्रुतिसिद्धत्वात् । तथा च श्वेताश्वतर-श्रुतिः—"अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया सन्निरुद्ध" इति । तैत्तिरीय-श्रुतिसूचितं ब्रह्मणः स्वरूपलक्षणमर्थाद् दर्शयन् परमात्मानं स्तौति—**तं नौमी**ति । तच्छब्देन यच्छब्दार्थस्य ब्रह्मणः परामर्शः । ननु भूतभौतिकसृष्टिहेतुत्वं जीवस्य लक्षणम्, "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति, "पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्रमि"ति च श्रुतेः । तस्मात् कथमिदं ब्रह्मणो लक्षणं ? कथं वा तच्छब्देन ब्रह्मणः परामर्श इत्यत आह—**परमा**त्मानमिति । परमश्चासौ आत्मा चेति विग्रहः । आत्मनः परमत्वं सर्वज्ञत्वादिविशिष्टत्वम् । तथा च सर्वज्ञस्यैव जगज्जन्मादिहेतुत्वम्, "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः तस्मादेतद् ब्रह्म नाम रूपमन्नञ्च जायते" इति मुण्डक-श्रुतेः, नासर्वज्ञस्य जीवस्य, श्रुत्यन्तरविरोधादसामर्थ्याच्च । उदाहृतश्रुतयस्तु श्रुत्यन्तरसामर्थ्याद्

**यदन्तेवासि-पञ्चास्यैर्निरस्ता भेदिवारणाः ।**
**तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम् ॥ २**
**श्रीमद्वेङ्कटनाथाख्यान् वेलाङ्गुडिनिवासिनः ।**
**जगद्गुरूनहं वन्दे सर्वतन्त्रप्रवर्त्तकान् ॥ ३**

जीवाभिन्नस्यैव सर्वज्ञस्य जगदुपादानत्वमाहुर्न जीवस्य, अहमिति पुरत्रय इति च निर्द्देशात्, अन्यथा श्रुतेरप्रामाण्यापत्तेर्दुर्वारत्वादिति भावः। ब्रह्मणः स्वरूपलक्षणं दर्शयति—**सच्चिदा**नन्देति। संश्चासौ चिच्चासौ आनन्दश्चेति सच्चिदानन्दः, सच्चिदानन्दो विग्रहो यस्येति विग्रहः। सन् नित्यः, चिद् ज्ञानस्वरूपः, आनन्दः सुखस्वरूपः, विगृह्यते विशेषेण ज्ञायतेऽनेनेति विग्रहो लक्षणम्। तच्च स्वरूपमपि। तेन सच्चिदानन्दस्वरूपमित्यर्थः, "सत्यं ज्ञानमनन्तं ब्रह्म" "सत्यं विज्ञानमानन्दं ब्रह्म"त्यादि-श्रुतिभ्यः। स्वरूपस्य यथा लक्षणत्वं, तथाऽग्रे उपपादयिष्यते। एतल्लक्षणलक्षितं ब्रह्म शास्त्रविषयः। अविद्यानिवृत्तिर्ब्रह्मात्मैक्यप्रतिपत्तिश्च प्रयोजनम्। प्रयोजनकामोऽधिकारी। सम्बन्धस्तु शास्त्रविषययोः प्रतिपाद्य-प्रतिपादकभावः ॥ १ ॥

वंशब्राह्मणमनुस्मृत्य प्रारिप्सितस्य शास्त्रस्य सत्सम्प्रदायमूलकत्वं दर्शयन् तेन च विद्याविशुद्धिं ज्ञापयन् परमगुरुं स्तौति—**यदन्ते**वासीति। अन्ते गुरुसमीपे स्वाध्यायाध्ययनाय वस्तुं शीलं येषां, तेऽन्तेवासिनः शिष्याः, "स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि"ति मुण्डकश्रुतेः। त एव पञ्चास्याः सिंहास्तैः। अपराजेयत्वादिगुणयोगादन्तेवासिनां पञ्चास्यसादृश्यम्। एतेन ग्रन्थकर्त्तुः परमगुरोरधिकोत्कर्षः सूचितः। **भेदि**-वारणाः भेदिनो भेदवादिनो द्वैतवादिनो माध्वा एव वारणा गजाः। **निरस्ताः** पराजिताः। **नृसिंहा**ख्यम् अद्वैतदीपिका-विवरण-भावप्रकाशिकादिग्रन्थकर्त्तारम्। **प्रणौमि** प्रकर्षेण नौमि। एतेन गुर्वपेक्षया परमगुरोः प्रथमपूज्यत्वं दर्शितम्। तथा चापस्तम्बधर्मसूत्रम्—"आचार्य-प्राचार्यसन्निपाते प्राचार्यायोपसंगृह्योपसंजिघृक्षेदाचार्यमि"ति ॥ २

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति श्वेताश्वतरोक्तमनुस्मरन् पूजानमस्काराद्युपोद्बलिताया भक्तेर्विद्यालाभाङ्गत्वं सूचयन् गुरुं स्तौति—**श्रीमद्**िति। **वेला**ङ्गुडिश्चोलदेशस्थस्तन्नामप्रसिद्धो ग्रामविशेषः। **जगद्**गुरूनिति। एतेन स्वगुरोः परमगुर्वपेक्षया विद्योत्कर्षो ध्वनितः।

**येन चिन्तामणौ टीका दशटीकाप्रभञ्जिनी।**
**तर्कचूडामणिर्नाम कृता विद्वन्मनोरमा॥ ४**
**तेन बोधाय मन्दानां वेदान्तार्थावलम्बिनी।**
**धर्मराजाध्वरीन्द्रेण परिभाषा वितन्यते॥ ५**

**इह खलु धर्मार्थ-काम-मोक्षाख्येषु चतुर्विध-पुरुषार्थेषु मोक्ष एव परम-**

**सर्व**तन्त्रेति। तन्त्रं सिद्धान्तः। प्रवर्त्तयन्ति दर्शयन्तीति प्रवर्त्तकाः॥ ३

रुणद्धि रोदसीं चास्य यावत् कीर्त्तिरनश्वरी। तावत् किलायमध्यास्ते सुकृती वैबुधं पदम्॥ इति स्मृतिमनुस्मरन् स्वकीर्त्त्यनुवृत्तये प्रारिप्सितस्य च ग्रन्थस्य विद्वन्मूलकत्वेनाध्येयत्वख्यापनाय स्वस्य ग्रन्थकरणयोग्यत्वमाह—**येने**ति। **चिन्तामणौ** गंगेशोपाध्यायरचिते तन्नामप्रसिद्धे न्यायग्रन्थे॥ ४

सूत्रभाष्याद्यर्थबोधस्य वेदान्तार्थबोधहेतुत्वात् तस्य च सूत्रभाष्याद्यर्थबोधस्य प्रकरणग्रन्थाध्ययनमूलकत्वात् तस्य च प्रकरणग्रन्थाध्ययनस्य प्रकरण-ग्रन्थमूलकत्वात् तस्य प्रकरणग्रन्थस्य प्रथमकर्त्तव्यतां दर्शयति—**तेने**ति। **मन्दानां** अज्ञातसूत्रभाष्याद्यर्थानामल्पबुद्धीनाम्। **वेदान्तार्था**वलम्बिनी वेदान्तार्थविषयिणी। **वेदान्तो** नाम वेदस्य मन्त्रब्राह्मणरूपस्यान्तश्चरमो भागः, मन्त्रोपनिषद् ब्राह्मणोपनिषन्नाम्ना प्रसिद्धः। **वितन्यते** क्रियते॥ ५

भवति हि शास्त्रं प्रतिपित्सितमर्थं प्रतिपादयत् प्रमाणम्। न चेदं तथा, एतच्छास्त्रार्थस्य ब्रह्मणोऽप्रतिपित्सितत्वात्, प्रसिद्धेषु प्रतिपित्सितार्थेषु चतुर्षु पुरुषार्थेषु तस्यानन्तर्भावात्। तत् कथमिदं शास्त्रं प्रमाणम्? अप्रमाणं वा कथमध्येतव्यमित्याशङ्कां परिहरन् शास्त्रप्रतिपाद्यस्य ब्रह्मणः प्रतिपित्सितत्वमुपपादयितुं प्रक्रमते—**इहे**ति। संसारे इत्यर्थः। परमपुरुषार्थ-मोक्षरूपत्वेन ब्रह्मणः प्रतिपित्सितत्वं दर्शयन् पुरुषार्थं विभज्य दर्शयति—**धर्मार्थे**ति। तत्र धर्मस्तावद् बलवदनिष्टाननुबन्धीष्टसाधनो वेदविहितो यागादिः, "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणी"ति मन्त्रवर्णात्, "यो हि यागमनुतिष्ठति, तं धार्मिकं समाचक्षत" इति शावरभाष्यवचनात्, "फलतोऽपि च यत् कर्म नानर्थेनानुबध्यते। केवलप्रीतिहेतुत्वात् तद्धर्म इति कथ्यते"॥ इति श्लोकवार्त्तिकोक्तेः, धर्मं चरतीति लोकव्यवहाराच्च। तस्य च यागादेर्धर्मत्वं न स्वरूपेण किन्तु बलवदनिष्टाननुबन्धीष्टसाधनत्वेन। तच्च बलवदनिष्टाननुबन्धीष्टसाधनत्वं न लौकिकप्रमाण-गम्यम्। अत एव यागादेर्धर्मस्य वेदैकवेद्यत्वम्। तथा चोक्तं श्लोक-

वार्त्तिके—"श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते। ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ इति।

यद्यपि सांख्या यागाद्यनुष्ठानजन्यमन्तःकरणस्य वृत्तिविशेषं धर्ममाहुः, शाक्यास्तु चेतसो ज्ञानस्य ज्ञानान्तरजन्यां भावनाम्, आर्हतास्तु कायारम्भकान् सूक्ष्मान् मूर्त्तिमतः पुद्गलान्, वैशेषिकास्त्वात्मनो विशेषगुणान्, प्राभाकरास्तु यागादिजन्यमपूर्वं, तथापि धर्मशब्देनात्र तेषां ग्रहणं नोचितम्, अतीन्द्रियत्वेन तेषां फलसाधनभावानवगमात्, वेदैर्यागादीनामेव धर्मतावगमात्, तेषु च धर्मशब्दाप्रयोगात्। तथा चोक्तं श्लोकवार्त्तिके —अन्तःकरणवृत्तौ वा वासनायाञ्च चेतसः। पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि। प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम्" ॥ इति।

एतेन "यागादिजन्यस्वर्गादिकमेवात्र धर्मपदार्थ इत्यादि" परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, सुखरूप-स्वर्गादेर्धर्मफलत्वेन कैरपि तेषां धर्मत्वानङ्गीकारात्, देशविशेषरूप-स्वर्गादेः फलसाधनत्वेन मुख्यत्वासम्भवात्, स्वर्गस्य कथञ्चिन्मुख्यत्व-सम्भवेऽप्यर्थस्य मुख्यत्वासम्भवात्, असति बाधके भाट्टमत-परित्यागानौचित्याच्च।

स च यागादिर्धर्मः पुरुषेणार्थ्यमानत्वात् पुरुषार्थोऽप्यन्येच्छाधीनेच्छा-विषयत्वाद् गौणो न मुख्यः, अन्येच्छानधीनेच्छाविषयस्यैव सुख-दुःखाभावरूपस्य फलस्य मुख्यत्वात्। न च मुख्यपुरुषार्थ-सम्भवे गौणपुरुषार्थग्रहणमन्याय्यमिति वाच्यम्, सम्बन्धिसापेक्ष-स्यौत्कर्षस्य सम्बन्धिनिरूपणादृते निरूपणायोगादितरपुरुषार्थापेक्षया मोक्षोत्कर्षोपपत्तये गौणपुरुषार्थग्रहणस्यात्रावश्यकत्वात्। न च गौणपुरुषार्थस्य वस्तुतोऽपुरुषार्थत्वाद् धर्मादीनां कथं पुरुषार्थेषु परिग्रह इति वाच्यम्, पुरुषार्थलक्षणयोगात्। येन प्रयुक्तः पुरुषः प्रवर्त्तते, स पुरुषार्थ इति तल्लक्षणात्। गौणत्वं तेषां नित्यानित्यद्रव्यवद् नित्यानित्यभावात् फल-साधनभावाद्वा। अर्थस्तु प्रसिद्धो धनादिरेव। स च पुरुषार्थोऽप्यन्येच्छाधीनेच्छाविषय-त्वाद् गौणः। कामो विषयेन्द्रियसन्निकर्षजन्यः सुखविशेषः, न तु कामनासामान्यविषयः, तथात्वे धर्मादीनां पृथग्ग्रहणानुपपत्तेः। तदुक्तं तात्पर्यटीकायाम्—"न वा कामिनीविषयो रागः, सनकमृगयादीनामसंग्रहादि"ति। तस्मात् सुखविशेष एव कामः। तथा चोक्तं महाभारते—इन्द्रियाणाञ्च पञ्चानां मनसो हृदयस्य च। विषये वर्तमानानां या प्रीतिरुपजायते। स काम इति मे बुद्धिः कर्मणां फलमुत्तमम्" ॥ इति। स च कामः सुखविशेष-रूपत्वेन फलत्वान्मुख्यः पुरुषार्थः। मोक्षश्चाविद्यानिवृत्त्यात्मक आनन्दमय

**पुरुषार्थः, "न च पुनरावर्त्तते" इत्यादिश्रुत्या तस्य नित्यत्वावगमात्, इतरेषां**

ब्रह्मरूपः। तदुक्तं प्रमाणमालायाम्—"अविद्यास्तमयो मोक्षो नित्यानन्दप्रतीतितः। निःशेषदुःखोच्छेदाच्च पुरुषार्थः परो मतः" ॥ इति। सोऽपि मोक्षः फलत्वान्मुख्यः पुरुषार्थः। यद्यपि काम-मोक्षयोर्मुख्यत्वं समानम्, तथापि कामस्यानित्यत्वादपरमत्वं मोक्षस्य च नित्यत्वात् परमत्वं बोध्यम्। पुरुषार्थे विप्रतिपत्तिं सूचयन् स्वसिद्धान्तमाह—**चतुर्विधे**ति। यद्यपि न्यायवार्त्तिककृद्भिर्द्वावेव पुरुषार्थौ सिद्धान्तितौ। तथा चोक्तं न्यायवार्त्तिके—"केन प्रयुज्यते? धर्मार्थकाममोक्षैरिति केचित्। वयन्तु पश्यामः सुखदुःखाप्तिहानाभ्यां प्रयुज्यत" इति। ग्रन्थकृताऽपि प्रयोजनपरिच्छेदे तथैवोक्तौ, तथापि पुरुषसंस्कारवत् फलसाधनभेदेन चतुर्णामेव पुरुषार्थत्वं युक्तं, तल्लक्षणयोगात्, पुराणादिषु चतुर्णां पुरुषार्थत्वोपदेशात्, लोकेषु तथैव व्यवहाराच्च। तथा चोक्तं महाभारते—"धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ। यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्" ॥ इति। विष्णुपुराणे च—"धर्मार्थकाममोक्षाख्यः पुरुषार्थ उदाहृत"। इति। **मोक्ष** एवेति। एवकारेणेतरेषां त्रयाणां परमपुरुषार्थत्वाभावः प्रतिपादितः, तेषामनित्यत्वादिति भावः। **परम**पुरुषार्थ इति। परमश्चासौ पुरुषार्थश्चेति विग्रहः। पुरुषार्थस्य परमत्वञ्च नित्यत्वम्। नन्वविद्यानिवृत्तिरूपस्य मोक्षस्य कथं नित्यत्वमिति चेन्न, तस्य ब्रह्मरूपतया नित्यत्वात्। न चाविद्यानिवृत्तेरभावत्वात् कथं ब्रह्मरूपत्वमिति वाच्यम्, अभावस्याधिकरणात्मकत्वात्। तथा चोक्तमद्वैतसिद्धौ—"अधिकरणातिरिक्ताभावानभ्युपगमेनोक्तमिथ्यात्वाभावरूप-सत्यत्वस्य ब्रह्मस्वरूपाविरोधात्। एतेन स्वप्रकाशत्वाद्यपि व्याख्यातम्। परप्रकाशत्वाभावो हि स्वप्रकाशत्वम्। कालपरिच्छेदाभावो नित्यत्वम्। देशपरिच्छेदाभावो विभुत्वम्। वस्तुपरिच्छेदाभावो पूर्णत्वमित्यादी"ति। मोक्षस्य नित्यत्वेन परमपुरुषार्थत्वं छान्दोग्यश्रुत्या प्रमाणयति—**न चे**ति। तदर्थस्तु—न च पुनरावर्त्तते शरीरग्रहणाय, पुनरावृत्तेः प्राप्तायाः प्रतिषेधात्। अर्चिरादिमार्गेण कार्यब्रह्मलोकमभिसम्पद्य यावद् ब्रह्मलोकस्थितिस्तावत् तत्रैव तिष्ठति, प्राक् ततो नावर्तते इति। नन्वियं श्रुतिः प्राप्तब्रह्मलोकानां महाप्रलयात् प्रागनावृत्तिं प्रतिपादयति, न तु मोक्षस्य नित्यत्वमिति चेत्, सत्यम्, महाप्रलयात् प्रागनुत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मलोकगतानामावृत्तिप्रतिपादनेऽपि तत्रोत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मस्वरूपभूतानामावृत्तिहेतोरज्ञानस्याभावादनावृत्त्युपदेशेन मोक्षनित्यत्व-बोधनात्।

ग्रन्थकृताप्यग्रे प्रयोजनपरिच्छेदे कार्यब्रह्मलोकगतानामपि मोक्षप्राप्तेर्वक्ष्यमाणत्वात्। तथा च स्मृतिः—ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥ इति।

वस्तुतस्त्वियं श्रुतिर्न मोक्षनित्यत्व-प्रतिपादिका, फलश्रुतित्वेनार्थवादत्वात्, अर्थवादस्य च स्वार्थे प्रामाण्याभावात्। देवताविग्रहसिद्धिवदनावृत्तिसिद्धिरिति चेत्, यथा विध्येकवाक्यतापन्नत्वेन स्वार्थे प्रामाण्यरहितैः प्रमाणान्तराविरुद्धैः प्रमाणान्तरागृहीत-विषयकैर्भूतार्थवादवाक्यैरिन्द्रो वृत्राय वज्रमुदयच्छदित्यादिभिरवान्तर-तात्पर्यबलात् स्वार्थदेवताविग्रहसिद्धिर्भवति, तथैवार्थवादवाक्यादनावृत्तिसिद्धिरिति चेत्, न, देवता-विग्रहसाधक-स्मृतीतिहास-पुराणरूप-मानान्तर-सत्त्वाद् विरोधाभावाच्च तस्माद् भूतार्थवादाद् देवताविग्रहसिद्धावपि ब्रह्मलोकाभिसम्पत्तिसमयेऽप्राप्ताया पुनरावृत्तेः प्रतिषेधिकाया अस्याः श्रुतेरवान्तरतात्पर्यकल्पकाभावेन स्वार्थे प्रामाण्यायोगात्, साधकमानान्तराभावात्, यत् कृतकं तदनित्यमित्यनुमानविरोधसद्भावाच्च। तथा च स्मृत्यनवकाशाधिकरणे ब्रह्मसूत्रभाष्यम्—"अन्यार्थदर्शनस्य प्राप्तिरहितस्यासाधकत्वादि"ति। न चेयं पुनरावर्त्तिष्यत इति भाविनीं पुनरावृत्तिं प्रतिषेधतीति युक्तं कल्पयितुम्, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। तथा चोक्तं विवरणे नवमवर्णके—"श्रुतार्थपरित्यागेनाश्रुतार्थकल्पनायां यत् कृतकं तदनित्यं, तद् यथेह कर्मचित इति श्रुत्यनुमानविरोधादि"ति। तस्मान्नेयं श्रुतिरनावृत्ति-प्रतिपादनपरा, किन्तु ब्रह्मविद्याप्रशंसापरा। श्रुत्यन्तरैकवाक्यतया ब्रह्मलोकगतानामस्मिन् कल्पेऽनावृत्तिप्रतिपादनेऽपि सर्वथाऽनावृत्तिर्न प्रतिपाद्यते, पुनर्ग्रहणवैयर्थ्यात्। तथा च छान्दोग्यभाष्यम्—"यद्येकान्तेनैव नावर्तेरन् इमं मानवमिहेति विशेषणमनर्थकं स्यादि"ति। पञ्चपादिकायामपि—"इहेममिति विशेषणादस्मिन् कल्पेऽनावृत्तिं दर्शयति, नानवधिकामनावृत्ति"-मिति। मोक्षनित्यत्व-प्रतिपादिकाः श्रुतयस्तु—"ब्रह्म वेद ब्रह्मैव भवति" "विद्ययाऽमृतमश्नुते" "ब्रह्मसंस्थोऽमृतत्वमेति" "अथायमशरीरोऽमृतः प्राणो ब्रह्मैवे"त्यादयः। इति। **इत्यादी**त्यादिपदेनोदाहृत-श्रुतयो ग्राह्याः। **तस्य** मोक्षस्य। धर्मादीनां मोक्षवैलक्षण्यमाह—**इतरेषा**मिति। धर्मादीनामित्यर्थः। **प्रत्यक्षेणे**ति। अनित्यत्वावगमादित्यनेनास्य यथायोगमन्वयः। यागस्वरूप-नाशस्य प्रत्यक्षत्वेऽपि स्वर्गादिजनकशक्तिविशिष्टस्य धर्मस्य यागस्य नाशो न प्रत्यक्षसिद्धः, प्रतियोगिनो धर्मस्या-

**त्रयाणान्तु प्रत्यक्षेण "तद् यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुत्या चानित्यत्वावगमाच्च। स च ब्रह्म-ज्ञानादिति ब्रह्म तज्ज्ञानं तत्प्रमाणं च सप्रपञ्चं निरूप्यते।**

प्रत्यक्षत्वात्, किन्तु श्रुतिसिद्धः। तथा चार्थकामयोः प्रत्यक्षेण धर्मस्य च श्रुत्याऽ-नित्यत्वावगमादित्यन्वयः। धर्मस्यानित्यत्वे छान्दोग्यश्रुतिं प्रमाणयति—**तद् यथे**ति। तदर्थस्तु—**तत्** तत्र **यथेह** लोके तासामेव स्वाम्यनुशासनानुवर्त्तिनीनां प्रजानां सेवादिजनितो **लोकः** पराधीनोपभोगः **क्षीयते**ऽन्तवान् भवति। अथेदानीं दार्ष्टान्तिकमुपसंहरति—**एवमेवामुत्रा**ग्निहोत्रादि-**पुण्यचितो लोकः** पराधीनोपभोगः **क्षीयत** एवेति। यद्यपीयं श्रुतिर्धर्मफलस्यैव नाशमुपदिशति न धर्मस्य, तथापि धर्मनाशमन्तरा धर्मफलनाशासम्भवात् तन्नाशमप्यर्थात् प्रतिपादयति। धर्मानित्यत्व-प्रतिपादिकाः श्रुतयस्तु—"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" "प्लवा ह्येते अदृढ़ा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढ़ा जरामृत्युं ते पुनरेवापि यन्ती"त्याद्याः। इति।

नन्वपाम सोमममृता अभूमेत्यादि-श्रुत्या स्वर्गादेर्नित्यत्वमवगम्यत इति चेत्, न, अर्थवादरूपाया अस्याः श्रुतेः स्वार्थे प्रामाण्यायोगात्, सिद्धवस्तुपरयोर्द्वयोः प्रमाणयोर्विरुद्धार्थकत्वासम्भवात् श्रुतिन्यायोपोद्बलिताया अनित्यत्वश्रुतेर्नित्यत्व-श्रुत्यपेक्षया बलवत्त्वात् तद्विरोधेनास्याः श्रुतेः प्रलयपर्यन्तस्थायित्वरूप-नित्यत्वपरत्वात्। तथा च विष्णुपुराणम्—"आभूतसंप्लवं स्थानममृतत्वं हि गीयत" इति। **स च** मोक्षश्च। **ब्रह्मज्ञानात्** शुद्धब्रह्मविषयक-निर्विकल्पकज्ञानात् शुद्धं ब्रह्मेत्याकारकात्। अज्ञाननिवृत्तेर्मोक्षत्वादज्ञानस्य च शुद्धब्रह्मविषयकस्य शुद्धब्रह्मविषयकज्ञानेनैव निवर्त्यत्वात्, समानाश्रयविषयक-ज्ञानस्यैवाज्ञाननाशकत्व-नियमाद् ब्रह्मज्ञानस्य मोक्षहेतुत्वमिति भावः। पञ्चम्यर्थः प्रयोजकत्वम्। मोक्षस्य ब्रह्मज्ञानप्रयोज्यत्वे श्रुतिरेव मानम्। सा च श्रुतिः—"ब्रह्म वेद ब्रह्मैव भवति" "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"त्याद्या। **इति**र्हेतौ। यस्मान्मोक्षो ब्रह्मज्ञानप्रयोज्यस्तस्मादित्यर्थः। निरूपणीयविषयानाह—**ब्रह्मे**ति। ननु मोक्षोपायत्वाद् ब्रह्मज्ञानमेव निरूपणीयम्, न ब्रह्मेति चेत्, न, ज्ञानस्य विषयनिरूप्यत्वाद् विषयनिरूपणमन्तरेण ज्ञानानिरूपणात् प्राधान्याच्च ब्रह्मणोऽपि निरूपणीयत्वात्। मोक्षोपयोगितया ब्रह्मज्ञानस्य निरूपणीयत्व-

**तत्र प्रमाकरणं प्रमाणम्। तत्र स्मृतिव्यावृत्तं प्रमात्वमनधिगताबाधिता-**

माह—**तज्ज्ञान**मिति। ब्रह्मज्ञानमित्यर्थः। तदुभयनिरूपणस्य प्रमाणाधीनतया प्रमाणनिरूपणमपि कर्तव्यमित्याह—**तत्प्रमाण**ञ्चेति। ब्रह्मप्रमाणञ्चेत्यर्थः। ननु ब्रह्मणो वेदैक-वेद्यत्वादेकमेव तत्प्रमाणं निरूप्यताम्, कथमत्र षट् प्रमाणं निरूप्यत इत्यत आह—**सप्रपञ्चमि**ति। सपरिकरमित्यर्थः। ब्रह्मादि-त्रितयस्यैतद् विशेषणम्। यन्निरूपणे योऽपेक्षितः, स तस्य परिकरः। निर्गुणत्व-जीवाभिन्नत्व-सत्यत्वादयो ब्रह्मपरिकराः। ब्रह्म सगुणमुत निर्गुणं, जीवभिन्नमथ जीवाभिन्नं, सत्यमथासत्य-मित्यादि-संशयनिरासाय तत्परिकरनिरूपणमपि कर्तव्यम्। अन्यथा शुद्धब्रह्मज्ञानं नैव सम्भवति। एवं निर्विकल्पकत्व-वेदान्तजन्यत्व-कर्मनिरपेक्षत्वापरोक्षत्वादयो ब्रह्मज्ञान-परिकराः। सिद्धविषयकत्वापरोक्षज्ञानजनकत्व-संसर्गाविषयकत्वादयः प्रमाण-परिकराः। तथा च सपरिकर-ब्रह्मादिनिरूपणे षण्णां प्रमाणानामुपयोगः। तेनोत्तरत्र विषयप्रयोजनयोर्निरूपणमपि नासङ्गतमिति भावः।

प्रमेयनिरूपणस्य प्रमाणाधीनतया प्रथमं प्रमाणमेव निरूपणीयम्। तत्रापि विशेषज्ञानस्य सामान्यज्ञानपूर्वकत्वात् प्रथमं प्रमाणसामान्यलक्षणं वक्तव्यमित्याह—**तत्रे**ति। निरूपणीयेषु ब्रह्मादिष्वित्यर्थः। प्रमाणसामान्यस्वरूपमाह—**प्रमाकरण**मिति। तत्र करणत्वं नाम व्यापारवत्-कारणत्वम्। व्यापारत्वञ्च तज्जन्यत्वे सति तज्जन्य-जनकत्वम्। तत्र स्वाकार-वृत्त्यभिव्यक्तचैतन्यस्य प्रमात्वे वृत्तेः करणत्वम्। सर्वप्रमाण-साधारणो व्यापारस्तु वृत्तिविषययोः सम्बन्धः। स च प्रत्यक्षे संयोगादिरूपः साक्षात्-सम्बन्धः। परोक्षे तु परम्परा-सम्बन्धः। तत्रानुमितावनुमेयेन तज्व्याप्यज्ञानजन्यत्वरूपः शाब्दबोधे संसर्गेण तदाश्रयवाचकपदजन्यत्वरूपः स्मृतौ स्मर्तव्येन तद्विषयानुभवजन्यत्व-रूपः। एवमन्यत्राप्यूह्यम्। तेनैव साक्षात्-परम्परा-सम्बन्धेन परोक्षापरोक्ष-विभागः। यद्वा सर्वत्र वृत्तेश्च विषयेण साक्षादेव सम्बन्ध आकाराख्य-विषयतारूपः। सा च विषयता नानेति न परोक्षापरोक्षविभागानुपपत्तिः। वृत्तेः प्रमात्वे तु करणानी-न्द्रियाणि व्याप्तिज्ञानादीनि च। व्यापारस्तु विषयेन्द्रियसम्बन्धरूपो व्याप्तिसंस्कारादि-रूपश्च। प्रत्यक्षपरिच्छेदे चैतन्यप्रमात्वस्यानुमानपरिच्छेदे वृत्तिप्रमात्वस्य ग्रन्थकृतै-वोक्तत्वात् प्रमाप्रमाणयोर्द्वैविध्यं तेनैव दर्शितम्।

वस्तुतस्त्वभिव्यक्तचैतन्यस्यैव प्रमात्वं, तस्यैवाज्ञानविरोधित्वात्, अज्ञानविरोधि-

चैतन्यस्यैव प्रमात्वनियमात्। अन्तःकरणपरिणामरूपायास्तु वृत्तेर्जड़त्वान्नाज्ञान-विरोधित्वमिति न प्रमात्वम्, किन्तु प्रमाकरणत्वेन प्रमाणत्वम्। इन्द्रियादेः प्रमाणत्व-व्यवहारस्तु प्रमाणजनकया गौणो मन्तव्यः। तथा चोक्तं न्यायरत्नावल्याम्—"चक्षुरादेः प्रमाणत्वव्यवहारस्तु वृत्तिजनकतयौपचारिक" इति।

प्रमाणस्य प्रमाघटितत्वात् प्रमाज्ञानमन्तरा प्रमाणज्ञानासम्भवात् प्रमालक्षणं वक्तुं प्रक्रमते—**तत्रे**ति। प्रमाणपदार्थान्तर्गत इत्यर्थः। तत्र माध्ववैशेषिकादयः स्मृतेः प्रमात्वमङ्गीकुर्वन्ति। नैयायिकादयस्तन्नेति मतद्वयम्। तथा च प्रमात्वं स्मृत्यवृत्ति स्मृतिवृत्ति चेति। तत्र व्यवहारे भाट्टनय इति चित्सुखाचार्योक्तमनु-स्मरन् भाट्टाभिमतं स्मृत्यवृत्ति-प्रमात्वस्य स्वरूपं वक्तुं प्रक्रमते—**स्मृतिव्यावृत्तमि**ति। स्मृत्यवृत्तीत्यर्थः। प्रमालक्षणमाह—**अनधिगतेति**। अनधिगतोऽज्ञातोऽबाधितश्च योऽर्थः पदार्थस्तद्विषयकं यज् ज्ञानं निश्चयात्मकं तस्य भावो धर्मः प्रमात्वमित्यर्थः। यद्यबाधितार्थविषयकज्ञानत्वं लक्षणं स्यात्, तदाऽबाधितार्थविषयके स्मरणेऽबाधितार्थ-विषयकज्ञानत्वसत्त्वादतिव्याप्तिस्तद्वारणायाह—**अनधिगते**ति। अनधिगतत्वं स्वकरणा-धिकरणक्षणावच्छिन्नाज्ञानविषयत्वम्। स्वपदं यस्मिन् लक्षणसमन्वयेच्छा, तत्परम्। तथा चात्र स्मरण-करणेनानुभवेन स्मरणविषयविषयकस्याज्ञानस्य नाशात् स्मरणकरणा-नुभवाधिकरणक्षणवर्त्तिनोऽज्ञानान्तरस्य सत्त्वेऽपि तद्विषयत्वस्य स्मरणविषयेऽभावान्न तद्विषयस्यानधिगतत्वम्। अतः स्मरणेऽबाधितार्थविषयक-ज्ञानत्वसत्त्वेऽप्यनधि-गतार्थविषयकज्ञानत्वाभावेन न तत्रातिव्याप्तिरिति भावः। ननु चैतन्यस्यैवाज्ञानाश्रय-विषयत्व-नियमाद् जड़स्य विषयस्य कथमज्ञान-विषयत्वमिति चेत्, न, अज्ञातचैतन्ये विषयस्याभेदेनाध्यासात् तत्राज्ञातत्वोपचारात्। न चानादौ संसारे वेदार्थस्य नित्यस्य वा जीवादेः पूर्वं ज्ञातत्वादस्मिन् जन्मनि तज्ज्ञानेऽनधिगतार्थ-विषयक-ज्ञानत्वाभावेना-व्याप्तिरिति वाच्यम्, अनधिगतपदेन तदानीमज्ञातत्वस्य विवक्षणीयत्वात्। तथा चोक्त-मद्वैतरत्नरक्षणे प्रमात्वनिरुक्तौ—"तस्मिन् जन्मन्यज्ञातत्वस्य विवक्षितत्वादि"ति। नन्वेवं स्मृतेः पूर्वं वेदार्थवन्नित्यपदार्थवद् वा तद्विषयस्याप्यज्ञातत्वसम्भवात् कथं तत्रातिव्याप्ति-वारणमिति चेत्, न, अनधिगतपदेन स्वकरणाधिकरणक्षणेऽज्ञातत्वस्य विवक्षितत्वात्, अज्ञाननिवर्त्तकस्य समानविषयकनिश्चयरूपस्य स्मृतिकरणस्याधिकरणक्षणोत्तरं तेन निश्चयेन स्मृतिविषयविषयकाज्ञानस्य नाशात् तद्विषयस्याज्ञातत्वाभावेन तत्रातिव्याप्ते-

र्वारणसम्भवात्। तथा चोक्तं न्यायरत्नावल्याम्—"स्मृतौ प्रमात्वस्यावश्यवारणीयत्वेन स्वकरणादिघटितत्वस्यावश्यकत्वा"दिति। वेदार्थादीनामस्मिन् जन्मनि वेदार्थं न जानामीत्याद्यनुभवादज्ञातत्वकल्पनेऽपि स्मृतिविषये तथा व्यवहाराभावान्न तत् कल्पनेति सर्वं समञ्जसम्।

यद्यनधिगतार्थविषयकज्ञानत्वं लक्षणं स्यात्, तदा भ्रमेऽतिव्याप्तिः, तस्यानधिगतार्थविषयक-ज्ञानत्वात्, तद्विषयस्य पूर्वं ज्ञानाभावेनानधिगतत्वात्, तद्वारणायाह—**अबाधिते**ति। स्वप्रकारकप्रतीतिविशेष्यनिष्ठात्यन्ताभाव-प्रतियोगी बाधितस्तद्भिन्नोऽबाधितः। अत्र स्वपदं बाधितपरम्। तथा च बाधितप्रकारिका या प्रतीतिरिदं रजतमित्याद्याकारिका तस्याः प्रतीतेर्यो विशेष्यः शुक्तिकादिरूपस्तन्निष्ठो यो रजतादेरत्यन्ताभावस्तत्प्रतियोगित्वं रजतादीनामिति सिद्धं तेषां बाधितत्वम्। स्वाध्यायाध्ययनविधेः फलवदर्थावबोधपरत्वान्निष्फलार्थेऽध्ययनप्रवृत्त्यनुपपत्तेः फलवत्त्वमपि प्रामाण्यशरीर-सम्पादकम्। तथा च मीमांसासूत्रम्—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वा-दि"ति। आगमबाध्यत्वप्रकरणे लघुचन्द्रिकायामपि—"तेष्वन्यत्रयं प्रामाण्य-शरीर-सम्पादकम्, निष्फलार्थे प्रत्यक्षादेः प्रामाण्य-सम्भवेऽपि न श्रुतेस्तत्सम्भव" इति। तथा चार्थपदानुपादाने "वायुर्वै क्षेपिष्ठा देवते"त्याद्यर्थवादवाक्यजन्ये वाच्यार्थविषयक-ज्ञानेऽतिव्याप्तिस्तस्याप्यनगिताबाधितार्थविषयक-ज्ञानत्वादत आह—**अर्थे**ति। फलव-दित्यर्थः। तथा चार्थवाद-वाक्यजन्य-वाच्यार्थविषयक ज्ञानस्यानधिगताबाधित-विषयक-ज्ञानत्व-सत्वेऽपि फलवद् विषयकत्वाभावान्नातिव्याप्तिरिति भावः। यद्वा योगाभिमत विकल्पज्ञानेऽतिव्याप्तिवारणार्थमाह—**अर्थे**ति। वस्तुभूतेत्यर्थः। विकल्पविषयस्त्वबाधितोऽप्यनधिगतोऽपि न वस्तुभूतः। तथा चोक्तं तत्त्ववैशारद्याम्—"अनेन हि सर्वजनानुभवसिद्धो बाध उक्तः, स चास्ति विपर्यये, न तु विकल्पे, तेन व्यवहारादि"ति। न च विकल्पस्य ज्ञानत्वमेव नास्तीति नातिव्याप्तिरिति वाच्यम्, तैस्तस्य ज्ञानत्वाङ्गीकारात्, वृत्तिवर्गेषु तस्य ग्रहणात्, वृत्तीनाञ्च तन्मते ज्ञानत्वात्, वृत्तयो ज्ञानानीति तत्त्ववैशारद्युक्तेः, सिद्धान्त्येकदेशिनापि तस्य ज्ञानत्वाङ्गीकारात्, "एवञ्च सिद्धान्त्यभिमता शशशृङ्गादिजन्याऽसत्प्रतीतिर्न शुक्तिरजतादिज्ञानवदध्यासो नापि घटादिज्ञानवत् प्रमा, किन्तूभय-विलक्षणं ज्ञानमिति कल्पतरुपरिमलोक्तेश्च।

एतेनार्थपदन्तु स्वरूपकथनार्थमेवेति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, शुद्धं ब्रह्मेत्याकारके ब्रह्मनिर्विकल्पकप्रत्यक्षे प्रमाभूतेऽव्याप्तेः, लोके विषयस्यैवार्थत्व-प्रसिद्धेर्ब्रह्मणो विषयित्वेनाऽनर्थत्वात् तज्ज्ञानेऽनधिगताबाधितार्थ-विषयक-ज्ञानत्वाभावात्, उपहित-ब्रह्मणोऽर्थत्वाङ्गीकारेऽप्युदाहृतार्थवादवाक्यजन्ये वाच्यार्थज्ञाने प्रमात्वापत्तेर्दुर्वारत्वात्।

संशयेऽतिव्याप्तिवारणाय—**ज्ञानत्व**मिति। निश्चयत्वमित्यर्थः। यत् तूद्बुद्ध-संस्कारेऽतिव्याप्तिवारणार्थं ज्ञानपदमिति परिभाषाप्रकाशिकाकृतां व्याख्यानं, तद् हेयम्, स्मृतिविषयवत् तद्विषयस्याप्यज्ञातत्वाभावात्, अनुभवस्यैवाज्ञाननाशकस्य तत्-करणत्वात् तस्य च पूर्वं सत्त्वात्, अन्यथा संस्कारस्य तदजन्यत्वे स्वजन्यव्यापार-वत्तासम्बन्धेन स्मृतेः पूर्वमनुभवाभावात् स्मृतेरनुभवाजन्यत्वप्रसङ्गात्, संस्कारोद्बोध-सामग्र्यास्तत्करणत्वे मानाभावात्, ज्ञानाकरणक-ज्ञानत्वेन स्मृतेः प्रत्यक्षत्वप्रसङ्गात्, अनुभवसमानविषयकत्वाभाव-प्रसङ्गाच्च। एतेन शिखामणिकृतां व्याख्यानमपि प्रत्युक्तम्।

वस्तुतस्त्वज्ञातार्थविषयकनिश्चयत्वमेव प्रमात्वम्। न च भ्रमे स्मृतौ वातिव्याप्तिः, अविद्यावृत्तिरूपयोस्तयोरज्ञानानिवर्तकत्वेन ज्ञानत्वाभावात्। तथा चोक्तमद्वैतसिद्धौ प्रतिकर्मव्यवस्थायाम्—"इदमाकारवृत्त्यवच्छिन्नचैतन्येन रजतभानानुपपत्ते रजताकारा-ऽप्यविद्यावृत्तिरभ्युपेयत" इति। वृत्तिद्वयोपपत्तिप्रकरणे च—"अविद्यावृत्तेर्न ज्ञानत्वम्, अतो ज्ञानैक्यधीः, ज्ञानत्वस्याज्ञाननिवर्तकमात्रवृत्तित्वादि"ति। अद्वैतरत्नरक्षणे च—"अप्रमाया अज्ञानविरोधित्वरूप-ज्ञानत्वाभावेने"ति। तयोर्ज्ञानत्वव्यवहारस्त्विच्छादि-जनकतया गौण एव। तथा चोक्तमद्वैतरत्नरक्षणे—"स्वार्थनिश्चायकत्वेन तत्र प्रामाण्यो-पचारः स्मृतिवदि"ति। तस्मात् सिद्धान्ते प्रमालक्षणे आद्यविशेषणद्वयं न देयम्, अतिव्याप्त्यभावात, चक्षुराद्ययोग्यपदार्थघटितत्वेन प्रमात्वस्य स्वतोग्राह्यत्वाभावप्रसङ्गाच्च। एतेन शिखामणिकृतामस्थानजल्पनं प्रत्युक्तं वेदितव्यम्।

स्मृतिवृत्तिप्रमात्वस्य लक्षणमाह—**स्मृतिसा**धारणमिति। स्मृत्यनुभवोभयवृत्तीत्यर्थः। पदव्यावृत्तिस्तु प्रागेव दर्शिता। अविद्यावृत्तिरूपायाः स्मृतेरज्ञाननिवर्तकत्वाभावेन प्रमात्वाभावे सिद्धान्तितेऽपि विवरणमतमनुवर्तमानैर्मूलकृद्भिः कथमेतल्लक्षणमुपन्यस्तं, तत् सुधीभिर्विभावनीयम्।

**र्थविषयक-ज्ञानत्वम् , स्मृति-साधारणं त्वबाधितार्थ-विषयक-ज्ञानत्वम् । नीरूपस्यापि कालस्येन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिक-बुद्धेरपि पूर्वपूर्व-ज्ञानाविषय-तत्तत्क्षणविशेषविशिष्ट-विषयत्वेन न तत्राव्याप्तिः ।**

नन्विदं लक्षणं धारावाहिक-द्वितीयादिबुद्धावव्याप्तं, प्रथमज्ञानेन द्वितीयादि-ज्ञान-विषयस्य ग्रहणात् तासां द्वितीयादि-बुद्धीनामनधिगतार्थविषयक ज्ञानत्वाभावादित्याशङ्क्य परिहरति—**नीरूपस्ये**ति । कालस्य नीरूपत्वं सर्वसम्मतम् । द्रव्यप्रत्यक्षे महत्त्व-समानाधिकरणस्योद्भूतरूपवत्त्वस्य प्रयोजकत्वात् कालस्य च द्रव्यस्य रूपाभावादतीन्द्रियत्वं नैयायिकैरभ्युपगतम् । मीमांसकैस्तु तस्येन्द्रियवेद्यत्वम् । तथा चोक्तं—"न सोऽस्ति प्रत्ययो लोके यत्र कालो न भासत" इति । औपनिषदैरप्यस्माभिस्तथैवाभ्युपगम्यते, इदानीं घट इत्यादि-प्रतीतौ कालविशेषस्य विषयत्वेनानुभवात् , अन्यथा गृहीतेऽपि घटे घटो वर्तमानो न वेत्याकारको वर्तमानता-संशयो लोकस्य स्यात् । न च तथा, तस्मात् कालस्य प्रत्यक्षत्वं स्वीकरणीयमित्याह—**इन्द्रियवेद्यत्वे**ति । प्रत्यक्ष-त्वेत्यर्थः । ननु प्रत्यक्षप्रयोजकस्य रूपस्याभावात् कथं कालस्य प्रत्यक्षत्वमिति चेत् , न, एकैकेन्द्रियद्रव्यप्रत्यक्षे तादृशरूपवत्त्वस्य प्रयोजकत्वेऽपि सर्वेन्द्रियग्राह्य-द्रव्यप्रत्यक्षे तस्य प्रयोजकत्वाकल्पनात् । तथा चोक्तमद्वैतसिद्धौ परिच्छिन्नत्वहेतूपपत्तौ—"प्रति-नियतेन्द्रियग्राह्येष्वेव रूपाद्यपेक्षानियमा"दिति । नैयायिकैरपि कैश्चित् तथानियमा-भ्युपगमात् । तथाचोक्तं परिशुद्धिप्रकाशे—"प्रतीतेः समयविशेष-विषयत्वनियमादि"ति । अस्तु वा कालस्य प्रत्यक्षत्वम् , प्रकृते तु किमायातमिति चेत् , तत्राह—**धारावाहिके**-ति । धारावाहिक-द्वितीयादि-बुद्धेरित्यर्थः । तैलधारावन्निरन्तरोत्पन्न-समानविषयक-सजातीयज्ञानप्रवाहो धारा । **पूर्वपूर्वे**ति । प्रथमज्ञानस्य प्रथमक्षणविशिष्टो घटादिर्विषयः, न तु द्वितीयक्षणविशिष्टस्तदानीं द्वितीयक्षणस्याभावात् । प्रथमक्षणश्च स्वोत्पत्त्यधिकरणक्षणः । द्वितीयज्ञानस्य तु द्वितीयक्षणविशिष्टो विषयः, न तु प्रथमक्षण-विशिष्टस्तदानीं प्रथमक्षणस्यातीतत्वेनाभावात् । प्रथमक्षणविशिष्टश्च घटादिर्द्वितीय-क्षणविशिष्टाद् घटाद् भिद्यते, विशेषणभेदेन विशिष्टस्य भेदाङ्गीकारात् । एवञ्च द्वितीय-ज्ञानस्य प्रथमज्ञानाविषय-द्वितीयक्षणविशिष्टघटादि-विषयकत्वाद् द्वितीयक्षणविशिष्ट-घटस्य तु प्रथमज्ञानेनाग्रहणादज्ञातार्थविषयकत्वमिति न तत्राव्याप्तिः । एवं तृतीयज्ञानादावपि बोध्यमिति भावः । न च स्थूलकालस्येन्द्रियवेद्यत्वेऽप्यतिसूक्ष्मस्य क्षणस्यातीन्द्रियत्वात्

**किञ्च सिद्धान्ते धारावाहिक-बुद्धिस्थले न ज्ञानभेदः। किन्तु यावद्** प्रथमादिक्षणानां प्रत्यक्षेणाग्रहणात् केवलस्य च घटादेर्ग्रहणाद् द्वितीयेन तु ज्ञानेन पुनस्तस्यैव ग्रहणात् तस्य ज्ञातार्थविषयकत्वादव्याप्तिरिति वाच्यम्, तदतीन्द्रीयत्वे मानाभावात्, स्थूलकालस्येव तस्यापीन्द्रियग्राह्यत्वाभ्युपगमात्। तथा चोक्तमद्वैत-रत्नरक्षणे—"न च क्षणस्यातीन्द्रियत्वं, स्थूलोपाधिरपि तव मतेऽतीन्द्रिय एव। तथा च सोऽपि कथं भासत इति पश्ये"ति। यावन्ति ज्ञानानि तावन्त्यज्ञानानीतीष्टसिद्धिकार-मते तु द्वितीयादि-ज्ञानानामज्ञातार्थविषयकत्वमक्षतमिति न तत्राव्याप्तिः।

वस्तुतस्त्वभ्युपेत्येदमुक्तम्। कालस्येन्द्रियवेद्यत्वानभ्युपगमेऽपि विशेषणभेदेन विशिष्ट-भेदानङ्गीकारेऽपि द्वितीयादिबुद्धौ नाव्याप्तिः, तासामनुवादत्वेनाप्रमात्वात्। अज्ञात-ज्ञापकत्वस्यैव प्रमात्वप्रयोजकत्वाद् द्वितीयादि-बुद्धीनाञ्च तदभावात् स्मृतिवत् स्वार्थ-निश्चायकत्वेन गौणस्तत्र प्रमात्व-व्यवहारः। तथा चोक्तमद्वैतरत्नरक्षणे—"अनुवादकत्व-लक्षणस्याप्रामाण्यस्येष्टत्वादि"ति।

पराभ्युपगतं धारावाहिक-ज्ञानभेदमभ्युपेत्य प्रमालक्षणस्याव्याप्तिः परिहृता। इदानीं विवरणभावप्रकाशिकोक्तमनुस्मरन् स्वसिद्धान्तं दर्शयितुमुपक्रमते—**किञ्चे**ति। **सिद्धान्ते** अद्वैतसिद्धान्ते। **ज्ञानभेदः** प्रमाभेदः। **यावत्** यावत्कालम्। **घट-**स्फुरणं घटप्रकाशः, घटोऽस्ति प्रकाशते इति व्यवहार इति यावत्। **तावत्** तावत्कालम्। वृत्त्येकत्वस्य ज्ञानैकत्वप्रयोजकत्वात् तदुपपादयितुमाह—**एकैवे**ति। लाघवात्, प्रथमज्ञानेनैव धारावाहिक-द्वितीयादिज्ञान-फलोपपत्तौ तदुत्पाद-कल्पनाया निष्प्रयोजनत्वात्, ज्ञानभेदस्याननुभवात्, द्वितीयक्षणे तदुत्पत्तौ कारणाभावात्, वृत्तेर्द्रव्य-तयैकद्रव्यवति द्रव्यान्तरानारम्भाच्चेति भावः। तथा चोक्तं विवरणभावप्रकाशिकाया-मज्ञानानुमान-निरूपणे—"अस्मन्मते तु धारावाहिकबुद्धिरेव नास्ति, एकस्यैव ज्ञानस्य तावत् समयस्थित्युपपत्ते"रिति। अद्वैतदीपिकायाञ्च—"घटादिवद् वृत्तेरपि द्रव्यत्वाद् यावद्विनाशकारणमवस्थानस्येष्टत्वादि"ति। एवकार-व्यवच्छेद्यं निषेधति—**न त्वि**ति। **नाना** वृत्तिभेदः, कारणाभावाद् गौरवाच्चेति भावः। नन्वतिलाघवात् सुषुप्तिपर्यन्तमेकैव वृत्तिः स्यात्। स्यादिति चेत्, वृत्तिमति वृत्त्यन्तरानुदयेन ज्ञानान्तरानुपलब्धिप्रसङ्गात्, वृत्त्यन्तरोदयाभ्युपगमे एकदैव बहुज्ञानोपलब्धि-प्रसङ्गाच्च। न च तथोपलब्धिः। तस्मान्नाशकोदयपर्यन्तं वृत्तेः स्थायित्वं स्वीकरणीयमित्याह—**वृत्तेरि**ति।

**घटस्फुरणं, तावद् घटाकारान्तःकरणवृत्तिरेकैव, न तु नाना, वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यन्त-स्थायित्वाभ्युपगमात्। तथा च तत्प्रतिफलित-स्वविरोधी**ति। स्वस्याः वृत्तेर्विरोधिनी या वृत्तिस्तदुत्पत्तिपर्यन्तमित्यर्थः। सा च स्वोत्तरोत्पन्ना स्वान्याकारा वृत्तिः सुषुप्तिश्च। न चाखण्डाकार-वृत्त्युत्तरं वृत्त्यन्तरादेर्नाशकस्याभावात् तन्नाशो न स्यादिति वाच्यम्, तस्या विषस्येव स्वपरनाशकतयोदयात्। तथा चोक्तं कल्पतरौ—"शुद्धं ब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वस्वेतरोपाधिनिवृत्तिहेतुरुदयते, स्वस्या अप्युपाधित्वाविशेषादि"ति। **उत्पत्ती**ति। उत्पत्तिः कार्यस्याद्यक्षण-सम्बन्धस्तत्पर्यन्तमित्यर्थः। वृत्त्यन्तरस्य वृत्तिर्नाशिकेति मतेनेदम्। मूलकृतामत्रैव स्वारस्यम्, ब्रह्मसाक्षात्कारानन्तरं घटादीनां बाध इत्युक्तेः। न चैकदा वृत्तिद्वय-यौगपद्य-विरोधः, अविनश्यदवस्थयोर्विरोधेऽपि विनश्यदविनश्यदवस्थयोर्विरोधे मानाभावात्। वृत्त्यन्तरस्य वृत्तिर्नाशस्वरूपेति मते उत्पत्तिपर्यन्तमित्यस्योत्पत्तिप्राक्क्षणपर्यन्तमित्यर्थः, एकाकारवृत्तिदशायामन्याकार-वृत्तेरनुदयात्। तथा च वृत्त्यन्तरोत्पत्तेः प्राक्क्षणपर्यन्तं पूर्ववृत्तेः स्थितिः, वृत्त्यन्तरोदयकाले तु तन्नाशः, वृत्त्यन्तर-सामग्र्या एव तन्नाशकतया वृत्त्यन्तरोत्पत्तेरतिपूर्वं तन्नाशे हेत्वभावात्। तस्माद् वृत्त्यन्तरोदयस्य कपालोदयवद् विरोधिनाशस्वरूपत्वम्। तथा चोक्तं भामत्यामारम्भणाधिकरणे—"न हीयमुत्पन्ना सति पश्चादविद्यां निवर्तयति, येन नान्त्या स्यात्, किन्त्वविद्या-विरोधिस्वभावतया तन्निवृत्त्यात्मैवोदयत" इति। कल्पतरुपरिमले च—"घटध्वंसो नाम घटविरोधि-कपालरूप-कार्यान्तरोदय एव, न त्वभावरूपः, तदतिरिक्ताभावरूप-ध्वंसकल्पने गौरवात्, कपालरूप-विरोधिकार्यान्तरोदयेनैव ध्वंसव्यवहारोपपत्तेश्चे"ति।

वस्तुतस्तु स्वविरोधीत्यस्य स्वविरोध्युदयप्राक्क्षणपर्यन्तमित्यर्थः। वृत्तिपदं त्वत्र सम्पातायातम्। न हि वृत्त्यन्तरस्य वृत्तिर्नाशिका, सुषुप्तिपूर्वक्षणवृत्तेरखण्डाकारवृत्तेश्चा-नाशप्रसङ्गात्। अपि तु कारणनाश एव नाशकः, अन्यथाऽननुगत-नाशककल्पनापत्तेः।

एतेन "वृत्तिविरोधित्वञ्च क्वचित् स्वभिन्नपदार्थाकारवृत्तेरि"ति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, सुषुप्तिपूर्वक्षणवृत्तेरखण्डाकारवृत्तेश्च नाशाभाव-प्रसङ्गात्, अननुगत-नाशक कल्पनाप्रसङ्गाच्च।

नन्वस्तु वृत्तेरेकत्वं, ज्ञानैक्यं तु कथमित्यत्राह—**तथा चे**ति। वृत्तिभेदेऽपि क्वचिदनुमानादौ ज्ञानैक्यं दृष्टं, वृत्त्यैक्ये तु सुतरां, ज्ञानभेदप्रयोजकस्य वृत्तिभेदस्या-

**चैतन्यरूपं घटादिज्ञानमपि तत्र तावत्कालीनमेकमेवेति नाव्याप्ति-शङ्कापि ।**

**ननु सिद्धान्ते घटादेर्मिथ्यात्वेन बाधितत्वात् तज् ज्ञानं कथं प्रमाणम् ?**

भावादिति भावः । **तत्प्रतिफ**लितेति । वृत्तिप्रतिबिम्बितेत्यर्थः । ननु नीरूपायां वृत्तौ नीरूपस्य चैतन्यस्य कथं प्रतिबिम्बः, रूपवत्येव रूपवतः प्रतिबिम्बनियमादिति चेत्, न, नीरूपस्यापि रूपाकाशादेः प्रतिबिम्बदर्शनात् तादृशनियमे मानाभावात्, द्रव्यप्रतिबिम्बे तथानियमाभ्युपगमेऽप्यद्रव्यप्रतिबिम्बे तथानियमाभावात् चैतन्यस्य निर्गुणत्वेनाद्रव्यत्वात् तत्प्रतिबिम्बे बाधकाभावाच्च । तथा चोक्तं सिद्धान्तबिन्दौ—"जवाकुसुमरूपस्य नीरूपस्यापि स्फटिकादौ प्रतिबिम्बदर्शनादि"ति । **तत्र** धारावाहिकबुद्धिस्थले । **तावत्-कालीनं** वृत्तिकालीनम् । **एकमेवे**ति । यद्यपि स्वरूपतश्चैतन्यमेकमेव, चैतन्यभेदानभ्युपगमात् । तथाप्याकाशवदुपाधिभेदाद् तद् भिद्यते । स चौपाधिको भेदः कल्पितः । अत्र तु वृत्तिरूपोपाधेरेकत्वाच्चैतन्यस्याप्येकत्वमिति भावः । **नाव्याप्तिशङ्का**पीति । अधिगतार्थविषयकस्य ज्ञानस्याभावादिति भावः । न च प्रत्यक्षज्ञानसामग्र्या सत्त्वाद् द्वितीयादिक्षणेऽपि तज्जातीयं प्रत्यक्षज्ञानान्तरं स्यादिति वाच्यम्, सामग्र्या असत्त्वात्, हेतुभूतस्य विषयाज्ञानस्य तदानीमभावात्, ज्ञानाश्रये ज्ञानान्तरोत्पत्तौ पूर्वज्ञानस्य प्रतिबन्धकत्वाच्च । तथा चोक्तं विवरणभावप्रकाशिकायामज्ञानानुमाननिरूपणे—"प्रत्यक्षे विषयाज्ञानस्यापि हेतुत्वाद् ज्ञानाश्रये तदा तज्जातीयज्ञानानुत्पत्तिनियमाच्चे"ति ।

नन्वस्तु ज्ञानैक्यं, तथाप्येतल्लक्षणं व्यावहारिकज्ञानेऽव्याप्तं ; भवन्मते ब्रह्मातिरिक्तस्य सर्वस्यापि विषयस्याधिष्ठानज्ञानेन बाधात् सर्वस्यापि व्यावहारिकज्ञानस्य बाधितविषयकत्वादिति शङ्कते—**नन्वि**ति । **सिद्धान्ते** अद्वैतसिद्धान्ते । घटादेर्बाधितत्वे हेतुमाह —**मिथ्यात्वेने**ति । अत्र ज्ञापकहेतौ तृतीया । तेन मिथ्यात्वज्ञान-ज्ञाप्यं बाधितत्वमित्यर्थः । तथा च सद्विविक्तत्वरूपेण मिथ्यात्वेन ज्ञाननिवर्त्यत्वरूपं स्वप्रकारकप्रतीति-विशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वरूपं वा बाधितत्वमनुमेयमिति भावः ।

एतेनाभेदे तृतीयेति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तं, हेतुतृतीयासम्भवेऽभेदार्थक-तृतीयाकल्पनाया जघन्यत्वात् ।

**बाधित**त्वात् ज्ञानापनोद्यत्वात् । **तज्ज्ञानं** घटादिविषयकं ज्ञानम् । **कथमि**ति । आक्षेपे । **प्रमाणं** प्रमा, न प्रमेत्यर्थः । तज्ज्ञानानामबाधितार्थविषयकज्ञानत्वाभावात्, ब्रह्मातिरिक्तस्य सर्वस्यापि विषयस्य भवन्मते मिथ्यात्वेन बाधितत्वात् तत्तद्विषयकस्य

**उच्यते। ब्रह्मसाक्षात्कारानन्तरं हि घटादीनां बाधः, "यत्र तस्य सर्वमात्मैवाभूत् तत् केन कं पश्ये"दिति श्रुतेः। न तु संसारदशायां बाधः, "यत्र हिं द्वैतमिव भवति तदितर इतरं पश्यति" इति श्रुतेः। तथा चाबाधितपदेन संसारदशायामबाधितत्वं विवक्षितमिति न घटादिप्रमायामव्याप्तिः। तदुक्तम्—**

सर्वस्यापि ज्ञानस्य बाधित-विषयकत्वात् तत्र तत्र प्रमालक्षणागमनादव्याप्तिरिति भावः। परिहरति—**उच्यत** इति। **ब्रह्मसाक्षात्**कारानन्तरम् स्वाधिष्ठान-साक्षात्कारानन्तरम्। **बाधः** सोपादान-कार्यनिवृत्तिः, घटादेरुपादानेनाऽज्ञानेन सह घटादेः कार्यस्य निवृत्तिः, अधिष्ठान-साक्षात्कारस्यैवाऽध्यस्तनिवर्तकत्वाद् ब्रह्मणश्च घटाद्यधिष्ठानत्वाद् ब्रह्मसाक्षात्कारानन्तरं घटादीनां बाध इति भावः। अधिष्ठान-साक्षात्कारस्य निवर्तकत्वमतेनेदम्, निवृत्तिरूपत्वमते तु स्वाधिष्ठान-साक्षात्काराव्यवहितमित्यर्थः। अधिष्ठानसाक्षात्कारस्य बाधहेतुत्वे बृहदारण्यकश्रुतिं प्रमाणयति—**यत्रे**ति। श्रुत्यर्थस्तु—**यत्र** यस्मिन् काले **त्वस्य** ब्रह्मसाक्षात्कारवतः पुरुषस्य **सर्वं** क्रियाकारकफलरूप-प्रपञ्चजातम् **आत्मैव** ब्रह्मैव अभूत्, ब्रह्मविद् ब्रह्मैव भवतीति श्रुतेः। **तत्** तदा **केन** इन्द्रियेण **कं** विषयं पश्येत्? केनापीन्द्रियेण कमपि विषयं न जानीयात्, क्रिया-कारक-फल-लक्षणस्य सर्वस्यापि प्रपञ्चस्य ब्रह्मात्मनाऽवस्थानात् क्रियाकारकभेद-व्यवहाराभावादिति भावः। ब्रह्म-साक्षात्कारात् पूर्वं घटादीनामबाध्यत्वं वक्तुं प्रक्रमते—**न त्वि**ति। **संसार**दशायां व्यवहारदशायाम्। **बाध** इति। घटादीनां नाशेऽपि तदुपादानस्याज्ञानस्य सत्त्वान्न बाधः, किन्तु निवृत्तिरिति भावः। तत्र प्रमाणमाह—**यत्रे**ति। श्रुत्यर्थस्तावत् **यत्र** यस्मिन् काले **द्वैत**मिव द्वैतं भवतीव, प्रपञ्चोपादानाज्ञानेन द्विचन्द्रादिदर्शनवत् क्रिया-कारक-फललक्षण-कल्पितभेदवदिव भवति, न तु वस्तुतो द्वैतं भवति, **तत्** तदा **इतरः** ब्रह्मभिन्नो जीवः **इतरं** क्रियाकारकफललक्षणभेदेन भिन्नमिव **पश्यति**—अयं कर्त्ता, इदं कर्म, इदं फलमिति। नन्वस्तु ब्रह्मज्ञानानन्तरं घटादेर्बाधस्तावतापि प्रमाभूते घटादिज्ञाने नाव्याप्तिपरिहारः, बाधितविषयकत्वादिति चेत्, तत्राह—**तथा चे**ति। **अबाधित**पदेन लक्षणघटकाबाधितपदेन। अबाधितत्वं ब्रह्मप्रमातिरिक्ताबाध्यत्वम्। **इति** हेतौ। **अव्याप्ति**रिति। ब्रह्मप्रमातिरिक्तेन केनचिद् ज्ञानेन घटादेर्विषयस्य बाधो न भवतीति सिद्धं घटादिज्ञानस्य ब्रह्मज्ञानस्य चाबाधितार्थ-विषयकत्वम्। तेन तत्र तत्र नाव्याप्ति-

**देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः**
**लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात् ॥**

**इति। आत्मनिश्चयाद् ब्रह्मसाक्षात्कारपर्यन्तमित्यर्थः। लौकिकमिति। घटादिज्ञानमित्यर्थः।**

**तानि च प्रमाणानि षट्, प्रत्यक्षानुमानागमार्थापत्त्यनुपलब्धिभेदात्।**

रिति भावः। अबाधितपदस्य तादृशार्थपरत्वेऽभियुक्तसम्मतिमाह—**तदुक्त**मिति। अतिप्राचीनाऽद्वैतवादिना सुन्दरपाण्ड्याचार्येणेति शेषः। **देहात्मे**ति। **यद्वत्** यथा **देहात्म**प्रत्ययो गौरोऽहं ब्राह्मणोऽहमित्याद्याकारको देहात्मप्रत्ययः **आत्मनिश्चयात्** ब्रह्मसाक्षात्कारपर्यन्तं **प्रमाण**त्वेन प्रमेति **कल्पितो** व्यवह्रियते **तद्वत्** तथा **इदं लौकिकं** क्रिया-कारक-फलादि-विषयकं ज्ञानं **प्रमाणं** प्रमेति व्यवह्रियत इति श्लोकार्थः। तथा च—अनधिगत-ब्रह्मप्रमातिरिक्ताबाधितार्थ-विषयक-ज्ञानत्वं प्रमात्वमिति प्रमासामान्य-लक्षणं पर्यवसितम्।

नन्वस्तु प्रमाकरणं प्रमाणम्। तत् तु नैकविधं, बहुशस्तत्र मतभेद-दर्शनात्। तथा हि—प्रत्यक्षमेकं प्रमाणमिति चार्वाकाः। प्रत्यक्षमनुमानञ्चेति सुगतार्हत-वैशेषिकाः। प्रत्यक्षानुमानागमाः प्रमाणानीति सांख्याः पातञ्जला भासर्वज्ञ-मतानुयायिनो न्यायैक-देशिनश्च। प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति नैयायिकाः। प्रत्यक्षानुमानो-पमानशब्दार्थापत्तयः प्रमाणानीति प्राभाकराः। प्रत्यक्षानुमानोपमान-शब्दार्थापत्त्य-नुपलब्धयः प्रमाणानीति भाट्टाः। सम्भवैतिह्य-युक्तानि तानीति पौराणिकाः। सम्भवैतिह्य-चेष्टा-युक्तानि तानीति तान्त्रिकाः। तथा चोक्तं तार्किकरक्षायां—"प्रत्यक्षमेकं चार्वाकाः कणाद-सुगतौ पुनः। अनुमानञ्च तच्चाथ सांख्याः शब्दञ्च ते अपि। न्यायैकदेशिनोऽप्येवमुपमानञ्च केचन। अर्थापत्त्या सहैतानि चत्वार्याह प्रभाकरः। अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा। सम्भवैतिह्य-युक्तानि तानि पौराणिका जगुरि"ति।

तत्र शावरभाष्योक्तमनुस्मरन् भाट्टमतमनुवर्त्तमानः सिद्धान्त्यभिमतानि प्रमाणानि विभजते—**तानी**ति। **षड़ि**ति। इति होचुर्वृद्धा इत्याद्याकारकस्याप्तोक्तिरूपस्यैतिह्यस्य शब्दान्तर्भावात्, अनाप्तोक्तिरूपस्य तु तस्याप्रमाणत्वात्, सम्भवति ब्राह्मणे विद्या सम्भवति खार्यां द्रोण इत्याद्याकारस्य सम्भवस्य व्याप्तयादिज्ञान-सापेक्षस्यानुमानान्तर्भावात्। तथा चोक्तं तत्त्वकौमुद्याम्—"सम्भवस्तु यथा खार्यां द्रोणाढ़क-प्रस्थाद्यवगमः। स

**तत्र प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम्। प्रत्यक्षप्रमा चात्र चैतन्यमेव, "यत् साक्षादपरोक्षाद् ब्रह्मे"ति श्रुतेः। अपरोक्षादित्यस्यापरोक्षमित्यर्थः।**

चानुमानमेव। खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्यां द्रोणादिसत्त्वमवगमयती"-ति। "यच्चानिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमात्रमिति होचुर्वृद्धा इत्यैतिह्यं, यथेह वटे यक्षः प्रतिवसतीत्यादि, न तत् प्रमाणम्, अनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात्, आप्त-प्रवक्तृकत्व-निश्चये त्वागम" इति च। क्रियारूपायाश्च चेष्टाया व्याप्त्यादिज्ञानसापेक्षाया अनुमानान्तर्भावात्, क्वचित् शब्दस्मारिकायास्तस्याः शब्दान्तर्भावान्न न्यूनं नाप्यधि-कमिति भावः। तथा च रामायणं—"रामः षड्_ युक्तयो लोके याभिः सर्वं विमृश्यत" इति। शावरभाष्यञ्च—"सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म, तत् प्रत्यक्षम्। अनुमानं ज्ञातसम्बन्धस्यैकदेश-दर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः। उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति। अर्थापत्तिरपि दृष्टो श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना। अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासन्निकृष्टस्ये"ति। सर्वेषामेव षट्प्रमाणवादिनामिदमेवोपजीव्यम्।

तत्र प्रत्यक्षस्य ज्येष्ठत्वादनुमानादीनामुपजीव्यत्वाच्च प्रथमं तन्निरूपयति—**तत्रे**ति। प्रमाणानां मध्ये इत्यर्थः। प्रत्यक्षप्रमाणस्य स्वरूपमाह—**प्रत्यक्षे**ति। तल्लक्षणन्तु प्रत्यक्ष-प्रमाकरणत्वम्। करणत्वमित्युक्ते कुठारादावतिव्याप्तिस्तस्यापि छिदादिकरणत्वादत उक्तं—**प्रमे**ति। प्रमाकरणत्वमित्युक्तेऽनुमानादावतिव्याप्तिस्तस्याप्यनुमितिरूप-प्रमा-करणत्वादत आह—**प्रत्यक्षे**ति। प्रत्यक्षकरणत्वमित्युक्तेऽविद्यावृत्तावतिव्याप्तिस्तस्यापि भ्रमप्रत्यक्षकरणत्वादत उक्तं—**प्रत्यक्ष**प्रमेति। प्रत्यक्षप्रमाणस्य प्रत्यक्षप्रमाघटितत्वात् तल्लक्षणमादौ वक्तव्यम्। न च प्रत्यक्षप्रमाणजन्यज्ञानत्वं प्रत्यक्षप्रमात्वमिति वाच्यम्, अन्योन्याश्रयात्, प्रत्यक्षप्रमाणज्ञाने सति प्रत्यक्षप्रमाणजन्य-ज्ञानरूपाया प्रत्यक्षप्रमाया ज्ञानं, प्रत्यक्षप्रमाज्ञाने तत्करणरूप-प्रत्यक्षप्रमाणज्ञानमिति। अतः प्रत्यक्षप्रमास्वरूपमाह—**प्रत्यक्ष**प्रमेति। **अत्र** अद्वैतसिद्धान्ते। **चैतन्य**मेवेति। वृत्तिप्रतिबिम्बित-चैतन्यं वृत्त्यभिव्यक्तचैतन्यं वा प्रमा, न तु शुद्धचैतन्यं, अज्ञानानिवर्त्तकत्वेन तस्य प्रमात्वायोगात्। एवकारेणेन्द्रियजन्यज्ञानादीनां प्रमात्वनिरासः। तथा च नान्यो-न्याश्रय इति भावः। चैतन्यस्य प्रत्यक्षस्वरूपत्वं बृहदारण्यकश्रुत्या प्रमाणयति—**यदि**ति। श्रुत्यर्थस्तावत्—**यद्** ब्रह्म **साक्षात्** अव्यवहितं केनचिद् द्रष्टुः अपरोक्षात्

**ननु चैतन्यमनादि तत्कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्वमिति। उच्यते। चैतन्यस्यानादित्वेऽपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रिय-**

अगौणं, न श्रोत्रब्रह्मादिवदिति। नन्वपरोक्षादिति पञ्चम्या जन्यत्वमुच्यते, न तु ब्रह्मणः प्रत्यक्षत्वमतः श्रुत्यर्थं व्याचष्टे—**अपरोक्षा**दित्यस्येति। धूरि दक्षिणाया इत्यादिवत् प्रथमास्थाने पञ्चमी। तथा च वार्त्तिकसूत्रम्—"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां चे"ति। तथा चापरोक्षसामानाधिकरण्यादपरोक्षाभेद एव प्रतीयते, न त्वपरोक्षजन्यत्वम्, नित्यत्वश्रुति-विरोधादिति भावः।

वस्तुतस्तु साक्षाद् द्रष्टरि संज्ञायामित्यनेन दृष्टिकर्तर्यपि साक्षात्पद-प्रयोगाद् ब्रह्मणोऽपि दृष्टिकर्तृत्वं प्राप्तं, तन्निवृत्त्यर्थमाम्नातम्—**अपरोक्षा**दिति। धनवतो धनवानितिवद् द्रष्टुर**परोक्षा**दयं **यत्**पदार्थो ब्रह्म **साक्षात्** केनचिदव्यवहितम्, सदा प्रकाशमानत्वात्, द्रष्टुः प्रात्यक्षं तु गौणं, साक्षिवेद्यत्वात्। तस्माद् ब्रह्म न द्रष्टृ, किन्तु दृष्टिस्वरूपम्। तथा चोक्तं भाष्यवार्त्तिके तृतीयाध्याये—"यदि वा द्रष्टरि प्राप्ते साक्षादिति विशेषणात्। तत्प्रसङ्गनिवृत्त्यर्थमपरोक्षादितीर्यते। द्रष्टृ-दर्शन-दृश्यार्थ-प्राप्तावाद्यविशेषणात्। लोकवत् तन्निषेधार्थमपरोक्षादितीर्यते" ॥ इति।

ननु चैतन्यस्य प्रत्यक्षत्वे तस्य नित्यत्वेनाजन्यत्वात् कस्यापि तत्करणत्वं न स्यादिति प्रमालक्षणस्यासम्भवं शङ्कते—**नन्वि**ति। **अनादि** अजन्यम्। **तत्** तस्मात्। **चक्षुरादे**-रित्यादिना त्वगादेः परिग्रहः। **तत्करण**त्वेन प्रमारूपचैतन्य-करणत्वेन। **प्रमाण**त्वं प्रमाकरणत्वम्, कथमित्यनेन सम्बन्धान्न प्रमाणत्वमित्यर्थः। आशङ्कां परिहरति—**उच्यत** इति। **चैतन्यस्य** शुद्धचैतन्यस्य। **अनादित्वेऽपि** इन्द्रियाजन्यत्वेऽपि, चैतन्यस्य नित्यत्वादिति भावः। **तदभिव्यञ्जके**ति। चैतन्याभिव्यञ्जकेत्यर्थः। **अन्तःकरण-वृत्तिः** अन्तःकरणस्य मुषानिषिक्त-द्रुत-ताम्रादिवद् विषयाकार-सदृशाकारः परिणामः। स चान्तःकरणे इन्द्रियसंयुक्तांशेऽन्तःकरणसंयुक्तेन्द्रिय-विषय-सन्निकर्षाज् जायते। जायमानश्च स चक्षुर्वद् देहादविच्छिन्नश्चक्षुरादिद्वारा निर्गत्य घटादिविषयान् व्याप्नुवन् देहाभ्यन्तरे घटादौ विषये देहविषययोर्मध्येऽपि देशे सूर्यरश्मिवद् दीर्घप्रभाकारेणा-वतिष्ठते। अत एव रश्मिवत् सहसा सङ्कोचोऽप्युपपन्नः। तत्र देहावच्छिन्नान्तःकरण-भागोऽहङ्काराख्यः कर्त्तेत्युच्यते। देहविषय-मध्यदेश-वृत्ति-परिणतान्तःकरणभागो दीर्घप्रभावद् दण्डायमानो वृत्तिज्ञानाख्या क्रियेत्युच्यते। विषयस्य ज्ञानकर्मत्व-

**सन्निकर्षादिना जायत इति वृत्तिविशिष्टं चैतन्यमादिमदुच्यते। ज्ञाना-**
सम्पादको ज्ञानक्रियाजन्य-फलस्यावरणनिवृत्त्यादिरूपस्य प्रयोजको विषयव्याप्तपरिणता-न्तःकरणभागोऽभिव्यक्तिजननयोग्य इत्युच्यते, आवरणनिवृत्त्यादिरूपाभिव्यक्तिं प्रति तादृशान्तःकरणभागस्यैव कारणत्वात् योग्यतावत्त्वाच्च। तत्र देहसंसृष्ट-वृत्त्यवच्छिन्न-चैतन्यं प्रमाता, देहावच्छिन्न-प्रयत्नेन स्वव्यापारेण प्रमाणादि-सकलकारक-प्रयोक्तृत्वा-दितर-कारकाप्रयोज्यत्वाच्च। केवलाया वृत्तेरचेतनत्वात्, केवलस्य च चितो निर्व्यापारस्य कर्तृत्वासम्भवात् मिथस्तादात्म्यं प्राप्तस्य तदुभयस्य प्रमातृत्वम्। देहस्थापरिणतान्तः-करणभागावच्छिन्नं चैतन्यमहमिति व्यपदिश्यते, परिणतान्तःकरणभागावच्छिन्नं चैतन्यं तु प्रमातेति भेदः। देहविषययोर्मध्यदेशसंसृष्ट-वृत्त्यवच्छिन्नं चैतन्यं प्रमाकरणं प्रमाणं, प्रमातृव्यापारप्रयोज्येन वृत्तिविषय-सम्बन्धरूपेण व्यापारेण प्रमाजनकत्वात्। विषयसंसृष्टाभिव्यक्ति-जननयोग्यवृत्त्यवच्छिन्नं चैतन्यं प्रमा, विषयावच्छिन्नचित्ता-वरण-निवृत्त्यादिरूपस्य फलस्य विषयसंसृष्ट-वृत्तिसम्बन्धोत्तरक्षण एव जायमानत्वात्। प्रमेयं त्वज्ञातं विषयाधिष्ठानं ब्रह्मचैतन्यमेव। तदेव च ज्ञातं सत् फलम्। तस्य चतुर्भागस्यान्तःकरणस्यातिस्वच्छत्वात् चैतन्यं तत्राभिव्यज्यते। तस्य चाभिव्यक्त-चैतन्यस्यैकत्वेऽपि व्यञ्जकान्तःकरणभाग-भेदात् चतुर्द्धा व्यपदेशो भवति प्रमाता प्रमाणं प्रमितिः प्रमेयमिति। तेन चैतन्यस्यैकत्वेऽपि प्रमातृ-प्रमाण-प्रमिति-प्रमेयाणाम-साङ्कर्यम्। भागत्रयेऽप्यनुगतस्यैवान्तःकरणाकारस्य प्रमातृप्रमेय-सम्बन्धाद् मयेदमवगत-मिति विशिष्टव्यवहारोऽप्युपपद्यते। प्रत्यक्षेऽयं विभागः। परोक्षे त्वेकैव देहसंसृष्टा वृत्तिः क्रियाभेदात् त्रिधा भिद्यमाना प्रमात्रादि-संज्ञां लभते, इन्द्रियसन्निकर्षलक्षण-द्वाराभावा-दन्तःकरणनिःसरणाभावेन विषयपर्यन्तं वृत्तेरगमनात्। त्रयाणां प्रमातृ-प्रमाण-प्रमेय-चैतन्यानामेकवृत्त्युपारूढत्व-लक्षणैकलोलीभावेऽपरोक्षत्वम्। द्वयोः प्रमातृप्रमाण-चैतन्य-योरेकलोलीभावे तु परोक्षत्वमिति न सङ्करः। विस्तरस्तु सिद्धान्तबिन्दौ द्रष्टव्यः। **इन्द्रिय**सन्निकर्षादिना अन्तःकरणसंयुक्तेन्द्रिय-विषय-सम्बन्धादिना। **आदिना** व्याप्ति-संस्कारसहित-पक्षसम्बद्ध-हेतुज्ञानादि-परिग्रहः। **इति**र्हेतौ। **वृत्ति**विशिष्टं विषयसंसृष्ट-वृत्त्यभिव्यक्तम्। **आदिमत्** जन्यम्। तथा च चैतन्यस्य स्वरूपतोऽजन्यत्वेऽपि वृत्तिचैतन्ययोरन्योन्य-तादात्म्याध्यासेन वृत्तिधर्मस्य जन्यत्वस्य चैतन्येऽध्यासात्, प्रमारूपस्य विषयसंसृष्ट-वृत्त्यभिव्यक्त-चैतन्यस्य गौणं जन्यत्वम्। तथा चोक्तं सिद्धान्त-

**वच्छेदकत्वाद् वृत्तौ ज्ञानत्वोपचारः। तदुक्तं विवरणे—"अन्तःकरणवृत्तौ ज्ञानत्वोपचारादि"ति।**

**ननु निरवयवस्यान्तःकरणस्य परिणामात्मिका वृत्तिः कथम्? इत्थम्।** लेशसंग्रहे—"तस्य स्वरूपेणाऽकार्यत्वेऽपि दृश्यावच्छिन्नरूपेण ब्रह्मकार्यत्वा"दिति। तादृशविशिष्ट-प्रमाचैतन्य-जनकत्वादिन्द्रियादीनां प्रमाणत्वमिति भावः। नन्वेतदयुक्तं, करणस्याव्यवधानेन व्यापारोत्तरक्षणावच्छेदेन वा कार्यजनकत्व-नियमाद् वृत्तेस्तथाविध-जनकत्वेऽपीन्द्रियादीनां व्यवधानेन प्रमाजनकत्वादित्यत आह—**ज्ञानावच्छेदक-त्वादिति।** प्रमाचैतन्योपाधित्वादित्यर्थः। **ज्ञानत्वोपचारः** प्रमात्वाध्यासः। तथा च चैतन्यवद् वृत्तेरपि प्रमात्वात् तज्जनकतयेन्द्रियादीनां प्रमाणत्वमिति भावः।

एतेन—"भाक्तं वृत्तौ ज्ञानत्वमि"ति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, गौणमिथ्यात्वयोर्भेदात्, भक्तेश्च शब्दवृत्तित्वात् तया प्रत्यक्ष-व्याख्यानायोगात्। अत एवोक्तं कल्पतरौ—"स्वज्ञानप्रकाशनपरे वाक्ये तद्विरोधादि"ति।

यद्वा विशिष्टचैतन्यस्य प्रमास्वरूपत्वे कस्यचित् चैतन्यान्तरस्य तद्घटकत्वं युक्तं, न तु जड़स्य, जड़विच्छुरणात् जड़त्वापत्तेस्तस्य प्रमात्वमिन्द्रियादीनां तत्करणत्वञ्च दुर्घटं स्यात्। अतो वृत्तेरपि चेतनत्वमन्योन्याध्यासादङ्गीकरणीयमित्याह—**ज्ञानत्वो-पचार इति।** तथा च वृत्तेश्चेतनत्वात् तदवच्छिन्नचैतन्यस्य जड़ाविच्छुरणान्न जड़त्वम्, न वेन्द्रियादीनामकरणत्वमिति भावः। वृत्तौ ज्ञानत्वोपचारेऽभियुक्तोक्तिं प्रमाणयति—**तदुक्तमिति। विवरणे** स्वप्रकाशानुभवभगवत्कृते पञ्चपादिकाव्याख्यानभूते सुप्रसिद्ध-वेदान्तग्रन्थे आत्मनो ज्ञानस्वरूपत्वप्रस्तावे। **ज्ञानत्वोपचारादिति।** तथा च प्रमा-चैतन्ये वृत्तेरभेदाध्यासात् सदसद्भिन्नस्य घटस्य सत्स्वरूपत्वमिव जड़ाया अपि तस्या ज्ञानस्वरूपत्वं ज्ञानत्वधर्मकत्वञ्च। तेन जानातीति वृत्तिप्रत्यक्षोपपत्तिरिन्द्रियादेः करणत्वोपपत्तिश्चेति भावः। न च वृत्तौ वृत्तिज्ञानमिति व्यवहारात्, वृत्तयो ज्ञानानीति तत्त्ववैशारद्युक्तेः सैव मुख्यप्रमा स्यादिति वाच्यं, तस्या जड़ान्तःकरण-परिणामत्वेन जड़त्वात् "सत्यं ज्ञानमनन्तं ब्रह्मे"ति चेतनस्यैव ज्ञानस्वरूपत्वावगमाच्च प्रमात्वानुपपत्तेः, ज्ञानव्यवहारस्य च तत्र गौणत्वेनाप्युपपत्तेरिति।

ननु विषयसंसृष्ट-वृत्त्यवच्छिन्नं चैतन्यं प्रमेति यदुक्तं, तदयुक्तम् वृत्तेरनुपपत्तेः। तथा हि—वृत्तिर्नामान्तःकरणस्य विषयेद्रियसम्बन्धादि-जन्यः परिणामविशेषः। स च

**न तावदन्तःकरणं निरवयवम्, सादिद्रव्यत्वेन सावयवत्वात्। सादित्वञ्च "तन्मनोऽकुरुते"त्यादि-श्रुतेः। वृत्तिरूप-ज्ञानस्य मनोधर्मत्वे च—"कामः**

परिणामोऽवयवान्यथाभावः सावयवस्यैव युज्यते, न निरवयवस्य, तस्य विकारायोगात्, तथा चोक्तं "उदयन्नपयन् धर्मो विकरोति हि धर्मिणम्"। इति। अन्तःकरणञ्च निरवयवम्। सावयवत्वे तस्यानन्तावयव-प्रागभावादि-कल्पनायां गौरवात्, युगपन्नानेन्द्रिय-सम्बन्धान्नानाज्ञानोत्पादप्रसङ्गाच्च। तस्मादन्तःकरणस्य वृत्तिरूप-परिणामासम्भवात् लक्षणमिदमयुक्तमिति नैयायिकः शङ्कते—**नन्विति**। **निरवयव**स्येति। हेतुगर्भ-विशेषणम्। यस्मादन्तःकरणं निरवयवं, तस्मान्न परिणामि। तथा चानुमानप्रयोगः—अन्तःकरणं न परिणामि, निरवयवत्वात्, ब्रह्मवदिति। सिद्धान्ती निरवयवत्व-हेतोश्चेतन-त्वोपाधिना सोपाधिकत्वं स्वरूपासिद्धत्वञ्चोद्भावयन् नैयायिकमतं दूषयितुमाह—**सादिद्रव्यत्वे**नेति। जन्यद्रव्यत्वेनेत्यर्थः। तथा च प्रयोगः—अन्तःकरणं सावयवं, सादित्वे सति द्रव्यत्वादिति। परमतात्मनि व्यभिचारवारणाय—सत्यन्तम्। पराभ्युपगत-जन्यगुणादौ व्यभिचारवारणाय—**द्रव्यत्वा**दिति। तथा च सादिद्रव्यत्वेनान्तःकरणस्य सावयवत्वसिद्धौ निरवयवत्वासिद्धिरिति सिद्धं हेतोः स्वरूपासिद्धत्वमिति भावः। नन्वन्तःकरणस्य सादित्वमसिद्धम्, लाघवतर्कसहकृतात् सुखाद्युपलब्धिः करणजन्या भावकार्यत्वात् छिदादिवदित्याकारकाद् धर्मिग्राहकमानात् तस्य नित्यत्वसिद्धेरिति-नैयायिकशङ्कां निराकुर्वन् बृहदारण्यकश्रुत्यान्तःकरणस्य सादित्वं साधयति—**सादित्व-ञ्चे**ति। अन्तःकरणस्येत्यादिः। **तन्मन** इति। श्रुत्यर्थस्तावत् **तदि**ति मनसो निर्देशः। स प्रकृतो मृत्युर्वक्ष्यमाण-कार्यसिसृक्षया तत्कार्यालोचनक्षमं **मनः**शब्दवाच्यं सङ्कल्पादिलक्षणमन्तःकरणम**कुरुत** कृतवानिति। **इत्या**दीत्यादिपदेन—"एतस्माज् जायते प्राणो मनःसर्वेन्द्रियाणि च" "अन्नमशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति, यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः" इत्यादि-सादित्व-सावयत्व-श्रुति-परिग्रहः। तथा च स्वतःप्रमाण-श्रुत्याऽन्तःकरणस्य सादित्वे सावयवत्वे च सिद्धे धर्मिग्राहकमानात् तत्स्वरूपसिद्धावपि नित्यत्वासिद्धिरतः सिद्धं तस्य परिणामित्वं, लाघवतर्कस्य प्रमाणपराहतत्वात्, फलमुख-गौरवस्यादोषत्वाच्चेति भावः। **श्रुते**रिति। अवगम्यत इति शेषः। न चान्तःकरणस्य सावयवत्वे युगपन्नानेन्द्रिय-सम्बन्धान्नाना-ज्ञानोत्पादप्रसङ्ग इति वाच्यम्, इष्टापत्तेः, दीर्घशष्कुली-भक्षणादौ युगपन्नानाज्ञानोत्पत्ते-

**संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे"ति श्रुतिर्मानम्, धीशब्देन वृत्तिरूप-ज्ञानाभिधानात्। अत एव कामादेरपि मनोधर्मत्वम्।**

**ननु कामादेरन्तःकरणधर्मत्वेऽहमिच्छाम्यहं बिभेमीत्याद्यनुभव आत्म-**रभ्युपगमात्, ज्ञानाश्रये स्वसमानविषयक-स्वजातीय-ज्ञानोत्पत्त्यनभ्युपगमेऽपि विजातीय-ज्ञानोत्पत्तौ बाधकाभावात्। तथा चोक्तं ब्रह्मसिद्धौ—"न तावद् दुखनिवृत्तिरेव सुखं, युगपत् सुखदुःखयोर्दर्शनात् सन्तापवतः शीतह्रदे निमग्नार्द्धकायस्ये"ति।

नन्वस्त्वन्तःकरणस्य सादित्वमस्तु च परिणामित्वं, तथापि वृत्तिरूपज्ञानस्यान्तःकरण-धर्मत्वे प्रमाणं न पश्यामः, ज्ञानरूपप्रमितेरात्मधर्मत्वे तद्विशेषणवृत्तेरप्यात्मधर्मत्वौचित्यात्, अहं जानामीत्याद्यनुभवादिति नैयायिकशङ्कां निराकुर्वन् वृत्तेरन्तःकरणधर्मत्वं बृहदारण्यक-श्रुत्या प्रमाणयति—**वृत्तिरूपे**ति। ज्ञानरूपचैतन्ये जड़ाया वृत्तेरभेदेनाध्यासाच्चैतन्य-धर्मस्य ज्ञानत्वस्य वृत्तावध्यासस्तेन वृत्तौ ज्ञानव्यवहारो वृत्तिज्ञानमितीति भावः। **मनोधर्मत्वे** अन्तःकरणधर्मत्वे। **कामः** स्त्र्यादिविषयसम्बन्धाभिलाषः। **सङ्कल्पः** प्रत्युपस्थित-विषय-विकल्पनं शुक्लनीलादिभेदेन। **विचिकित्सा** संशयज्ञानम्। **श्रद्धा** अदृष्टार्थेषु कर्मसु देवतादिषु चास्तिक्य-बुद्धिः। **अश्रद्धा** उक्तेषु विषयेष्वनास्तिक्यबुद्धिः। **धृति**र्धारणं देहाद्यवसादे उत्तम्भनम्। **अधृति**स्तद्विपर्ययः। **ह्रीः** अकार्यप्रवृत्ति-प्रतिबन्धिका लोकलज्जा। **धीः** घटादिवृत्तिः। **भीः** भयम्। **सर्वं मन एवे**ति। मनसः एतानि रूपाणीत्यर्थः। उक्तश्रुत्या विधीयमानं मनस्तादात्म्यं मनःपरिणामं विनाऽनुपपन्नं सत् कामादीनां मनःपरिणामत्वं कल्पयति। उपादानोपादेययोरभेद-ज्ञापनाय तादात्म्याभिधानम्, मनसोऽनुपादानत्वे तादात्म्याभिधानानुपपत्तेरिति भावः। **श्रुतिः** बृहदारण्यकश्रुतिः। नन्वनया श्रुत्या कामादीनामन्तःकरणधर्मत्वं प्रतिपाद्यते, न वृत्तेरिति चेत्, तत्राह—**धीशब्दे**नेति। **अत एव** उक्तश्रुतेरेव।

नन्वियं श्रुतिर्न स्वार्थपरा, अपि त्वन्यार्थपरा, ज्ञानादेरात्मधर्मत्वावगाहि-प्रत्यक्ष-विरोधात्। तथा हि—अहं जानामीत्यादि-प्रतीतावहंपदार्थ आत्मनि ज्ञानं विशेषणतया भासतेऽहं ज्ञानवानिति। एवमिच्छामीत्यादावपि। प्रत्यक्षञ्च ज्येष्ठं श्रुतेरुपजीव्यञ्च। तस्मादुपजीव्य-ज्येष्ठ प्रत्यक्ष-विरोधात् कामादि-श्रुतिर्नान्तःकरणस्योपादानत्वपरा, किन्तु लाङ्गलं जीवनमितिवन्निमित्तत्वपरेति नैयायिकः शङ्कते—**नन्वि**ति। **कामादे**रित्यादि-

**धर्मत्वमवगाहमानः कथमुपपद्यते ? उच्यते। अयःपिण्डस्य दग्धृत्वाभावेऽपि दग्धृत्वाश्रय-वह्नि-तादात्म्याध्यासाद् यथाऽयो दहतीति व्यवहारस्तथा**

पदेन सङ्कल्पादि परिग्रहः। **अन्तःकरणधर्मत्वे** मनोधर्मत्वे। **इत्याद्य**नुभव इत्यादि-पदेनाऽहं सन्देह्मि अहं लज्जे इत्यादि-यथार्थानुभव-परिग्रहः। **अव**गाहमानः विषयीकुर्वन्। **कथमि**त्याक्षेपे। तथा च विशिष्टबुद्धेर्विशेष्य-विशेषण-तत्सम्बन्ध-विषयकत्व-नियमा-दहमिच्छामीत्यादि-यथार्थानुभवेऽहंपदार्थं आत्मा विशेष्यतया विषयः, इच्छादिस्तु तद्विशेषणतयेति सिद्धं कामादेरात्मधर्मत्वम्। श्रुतिस्तु तेषामनोधर्मत्वमाह। तस्माद् द्वयोः प्रमाणयोर्विरोधाद् दुर्बलया श्रुत्या न प्रत्यक्षबाधोऽपि तु बलवता प्रत्यक्षेण श्रुतेर्मुख्यार्थबाधादुपचरितार्थत्वम्। तथा चेयं श्रुतिर्न मनसः कामाद्युपादानत्वपराऽपि तु-कामादि-निमित्तत्वपरेति वृत्तेर्मनोधर्मत्वासिद्ध्या प्रमालक्षणमिदमयुक्तमिति शङ्कार्थः। समाधत्ते—**उच्यत** इति। **अयःपिण्डस्य** लौहपिण्डस्य। **दग्धृत्वा**भावेऽपीति। दग्धृत्वं दाहजनकत्वम्। अयसस्तेजस्त्वेऽप्यनुत्कटत्वान्नानौपाधिकं दग्धृत्वं, किन्त्वौपाधिकम्। उपाधिसम्बन्धाभावाद् दग्धृत्वाभाव इति भावः। **दग्धृत्वाश्रये**ति। दग्धृत्वविशिष्ट-वह्नेरयसात्मना तादात्म्याध्यासादित्यर्थः। तेन "रक्तं कुसुमं" "लोहितः स्फटिक" इतिवत् "अयो दहति" "वह्निर्दहती"ति न भेदप्रत्ययः, तादात्म्याध्यासस्य भेदग्रह-विरोधि-त्वात्, रक्तस्य तु स्फटिकात्मना नाध्यासस्तेन तत्र भेदप्रतीतिर्भवत्येवेति वैलक्षण्यादिति भावः। **अध्यासश्च** कारणत्रितयजन्योऽन्यस्यान्यात्मनाऽवभासः, सत्यमिथ्यावस्तुसम्भेदा-वभासो वा। स चाध्यासो द्विविधः कारणाध्यासः कार्याध्यासश्चेति। तत्र कारणा-ध्यासोऽविद्याध्यासः। स चैक एवानादिः। तदन्यः सर्व एवाध्यासः कार्याध्यासः। तत्राद्यं भाष्यकारीयलक्षणं कार्याध्यासपरम्, स्मृतिरूपपदेन कारणत्रितयजन्यत्वा-भिधानात्। द्वितीयन्तूभयसाधारणम्। तत्र कार्याध्यासस्य त्रीण्यसाधारणानि निमित्तानि सम्प्रयोगः संस्कारो दोषश्चेति। परिणाम्युपादानं मिथ्याज्ञानं, विवर्त्तोपादानं तु चैतन्यम्। तत्रेन्द्रियसम्बन्धरूपात् सम्प्रयोगादधिष्ठानसामान्यांशभाने सादृश्यादि-ज्ञानजन्य-संस्कारोद्बोधात् त्रिगुणात्मकस्याज्ञानस्य गुणविक्षोभे दोषादधिष्ठानविशेषांशस्य चास्फुरणे सति योऽयं मिथ्याऽज्ञानपरिणामभूतोऽन्यस्यान्यात्मनाऽवभासः, सोऽध्यासः। संक्षेपशारीरक-कृतस्तु कार्याध्यासस्याज्ञानमात्रनिमित्ततामाहुः। तथा चोक्तं—"सादृश्यधीप्रभृति न त्रितयं निमित्तमध्यासभूमिषु जगत्यनुगच्छतीदम्। ब्राह्मण्यजातिपरि-

**सुखाद्याकार-परिणाम्यन्तःकरणैक्याध्यासादहं सुखी अहं दुःखीत्यादि-व्यवहारो जायते।**

कल्पनमात्मनोष्टं जात्या न साम्यमुपलब्धमिहास्ति किञ्चित्॥ विषय-करण-दोषान्न भ्रमः संविदि स्यादपि तु भवति मोहात् केवलादेवमेवे"ति। स च पुनर्द्विविधः सोपाधिको निरुपाधिकश्चेति। तत्रोपाधिरूपस्य धर्मिणः सन्निधावेव यो धर्मः प्रतीयते, तद्धर्मापेक्षया त्वधिकसत्ताकं तद्धर्मस्याश्रयान्तरं नोपलभ्यते, स सोपाधिकोऽध्यासः। यथाऽयो दहतीति। तत्राग्निरूपस्योपाधेर्धर्मिणः सन्निधावयसि दग्धृत्वरूपस्तद्धर्मः प्रतीयते, न त्वधिकसत्ताकं तद्धर्मस्याश्रयान्तरं वह्निर्दहतीति। यत्र तद्धर्मप्रतीतिकाल एव त्वधिक-सत्ताकं तद्धर्मस्याश्रयान्तरमुपलभ्यते, स निरुपाधिकोऽध्यासः। यथा रज्जुसर्पोऽयं भीषण इति। तत्राध्यस्यमान-भीषणत्वादिविशिष्ट-सर्पापेक्षयाऽधिकसत्ताकं सर्पान्तरमुपलभ्यते तथा च प्रतीतिरयं भीषणः, सर्पो भीषण इति। तथा चोक्तमद्वैतसिद्धौ कर्तृत्वाध्यासोपपत्तौ —"यदन्वयव्यतिरेकानुविधायितया यत् प्रतीयते, तदपेक्षयाऽधिकसत्ताक-तद्धर्माश्रयान्तरा-भावस्यैव सोपाधिकत्वे तन्त्रत्वादि"ति। तत्र सोपाधिकधर्माध्यासस्थलेऽधिष्ठाने धर्मान्तरं प्रातिभासिकमुत्पद्यते। धर्मिणोरैक्याध्यासान्न तयोर्द्विरवभासः। तथा चोक्तमद्वैतसिद्धौ —"आत्मनि कर्तृत्वान्तरस्यैवाध्यासादि"ति। यद्यपि विशेषणीभूत-कर्तृत्वादेरात्म-न्याध्यासिकसम्बन्धे स्वीक्रियमाणे प्रतीतिरियमुपपद्यते, तथापि तस्य कर्तृत्वादेर्धर्मस्य मिथ्यात्वं न स्यात्। युक्तञ्च तस्य मिथ्यात्वं, नाहं कर्त्तेति तस्य बाधात्। तथा चोक्तं पञ्चपादिकायाम्—"स्फटिकमणेरिव लोहितिमा कर्तृत्वादिकमात्मनो मिथ्ये"ति। एवञ्चायो दहतीत्यादौ सोपाधिकाध्यासेऽधिष्ठानचैतन्ये दग्धृत्वादेर्धर्मान्तरस्योत्पत्तौ अयो दहतीति **प्रत्यक्ष**मुपपन्नं भवतीति भावः। **व्यवहारः** प्रत्यक्षम्। तथा चोक्तं विवरणे—"व्यवहारोऽभिज्ञाभिवदनमुपादानमर्थक्रियेति चतुर्विध" इति। दृष्टान्तमुपपाद्य दार्ष्टान्तिकं योजयति—**तथे**ति। **ऐक्याध्या**सादिति। सुखादिविशिष्टस्यान्तःकरणस्य चैतन्यात्मना तादात्म्याध्यासादधिष्ठाने सुखान्तरादीनामुत्पादादित्यर्थः। **अहं सुखी**ति। तथा चाहं पदार्थे सुखादिविशिष्टान्तःकरणतादात्म्यापन्ने चैतन्ये सुखादयो विशेषणतया प्रतीयन्ते, न त्वात्मनि, तस्य निर्विकारत्वान्निर्धर्मकत्वादात्माहङ्कारयोर्भेदाच्च। अत एव सुषुप्तावात्मप्रकाशेऽप्यहमर्थस्याप्रकाशः। यदि सुषुप्तावहमर्थः प्रकाशेत, तर्हि जागरे स्मर्येत। न च स्मर्यते। तस्मान्नाहमर्थ आत्मा। यश्चाहमस्वाप्समिति परामर्शः, स

**नन्वन्तःकरणस्येन्द्रियतयातीन्द्रियत्वात् कथं प्रत्यक्षविषयतेति। उच्यते। न तावदन्तःकरणमिन्द्रियमित्यत्र मानमस्ति। मनःषष्ठानीन्द्रियाणीति भगवद्गीतावचनं प्रमाणमिति चेन्न, अनिन्द्रियेणापि मनसा षट्त्वसंख्या-पूरणाविरोधात्। न हीन्द्रियगत-संख्यापूरणमिन्द्रियेणैवेति नियमः, यज-मान-पञ्चमा इडां भक्षयन्तीत्यत्र ऋत्विग्गत-पञ्चत्वसंख्याया अनृत्विजापि**

सुषुप्तानुभूताज्ञानांशविषयकः, न त्वहमर्थविषयकः, सुषुप्तावन्तःकरणाभावात् तदवच्छिन्न-चैतन्यरूपस्याहमर्थस्याभावेनानुभवायोगात्, अननुभूतस्य स्मरणासम्भवात्। तथा चायं प्रत्ययः कामादीनामन्तःकरणावच्छिन्न-चैतन्यधर्मत्वं प्रतिपादयति, न त्वात्मधर्मत्वम्। तस्मान्नानेन भ्रमप्रत्यक्षेण श्रुतेर्बाध उपचरितार्थत्वं वेति सिद्धमन्तःकरणस्य वृत्तिमत्त्वम्।

नन्वेवमप्यहंपदार्थस्यान्तःकरणाभिन्नचैतन्यस्य प्रत्यक्षत्वे तद्विशेषणस्याप्यन्तःकरणस्य प्रत्यक्षत्वमुचितम्, विशिष्टवृत्ति-धर्मस्य विशेषणवृत्तित्व-नियमात्। तच्च न सम्भवति, अन्तःकरणस्येन्द्रियतयाऽतीन्द्रियत्वात्, अतीन्द्रियस्य प्रत्यक्षत्वासम्भवात्। तस्मादहं सुखीत्यादि-प्रत्यक्षस्यान्यो विषयः, न त्वन्तःकरणावच्छिन्नं चैतन्यम्। तथा चानेन प्रत्यक्षेण कामादीनां नान्तःकरणधर्मत्वसिद्धिरिति नैयायिकः शङ्कते—**नन्वि**ति। अन्तःकरणस्यातीन्द्रियत्वे हेतुमाह—**इन्द्रियतये**ति। तथा चान्तःकरणमतीन्द्रियमिन्द्रिय-त्वाच्चक्षुरादिवदित्यनुमानादन्तःकरणस्यातीन्द्रियत्वसिद्धौ प्रत्यक्षत्वासिद्धिरिति भावः। समाधत्ते—**उच्यत** इति। यद्यन्तःकरणमिन्द्रियं स्यात्, स्यादेतदेवम्। न च तस्येन्द्रियत्वं, प्रमाणाभावात्। तथा चान्तःकरणस्यानीन्द्रियतया प्रत्यक्षत्वमित्याह—**न तावदि**ति। प्रमाणाभावोऽसिद्ध इत्याह नैयायिकः—**मनःषष्ठा**नीति। मनः षष्ठमिदं प्रथममिदं द्वितीयमित्यादिरूपेण षट्त्वसंख्यापूरकं येषामिन्द्रियाणां, तानीति विग्रहः। तथा च यद् यद्गतसंख्यापूरकं, तज् तज्जातीयमित्यस्ति नियमः। मनस इन्द्रियगत-संख्यापूरकत्वमिन्द्रियत्वं विनाऽनुपपन्नमिन्द्रियत्वं कल्पयति। तथा चार्था-पत्तिर्मनस इन्द्रियत्वे प्रमाणम्। अनुमानमपि—मनः इन्द्रियमिन्द्रियगतसंख्यापूरकत्वात्, यन्नैवं तन्नैवमिति। उक्तनियमस्य व्यभिचारमनुमानस्य चाप्रयोजकत्वं दर्शयन् समाधत्ते —**ने**ति। नियमव्यभिचारस्थानं दर्शयति—**यजमाने**ति। ऋत्विज इति शेषः। **इडां** यज्ञीय-द्रव्यविशेषम्। **भक्षयन्ति** भक्षयेयुः। तथा चानया श्रुत्या यजमान-सहितानां चतुर्णामृत्विजामिडाभक्षणं विधीयते। तत्र यजमानो यद्यृत्विक् स्यात्,

**यजमानेन पूरणदर्शनात्, वेदानध्यापयामास महाभारत-पञ्चमानित्यादौ वेदगत-पञ्चत्वसंख्याया अवेदेनापि महाभारतेन पूरणदर्शनात्, इन्द्रियेभ्यः** ऋत्विजामिड़ाभक्षणेनैव तस्यापि तत् प्राप्तमिति यजमानपञ्चमा इति न ब्रूयात्। ब्रवीतीति च, तस्माज् ज्ञायते यजमानो न ऋत्विगिति। तेन चानृत्विजा यजमानेन यथा ऋत्विग्गत-संख्यापूरणम्, तथैवानिन्द्रियेणापि मनसेन्द्रियगतसंख्यापूरणम्, तस्मान्नियम-स्यात्र व्यभिचारान्न तेन मनस इन्द्रियत्वसिद्धिः। यच्चानुमानमुक्तं, तदन्यजातीयस्यान्य-जातीयगत-संख्यापूरकत्वदर्शनाद् विपक्षबाधकतर्काभावाच्चाप्रयोजकमिति न तेनापि मनस इन्द्रियत्वसिद्धिरिति भावः। ननु पूर्वमीमांसायां तृतीयाध्याये स्वामिसप्तदशत्वाधिकरणे ऋतुयजन-निमित्तमृत्विक्त्वं यजमानस्य सिद्धान्तितम्। तथा चोक्तं टुप्टीकायाम्— "स्वामिनस्तु यद्यपि च वरणं नास्ति, तथाप्यन्यत् सर्वमस्तीति युक्तमृत्विक्त्वमि"ति। तस्मान्नियमोऽयं न व्यभिचारी। यजमानपञ्चमा इति तु विशेषनियमार्थमित्यस्वरसान् महाभारतीयं व्यभिचार-स्थलान्तरमाह—**वेदानि**ति। **महाभारत**पञ्चमानिति। महाभारतं पञ्चमं येषां वेदानां, तानिति विग्रहः। **अवेदेना**पीति। यद्यपि यजमानस्य ऋत्विक्त्वं वाक्यसिद्धं, तथापि महाभारतस्य वेदत्वं न वाक्यसिद्धं न वा लोकसिद्धं, तस्येतिहासत्वेन प्रसिद्धेः, "भाराशिविम्राः पञ्चैत इतिहासाः प्रकीर्त्तिताः"। इति स्मरणात् रामायणं भारतञ्च तथा शिवरहस्यकमित्यादि-तद्विवरणाच्च। तस्मात् तस्यावेदत्वम्। तेन चावेदेन यथा वेदगत-संख्यापूरणम्, तद्वन्मनसाऽपीति। तस्मान्नियमोऽयं व्यभि-चारीति न तेन मनस इन्द्रियत्वसिद्धिः। न च—"इन्द्रियाणां मनश्चास्मी"ति भगवद्वचनं प्रमाणमिति वाच्यम्, "नक्षत्राणामहं शशी" "भूतानामस्मि चेतने"त्यादिवत् तत्र षष्ठ्याः सम्बन्धार्थकत्वात्, अन्यथा षष्ठ्या निर्द्धारणार्थकत्वे शशिनोऽपि नक्षत्रात्मकत्व-प्रसङ्गात्। न च स्मृतौ त्वेकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत् संगृह्यत इति भाष्यवचनविरोध इति वाच्यम्, तस्याभ्युपगमवादमात्रपरत्वात्, वागादीन्द्रियाणां तत्त्वान्तरत्व-प्रतिपादनस्यैव तत्र मुख्यत्वात्। शरीरविदोऽप्येवमेवाहुः। तथा चोक्तं चरकसंहितायाम्—"मनो दशेन्द्रियाण्यर्था" इति, "बुद्धीन्द्रियमनोऽर्थानामिति चे"ति। तस्मात् साधकाभावान्मनसो नेन्द्रियत्वसिद्धिरिति भावः। मनस इन्द्रियत्वे साधका-भावमुपपाद्य बाधिकां काठकश्रुतिं दर्शयति—**इन्द्रियेभ्य** इति। श्रुत्यर्थस्तु—स्थूलानि तावदिन्द्रियाणि यैरर्थैरात्मप्रकाशनायारब्धानि तेभ्य **इन्द्रियेभ्यः** स्वकार्येभ्यस्ते **पराः**

**परा ह्यर्था अर्थेभ्यश्च परं मन इत्यादिश्रुत्या मनसोऽनिन्द्रियत्वावगमाच्च। न चैवं मनसोऽनिन्द्रियत्वे सुखादिप्रत्यक्षस्य साक्षात्वं न स्यादिन्द्रियाजन्यत्वादिति वाच्यम्। न हीन्द्रियजन्यत्वेन ज्ञानस्य साक्षात्वम्, अनुमित्यादेरपि मनो-**

**ह्यर्थाः** सूक्ष्मा महान्तश्च प्रत्यगात्मभूताश्च। तेभ्योऽप्य**र्थेभ्यश्च परं** सूक्ष्मतरं महत् प्रत्यगात्मभूतं **मनः** मनःशब्दवाच्यं मनस आरम्भकं भूतसूक्ष्ममिति। **इत्यादी-**त्यादिशब्देन—"आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरानिति काठकश्रुतेः, "एतस्माज् जायते प्राणो मनः सर्वेन्द्रियाणि च"ति मुण्डकश्रुतेश्च परिग्रहः। यद्यप्येताः श्रुतयः साक्षान्मनसोऽनिन्द्रियत्वं नोपदिशन्ति, तथापी न्द्रिय-मनसोः पृथग् निर्देशादिन्द्रियवर्गे मनसोऽनभिधानाच्चानिन्द्रियत्वमवगम्यत इति भावः। न च मनोवैशिष्ट्य-प्रतिपादनार्थं तद्भेदव्यपदेशः, न त्वनिन्द्रियत्व-प्रतिपादनार्थमिति वाच्यम्। आत्मबोधप्रकरणे तद्-वैशिष्ट्यप्रतिपादनस्याकिञ्चित्करत्वात्, वैशिष्ट्यस्य सर्वेष्विन्द्रियेषु सत्त्वेन सर्वेषामिन्द्रियाणां भेदव्यपदेशस्य दुर्निवारत्वप्रसङ्गाच्च। यदपि च क्वचित् प्रदेशे मनस इन्द्रियत्वं श्रूयते, श्रुत्यन्तरविरोधात् तद् गौणं मन्तव्यम्।

वस्तुतस्तु पराभिमत-मनोविषयाणां साक्षिणा ग्रहणाद् मनसो विषयाभावादिन्द्रिय-सहकारित्वाच्चानिन्द्रियत्वं युक्तम्। तथा चोक्तं भेदधिक्कारे—प्रमाणसहकारित्वाद् विषय-स्याप्यभावतः। न प्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वतः॥ इति। वेदबाह्या अपि मनसोऽनिन्द्रियत्वमाहुः। तथा चोक्तं प्रमाणसमुच्चये—"न सुखादि प्रमेयं वा मनो वास्तीन्द्रियान्तरम्। अनिषेधादुपात्तञ्चेदन्येन्द्रियरुतं वृथे"ति। तत् सिद्धं मनसोऽनि-न्द्रियत्वम्। वाचस्पत्यनुयायिनस्तु मनस इन्द्रियत्वमाहुः। तथा चोक्तं भामत्यामध्यास-भाष्यविवरणे—"न चैष साक्षात्कारो मीमांसासहितस्यापि शब्दस्य प्रमाणस्य फलम्, अपि तु प्रत्यक्षस्य, तस्यैव तत्फलत्वनियमादि"ति।

नन्विन्द्रियजन्यत्वं प्रत्यक्षत्व-प्रयोजकम्, "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्य-मव्यभिचारि व्यवसायात्मकं प्रत्यक्षमि"ति न्यायसूत्रात्। मनसोऽनिन्द्रियत्वे तज्जन्य-सुखादिज्ञानस्य प्रत्यक्षत्वं न स्यात्, प्रत्यक्षत्व-प्रयोजकस्येन्द्रियजन्यत्वस्याभावात्, कारणाभावस्य कार्याभाव-हेतुत्वादिति नैयायिकः शङ्कते—**न चैवमि**ति। एवमित्यस्य विवरणं **मनसोऽनिन्द्रियत्व** इति। **साक्षात्त्वं** प्रत्यक्षत्वम्। इन्द्रियजन्यत्वं न

**जन्यतया साक्षात्वापत्तेः, ईश्वरज्ञानस्यानिन्द्रियजन्यतया साक्षात्वानापत्तेश्च।**

**सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमिति चेत्। किं ज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि किं वा विषयगतस्य? आद्ये प्रमाणचैतन्यस्य विषया-**

प्रत्यक्षत्व-प्रयोजकम्, अनुमित्यादेर्मनोरूपेन्द्रियजन्यत्वेऽप्यप्रत्यक्षत्वादित्याह सिद्धान्ती **न** हीति। इन्द्रियजन्यत्वस्य प्रत्यक्षत्व-प्रयोजकत्वे दोषमाह—**अनुमित्यादे**रिति। **मनो**जन्यतया इन्द्रियजन्यतया, भवन्मते मनस इन्द्रियत्वात्, ज्ञानसामान्यं प्रति तस्य हेतुत्वाच्चेति भावः। नन्विन्द्रियजन्यत्वमात्रं न प्रत्यक्षत्व-प्रयोजकं, किन्त्विन्द्रियत्वावच्छिन्नेन्द्रियजन्यत्वम्। अनुमितिस्तु मनोजन्यापि नेन्द्रियत्वावच्छिन्नेन्द्रियजन्या, तथा च कथमनुमितेः प्रत्यक्षत्वमित्यत आह—**ईश्वरज्ञान**स्येति। यद्वेन्द्रियार्थसन्निकर्ष-जन्यज्ञानत्वं प्रत्यक्षत्वप्रयोजकम्। अनुमितिस्तु नेन्द्रियार्थसन्निकर्षजन्या, अनुमितिविषये वह्नौ मनःसन्निकर्षाभावात्, "परतन्त्रं बहिर्मन" इति विधिविवेकोक्तेः। तथा चानुमितेर्न प्रत्यक्षत्वमित्यत आह—**ईश्वरज्ञान**स्येति। **अनिन्द्रिय**जन्यस्येति। हेतुगर्भविशेषणम्। यस्मादीश्वरज्ञानं नेन्द्रियजन्यं, परैस्तज्ज्ञानस्य नित्यत्वाभ्युपगमात्, तस्मान्न प्रत्यक्षं, प्रयोजकस्येन्द्रियजन्यत्वस्याभावात् प्रयोज्यस्य प्रत्यक्षत्वस्याभाव इति भावः। **साक्षात्त्वा-**नापत्तेरिति। प्रत्यक्षत्वाभावप्रसक्तेरित्यर्थः। न चेष्टापत्तिः, परैस्तस्य प्रत्यक्षत्वाभ्युपगमात्। तस्मान्नेन्द्रियजन्यत्वं प्रत्यक्षत्व-प्रयोजकम्। तथा च यथेश्वरज्ञानस्येन्द्रियजन्यत्वाभावेऽपि न प्रत्यक्षत्वहानिस्तद्वत् सुखादिज्ञानस्येन्द्रियजन्यत्वाभावेऽपि न प्रत्यक्षत्वहानिरिति भावः। नन्विन्द्रियजन्यत्वं जन्यप्रत्यक्षत्वस्यैव प्रयोजकं न नित्य-प्रत्यक्षत्वस्येति चेन्न, प्रयोजकद्वय-कल्पनायां गौरवात्। यदीन्द्रियजन्यत्वं न प्रत्यक्षत्व-प्रयोजकं, तर्हि किं तदिति पृच्छति **सिद्धान्त** इति। विवरणसिद्धान्त इत्यर्थः। प्रत्यक्षज्ञाने तद्विषये तत्प्रमाणे च प्रत्यक्षव्यवहारो दृश्यते प्रत्यक्षं ज्ञानं प्रत्यक्षो विषयः प्रत्यक्षं प्रमाणमिति। तत्र प्रमाणगतस्य प्रत्यक्षत्वस्य प्रयोजकं प्रत्यक्षप्रमाकरणत्वम्। तच्च प्रसिद्धत्वात् प्रागुक्तत्वाच्च नैव जिज्ञास्यम्। ज्ञानगतस्य विषयगतस्य च प्रत्यक्षत्वस्य प्रयोजकं नैकं, किन्तु भिन्नम्। तयोः कतरद् जिज्ञास्यमिति विभज्य पृच्छति—**किं ज्ञानगतस्ये**ति। विषयसंसृष्टवृत्त्यभिव्यक्त-विषयावच्छिन्नचैतन्यरूप-प्रमितिगतस्येत्यर्थः। ज्ञानगतप्रत्यक्षत्व-प्रयोजकस्य प्रस्तुतत्वाद् विषयगतप्रत्यक्षत्व-प्रयोजकस्य प्रमात्रभेदस्य ज्ञानगतप्रत्यक्षत्व-प्रयोजकाधीनत्वादादौ तज्जिज्ञासेति भावः। नन्वेवमपि विषयगतस्य

**वच्छिन्नचैतन्याभेद इति ब्रूमः। तथाहि—त्रिविधं चैतन्यं विषयचैतन्यं प्रमाण-**

प्रत्यक्षत्वस्य प्रयोजकजिज्ञासा नैव युक्ता. प्रत्यक्षज्ञानविषयत्वस्यैव तत्प्रयोजकत्वात्, तस्य च प्रसिद्धत्वात्। तस्मादेकस्यैव ज्ञानगतप्रत्यक्षत्वस्य प्रयोजकजिज्ञासा युक्तेति चेन्न, तत्तांशविषयक-प्रत्यभिज्ञायास्तत्तांशेऽप्रत्यक्षे प्रत्यक्षज्ञानविषयत्वस्य सत्त्वादतिव्याप्तेः, ज्ञानकर्मत्वरूप ज्ञानविषयत्वस्य स्वप्रकाशेऽपरोक्षभूते साक्षिण्यभावादव्याप्तेश्च। तस्मात् प्रत्यक्षज्ञान-विषयत्वं विषयगतस्य प्रत्यक्षत्वस्य न प्रयोजकं, किन्त्वन्यत्। अतो द्वयोः प्रत्यक्षत्वयोः प्रयोजकजिज्ञासा युक्तेत्याह—**विषयगतस्ये**ति। नैयायिकैर्ज्ञानगतप्रत्यक्ष-त्वस्य प्रयोजकमिन्द्रियजन्यत्वमाहुः, विषयगतप्रत्यक्षत्वस्य तु प्रयोजकं प्रत्यक्षज्ञान-विषयत्वम्, तन्मते प्रत्यक्षज्ञानविषयत्वरहितस्यापरोक्षभूतस्य कस्यचिद् विषयस्या-भावात् प्रत्यक्षज्ञानविषयत्वस्य प्रत्यक्षत्वप्रयोजकत्वे क्षत्यभावात्। वेदान्तिनये त्वस्ति प्रत्यक्षज्ञान-विषयत्व-रहितः स्वतोऽपरोक्षरूपः साक्षी। तस्य च प्रत्यक्षत्वं न तद्विषयत्व-प्रयुक्तं, किन्त्वन्यप्रयुक्तमिति प्रयोजकद्वयजिज्ञासा युक्तेति भावः। ज्ञानगतस्य प्रत्यक्ष-त्वस्य प्रयोजकं निरूपयति—**आद्ये** इति। प्रमितिगत-प्रत्यक्षत्वे इत्यर्थः। यथाश्रुतार्थ-ग्रहणे ज्ञानसुखादि-प्रत्यक्षे प्रातिभासिक-रजतादिप्रत्यक्षे परमेश्वरप्रत्यक्षे चाव्याप्त्यापत्तिः, तत्तत्प्रत्यक्षविषयेषु ज्ञानसुखादिष्वन्तःकरणवृत्त्यवच्छिन्नचैतन्यरूपप्रमाणचैतन्याभेदाभावात्, तेषां साक्षिग्राह्यत्वेन प्रमाणाग्राह्यत्वात् तत्तद्विषयग्रहणेऽन्तःकरणवृत्तेरनुदयात्। यदा तु प्रत्यक्षत्वसामान्यस्य प्रयोजको विवक्षणीयस्तदा वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्न-चैतन्याभेदो वक्तव्यः। तेन ज्ञानसुखादिप्रत्यक्षेषु नाव्याप्तिः, साक्षिवेद्येषु ज्ञानसुखादिषु प्रातिभासिकेषु चाविद्यावृत्त्यवच्छिन्न-चैतन्याभेदस्य परमेश्वरप्रत्यक्षविषयेषु च माया-वृत्त्यवच्छिन्नचैतन्याभेदस्य सत्त्वेन वृत्त्यवच्छिन्नचैतन्याभेदस्य सत्त्वात्। **ब्रूम** इति। प्रयोजकमिति शेषः। **प्रमाण**चैतन्यस्येति। षष्ठ्यर्थो निष्ठत्वम्। प्रमाणचैतन्यनिष्ठो यो विषयावच्छिन्नचैतन्याभेदः, विषयावच्छिन्नचैतन्याभिन्न-प्रमाणचैतन्यत्वमित्यर्थः।

नन्वेकमेव चैतन्यं, "एकमेवाद्वितीयमि"ति छान्दोग्यश्रुतेः। तत् कथमुच्यते प्रमाण-चैतन्यं विषयचैतन्यमिति चेन्न, स्वतोऽभिन्नस्यापि चैतन्यस्योपाधिभेदेन भेदात् सद्वितीयचन्द्रवदित्येतदुपपादयन् प्रत्यक्षज्ञानघटकं प्रमाणविषयचैतन्यं निरूपयितुं प्रक्रमते—**तथा ही**ति। एकस्यैव चैतन्यस्यौपाधिकभेदं दर्शयति—**विषय**चैतन्यमिति। येन चैतन्याध्यस्तविषयेण चैतन्यमवच्छिद्यते घटाकाशादिवदितरस्माद् भिद्यते, तच्चैतन्यं

**चैतन्यं प्रमातृचैतन्यं चेति। तत्र घटाद्यवच्छिन्नं चैतन्यं विषयचैतन्यम्। अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्। अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम्। तत्र यथा तड़ागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्**

विषयावच्छिन्नचैतन्यमिति विषयचैतन्यमिति विषय इति वा व्यवह्रियते। तस्य च विषयचैतन्यस्योपाधिर्विषयः। तेन विषयेणोपाधिना चैतन्यस्य भेदो विषयचैतन्यमिति भावः। चैतन्यस्यौपाधिकभेदान्तरं दर्शयति—**प्रमाणचै**तन्यमिति। येन च चैतन्याध्यस्त-प्रमाणेन वृत्त्यात्मकेन चैतन्यमवच्छिद्यते, तच्चैतन्यं वृत्त्यवच्छिन्नचैतन्यमिति वृत्तिचैतन्यमिति प्रमाणचैतन्यमिति प्रमाणमिति वा व्यवह्रियते। तस्य च प्रमाणचैतन्यस्योपाधिः प्रमाणम्। एवं प्रमातृचैतन्यमित्यत्रापि द्रष्टव्यम्। तथा चोपाधेस्त्रैविध्यादेकमेव चैतन्यं प्रतिबिम्बवत् त्रिधा भिद्यमानं विषयचैतन्यमिति प्रमाणचैतन्यमिति प्रमातृचैतन्यमिति च त्रिधा व्यपदिश्यत इति भावः। विषयावच्छिन्न-चैतन्यं निरूपयति—**तत्रे**ति। त्रिषु चैतन्येषु मध्ये इत्यर्थः। **घटाद्यवच्छि**न्नमिति। यस्मिन् चैतन्ये घटस्तादात्म्येनाध्यस्तः सन् चैतन्यस्यावच्छेदको भवति, तच्चैतन्यं घटावच्छिन्नचैतन्यमिति घट इति वा व्यवह्रियते। अवच्छेदको भेदकः। अयम्भावः—यथा हि रङ्गविषयकेऽज्ञाने रङ्गमावृत्य रजतरूपेण परिणममाने रंगे च रजततादात्म्यमापन्ने रङ्गो रङ्ग इति न प्रतीयते, न वा व्यवह्रियते, किन्तु रजतमिति। तद्वच्चैतन्यविषयकेऽज्ञाने चैतन्यमावृत्य घटरूपेण परिणममाने चैतन्ये च घटतादात्म्यमापन्ने चैतन्यं चैतन्यमिति न प्रतीयते न वा व्यवह्रियते किन्तु घट इति। यथा च रङ्गज्ञानेन रङ्गाज्ञाने तत्कार्ये च रजते निवर्त्तमाने रङ्गो रङ्ग इति प्रतीयते व्यवह्रियते च, रङ्गज्ञानात् प्राक् तु रजतमिति। तद्वच्चैतन्यज्ञानेन चैतन्याज्ञाने तत्कार्ये च घटे निवर्त्तमाने चैतन्यं चैतन्यमिति प्रतीयते, चैतन्यज्ञानात् प्राक् तु घट इति। स च चैतन्यविवर्त्तो घटो वस्तुतश्चैतन्यं भवन्नपि चैतन्यज्ञानात् प्राक् घटावच्छिन्नचैतन्यमिति प्रतीयते। एवं पटादिष्वपि द्रष्टव्यम्। प्रमाणचैतन्यस्य स्वरूपमाह—**अन्तःकरणे**त्यादीति। ज्ञानगतप्रत्यक्षत्व-प्रयोजक-निरूपणस्य प्रस्तुतत्वात् तदुपयोगितया प्रमाणचैतन्य-विषयचैतन्ययोः स्वरूपमभिधाय विषयगतप्रत्यक्षत्व-प्रयोजकनिरूपणोपयोगितया प्रमातृचैतन्य-स्वरूपमाह—**अन्तःकरणावच्छिन्नमि**ति। प्रमाणचैतन्यान्तर्गतामन्तःकरणवृत्तिं निरूपयितुमुपक्रमते—**तत्रेति**। प्रमाणपदार्थकोटावित्यर्थः। **कुल्यात्मना** कुल्यारूपेण। कुल्याकारसदृशाकारेणेति यावत्।

**प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति। तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा निर्गत्य घटादिविषयदेशं गत्वा घटादिविषयाकारेण परिणमते। स एव परिणामो वृत्तिरित्युच्यते। अनुमित्यादिस्थले तु नान्तःकरणस्य**

**केदारान्** क्षेत्राणि। **तद्वत्** केदारवत्। दार्ष्टान्तिकं योजयति—**तथे**ति। **तैजस**मिति। सत्त्वांशाधिकापञ्चीकृत-पञ्चभूत-परिणामत्वादिति भावः। अनेनाऽन्तःकरणस्य शीघ्रगमन-सामर्थ्यं सूचितम्। **चक्षुरादिद्वारे**ति। चक्षुर्गोलकादिद्वारेत्यर्थः। न च स्पार्शनादिप्रत्यक्षे गोलकादिवन्नियतद्वाराभावेनान्तःकरणस्य निर्गमनं न स्यादिति वाच्यम्। सर्वत्र तत्तदिन्द्रियाधिष्ठानस्यैव द्वारत्वात्, तत्रापि तत्सत्त्वात्। **निर्गत्य** बहिरिन्द्रियेण संयुज्य। **गत्वा** प्राप्य, घटादिविषयेण संयुज्येति यावत्। एतेनान्तःकरणसंयुक्तेन्द्रियविषयसन्निकर्षस्यान्तःकरणपरिणामहेतुत्वं सूचितम्, केवलेऽन्तःकरणेन्द्रियसम्बन्धे विषयेन्द्रियसन्बन्धे वा परिणामादर्शनात्। **घटादि**विषयाकारेण घटादिविषयाकार-सदृशाकारेण। **स एव परिणामः** अन्तःकरणस्य विषयाकारसदृशाकार एव परिणामः। ननु केषाञ्चिद् द्रव्याणामाकारवत्त्वात् तत्सम्बद्धान्तःकरणस्य तदाकारसदृशाकारता युक्ता। गुणादीनामाकाराभावात् कथमन्तःकरणस्य स्वाकारसदृशाकारतेति चेन्न, गुणादीनां द्रव्याभेदाद् द्रव्याकारस्यैव गुणाद्याकारत्वात्। तथा च शाङ्करभाष्यम्—"तस्माद् द्रव्यात्मकता गुणस्य। एतेन कर्म-सामान्य-विशेष-समवायानां द्रव्यात्मकता व्याख्याते"ति। अत एव विवरणकृतां गुणग्रहणवचनमप्युपपद्यते "संयुक्तसमवायात् संयोगाद् वा गुणग्रहणे द्रव्यमपि संयुक्तमि"ति।

वस्तुतस्तु स्वाश्रयस्थस्यैवान्तःकरणस्य तत्तद्-विषयकास्तीत्यादिव्यवहार-प्रतिबन्धकाज्ञाननिवर्त्तनयोग्यावस्थाविशेष एव वृत्तिशब्देनाभिधीयते। वृत्तेस्तदाकारत्वञ्च तत्तद्विषयकास्तीत्यादिव्यवहार-प्रतिबन्धकाज्ञाननिवर्त्तनयोग्यत्वम्, तेन जातिगुणादीनामतीतानागतविषयाणां वा संस्थानहीनत्वेऽपि न क्षतिः, अस्तीत्यादिव्यवहार-प्रतिबन्धकाज्ञाननिवर्त्तनयोग्यत्वस्य वृत्तिमात्रे सत्त्वात्।

एतेन—परिणामो नाम सम्बन्धविशेष एवेति परिभाषाप्रकाशिकाकृतां व्याख्यानं विठ्ठलेशीयवाक्यसमर्थितं प्रत्युक्तम्, विठ्ठलेशीयवाक्यार्थानवबोधात्। तैस्तु वृत्तिव्याप्यत्वघटक-व्याप्यत्वस्यैव सम्बन्धरूपत्वाभिधानात्, सम्बन्धरूपाया वृत्तेर्बहिर्निगमनायोगाच्च।

नन्वेवमन्तःकरणस्य वृत्तिश्चेदनुमित्यादेरपि प्रत्यक्षत्वापत्तिस्तत्राप्यनुमेयाद्याकाराया

**वह्न्यादिदेशगमनम्, वह्न्यादेश्चक्षुराद्यसन्निकर्षात्। तथा चायं घट इत्यादि-**वृत्तेः सद्भावादिति चेन्न, ज्ञानगतप्रत्यक्षत्वप्रयोजकस्य प्रमाणचैतन्याभेदस्य तत्राभावादित्याह—**अनुमित्यादी**ति। असन्निकृष्टविषयक-ज्ञानस्थले इत्यर्थः। **अन्तःकरणस्य** अन्तःकरणवृत्तेः। **गमनमि**ति। तथा च ज्ञानगतप्रत्यक्षत्व-प्रयोजकस्य चैतन्याभेदस्य प्रयोजकं प्रमाणचैतन्य-विषयचैतन्यावच्छेदकयोरुपाध्योरेकदेशस्थत्वम्। तस्य च प्रयोजकमन्तःकरणवृत्तेर्विषयदेशगमनम्। अनुमित्यादौ त्वन्तःकरणस्य विषयदेशगमनाभावेन प्रमाणचैतन्य-विषयचैतन्यावच्छेदकयोरेकदेशस्थत्वं न भवतीति न प्रमाणचैतन्य-विषयचैतन्ययोरभेदः। तथा चानुमेयादेर्न प्रत्यक्षत्वमिति भावः। अन्तःकरणवृत्तेर्विषयदेशगमनाभावे हेतुमाह—**वह्न्यादेरि**ति। वृत्तेर्विषयदेशगमनस्य हेतुरन्तःकरणसंयुक्तेन्द्रियविषयसम्बन्धः। तस्य च हेतुर्विषयेन्द्रियसम्बन्धः। अनुमित्यादौ तु विषयेन्द्रियसम्बन्धाभावेन तज्जन्यस्यान्तःकरणसंयुक्तेन्द्रियविषयसम्बन्धस्याभावान्न वृत्तेर्विषयदेशगमनमिति भावः।

नन्वन्तःकरणवृत्तेर्बहिर्गमनं किमर्थम्? प्रत्यक्षत्वप्रयोजकस्य प्रमाणचैतन्याभेदस्य वृत्तेर्विषयसम्बन्धप्रयोज्यत्वात् तदर्थं वृत्तेर्बहिर्गमनमित्यपि न युक्तम्। वृत्तेर्बहिर्गमनं विनापि तदाकारत्वरूपाद् वृत्तिगतविशेषादेव प्रत्यक्षत्वोपपत्तेस्तदर्थं तत्सम्बन्धकल्पनाया अनौचित्यादिति चेन्न, तदाकारत्वमात्रस्य प्रत्यक्षत्वप्रयोजकत्वेऽनुमित्यादेः प्रत्यक्षत्वप्रसङ्गात्, तत्प्रयोजकस्य तदाकारत्वस्य तत्रापि सत्त्वात्। तस्मात् प्रमाणचैतन्याभेदस्यैव तत्प्रयोजकत्वं वक्तव्यम्। स चाभेदो वृत्तेर्बहिर्गमनं विना न भवतीति तत् कल्प्यते। किञ्च विषयावच्छिन्नचैतन्यावरकाज्ञाननिवृत्त्यर्थमपि वृत्तेर्बहिर्गमनमङ्गीकरणीयम्। अन्यथा ज्ञानाज्ञानयोर्भिन्नाधिकरण-विषयत्वेन समानाश्रयविषयत्वाभावाद् विषयगताज्ञानस्यानिवृत्त्यापत्तेः, अज्ञानसमानाश्रयविषयकज्ञानस्यैवाज्ञाननाशकत्वदर्शनात्, अन्यथा यज्ञदत्तस्य घटज्ञानेन तदीयपटाज्ञानस्यान्यदीयघटाज्ञानस्य च निवृत्तिप्रसङ्गात्। विषयचैतन्यविषयकञ्चाज्ञानं विषयचैतन्यगतमिति तन्निवर्त्तकज्ञानेनापि विषयचैतन्यगतेन विषयचैतन्यविषयकेण च भवितव्यम्। ज्ञानस्य च तदाश्रयविषयकत्वं वृत्तेर्विषयसम्बन्धाधीनम्। स च सम्बन्धो वृत्तेर्बहिर्गमनादृते न भवतीति तत् कल्प्यत इति भावः।

प्रत्यक्षलक्षण-घटकतया प्रमाणचैतन्यं विषयचैतन्यञ्च निरूपितम्। इदानीं वृत्तेर्विषयदेशगमनस्य फलं चैतन्ययोरभेदमुपपादयितुमुपक्रमते—**तथा चे**ति। अन्तःकरण-

**प्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहिरेकत्र देशे समवधानात् तदुभयावच्छिन्नं चैतन्यमेकमेव, विभाजकयोरप्यन्तःकरणवृत्ति-घटादिविषययोरेकदेशस्थत्वेन भेदाजनकत्वात्। अत एव मठान्तर्वर्त्ति-घटावच्छिन्नाकाशो न मठावच्छिन्नाकाशाद् भिद्यते। तथा चायं घट इति प्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगि-**

संयुक्तेन्द्रियविषयसन्निकर्षादन्तःकरणवृत्तेर्बहिर्निर्गमने सतीत्यर्थः। **समवधानात्** सहावस्थानात्। ननु घटादेरधिकरणं स्वोपादानं, वृत्तेश्च घटादिस्तत् कथमुभयोस्तयोरेकत्र समवधानं, भिन्नाधिकरणत्वादिति चेन्न, घटाद्युपादानव्यापनाद् वृत्तेः समवधानोपपत्तेः। अप एवोक्तं सिद्धान्तबिन्दौ—"स च सावयवत्वात् परिणममानो देहाभ्यन्तरे घटादौ च सम्यग् व्याप्ये"ति। **तदुभयावच्छिन्नं** घटाद्यवच्छिन्नं तदाकारवृत्त्यवच्छिन्नञ्च। ननु चैतन्यविभाजकयोरुपाध्योर्वृत्तिविषययोर्भेदात् कथं तदवच्छिन्नचैतन्ययोरभेद इत्यत आह—**विभाजकयोरि**ति। भेदव्यवहार-जनकयोरित्यर्थः। **एकदेशस्थत्वेन** एकस्थानस्थितत्वेन। **भेदाजनकत्वात्** भेदव्यवहाराजनकत्वात्, अभेदव्यवहारजनकत्वादिति यावत्। तथा च न ह्युपाधिरुपाधित्वेनोपधेयस्य चैतन्यस्य भेदप्रयोजकः, किन्तु भिन्नदेशस्थितत्वेन, एकदेशस्थितत्वेन तु स एवाभेदप्रयोजकः। तथा चात्रोपाध्योर्वृत्तिविषययोरेकदेशस्थत्वादुपधेययोश्चैतन्ययोर्न भेदव्यवहारः, किन्त्वभेदव्यवहार इति भावः। एकदेशस्थितोपाध्योरभेदव्यवहारजनकत्वे दृष्टान्तमाह—**अत एवे**ति। एकदेशस्थितत्वेनोपाध्योरभेदव्यवहारप्रयोजकत्वादेव। **भिद्यत** इति। यदा तु घटाकाशोपाधेर्घटस्य देशो न मठः किन्त्वन्यस्तदा घटाकाश-मठाकाशयोर्भेदव्यवहारः, उपाध्योर्घटमठयोर्भिन्नदेशत्वात्। यदा तु तयोरेवोपाध्योरेकदेशस्थता, तदा न तयोर्भेदव्यवहारः, तत्प्रयोजकस्य भिन्नदेशत्वस्याभावात्, किन्त्वभेदव्यवहार इति भावः। नन्वनयोरुपाध्योः कथमेकदेशस्थत्वम्, घटस्य मठदेशत्वेऽपि मठस्यान्यदेशत्वादिति चेन्न, एकदेशस्थत्वपदेनोपाधिभ्यामन्यदेशत्वाभावस्यैव विवक्षितत्वात्, तथा च यत्र द्वयोरुपाध्योरुपाधिभ्यामन्यदेशत्वं, तत्रैवोपाधिर्भेदप्रयोजकः। यथा घटाकाशमठाकाशोपाध्योर्घटमठयोरुपाधिभ्यामन्यदेशत्वात् तौ द्वौ भेदकौ घटाकाशो मठाकाशश्चेति। प्रकृते तु तौ द्वावुपाधिभ्यां नान्यदेशौ, मठस्योपाध्यन्यदेशत्वेऽपि घटस्य मठोपाधिदेशत्वात्। तेन मठान्तर्वर्तिघटाकाशो मठाकाशान्न भिद्यत इति भावः। प्रमाणचैतन्य-विषयावच्छिन्नचैतन्ययोरभेदमुपपाद्य प्रत्यक्षज्ञानलक्षणं लक्ष्ये योजयन्नुपसंहरति—**तथा चे**ति। उपाध्यो-

**तया घटावच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्य चाभिन्नतया तत्र घट-ज्ञानस्य घटांशे प्रत्यक्षत्वम्। सुखदुःखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्न-चैतन्यस्य च नियमेनैकदेशस्थितोपाधिद्वयावच्छिन्नत्वान्नियमेनाहं सुखी-**

रेकदेशस्थत्वेनोपधेयचैतन्याभेदहेतुत्वे सतीत्यर्थः। **घटसं**योगितया संयोगेन घटदेश-वृत्तितया, वृत्तेर्द्रव्यत्वादिति भावः। ननु वृत्तेर्द्रव्यत्वं कथमिति चेत्, संयोगविभाग-वत्त्वादिति ब्रूमः। तथा चोक्तमद्वैतदीपिकायाम्—"अन्तःकरणवृत्तिस्तस्यैवावस्थाविशेषो द्रव्यमि"ति। **घटावच्छिन्न**चैतन्यस्य विषयचैतन्यस्य। **तद्वृत्त्यव**च्छिन्नचैतन्यस्येति। विषयसंसृष्ट-घटाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्येत्यर्थः, प्रमाणचैतन्यस्येति यावत्। **अभिन्नतये**ति। तथा च विभाजकयोरुपाध्योर्वृत्तिविषययोरेकदेशस्थत्वात् तदव-च्छिन्नचैतन्ययोरभेद इति भावः। **तत्र** अयं घट इति प्रत्यक्षस्थले। **घटांशे** वृत्त्यभिव्यक्त-घटावच्छिन्नचैतन्यांशे, घटविषयकांशे न त्वन्यविषयकांशे इति यावत्। **प्रत्यक्षत्व**मिति। तथा चायं घट इति प्रत्यक्षस्थले घटाकारवृत्तेर्घटसम्बन्धे सति विषयस्य घटावच्छिन्नचैतन्यस्य प्रमाणस्य च घटसंयुक्त-घटाकारान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्यैक-देशोपाधिद्वयावच्छिन्नत्वेनाभेदादभिव्यक्तं घटावच्छिन्नचैतन्यं घटप्रत्यक्षमिति व्यवह्रियते इति भावः। नन्वेवमपि सुखदुःखादिज्ञानं प्रत्यक्षं न स्यात्, तदाकारवृत्तेरिन्द्रिय-द्वाराभावेन विषयदेशागमनादित्यत आह—**सुखदुःखादी**ति। आदिपदेन योग्यमनो-धर्मस्य प्रातिभासिकस्याहमर्थस्य च परिग्रहः। **तद्वृत्तीति**। सुखदुःखाद्याकाराऽ-विद्यावृत्तीत्यर्थः। **नियमेन** अवश्यम्भावेन, स्वत इति यावत्। **एकदेशे**ति। उपाध्योरेक-देशस्थत्वं क्वचित् स्वतः क्वचित् परतः। तत्रान्तरप्रत्यक्षे स्वतः, वृत्तिविषयोः सदैवैकस्मिन् देशे सम्बन्धात्। बाह्यप्रत्यक्षे तु परतः, तत्रोपाध्योः स्वतो भिन्नदेशत्वात्। यदा तु वृत्तेरिन्द्रियद्वारा विषयसम्बन्धः, तदा तत्सम्बन्धाधीनं तयोरुपाध्योरेकदेशस्थत्वम्। तथा चात्रान्तरप्रत्यक्षे सुखादिविषय-तदाकारवृत्त्योः सदैवैकत्र सम्बन्धाद् युक्तमेकदेशस्थ-त्वम्। तेन चैकदेशस्थितोपाधिद्वयेनावच्छिन्नं चैतन्यमप्येकमिति भावः। **नियमेन** सर्वदैव। घटादेर्ज्ञानं कदाचित् प्रत्यक्षं भवति, कदाचित् परोक्षम्। सुखादेर्ज्ञानं तु स्वस्य सदैव प्रत्यक्षम्, वृत्त्यवच्छिन्नचैतन्य-सुखाद्यवच्छिन्नचैतन्ययोः सदैवैकदेश-स्थितोपाधिद्वयावच्छिन्नत्वादिति भावः। नन्वहं सुखीत्यादौ चैतन्यस्य कथमेकदेश-स्थितोपाधिद्वयावच्छिन्नत्वम्, अन्तःकरण-परिणामभूतस्य सुखादेरन्तःकरणदेशत्वादविद्या-

**त्यादिज्ञानस्य प्रत्यक्षत्वम्। नन्वेवं स्ववृत्ति-सुखादि-स्मरणस्यापि सुखाद्यंशे प्रत्यक्षत्वापत्तिरिति चेन्न, तत्र स्मर्यमाणसुखस्यातीतत्वेन स्मृतिरूपान्तःकरणवृत्तेर्वर्त्तमानत्वेन तत्रोपाध्योर्भिन्नकालिकतया तदवच्छिन्नचैतन्ययो-**परिणामभूतायाश्चाविद्यावृत्तेरविद्यादेशत्वादविद्यान्तःकरणयोश्च भेदादिति चेन्न, अविद्यावच्छिन्नचैतन्येऽन्तःकरणस्यावच्छेदादविद्यान्तःकरणयोरुपादानोपादेयत्वेनाभेदाच्च तयोरेकदेशस्थत्वोपपत्तेः। **अहं** सुखीत्यादीति। आदिपदेनाहं दुःखीत्यादि-प्रत्यक्ष-परिग्रहः। **प्रत्यक्षत्व**मिति। सुखाद्यंश इत्यादिः।

नन्विदं प्रयोजकं स्वकीयसुखादिस्मृतावतिप्रसक्तम्, प्रत्यक्षज्ञानप्रयोजकस्य वृत्त्यवच्छिन्नचैतन्याभेदस्य तत्र सत्त्वात्, तत्प्रयोजकस्योपाध्योरेकदेशस्थत्वस्य च तत्र वर्त्तमानत्वादिति शङ्कते—**नन्वि**ति। **एवं** उपाध्योरेकदेशस्थत्वस्योपधेयाभेदप्रयोजकत्वे। **स्ववृत्ती**ति। परकीयसुखादिस्मरणकाले परकीयसुखस्य स्ववृत्तितद्गोचरस्मृतिरूपवृत्तेश्च भिन्नदेशत्वेन तत्रातिव्याप्तययोगात् स्ववृत्तीत्युक्तम्। **सुखाद्यंशे** सुखविषयकत्वांशे, स्वांशे प्रत्यक्षत्वस्येष्टत्वादिति भावः। **प्रत्यक्षत्वापत्तिरि**ति। तथा च पूर्वमहं सुखीत्यादावुपाध्योः सुखादिविषय-तद्गोचरस्मृतिरूपाविद्यावृत्त्योरेकदेशस्थत्वात् सुखाद्यवच्छिन्नतद्वृत्त्यवच्छिन्नचैतन्ययोश्चाभेदात् स्मृतेः प्रत्यक्षत्वापत्तिः। नच स्मृतेः प्रत्यक्षत्वम्। तस्मान्नेदं प्रत्यक्षत्वस्य प्रयोजकं युक्तमिति शङ्काकर्त्तुराशयः। परिहरति—**नेति**। **तत्र** स्ववृत्तिसुखादिस्मरणकाले। **अतीतत्वेन** ध्वस्तत्वेन, सुखादीनामाशुविनाशित्वादिति भावः। **स्मृतिरूपे**ति। स्मृतिरूपाऽन्तःकरणसंसृष्टाविद्यावृत्तेरित्यर्थः। यथाश्रुतार्थस्तु न सङ्गच्छते, अन्तःकरणवृत्तेरिन्द्रियादि-व्यापारपूर्वकत्वात् स्मृतौ तद्व्यापाराभावेनान्तःकरणवृत्तित्वायोगात्, अप्रमाया एवाविद्यापरिणामत्वाभ्युपगमादिति भावः।

एतेन—"यत्र देशे सुखाकारान्तःकरणपरिणाम" इति परिभाषाप्रकाशिकाकृतां समाधानग्रन्थव्याख्या निरस्ता वेदितव्या, सुखाकारान्तःकरणपरिणामस्य विवरणानभिमतत्वात्, तेषां साक्षिवेद्यत्वात्।

**तत्र** पूर्वमहं सुखीत्यादिसुखस्मरणदशायाम्। **उपाध्योः** स्मर्यमाणसुखादेस्तद्गोचराविद्यावृत्तेश्च। **भिन्न**कालिकतयेति। प्रागुत्पन्नसुखादेराशुविनाशित्वेन स्मरणकालेऽभावात् तद्गोचराविद्यावृत्तेश्च भावादिति भावः। **तदवच्छिन्ने**ति। स्मर्यमाणसुखाद्यवच्छिन्न-तदाकाराविद्यावृत्त्यवच्छिन्नेत्यर्थः। **भेदादि**ति। अभेदप्रयोजकाभावादिति

**भेदात्, उपाध्योरेकदेशस्थत्वे सत्येककालिकत्वस्यैवोपधेयाभेदप्रयोजकत्वात्। यदि चैकदेशस्थत्वमात्रमुपधेयाभेदप्रयोजकम्, तदा पूर्वमहं सुखीत्यादि-स्मृतावतिव्याप्तिवारणाय वर्त्तमानत्वं विषयविशेषणं देयम्।**

**नन्वेवमपि स्वकीय-धर्माधर्मौ वर्त्तमानौ यदा शब्दादिना ज्ञायेते, तदा**

भावः। नन्वभेदप्रयोजकस्योपाध्योरेकदेशस्थत्वस्य तत्र सत्त्वात् कथमभेदप्रयोजकाभाव इति चेत्, तत्राह—**उपाध्यो**रिति। सुखादिविषय तदाकारवृत्त्योरित्यर्थः। **उप-धेयाभेदे**ति। उपाध्योरेकदेशवृत्तित्वमात्रं नाभेदप्रयोजकम्, किन्त्वेकदेशवृत्तित्व-समानाधिकरणैककालवृत्तित्वम्। तथा च पूर्वमहं सुखीत्यादौ यद्यप्युपाध्योः सुखादिविषय-तदाकारवृत्त्योरेकदेशस्थत्वमस्ति, तथापि तयोरेककालवृत्तित्वं नास्ति, स्मरणकाले तद्वृत्तेः सत्त्वेऽपि सुखादेरतीतत्वेनासत्त्वात्। तस्मात् तत्राभेदप्रयोजकस्यैकदेशस्थत्व-समानाधिकरणैककालवृत्तित्वस्यासत्त्वात् प्रयोज्यस्याभेदस्यासत्त्वमिति स्मृतेर्न प्रत्यक्षत्वमितिभावः। नन्वेवं सति भिन्नकालीनयोरप्येकदेशस्थयोरुपाध्योरुपधेयाभेदप्रयोजकत्वं न स्यात्। अस्ति च गृहैकदेशस्थित-घटावच्छिन्नाकाशस्य तद्घटनाशानन्तरं तद्देशस्थित-घटान्तरा-वच्छिन्नाकाशेनाभेदः, य एवाकाशो घटेनावच्छिन्नः, स एव घटान्तरेणापीत्यैक्यप्रत्यभि-ज्ञानात्, गौरवाच्चेत्यस्वरसादाह—**यदि चे**ति। **एकदेशस्थ**त्वमात्रमिति। मात्रपदे-नैककालवृत्तित्वस्य प्रयोजकत्व-निरासः। **वर्त्तमानत्वं** स्वरूपेण विद्यमानत्वम्, कारण-रूपेण तदापि तेषां वर्त्तमानत्वादिति भावः। **देयमि**ति। तथा च स्मृतौ नातिव्याप्तिस्तत्र वर्त्तमानविषयावच्छिन्न-चैतन्याभेदाभावात्, सुखादेः कारणरूपेण वर्त्तमानत्वेऽपि स्वरूपेणावर्त्तमानत्वात्। तथा च वृत्त्यवच्छिन्न-चैतन्याभिन्न-वर्त्तमानविषयावच्छिन्न-चैतन्यत्वं ज्ञानगत-प्रत्यक्षत्वस्य प्रयोजकमिति फलितम्।

नन्वेवमपि प्रयोजकमिदं शब्दादिजन्येऽनुमानजन्ये वा स्वकीय-धर्माधर्मादि-विषयक-परोक्षज्ञानेऽतिप्रसक्तम्, चैतन्याभेदप्रयोजकस्योपाध्योरेकदेशस्थत्वस्य तत्र सत्त्वात्, धर्माधर्म-विषयस्य तदाकारान्तःकरण-वृत्तेश्चान्तःकरणैकदेशत्वादित्याशङ्कते—**नन्वि**ति। **एवम**पि स्वकीयसुखादिस्मृतावतिव्याप्त्यभावेऽपि वर्त्तमानत्वस्य विषयविशेषणत्वेऽपि वा। **स्वकीये**ति। अनेनोपाध्योर्धर्मादिविषय-तदाकारवृत्त्योरेकदेशस्थत्वं दर्शितम्। पूर्वं भवान् धार्मिक इत्यादिवाक्यजन्येऽतीत-धर्मादिविषयकज्ञाने विषयविशेषणेन वर्त्तमानत्वे-नैवातिव्याप्तिवारणमतो धर्माधर्मयोर्विशेषणमाह—**वर्त्तमानावि**ति। **शब्दादिने**ति।

**तादृश-शाब्दज्ञानादावतिव्याप्तिः, तत्र धर्माद्यवच्छिन्नचैतन्य-तद्वृत्त्यवच्छिन्न-चैतन्ययोरेकत्वादिति चेन्न, योग्यत्वस्यापि विषयविशेषणत्वात्। अन्तःकरण-धर्मत्वाविशेषेऽपि किञ्चिद् योग्यं किञ्चिदयोग्यमित्यत्र फलबल-कल्प्यः स्वभावविशेष एव शरणम्। अन्यथा न्यायमतेऽप्यात्मधर्मत्वाविशेषेऽपि सुखादिवद्धर्मादेः प्रत्यक्षत्वापत्तिर्दुवारा।**

**न चैवमपि सुखस्य वर्त्तमानतादशायां त्वं सुखीत्यादि-वाक्यजन्य-ज्ञानस्य**

धार्मिकस्त्वमित्यादिवाक्येन। आदिनाऽहं धर्मवान् सुखित्वादित्याद्यनुमान-परिग्रहः। **तादृश-शाब्द**ज्ञानादाविति। धर्माधर्मयोः शाब्दबोधेऽनुमितौ चेत्यर्थः। अतिव्याप्तौ हेतुमाह—**तत्रे**ति। धर्माधर्मविषयक-परोक्षज्ञान-दशायामित्यर्थः। **तद्वृत्त्य**वच्छिन्नेति। धर्माधर्माकारान्तःकरणवृत्त्यवच्छिन्नेत्यर्थः। **एकत्वादि**ति। एकत्वप्रयोजकस्योपाध्यो-र्वृत्तिविषययोरेकदेशस्थत्वस्य विषयविशेषणस्य च वर्त्तमानत्वस्य तत्र सत्त्वात्, धर्माधर्म-विषयस्य तदाकारान्तःकरणवृत्तेश्चैकस्मिन्नन्तःकरणे वर्त्तमानत्वादिति भावः। परिहरति—**ने**ति। तत्र हेतुमाह—**योग्यत्वस्ये**ति। प्रत्यक्षयोग्यत्वस्येत्यर्थः। **विशेषणत्वा**-दिति। एवञ्च धर्माधर्मविषयक-शाब्दज्ञानादौ नातिव्याप्तिः, तत्र वर्त्तमान-विषया-वच्छिन्न-चैतन्याभेदसत्त्वेऽपि योग्य-वर्त्तमान-विषयावच्छिन्न-चैतन्याभेदस्याभावादिति भावः। ननु सुखादयो यथाऽन्तःकरणधर्मास्तद्वद् धर्माधर्मादयोऽपि। तत् कथं सुखादीनां प्रत्यक्षयोग्यत्वं, न धर्माधर्मादीनामित्यत आह—**अन्तःकरणे**ति। **योग्यं** प्रत्यक्षग्राह्यं, न त्विन्द्रियग्राह्यम्। तथात्वे साक्षिग्राह्याणां सुखादीनामप्रत्यक्षत्वापत्तेः, तेषामिन्द्रियाग्राह्यत्वादिति भावः। **फलबल**कल्प्यः फलबलेन प्रत्यक्ष-रूपकार्यत्वहेतुना कल्प्योऽनुमेयः। **स्वभाव**विशेषः उद्भूतत्वानुद्भूतत्वरूपो धर्मविशेषः। तथा च यस्य प्रत्यक्षज्ञानं भवति, तत्र तेन प्रत्यक्षेणोद्भूतत्वं कल्प्यते। यस्य च न प्रत्यक्षं, तत्रानुद्भूत-त्वम्। तस्मात् सुखादीनां प्रत्यक्षज्ञान-विषयत्वादुद्भूतत्वम्। तेन चोद्भूतत्वेन तेषां योग्यत्वम्, अन्येषाञ्च धर्मादीनामप्रत्यक्षत्वादयोग्यत्वमिति भावः। **शरणम्** आश्रयः, प्रयोजकमिति यावत्। स्वभावविशेषस्य तत्प्रयोजकत्वानङ्गीकारे दोषमाह—**अन्यथे**ति। योग्यत्वायोग्यत्वयोः स्वभावविशेष-प्रयुक्तत्वानङ्गीकारे इत्यर्थः। **सुखादी**त्यादिपदेन ज्ञानाद्या योग्यात्मगुणा ग्रहीतव्याः। **धर्मादे**रित्यादिपदेन त्वधर्माद्या अयोग्यात्मगुणा ग्रहीतव्याः। शब्दजन्ये योग्य-वर्त्तमान-सुखविषयक-परोक्षज्ञाने निरुक्तप्रयोजकस्याति-

**प्रत्यक्षता स्यादिति वाच्यम्, इष्टत्वात्, दशमस्त्वमसीत्यादौ सन्निकृष्टविषये** व्याप्तिमाशङ्कते—**न चेति**। **एवं** योग्यवर्त्तमान-विषयावच्छिन्न-चैतन्याभेदस्य प्रत्यक्षत्व-प्रयोजकत्वे। सुखस्यावर्त्तमानता-दशायामतिव्याप्त्ययोगादाह—**वर्त्तमानता**दशाया-मिति। ननु शाब्दबोधकाले कथं क्षणिकस्य सुखस्य वर्त्तमानता, पदज्ञानादिना तत्पूर्वं तस्य नाशादिति चेन्न। सुखादीनामाशुविनाशित्वाभ्युपगमेऽपि तृतीयक्षण-विनाशित्वरूप-क्षणिकत्वानभ्युपगमात्, प्राचीनैरपि नैयायिकैस्तस्याशुतरविनाशित्वा-भ्युपगमात्। तथा चोक्तं न्यायकन्दल्याम्—"आकाशात्मनामव्याप्यवृत्तयो विशेष-गुणास्तेषामाशुतरविनाशित्वञ्च स्वरूपमस्ती"ति। किरणावल्यामपि तथैव। आशुतर-विनाशित्वस्य क्षणिकत्वार्थकत्व-कल्पनायां प्रमाणाभावात्, विषयेन्द्रियसन्निकर्षादि-जन्यस्य सुखस्य यावद् विषयेन्द्रियसन्निकर्षमनुवर्त्तमानताभ्युपगमात्, तत्र प्रतिक्षणं सुखोत्पत्तौ प्रमाणाभावात्, सुखबाहुल्याननुभवाच्च। **सुखीत्या**दीति। आदिपदेन भवान् सुखीत्यादिवाक्यपरिग्रहः। **ज्ञानस्ये**ति। अहं सुखीत्याकारक-ज्ञानस्येत्यर्थः। **प्रत्यक्षता** स्यादिति। प्रत्यक्षत्व-प्रयोजकस्य वृत्त्यवच्छिन्न चैतन्याभिन्न-योग्यवर्त्तमान-विषयावच्छिन्न-चैतन्यत्वस्य तत्र ज्ञाने सत्त्वादिति भावः। परिहरति—**इष्टत्वा**दिति। प्रत्यक्षताया इत्यादिः। तथा च शब्दादुत्पद्यमानस्यानावृतार्थविषयक-ज्ञानस्य प्रत्यक्षत्वा-भ्युपगमेन लक्ष्यत्वात् तत्र प्रत्यक्षत्वापादनस्येष्टापादनतयाऽदोषत्वात्, अनिष्टापादनस्यैव दोषत्वादिति भावः। ननु परोक्षज्ञानजनन-स्वभावस्य शब्दस्य कथमपरोक्षज्ञान-जनकत्वं, प्रामाणाभावादिति चेन्न, प्रमाणस्य सत्त्वादित्याह—**दशम**स्त्वमसीति।

अत्रेयमाख्यायिका—बहुजन-परिपूर्ण-नौकया नदीपारं गतेषु दशसु पुरुषेष्वन्यतमः स्वव्यतिरिक्तान् नव पुरुषान् गणयित्वा दशमो नोत्तीर्णः, नूनमसौ नद्यां पतितो मृतश्चेति चिन्तयन् रोदितुं प्रवृत्तः। तदवलोक्य केनचिदाप्तेनोक्तम्—न मृतो दशमोऽस्तीति। कुतः स नोपलभ्यत इत्येवं पृष्टः स आप्तः पुरःस्थितान् सर्वान् गणयित्वा प्राश्निकमङ्गुल्या निर्दिश्य प्राह—त्वमेव दशमोऽसीति। एवमाप्तवाक्यात् तस्य दशमत्वज्ञाने जाते शोको निवृत्तः। न चेदं तस्य ज्ञानं परोक्षं, तथात्वे तस्यापरोक्षभ्रमानिवृत्ति-प्रसङ्गात्, अपरोक्षज्ञानस्यैव तन्निवर्तकत्वात्। तथा चोक्तं पञ्चदश्याम्—"न मृतो दशमोऽस्तीति श्रुत्वाप्तवचनं तदा। परोक्षत्वेन दशमं वेत्ति स्वर्गादिलोकवत्। त्वमेव दशमोऽसीति गणयित्वा प्रदर्शितः। अपरोक्षतया ज्ञात्वा हृष्यत्येव न रोदिति"। इति।

**शब्दादप्यपरोक्षज्ञानाभ्युपगमात्। अत एव पर्वतो वह्निमानित्यादि ज्ञानमपि वह्नयंशे परोक्षम्, पर्वतांशेऽपरोक्षम्, पर्वताद्यवच्छिन्न-चैतन्यस्य बहिर्निःसृतान्तःकरणवृत्त्यवच्छिन्नचैतन्यस्य च परस्परं भेदाभावात्। वह्नयंशे**

नन्वियमाख्यायिका न प्रमाणम्, कल्पितविषयत्वादिति चेन्न, कल्पितविषयिण्या अप्रमाणत्वेऽप्यकल्पितविषयिण्यास्तस्याः प्रमाणत्वात, तस्याश्चाकल्पितविषयत्व-सम्भवात्। अस्तु वा तस्या अप्रमाणत्वं, "तद्धास्य विजज्ञा"वित्यादिश्रुतिस्तु तत्र प्रमाणं भवितुमर्हति, तत्र श्वेतकेतोरपरोक्षज्ञानस्योपदेशमात्र-साध्यत्वोक्तेः; अन्यथा तस्यापरोक्षभ्रमनिवृत्तिर्न स्यात्। नच तदा तस्य मनसैवापरोक्षज्ञानं, मनसः क्वचिदपि प्रमाकरणत्वानभ्युपगमात्, आत्मनः स्वप्रकाशत्वात्, सुखादीनाञ्च साक्षिग्राह्यत्वात्। तस्माच्छब्दस्यापि क्वचिदपरोक्षज्ञानजनकत्वमङ्गीकरणीयम्। एवञ्च दशमस्त्वमसि, तत्त्वमसीत्यादिवाक्याद् यथाऽपरोक्षज्ञानं, तथा त्वं सुखीत्यादावपि बोध्यम्। ननु दशमस्त्वमसीत्यादौ न शब्दादपरोक्षज्ञानम्, अपि तु वाक्यसहकृतादिन्द्रियादिति चेन्न, बहुलतमे तमसि लोचनहीनस्यापि तद्वाक्यादपरोक्ष-भ्रम-निवर्त्तकस्य दशमोऽस्मीत्यपरोक्ष-ज्ञानस्योत्पत्तिदर्शनात्, सत्यपीन्द्रियसन्निकर्षे तद्वाक्यात् पूर्वमपरोक्षज्ञानानुदयात्। **इत्यादी**त्यादिपदेन तत्त्वमसीत्यादिवैदिकवाक्यपरिग्रहः। ननु वाक्यं यद्यपरोक्षज्ञानजनकं स्यात, तदा शाब्दबोधोच्छेदः स्यात्, समाने विषये परोक्षज्ञानसामग्र्यपेक्षया प्रत्यक्षज्ञानसामग्र्या बलवत्त्वादिति चेन्न, प्रमात्रभिन्नार्थक-शब्दस्यैवापरोक्षज्ञानजनकत्व-नियमान्नान्यस्येति विशेषादित्याह— **सन्निकृष्ट**विषये प्रमात्रभिन्नार्थविषये, न त्विन्द्रियसन्निकृष्टविषये, त्वं सुखीत्यादिवाक्यात् सुखादेः प्रत्यक्षत्वोपपादन-विरोधात्, सुखादीनामिन्द्रियासन्निकृष्टत्वात्, मनसोऽनिन्द्रियत्वादिति भावः। **शब्दात्** वाक्यात्। **अपरोक्ष**ज्ञानाभ्युपगमादिति। विवरणानुसारिभिरित्यादिः। तथा च प्रमातृचैतन्यगतानां दशमत्वादीनां प्रमात्रभेदात् तदर्थकवाक्यस्यैवापरोक्ष-ज्ञानजनकत्वं नान्यस्येति न शाब्दबोधोच्छेद इति भावः। वाचस्पत्यनुयायिनस्तु शब्दजन्यज्ञानस्यापरोक्षत्वं नेच्छन्ति। न केवलं शब्दस्य प्रमात्रभिन्नार्थविषयेऽपरोक्षज्ञानजनकत्वमपि तु प्रमाणान्तरस्यापीत्याह—**अत एवे**ति। प्रमात्रभिन्नार्थविषये प्रमाणमात्रस्यापरोक्षज्ञानजनकत्वाभ्युपगमादेव। **इत्यादि**ज्ञानमपि इत्याद्यनुमानजन्य-ज्ञानमपि। पर्वताद्यंशविषयक-ज्ञानस्यापरोक्षत्वे हेतुमाह—**पर्वता**दीति। **अन्तःकरण**वृत्तीति। पर्वताद्याकारान्तःकरणवृत्तीत्यर्थः। **भेदाभावा**दिति। चैतन्यो-

**त्वन्तःकरणवृत्तिनिर्गमाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमाणचैतन्यस्य च परस्परं भेदात्। तथा चानुभवः पर्वतं पश्यामि वह्निमनुमिनोमीति। न्यायमते पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः। असन्निकृष्टपक्षकानुमितौ**

पाध्योरेकदेशस्थत्वादिति भावः। ननु पर्वतो वह्निमानित्यादिज्ञानस्यानुमितित्वं सर्वलोकसिद्धम्। न च लोकसिद्धार्थस्य लक्षणेनान्यथात्वं युक्तम्। तथा च श्लोकवार्त्तिकम्—"सिद्धानुगममात्रं हि कर्त्तुं युक्तं परीक्षकैः। न सर्वलोकसिद्धस्य लक्षणेन निवर्त्तन"मितीति चेन्न, पर्वतांशे प्रत्यक्षत्वस्य सर्वानुभवसिद्धत्वादित्याह—**तथा** चेति। **अनुभवः** ज्ञानसाक्षात्कारः, न त्वनुव्यवसायः, सिद्धान्ते तदनभ्युपगमात्, विषयज्ञान-तज्ज्ञानयोर्यौगपद्यनियमात्, ज्ञानादीनां ज्ञातैकसत्त्वात्। न हि ज्ञानमुत्पद्यमानं साक्षिणाऽगृहीतं भवति। तथा च योगसूत्रं—"सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वादि"ति। अनुभवाकारमाह—**पर्वतं** पश्यामीति। अयं भावः—द्रष्टा हि विषयस्वरूपं यदा गृह्णाति, तदैव ज्ञानस्वरूपमपि। तत्र विषयो यादृशाकारस्तादृशाकारमेव तं गृह्णाति। पर्वतांशे ज्ञानं यद्यनुमितिरूपं स्यात्, तदा तदनुमितिरूपमेव गृह्णीयात् पर्वतमनुमिनोमीति। न च तथा तद् गृह्णाति। अत एव सर्वेषां ज्ञानग्रहणाकारः पर्वतं पश्यामीति। तस्मात् पर्वतांशे ज्ञानस्य प्रत्यक्षत्वम्, अतो न लोकविरुद्धमिति। एवं पर्वतांशे ज्ञानस्य प्रत्यक्षत्वे साधकमुपन्यस्य बाधकमाह—**न्यायमत** इति। **इती**ति। इतिशब्दश्चात्राकारार्थः। पर्वतमनुमिनोमीत्याकारेत्यर्थः। **अनुव्यवसा**यापत्तिः ज्ञानविषयक-ज्ञानस्यापत्तिः। अयं भावः—न्यायमते व्यवसायानन्तरमनुव्यवसायो भवन्नपि नियमेन न भवति। तत्र विषयज्ञानं व्यवसाय इत्यभिधीयते। ज्ञान-ज्ञानं त्वनुव्यवसाय इति। प्रत्यक्षे विषयज्ञानस्याकारो घटोऽयमिति। अनुमितौ पर्वतो वह्निमानिति। एवमन्यत्रापि। प्रत्यक्षे ज्ञानविषयक-ज्ञानस्याकारो घटं पश्यामीति। घटविषयक-ज्ञानवानहमित्याकार इति यावत्। अनुमितौ तु—वह्निमनुमिनोमीति, वह्निविषयकानुमितिज्ञानवानहमित्याकार इति यावत्। एवमन्यत्र। तत्र पर्वतांशे ज्ञानं यद्यनुमितिरूपं स्यात्, तदा तदनुमितिरूपं गृह्णीयात्, ज्ञानग्रहणाकारश्च पर्वतमनुमिनोमीति स्यात्। न च तथा न्यायमतेऽपि। तस्मात् पर्वतांशे ज्ञानं नाप्रत्यक्षमिति। नन्वेवमनुमितौ द्विरूपं चेद् ज्ञानं, पृथिवीपरमाणुर्गन्धवानित्यादावपि परमाण्वंशे ज्ञानं प्रत्यक्षं स्यादित्यत आह—**असन्निकृष्टे**ति। असन्निकृष्टः प्रमातृभिन्नः आवृत इति यावत् पक्षः साध्यविशिष्टो धर्मी यस्यामनुमितौ साऽसन्नि-

**तु सर्वांशेऽपि ज्ञानं परोक्षम्। सुरभि चन्दनमित्यादिज्ञानमपि चन्दनांशेऽपरोक्षम्, सौरभांशे परोक्षम्, सौरभस्य चक्षुरिन्द्रियायोग्यतया योग्यत्वघटितस्य निरुक्तलक्षणस्याभावात्।**

**न चैवमेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयोर्जातित्वं न स्यादिति**

कृष्टपक्षकानुमितिस्तस्यामिति विग्रहः। सा च पृथिवीपरमाणुर्गन्धवानित्याकारा, पक्षस्य परमाणोः प्रमातृभिन्नतयाऽप्रत्यक्षत्वात्। **सर्वांशे** साध्यांशे पक्षांशे च। **परोक्षम्** अनुमितिरूपम्, प्रत्यक्षप्रयोजकस्य योग्य-वर्त्तमान-विषयावच्छिन्न-चैतन्याभेदस्य तत्रासत्त्वात्, परमाणोरयोग्यत्वादिति भावः। नन्वेवमपि प्रयोजकमिदं सुरभि चन्दनमित्यादौ चाक्षुषप्रत्यक्षेऽव्याप्तम्, तत्र चन्दनांश-प्रत्यक्षे योग्य-वर्त्तमान-विषयावच्छिन्न-चैतन्याभेदसत्त्वेऽपि सौरभांश-प्रत्यक्षे तदभावात्, सौरभस्य चक्षुरिन्द्रियायोग्यत्वादित्यत आह—**सुरभी**ति। **इत्यादी**त्यादिपदेनोष्णं जलं मधुरं फलमित्यादि-चाक्षुषप्रत्यक्षपरिग्रहः। **अपरोक्ष**मिति। तत्र चैतन्योपाध्योश्चन्दन-तदाकारवृत्त्योरेकदेशस्थत्वेन वृत्त्यवच्छिन्न-विषयावच्छिन्न-चैतन्ययोरभेदादिति भावः। **परोक्षमि**ति। तत्र सौरभांशे इन्द्रियसन्निकर्षाभावेन विषयावच्छिन्न-वृत्त्यवच्छिन्नचैतन्ययोरभेदाभावादिति भावः। यद्यपि नैयायिकैः सौरभांशे ज्ञानस्यापरोक्षत्वमभ्युपगम्यते, तैर्ज्ञानलक्षण-सन्निकर्षाभ्युपगमात्, तस्य च ज्ञानलक्षणसन्निकर्षस्य स्वसंयुक्तमनःसंयुक्तात्मसमवेतज्ञानविषयत्वरूपस्य तत्र सत्त्वात्, तथापि सिद्धान्ते तदनङ्गीकारात् सौरभेणेन्द्रियसन्निकर्षाभावात् तदंशे ज्ञानं न प्रत्यक्षम्, किन्तु स्मृतिरनुमितिर्वा। तत्राघ्रातपूर्वे तस्मिन् चन्दनखण्डे सौरभज्ञानं स्मृतिः, अनाघ्रातपूर्वे त्वनुमितिः। तत्प्रयोगश्च—चन्दनमिदं सुरभि चन्दनखण्डत्वात् सम्मतचन्दनखण्डवदिति। तथा च परोक्षे सौरभज्ञाने लक्षणागमनं न दोषायेति भावः। सौरभांशे ज्ञानस्याप्रत्यक्षत्वे हेतुमाह—**सौरभ**स्येति। **निरुक्त**लक्षणस्य वृत्त्यवच्छिन्न-चैतन्याभिन्न-योग्य-वर्त्तमान-विषयावच्छिन्न-चैतन्यत्वरूपस्य। निरुक्तलक्षणाभावे हेतुमाह—**इन्द्रिये**ति। इन्द्रियासन्निकृष्टतयेत्यर्थः।

ननु पर्वतांशे ज्ञानस्य प्रत्यक्षत्वे बह्नयाद्यंशे च परोक्षत्वे परोक्षत्वापरोक्षत्वयोरेकस्मिन्ननुमितिज्ञाने समावेशात् तयोः साङ्कर्यापत्त्या जातित्वं न स्यात्, साङ्कर्यस्य जातिबाधकत्वात्। तथा चोक्तं किरणावल्याम्—व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथाऽनवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥ इति। सङ्करश्च परस्परात्यन्ताभावसमानाधि-

**वाच्यम्, इष्टत्वात्, जातित्वोपाधित्व-परिभाषायाः सकलप्रमाणागोचरतया-ऽप्रामाणिकत्वात्। घटोऽयमित्यादि प्रत्यक्षं हि घटत्वादिसद्भावे मानम्, न**

करणयोरेकत्र समावेशः। तथा हि—परोक्षत्वाभावाधिकरणे नीलो घट इत्यादि-प्रत्यक्ष-ज्ञाने प्रत्यक्षत्वं परोक्षत्वाभावश्चेति तत् प्रत्यक्षत्वं परोक्षत्वाभाव-समानाधिकरणम्। पृथिवीपरमाणुर्गन्धवानित्यादिज्ञाने परोक्षत्वं प्रत्यक्षत्वाभावश्चेति तत् परोक्षत्वं प्रत्यक्षत्वा-भाव-समानाधिकरणम्। पर्वतो वह्निमानित्यादिज्ञाने प्रत्यक्षत्वाभावसमानाधिकरणस्य परोक्षत्वस्य परोक्षत्वाभावसमानाधिकरणस्य च प्रत्यक्षत्वस्य समावेशात् साङ्कर्यमिति सिद्धजातिभावयोस्तयोर्जातित्वाभावप्रसङ्गः। तस्मात् पर्वतांशे ज्ञानस्य प्रत्यक्षत्वे बाधकं साङ्कर्यम्। सर्वांशे ज्ञानस्य परोक्षत्वे तु न साङ्कर्यं, न वा प्रत्यक्षत्वस्य जातित्वोच्छेद इत्याह—**न चे**ति। एवंशब्दार्थमाह—**एकत्रे**ति। पर्वतो वह्निमानित्यादावित्यादिः। **तयोः** परोक्षत्वापरोक्षत्वयोः। **न स्यादि**ति। साङ्कर्यादिति भावः। तथा च पर्वतो वह्निमानित्यादौ पर्वतांशकस्य प्रत्यक्षत्वेऽभ्युपगम्यमाने साङ्कर्यापत्त्या प्रत्यक्षत्वा-प्रत्यक्षत्वयोर्जातित्वं न स्यात्। सिद्धञ्च तयोर्जातित्वम्। तस्मात् तयोर्जातित्वा-नुपपत्तिः पर्वतांशकस्य प्रत्यक्षत्वे बाधिकेति तत्र सर्वांशे ज्ञानस्य परोक्षत्वं स्वीकरणीय-मिति पूर्वपक्षाशयः। परिहरति—**इष्टत्वादि**ति। तयोरजातित्वस्येत्यादिः। सिद्धे हि तयोर्जातित्वे तदनुपपत्तिस्तत्र तद्बाधिका भवेत्। न च तयोर्जातित्वं प्रमाण-सिद्धम्। तस्मात् पर्वतांशकस्य प्रत्यक्षत्वे न कोऽपि बाधक इति भावः। ननु प्रत्यक्ष-त्वादेर्जातित्वं नासिद्धं, साधकमान-सद्भावादिति नैयायिकशङ्कायामाह—**जातित्वे**ति। जातित्वं हि नित्यत्वे सत्यनेकसमवेतत्वम्। उपाधित्वं तु भेदकधर्मवत्त्वम्। परिभाषा च संज्ञा, आधुनिकसंकेत इति यावत्। तथा च घटत्वादीनां नैयायिकी परिभाषा जातिरिति। बौद्धी परिभाषा त्वतद्व्यावृत्तिरिति। नीलघटत्वादीनामुपाधिरिति। एवञ्च जातित्वमुपाधित्वञ्च तत्तत्सम्प्रदायानां परिभाषामात्रम्। नहि परिभाषामात्रेण कस्यचिदर्थस्य सिद्धिर्भवति। सिद्धस्य हि परिभाषा, नासिद्धस्य। तस्मादादौ परि-भाषितव्यस्यार्थस्य सिद्धिरेष्टव्या। सा च प्रमाणव्यापारमपेक्षते। तद्व्यापारश्च तद्-विषयभावः। यो हि प्रमाणविषयस्तस्यैव सिद्धिर्नान्यस्य। तस्माद् घटे घटत्वस्य तत्रापि जातित्वस्य सिद्धौ प्रमाणं वक्तव्यम्। न चास्ति ते प्रमाणम्। तस्माद् घटत्वादीनां नैव जातित्वमिति भावः। ननु सिद्धे हि घटत्वादीनां प्रमाणविषयत्वेऽप्रामाणिकत्वं

**तु तस्य जातित्वेऽपि, जातित्वरूप-साध्याप्रसिद्धौ तत्साध्यकानुमानस्याप्यनवकाशात्, समवायासिद्धया ब्रह्मभिन्नाखिलप्रपञ्चस्यानित्यतया च नित्यत्व-**
सिद्धं भवेत्। तदेव त्वसिद्धं, तेषां प्रमाणविषयत्वात्। अस्ति च प्रत्यक्षात्मिकाऽनुगत-प्रतीतिस्तत्र प्रमाणम्। तस्मात् तेषामप्रामाणिकत्वं नैव युक्तमित्यत आह—**घटोऽय**-मिति। **प्रत्यक्षम्** अनुगत-प्रत्यक्षम्। **मानं** प्रमाणम्। **जातित्वेऽ**पीति। मानमिति शेषः। अयम्भावः—परस्परं भिद्यमानेषु प्रतिघटं येयं घटोऽयं घटोऽयमित्येकाकारा प्रतीतिरुदेति। साऽनुगतप्रतीतिरित्यभिधीयते। तस्याश्च प्रतीतेर्विषयो न घटः, घटानां परस्परं भेदाद् घटपटादि-ज्ञानवत् तज्ज्ञानानामप्याकारभेदापातात्, विषयभेदस्यैव ज्ञानाकार भेदकत्वात्। न चात्राकारभेदस्तस्मात् तत्प्रतीतेर्विषयः कश्चिद् घटगणानुगतो धर्मो वक्तव्यः। योऽयं सकलघटानुगतो धर्मः, तद् घटत्वम्। तस्य चानुगतत्वात् तद्विषयिण्याः प्रतीतेरप्यनुगतत्वम्। तेन घटोऽयमित्याद्यनुगतप्रतीतेर्विषयतया घटत्व-सिद्धावपि न तु तस्य जातित्वसिद्धिस्तदन्तरेणापि तत्प्रतीतेर्निर्वाहादिति। नन्वनुगत-प्रतीत्या घटत्वसिद्धौ तज्जातित्वमनुमानात् सेत्स्यति। तथा च प्रयोगः—घटत्वादिकं जातिरुपाधिभिन्नत्वे सति सामान्यधर्मत्वादिति। तत् कथं घटत्वादेर्जातित्वे न मानम्? अनुगतप्रतीतेरमानत्वेऽप्यनुमानस्य मानत्वादिति चेन्न, साध्याप्रसिद्धया हेतोर्दुष्टत्वादित्याह—**जातित्वरू**पेति। तथा चास्मिन् प्रयोगे जातित्वं साध्यम्। तच्च नित्यानेक-समवेतत्वरूपम्। न च तत् क्वचित् प्रसिद्धम्, सिद्धान्ते कुत्रापि नित्यानेकसमवेतत्व-रूपस्य जातित्वस्यानभ्युपगमात्, नित्यत्वाभावात्, समवायाभावाच्च। तस्मात् साध्यस्य जातित्वस्याप्रसिद्धया हेतौ साध्यव्याप्तिग्रहाभावेन तस्य च व्याप्यत्वासिद्धत्वेन तत्साध्य-कानुमितिर्न भवतीति भावः। न केवलं साध्याप्रसिद्धया हेतोर्व्याप्यत्वासिद्धत्वम्, साध्याभावनिश्चयाद् बाधितत्वमपीत्याह—**समवाये**ति। ननु समवायो नासिद्धः, लक्षण-प्रमाण-सद्भावात्। तत्र लक्षणं तावत्—नित्यसम्बन्धत्वम्। प्रमाणन्तु—इह कपाले घट इति प्रत्यक्षम्, विशिष्टबुद्धिर्विशेष्य-विशेषणसम्बन्धविषया विशिष्टबुद्धित्वाद् दण्डी पुरुष इति विशिष्टबुद्धिवदित्यनुमानञ्चेति चेत्, न, लक्षणायोगात्, नित्यस्वरूप-सम्बन्धे नित्यसंयोगे च तल्लक्षणस्यातिव्याप्तत्वात्, नित्यत्वानिरूपणाच्च। तथा हि—तत् किं यत्किञ्चिद्ध्वंसाप्रतियोगित्वं स्वध्वंसाप्रतियोगित्वं वा? नाद्यः, संयोगस्य यत्-किञ्चिद्ध्वंसाप्रतियोगित्वेन तत्रातिव्याप्तेः। न द्वितीयः, समवायलक्षणे समवायध्वंसा-

**समवेतत्व-घटित-जातित्वस्य घटत्वादावसिद्धेश्च। एवमेवोपाधित्वं निरस-नीयम्। पर्वतो वह्निमानित्यादौ पर्वतांशे वह्न्यंशे चान्तःकरणवृत्तिभेदाङ्गी-कारेण तत्तदवच्छेदकभेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये वृत्तौ न कश्चिद्**

प्रतियोगित्वस्य प्रवेशेनात्माश्रयात्। नापि निरुक्तं प्रमाणं, तस्य स्वरूपसम्बन्धं तादात्म्य-सम्बन्धं वादाय पर्यवसानात्। न च स्वरूपसम्बन्धस्यानन्त्याद् गौरवं, समवायस्यैक-त्वाल्लाघवमिति वाच्यम्, रूपसमवायो रससमवायश्चेत्यादिप्रतीत्या समवायस्याप्यानन्त्येन गौरवस्योभयत्र तुल्यत्वात्। स्वरूपसम्बन्धपक्षे सिद्धे धर्मिणि स्वरूपे सम्बन्धत्वमात्रकल्पना, समवायपक्षे च समवायरूप-धर्मिकल्पना, तत्र च सम्बन्धत्व-कल्पनेत्यधिकगौरवाल्लघुभूतस्य स्वरूपस्य तादात्म्यस्य वा ग्रहणौचित्यात्। तथा चोक्तं मानमेयोदये—"कल्पनालाघवं यत्र तं पक्षं रोचयामहे" इति। तदेवं लक्षणाभावात् प्रमाणाभावाच्च न समवायसिद्धिः। तथा च घटत्वादावनेकसमवेतत्वं नास्तीत्यनुमानात् प्रागेवावधारितम्। **अनित्यतये**ति। अतोऽन्यदार्त्तमित्यादि-श्रुत्या सर्वस्यापि प्रपञ्चस्यानित्यत्वमवगम्यते। तथा चानुमानात् प्राग् घटत्वादौ पक्षे नित्यानेकसमवेतत्वाभावस्य प्रमाणेनैवावगमात् तदनुमानं तत्-प्रमाणबाधितमिति हेतोर्बाधितत्वान्न तेन हेतुना साध्यसिद्धिरिति भावः।

एतेन—घटत्वादिकं जातिर्नित्यानेकसमवेतत्वादित्यनुमानं तु साध्याप्रसिद्धि-स्वरूपासिद्ध्यादि-दोषग्रस्तमिति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, हेतु-साध्ययोरैक्यात् तादृशानुमानप्रयोगायागात्।

उक्तदूषणमुपाधिनिराकरणेऽप्यतिदिशति—**एवमेवे**ति। जातित्वनिराकरण-रीत्ये-त्यर्थः। ननु यदि घटत्वादिकं न जातिः, किं तर्हीति चेत्? चित्तादात्म्यमिति गृहाण। तथा च घटावच्छिन्न-चित्तादात्म्यस्य सर्वघटेष्वनुगमात् तेनैवानुगतप्रतीतिनिर्वाहे न तदतिरिक्ता नित्यानेकसमवेतरूपा जातिः कल्पनीया। तस्यैव तु घटावच्छिन्नचित्-तादात्म्यस्य लोके घटत्वेन व्यवहारः। एवं पटत्वादावपि बोध्यम्। नन्वस्तु प्रत्यक्षत्वा-प्रत्यक्षत्वयोरजातित्वं, विरुद्धत्वं तु तयोर्नैव वारणीयम्। तत् कथं विरुद्धयोस्तयोरेकत्राव-स्थानमिति चेत्, न, संयोग-तदभाववदवच्छेदकभेदेनैकस्मिन् विरुद्धयोर्वृत्तौ बाधका-भावादित्याह—**पर्वत** इति। **वृत्तिभेदाङ्गी**कारेणेति। पर्वतांशे पर्वताकारान्तः-करण-वृत्तिरपरोक्षा, वह्न्यंशे तु वह्न्याकारा परोक्षेति वृत्तिभेदाभ्युपगमादित्यर्थः। **तत्तदवच्छे**दकभेदेनेति। पर्वताकारान्तःकरणवृत्त्यवच्छेदेन वह्न्याकारान्तःकरण-वृत्त्यव-

**विरोधः। तथा च तत्तदिन्द्रिययोग्य-वर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्।**

**घटादेर्विषयस्य प्रत्यक्षं तु प्रमात्रभिन्नत्वम्। ननु कथं घटादेरन्तः-**

च्छेदेन चेत्यर्थः। **चैतन्ये** प्रमाचैतन्ये। तथा च पर्वताकार-वृत्त्यवच्छेदे प्रमाचैतन्येऽपरोक्षत्वं, तत्र प्रत्यक्षत्वप्रयोजकस्य प्रमाणचैतन्य-विषयावच्छिन्नचैतन्ययोरभेदस्य सत्त्वात्, वह्न्याकारवृत्त्यवच्छेदे तु परोक्षत्वं, तत्र वह्न्याकारवृत्तेर्विषयासम्बन्धात् प्रमाण-चैतन्य-विषयावच्छिन्न-चैतन्ययोर्भेदादिति भावः। **विरोध** इति। एवञ्चैकस्मिन् चैतन्येऽवच्छेदकभेदेन विरुद्धयोः परोक्षत्वापरोक्षत्वयोरेकस्मिन् वृक्षे संयोग-तदभावयोरिव वृत्तौ न कश्चिद् विरोध इति भावः।

वयन्तु ब्रूमः—पर्वतो वह्निमानित्यादि-विशिष्टबुद्धाविन्द्रियसन्निकर्षसहिताद् व्याप्ति-संस्कारादितो वह्निविशिष्टपर्वताद्याकाराऽन्तःकरणवृत्तिरेकैवोत्पद्यते, न तु नाना। तथात्वे घटपटाविति समुच्चयज्ञानवद् वह्निपर्वतयोः सम्बन्धबोधानुपपत्तेः। तत्र वह्निविशिष्ट-पर्वताद्याकाराया अन्तःकरणवृत्तेः पर्वताद्यंशस्य विषयसम्बन्धाद् वृत्त्यवच्छिन्नचैतन्यस्य विषयावच्छिन्न-चैतन्यस्य चाभेदात् तदंशावच्छेदे चैतन्येऽपरोक्षत्वम्। वह्न्याद्यंशस्य विषयासम्बन्धाद् विषयावच्छिन्न-चैतन्यस्य प्रमाणचैतन्यस्य च भेदात् तदंशावच्छेदे चैतन्ये परोक्षत्वम्। विशिष्टाकारवृत्त्यभिव्यक्त-विशिष्टविषयावच्छिन्न-चैतन्यस्यैक्यादनु-मित्यात्मक-ज्ञानस्याप्यैक्यम्। तथा च ज्ञानैक्यानुभवः पर्वते वह्निमनुमिनोमीति। अन्यथा विशिष्टाकारवृत्त्यनङ्गीकारे वृत्तिभेदेन वृत्त्यभिव्यक्त-तत्तद्विषयावच्छिन्न-चैतन्यस्यापि भेदाद् ज्ञानस्यापि भेदेनानुभवः स्यात्। न च तथानुभवः। तस्मादनुमित्यादावेकैव विशिष्टाकारा वृत्तिरङ्गीकरणीयेति।

ज्ञानगतप्रत्यक्षत्व-प्रयोजकं सङ्कलय्य दर्शयति—**तथा चे**ति। **तत्तदिन्द्रि**ययोग्येति। प्रत्यक्षयोग्येत्यर्थः। यथाश्रुतार्थग्रहणे ज्ञानसुखादिप्रत्यक्षे प्रातिभासिक-रजतादिप्रत्यक्षे सर्वेशप्रत्यक्षे चाव्याप्तेः, तत्तत्प्रत्यक्षविषयाणामिन्द्रियायोग्यत्वादिति भावः। **वृत्त्य-वच्छिन्न**-ज्ञानस्येति। वृत्त्यवच्छिन्न-चैतन्यस्येत्यर्थः। तथा च प्रत्यक्षयोग्य-वर्त्तमान-विषयावच्छिन्न-चैतन्याभिन्न-तत्तदाकार-वृत्त्यवच्छिन्न-चैतन्यत्वं प्रत्यक्षत्वमिति फलितम्।

क्रमप्राप्तं विषयगत-प्रत्यक्षत्व-प्रयोजकं विवरणोक्तमनुस्मरन् निरूपयति—**घटादे-**रिति। **विषयस्ये**ति। षष्ठ्यर्थो निष्ठत्वम्, विषयनिष्ठमित्यर्थः। **प्रमात्रभिन्न**त्वम्

**करणावच्छिन्नचैतन्याभेदः, अहमिमं पश्यामीति भेदानुभवविरोधादिति चेत्। उच्यते। प्रमात्रभेदो नाम न तावदैक्यम्। किन्तु प्रमातृसत्तातिरिक्त-सत्ताकत्वाभावः। तथा हि घटादेः स्वावच्छिन्नचैतन्याध्यस्ततया विषय-**

अन्तःकरणावच्छिन्न-चैतन्याभिन्नत्वम्। तथा चोक्तं विवरणे—"विषयस्यापरोक्ष्यं संविद-भेदादि"ति। प्रमात्रभिन्नत्वं निरूपयितुं शङ्कते—**नन्वि**ति। **कथमिति**। किंशब्द आक्षेपार्थः। विषयस्य प्रमात्रभेदो न भवतीत्यर्थः। नन्वि"दं सर्वं यदयमात्मे"त्यादिश्रुति-वाक्ये सर्वस्यैव प्रपञ्चस्य प्रमात्रभेदो दर्शितस्तत् कथमुच्यते विषयस्य न प्रमात्रभेद इति चेन्न, अबाधितप्रत्यक्षविरोधात् तद्वचनस्यान्यार्थत्वादित्याह–**अहमिम**मिति। **भेदानु-भवे**ति। अहमिमं पश्यामीत्यनुभवेऽस्मदर्थस्य प्रमातुः कर्तृतया प्रकाशः, इदमर्थस्य विषयस्य घटादेः कर्मतया। कर्तृकर्मणोश्च भेदः सर्वानुभवसिद्धः। तथा चास्मिन्ननु-भवे प्रमातृविषययोर्भेदानुभवात् तदभेदो न युक्तः, श्रुतेश्चाबाधित-प्रत्यक्षविरोधादन्यार्थत्वं युक्तमिति शङ्काकर्तुराशयः। प्रमात्रभेदं निरूपयति—**उच्यत** इति। नास्माभिः प्रमातृविषययोरैक्यमभेदं ब्रूमः। येन भेदानुभव-विरोधो भवेत्, श्रुतेर्वोपचरितार्थत्वम्, किन्त्वन्यदिति भावः। किं तदित्याकाङ्क्षायामाह—**किन्त्वि**ति। **प्रमातृसत्ते**ति। प्रमातृसत्तातोऽतिरिक्ता सत्ता यस्य स प्रमातृसत्तातिरिक्तसत्ताकस्तस्य भावः प्रमातृसत्ताति-रिक्त-सत्ताकत्वं तस्याभाव इति विग्रहः। ननु विषयसत्ता प्रमातृसत्तातोऽतिरिक्तैव, स्वरूपस्य सत्तारूपत्वात् प्रमातृविषययोश्च परस्परं स्वरूपभेदात्, तत् कथं घटादेः प्रमातृ-सत्तातिरिक्त-सत्ताकत्वाभावः? प्रमातृसत्तातिरिक्तसत्ताके तस्मिन् घटादौ प्रमातृ-सत्तातिरिक्त-सत्ताकत्वस्य सत्त्वादिति चेन्न, सत्ताशब्देनात्राधिष्ठानसत्ताया ग्रहणात्, अध्यस्तसत्तायास्तत्सत्तानन्यत्वादित्येतदुपपादयितुं प्रक्रमते—**तथा** हीति। नन्वेवमपि शुक्तिरजतादेः प्रत्यक्षत्वं न स्यात्, प्रमातृसत्तातिरिक्त-सत्ताकत्वस्य तत्र सत्त्वात्, रजतसत्तायाः प्रमातृ-सत्तातोऽतिरिक्तत्वात्। तथा हि––त्रिविधा सत्ता पारमार्थिकी, व्यावहारिकी प्रतिभासिकी चेति। तत्राद्या ब्रह्मणः, द्वितीया घटादीनां व्यावहारिकाणां, तृतीया प्रातिभासिकानां शुक्तिरजतादीनाम्। तथा च प्रातिभासिकस्य शुक्ति-रजतादेः प्रमातृसत्तातिरिक्त-प्रातिभासिकसत्तावत्त्वात् प्रत्यक्षत्वानापत्तिः, गुरुत्वादे-श्चातीन्द्रियस्य व्यावहारिकस्य प्रमातृसत्तातिरिक्त-सत्ताभावात् प्रत्यक्षत्वापत्तिश्चेति चेन्न, सत्तैकत्व-पक्षाश्रयणादध्यस्तानां सत्तान्तराभावादुक्तदोषानवकाशाद् इत्येतदुपपादयितुं

**चैतन्यसत्तैव घटादिसत्ता, अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अनङ्गीकारात्। विषयचैतन्यञ्च पूर्वोक्तप्रकारेण प्रमातृचैतन्यमेवेति**

प्रक्रमते—**तथा ही**ति। **स्वावच्छिन्ने**ति। घटाद्यवच्छिन्न-चैतन्येत्यर्थः। यस्मिन्न-विद्योपहित-चैतन्ये घटादयस्तादात्म्येनाध्यस्यन्ते, तच्चैतन्यं घटाद्यध्यासात् प्रागपि घटाद्यवच्छिन्न-चैतन्यमिति व्यवह्रियते। तथा चाविद्योपहित-चैतन्यमेव घटाद्यवच्छिन्नचैतन्यम्। तच्च घटादेरधिष्ठानम्। तत्र घटादेरध्यास इति भावः। **विषय**चैतन्यसत्तैवेति। अधिष्ठानचैतन्यसत्तैवेत्यर्थः। एवकारेण घटादेः पृथक्सत्ता-निरासः। नन्वधिष्ठानसत्तैव न घटादिसत्ता, किन्त्वन्या; 'सन् घट' इत्यादिप्रतीतौ घटादिनिष्ठायाः सत्ताजातेरेव विषयभावात्; तस्याश्चाधिष्ठान-सत्तातोऽतिरेकादिति चेन्न, सामान्यादि-साधारण-सत्-प्रतीतेः सत्ताजाति-निबन्धनत्वायोगात्, सामान्यादिषु त्वया तदनङ्गीकारात्, एकार्थ-समवायेन तेषु सत्तासत्त्वेऽपि विजातीयसम्बन्धेन समानाकार-प्रतीत्यनुपपत्तेः, अन्यथा सम्बन्धभेदो न सिध्येत्। तस्मात् सदात्मकचिति घटादेस्तादात्म्येनाध्यासाच्छुक्ति-रजतादाविदन्त्व-संसर्गाध्यासवद् घटादौ चैतन्यसत्तायाः संसर्गाध्यासात् तत्र तत्सत्तैव प्रतीयते, नान्येत्याह—**अधिष्ठाने**ति। **आरोपि**तेति। आरोपितस्य घटादेः सत्ताया इत्यर्थः। **अनङ्गीकारा**दिति। तथा च घटादावधिष्ठान-सत्तायाः संसर्गाध्यासेनैव 'सन् घट' इत्यादि-प्रतीत्युपपत्तौ तत्र सत्तान्तरकल्पने प्रयोजनाभावादिति भावः।

एतेन—"तत्प्रतीतेरधिष्ठानसत्ता-विषयत्वेन तदंशेऽन्यथाख्यातित्वादि"ति शिखा-मणिकृतां व्याख्यानं प्रत्युक्तम्, सिद्धान्ते क्वाप्यन्यथाख्यात्यनभ्युपगमात्, एकत्राभ्यु-पगमेऽन्यत्रापि तत्प्रसङ्गात्, सर्वत्रानिर्वचनीयख्यातेः सम्भवाच्च।

नन्वस्त्वधिष्ठानसत्तैव घटादेः सत्ता, तेषां तादात्म्येन तत्राध्यासात्। प्रमातृ-सत्तातिरिक्त-सत्ताकत्वाभावस्तु तेषां कथम्? न हि प्रमातृचैतन्यं घटादेरधिष्ठानं, येन तत्सत्तैव घटादेः सत्ता स्यात्, अपि तु घटाद्यवच्छिन्नं चैतन्यम्। तथा च तत्सत्तैव घटादेः सत्ता। सा च प्रमातृसत्तातोऽन्यैवेति तेषां प्रमातृसत्तातिरिक्त-सत्ताकत्वमेवेति चेन्न, प्रमातृचैतन्य-घटाद्यवच्छिन्न-चैतन्ययोरैक्यात् प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानत्वात् तत्सत्तैव घटादेः सत्ता, नान्येति घटादेः प्रमातृसत्तातिरिक्त-सत्ताशून्यत्वसिद्धेरित्याह —**विषयचैतन्य**मिति। ननु कथं प्रमातृचैतन्य-घटाद्यवच्छिन्नचैतन्ययोरैक्यं, उभयो-र्भेदादित्यत आह—**पूर्वोक्ते**ति। ज्ञानगत-प्रत्यक्षत्व-प्रकरणोक्त-प्रकारेणेत्यर्थः। **प्रमातृ-**

**प्रमातृचैतन्यस्यैव घटाद्यधिष्ठानतया प्रमातृसत्तैव घटादिसत्ता नान्येति सिद्धं घटादेरपरोक्षत्वम्। अनुमित्यादिस्थलेऽन्तःकरणस्य वह्न्यादिदेश-निर्गमनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्यानात्मकतया वह्न्यादि-सत्ता प्रमातृसत्तातो भिन्नेति नातिव्याप्तिः।**

**नन्वेवमपि धर्माधर्मादिगोचरानुमित्यादिस्थले धर्माधर्मयोः प्रत्यक्षत्वा-**

चैतन्यमेवेति। यद्यपि घटाद्यवच्छिन्नचैतन्य-प्रमातृचैतन्ययोरौपाधिको भेदस्तथापि यदा घटाद्याकारान्तःकरणवृत्तेरिन्द्रियद्वारा विषयसम्बन्धस्तदा विषयावच्छिन्नं चैतन्यं वृत्त्यव-च्छिन्नं चैतन्यं प्रमातृचैतन्यं चैकं भवति, वृत्तिविषयादीनामुपाधीनामेकदेशस्थत्वात्। एवञ्च प्रमातृचैतन्य-प्रमाणचैतन्य-विषय-चैतन्यानामैक्याद् विषयचैतन्यं प्रमातृचैतन्य-मेव, न तु प्रमातृचैतन्यतोऽन्यदिति भावः। **एव**कारेण प्रमातृ-प्रमाण-विषयचैतन्या-नामैक्यदशायां घटाद्यवच्छिन्नचैतन्यानामन्यत्व-व्यवच्छेदः। एतेन—एतेषामैक्यदशायां घटादेरधिष्ठानं प्रमातृचैतन्यातिरिक्तं न भवतीति सूचितम्। **इति**हेतौ। **प्रमातृ-चैतन्यस्यैवे**ति। एवकारेण घटाद्यवच्छिन्नचैतन्यस्याधिष्ठानता-व्युदासः, तस्य प्रमातृ-चैतन्यतः पृथक्सत्ताभावादिति भावः। **नान्ये**ति। आरोपितेऽधिष्ठानसत्तातिरिक्त-सत्तानभ्युपगमादिति भावः। **अपरोक्षत्व**मिति। घटादेर्विषयस्य प्रमातृसत्तातिरिक्त-सत्ताकत्वाभावादिति भावः। नन्वेवमपि पर्वतो वह्निमानित्यादौ प्रमातृचैतन्य-वह्न्यादि-विषयावच्छिन्न-चैतन्ययोर्द्वयोर्व्यावहारिक-सत्तावत्त्वेनैकसत्तावत्त्वाद् वह्न्यादे-र्विषयस्य प्रमातृसत्तातिरिक्त-सत्ताशून्यत्वेन प्रत्यक्षत्वापत्तिरिति चेन्न, प्रमातृचैतन्य-विषयाधिष्ठानचैतन्ययोर्द्वयोर्व्यावहारिकत्वेऽपि परस्परं भेदात् प्रमातृसत्तातो वह्न्यादि-सत्ताया अतिरेकादित्याह—**अनुमित्या**दीति। **निर्गमनाभावेने**ति। बहिर्निर्गमन-हेतुभूतस्य विषयेन्द्रिय-सन्निकर्षस्याभावादिति भावः। **चैतन्यानात्मकतये**ति। अभेदप्रयोजकस्योपाध्योरेकदेशस्थत्वस्याऽभावादिति भावः। **भिन्नेती**ति। इतिर्हेतौ। यस्माद् वह्न्यादिसत्ता प्रमातृसत्तातो भिन्ना, तस्माद् वह्न्यादौ प्रमातृसत्तातिरिक्त-सत्ता-वत्त्वान्न प्रत्यक्षत्वमिति भावः।

विषयगत-प्रत्यक्षत्व-प्रयोजकस्यानुमेयान्तःकरणधर्मादावतिव्याप्तिं शङ्कते—**नन्विति**। **एवमपि** अनुमेयवह्न्यादावतिव्याप्त्यभावेऽपि। **धर्माधर्मादी**ति। परकीयधर्माधर्मयो-रनुमिति-दशायां प्रमातृचैतन्य-विषयाधिष्ठान-चैतन्ययोर्भेदेनातिव्याप्तेरापादनायोगात्

**पत्तिः, धर्माधर्माद्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मादिसत्तायाः प्रमातृसत्ताऽनतिरेकादिति चेन्न, योग्यत्वस्यापि विषयविशेषणत्वात्। नन्वेवमपि रूपी घट इति प्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः,**

स्ववृत्तीति धर्माधर्मविशेषणं देयम्। धर्माधर्मयोः प्रत्यक्षत्वापत्तौ हेतुमाह—**धर्माधर्माद्य**वेति। **प्रमातृ**चैतन्याभिन्नतयेति। चैतन्योपाधेरन्तःकरणस्य विषयस्य च धर्माधर्मादेरतीन्द्रियस्यैकदेशस्थत्वात् तच्चैतन्ययोरभेद इति भावः। ततः किमित्यत आह—**धर्मादी**ति। तथा च प्रमातृचैतन्यस्य धर्माधर्माद्यधिष्ठानत्वात् प्रमातृचैतन्यसत्तैव धर्माधर्मादीनां सत्ता, नान्येति प्रमातृसत्तातिरिक्त-सत्ताकत्वाभावादन्तःकरण-गतानां धर्माधर्मादीनामतीन्द्रियाणां प्रत्यक्षत्वापत्तिरिति प्रयोजकस्यातिव्याप्तिरिति पूर्वपक्षाशयः। अतिव्याप्तिं निराकरोति—**नेति**। तत्र हेतुमाह—**योग्य**त्वस्यापीति। प्रत्यक्षयोग्यत्वस्यापि, न त्विन्द्रिय-योग्यत्वस्यापीत्यर्थः। तथात्वे ज्ञान-सुखादीनामिन्द्रियायोग्यत्वात् तत्राव्याप्तिर्दुर्वारा स्यात्। एवञ्च धर्माधर्मादौ प्रमातृसत्तातिरिक्त-सत्ताशून्यत्वसत्त्वेऽपि प्रत्यक्षयोग्यत्वाभावान्न तत्रातिव्याप्तिरिति भावः। **अपि**कारेण वर्त्तमानत्वमपि विषयविशेषणं देयमिति सूचितम्, अन्यथा स्ववृत्त्यतीतसुखादेरनुमितौ सुखादेः प्रत्यक्षत्वं स्यात्, सुखाद्यवच्छिन्नचैतन्य-प्रमातृचैतन्ययोरभेदादिति भावः। तथाच प्रत्यक्षयोग्यत्वे सति वर्त्तमानत्वे सति प्रमातृसत्तातिरिक्त-सत्ताशून्यत्वं विषयस्य प्रत्यक्षत्वमिति फलितम्।

उक्तलक्षणस्य पुनरतिव्याप्तिमाशङ्कते—**नन्वि**ति। **एवम**पि विषयस्य योग्यत्व-विशेषण-निवेशेऽपि। **रूपी** रूपवान्, नीलरूपवान् पीतरूपवान् वेति यावत्, न तु सामान्यतो रूपवान्, रूपविशेषं नीलपीतादिकमविषयीकृत्य रूपसामान्यस्य प्रत्यक्षायोगात्। तथा चोक्तं तात्पर्यपरिशुद्धौ—"चाक्षुषप्रतीतौ शुक्लत्व-सामान्यानवभासे तदाधारस्य रूपस्वलक्षणस्य भासनायोगादि"ति। **परिमाणादे**रित्यादिपदेन प्रत्यक्ष-योग्य-स्थौल्यादि-गुणगण-परिग्रहः। **प्रत्यक्षत्वा**पत्तिरिति। तथा च घटगत-नीलादि-रूप-प्रत्यक्षकाले परिमाणादीनामप्रत्यक्षत्वात् तत्र प्रत्यक्षत्वापादनमनिष्टापादनमेवेति भावः। उक्तापत्तौ हेतुमाह—**रूपावच्छिन्ने**ति। नीलादिरूपावच्छिन्नस्येत्यर्थः। **एकतये**ति। उपाध्योर्नीलादिरूप-महत्त्वादि-परिमाणयोरेकदेशस्थत्वान्नीलादि-रूपावच्छिन्न-महत्त्वादि-परिमाणाद्यवच्छिन्न-चैतन्ययोरैक्यमिति भावः। नन्वस्तु रूपाद्यवच्छिन्न-परिमाणाद्यवच्छिन्न-चैतन्ययोरैक्यं, तथापि परिमाणाद्यवच्छिन्नचैतन्ये प्रमातृचैतन्याभेदा-

**रूपावच्छिन्न-चैतन्यस्य परिमाणाद्यवच्छिन्नचैतन्यस्य चैकतया रूपावच्छिन्न-चैतन्यस्य प्रमातृचैतन्याभेदे परिमाणाद्यवच्छिन्न-चैतन्यस्यापि प्रमात्रभिन्नतया परिमाणादिसत्तायाः प्रमातृसत्तातिरिक्तत्वाभावादिति चेन्न, तत्तदा-**

भावात् तत्र प्रत्यक्षत्वापादनमयुक्तमित्यतः परिमाणाद्यवच्छिन्नचैतन्ये प्रमातृचैतन्याभेदमुपपादयितुमाह—**रूपावच्छिन्न**चैतन्यस्येति। **प्रमातृ**चैतन्येति। नीलाद्याकारवृत्तेर्विषयसम्बन्धाच्च चैतन्योपाधीनामन्तःकरण-तद्वृत्ति-नीलादि-विषयाणामेकदेशस्थत्वात् तत्तदुपाध्यवच्छिन्न-चैतन्यानां परस्परं भेदाभावान्नीलाद्यवच्छिन्न-चैतन्यं प्रमातृचैतन्याभिन्नमिति भावः। **प्रमात्र**भिन्नतयेति। रूपावच्छिन्नचैतन्यस्य पूर्वोक्तप्रकारेण प्रमातृचैतन्याभेदे रूपावच्छिन्न-चैतन्याभिन्नं परिमाणाद्यवच्छिन्न-चैतन्यमपि प्रमातृचैतन्याभिन्नमिति भावः। **सत्ता**तिरिक्तत्वाभावादिति। यद्यपि रूपस्य रूपावच्छिन्नं चैतन्यमधिष्ठानम्, न परिमाणाद्यवच्छिन्नम्। एवं परिमाणादेरपि परिमाणाद्यवच्छिन्नं चैतन्यमधिष्ठानं न रूपावच्छिन्नम्। तथापि तयोर्द्वयोश्चैतन्ययोरभेदे रूपावच्छिन्नचैतन्यप्रमातृचैतन्ययोरभेदे च यथा प्रमातृचैतन्यं रूपस्याधिष्ठानं, तथा परिमाणादेरपि, रूपावच्छिन्नचैतन्य-परिमाणाद्यवच्छिन्नचैतन्य-प्रमातृचैतन्यानामैक्यात्। तथा चाधिष्ठानप्रमातृसत्तैव परिमाणादेः सत्ता, न त्वतिरिक्ता। अतोऽप्रत्यक्षाणां तेषां प्रमातृसत्तातिरिक्त-सत्ताशून्यत्वात् प्रत्यक्षत्वापत्तिरिति पूर्वपक्षाशयः। समाधत्ते—**ने**ति। निषेधे हेतुमाह—**तत्तदाकारे**ति। तत्तद्विषयाकारेत्यर्थः। **प्रमातृ**विशेषणत्वादिति। तथा च प्रत्यक्षयोग्यत्वे सति वर्त्तमानत्वे सति तत्तद्विषयाकारवृत्त्युपहित-प्रमातृचैतन्यसत्तातिरिक्त-सत्ताशून्यत्वं विषयस्य प्रत्यक्षत्वमिति फलितम्। अतिव्याप्ति-परिहारप्रकारं दर्शयति—**रूपाकारे**ति। **वृत्त्यभावेने**ति। वृत्तिहेतोर्विषयान्तःकरणसम्बन्धस्याऽत्राभावान्न परिमाणाद्याकारा वृत्तिरिति भावः। नन्वन्तःकरणसम्बन्धहेतोरिन्द्रियसम्बन्धस्य संयुक्ततादात्म्यस्य रूप-परिमाणयोरविशेषाद् रूपाकार-वृत्तिदशायां कथं नान्तःकरणस्य परिमाणाद्याकारा वृत्तिरिति चेन्न, परिमाणादाविन्द्रियसम्बन्ध-सद्भावेऽपि तस्य तदाकारत्वाप्रयोजकत्वात्, स्वभावविशेषस्य तत्र नियामकत्वाद्, रूपविशिष्टवृत्ति-सामग्र्या वृत्त्यन्तरोत्पत्तौ प्रतिबन्धकत्वाच्च, अन्यथा रूपग्रहणदशायां सर्वेषां रूपसमानाधिकरण-योग्यगुणानामेकदैव ग्रहणापत्तेः। न चैको महान् नीलो घट इत्यादौ कथं रूप-परिमाणाद्याकारा भिन्ना वृत्तिरिति वाच्यम्, विशिष्टाकाराया एकस्या वृत्तेस्तत्राभ्युपगमात्।

**कारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात्। रूपाकारवृत्तिदशायां परिमाणाद्याकार-वृत्त्यभावेन परिमाणाद्याकार-वृत्त्युपहित-प्रमातृचैतन्याभिन्न-सत्ताकत्वाभावेनाऽतिव्याप्त्यभावात्।**

**नन्वेवं वृत्तावव्याप्तिः, अनवस्थाभिया वृत्तिगोचर-वृत्त्यनङ्गीकारेण**

वस्तुतस्तु रूपाकारवृत्तिदशायामाश्रयसम्बन्धाविशेषेऽपि गन्धाद्याकारा वृत्तिर्यद्यपि न भवति, आश्रय-विषय-सम्बन्धानां स्वभावस्य तत्र तत्र नियामकत्वात्। तथा चोक्तमद्वैत-सिद्धौ प्रतिकर्मव्यवस्थायां—"चक्षुर्द्वारकवृत्तौ न गन्धाद्याकारत्वमिन्द्रियविषय-सम्बन्धानां स्वभावस्य नियामकस्य समानत्वादि"ति। अन्यथा रूप-प्रत्यक्षकाले गन्धादेरपि प्रत्यक्षं स्यात्, गन्धाद्याश्रयस्य चक्षुरिन्द्रिय-सम्बन्धस्य तत्राप्यविशेषात्। तथापि परिमाणादि-विशिष्टविषया विशिष्टाकारा वृत्तिस्तु भवत्येव। अत एवानुभवो महान् नीलो घट इति। न च रूपानुभव-दशायां परिमाणादीनां नियमेन प्रत्यक्षत्वाभ्युपगमे सर्वदैव तेषामभिलापः स्यान्नीलो महानिति। न च तथा, तस्मात् परिमाणादीनां न प्रत्यक्षमिति वाच्यम्, प्रत्यक्षविषयस्याभिलापावश्यम्भावानियमात्। न हि यस्य प्रत्यक्षं भवति। तस्यैवाभि-लाप इत्येवास्ति नियमः। तथा सति क्षीर-गुड़ादीनां माधुर्य-भेदस्याप्यभिलापप्रसङ्गात्। तस्मान्नीलो घट इत्यादि-प्रत्यक्षकाले घटगत-गन्धादीनां प्रत्यक्षत्वापादनमुचितम्। तत्तु ग्रन्थकृता कथं नोक्तम्, तत् सुधीभिर्विभावनीयम्।

**परिमाणा**द्याकारेति। परिमाणाद्याकारा या वृत्तिस्तयोपहितं यत् प्रमातृचैतन्यं तदभिन्ना सत्ता यस्य स परिमाणाद्याकारवृत्त्युपहित-प्रमातृचैतन्याभिन्न-सत्ताकस्तस्य भाव-स्तादृशसत्ताकत्वं, तस्याभावेनेति विग्रहः। **अतिव्याप्त्य**भावादिति। तथा च परि-माणादेः पूर्वोक्तरीत्या प्रमातृचैतन्याभेदेन प्रमातृचैतन्यसत्तातिरिक्त-सत्ताकत्वाभावेऽपि प्रमातुः परिमाणाद्याकारवृत्त्युपहित्वाभावेन तत्तदाकारवृत्त्युपहित-प्रमातृचैतन्यसत्तातिरिक्त-सत्ताशून्यत्वाभावान्न प्रत्यक्षत्वापादनमिति नातिव्याप्तिरिति भावः।

साम्प्रतमुक्तलक्षणस्याव्याप्ति-परिहाराय तामाशङ्कते—**नन्वि**ति। **एवं** तत्तदाकार-वृत्त्युपहितत्व-निवेशेऽपि। अव्याप्तेर्हेतुं दर्शयति—**अनवस्थाभि**येति। यथा घटप्रत्यक्षाय घटाकारा वृत्तिरङ्गीक्रियते, तथा वृत्तिप्रत्यक्षाय वृत्त्याकारा वृत्तिर्यदि स्यात्, तदा तस्या अपि प्रत्यक्षाय तद्वृत्त्याकाराऽपरा वृत्तिरङ्गीकर्त्तव्या। एवं तस्यास्तस्या अपीत्यनवस्था स्यात्। सा चानवस्था निष्प्रामाणिकी न स्वीकर्त्तव्या। तस्माद् वृत्त्याकाराऽपरा वृत्तिर्न

**तत्र स्वाकारवृत्त्युपहितत्वघटितोक्तलक्षणाभावादिति चेन्न, अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृ-चैतन्याभिन्नसत्ताकत्वस्य तत्रापि सम्भवात्। एवञ्चान्तःकरण-तद्धर्मादीनां**

भवतीति भावः। वृत्त्याकार-वृत्त्यनङ्गीकारस्य फलमाह—**तत्रे**ति। वृत्तावित्यर्थः। **स्वाकारे**ति। वृत्त्याकारेत्यर्थः। अव्याप्तिनिषेधे हेतुमाह—**अनवस्थे**ति। **वृत्त्यन्तरे**ति। वृत्त्याकारा वृत्तिश्चेत् तदा प्रथमा वृत्तिर्द्वितीयवृत्तेर्विषयो भवेत्। एवं द्वितीयवृत्तेः प्रत्यक्षाय तदाकाराऽपरा वृत्तिर्यदि स्यात्, तदा द्वितीयवृत्तिस्तृतीयवृत्तेर्विषयो भवेत्। एवं वृत्तिविषयक-वृत्त्यन्तराङ्गीकारेऽनवस्था स्यात्। तस्माद् वृत्त्याकारा वृत्तिर्नाङ्गीकर्त्तव्या। अत एव वृत्तेर्न वृत्त्यन्तर-विषयत्वमिति भावः। ननु वृत्तेर्वृत्त्यन्तराविषयत्वञ्चेत्, तत्र प्रत्यक्षत्वप्रयोजकस्याव्याप्तिः, स्वाकार-वृत्त्युपहितत्वघटित-तल्लक्षणाभावादित्यत आह—**स्वविषय**त्वाभ्युपगमेनेति। स्वाकार-वृत्त्युपहितत्वस्य स्वविषयवृत्त्युपहितत्वार्थकत्वाभ्युपगमेनेत्यर्थः। स्वपदं लक्ष्य-प्रत्यक्ष-विषयपरम्। तथा च यज् ज्ञानं यद्विषय व्यवहार-जनन-योग्यं, तज् ज्ञानं तद्विषयकमित्यस्ति नियमः। यथा घटज्ञानं घटव्यवहारजनन-योग्यं घटविषयकम्, घटवृत्तिर्घटव्यवहारजननयोग्या घटविषयिणी। एवं सैव वृत्तिः स्वव्यवहारजनन-योग्या स्वविषयणीति सिद्धं वृत्तेः स्वविषयत्वमिति भावः। **स्वविषये**ति। स्वपदं लक्ष्यप्रत्यक्ष-विषयपरम्। **तत्रापि** वृत्तावपि। **सम्भवादि**ति। यदा घटस्य प्रत्यक्षं, तदैव वृत्तेरपि। अत एवायं घटो घटमहं जानामीत्येकदैव वृत्तिघटयोरनुभवः। तथा च घटप्रत्यक्ष-काले वृत्तेर्यथा घटविषय-व्यवहार-जनन-योग्यत्वात् स्वविषयत्वम्। तत्र च वृत्तेः स्वविषयत्वं घटव्यवहारजनन-योग्यत्वरूपं घटविषयत्वम्। एवं वृत्तिप्रत्यक्ष-कालेऽपि वृत्तेः स्वव्यवहार-जनन-योग्यत्वात् स्वविषयत्वम्। तत्र च वृत्तेः स्वविषयत्वं वृत्तिव्यवहार-जनन-योग्यत्वरूपं वृत्तिविषयत्वम्, न तु वृत्तिकर्मत्वरूपं वृत्तिविषयत्वम्, एकस्या वृत्तेर्विषयविषयित्वे क्रियाकर्मविरोधापत्तेः। तथा चोक्तं गूढ़ार्थदीपिकायां मधुसूदनेन—"घटव्यवहारे घटज्ञानत्वेनैव हेतुतायाः क्लृप्तत्वात् तेनैव रूपेण घटज्ञान-व्यवहारेऽपि हेतुतोपपत्तौ न घटज्ञान-ज्ञानत्वं गौरवान्मानाभावाच्चे"ति।

एतेन—"सत्तादात्म्ये सत्तादात्म्यवद् वृत्तावपि स्वसम्बन्धो न दोषाये"ति परि-भाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, अत्यन्ताभेदे भेदव्याप्तस्य सम्बन्धस्यासम्भवात् स्वस्मिन् स्वसम्बन्धानुपपत्तेः, वृत्तौ स्वसम्बन्धस्य दुर्निरूप्यत्वाच्च।

**केवलसाक्षिविषयत्वेऽपि तत्तदाकारवृत्त्यभ्युपगमेनोक्तलक्षणस्य तत्रापि सत्त्वान्नाव्याप्तिः। न चान्तःकरण-तद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिवेद्यत्वाभ्युपगमविरोध इति वाच्यम्। न हिं वृत्तिं विना साक्षि-विषयत्वं केवल-साक्षिवेद्यत्वम्। किन्त्विन्द्रियानुमानादि-प्रमाणव्यापार-**

तथाच स्वाकारवृत्त्युपहितत्वस्य स्वविषयवृत्त्युपहितत्वार्थकत्वात् तस्य स्वविषयत्वस्य स्वव्यवहारजनन-योग्यत्वार्थकत्वात् वृत्तेश्च स्वव्यवहारजनन-योग्यत्वेन स्वविषयत्वात् स्वविषय-वृत्त्युपहित-प्रमातृचैतन्यसत्तातिरिक्त-सत्ताशून्यत्वस्य तत्रापि सत्त्वान्नाव्याप्तिरिति भावः। नन्वेवमपि लक्षणमिदमन्तःकरणधर्मेषु सुखदुःखादिषु प्रातिभासिकेषु च रजतादि-ष्वव्याप्तं, तत्तद्विषयक-वृत्त्यभ्युपगमे प्रयोजनाभावात् तत्र स्वविषयवृत्त्युपहितत्व-घटित-तल्लक्षणाभावात्। न च प्रकाशसम्बन्धार्था वृत्तिः, तेषां प्रकाशकचैतन्याश्रितत्वेन सदैव तत्सम्बन्धवत्त्वात्। नाप्यावरणनिवृत्त्यर्था वृत्तिः, तत्तद्विषयगोचर-संशयविपर्यासादर्शनेन तदावरणाज्ञानानभ्युपगमादित्यत आह—**एवञ्चे**ति। उक्तन्यायेन वृत्तावव्याप्तिपरिहारे सिद्धे चेत्यर्थः। **तद्धर्मादीनाम्** अन्तःकरणधर्मादीनाम्, आदिपदेन प्रातिभासिक-परिग्रहः। **केवलसाक्षि**विषयत्वेऽपि प्रमाणव्यापारनिरपेक्षेण साक्षिणा ग्राह्यत्वेऽपि। **तत्तदाकारे**ति। अन्तःकरणाद्याकारेत्यर्थः। यद्यपि सुखादिष्वावरणनाशार्था सम्बन्धार्था वा वृत्तिर्न स्वीक्रियते, तेषामावरकाज्ञानानभ्युपगमादनावृतप्रकाशकचैतन्याश्रितत्वाच्च। तथापि संस्कारार्था चैतन्यस्य तदाकारार्था च वृत्तिस्तत्र स्वीक्रियत एव, अन्यथा सुखादि-विषयसंस्काराभावेन स्मृत्यनुपपत्तेः, चैतन्यस्य सुखाद्याकारत्वाभावेन सुखादेः प्रकाशा-नुपपत्तेश्च। तस्मात् सुखाद्याकारा वृत्तिरभ्युपेतव्येति भावः। **उक्तलक्षणस्य** स्वविषय-वृत्त्युपहितत्वघटित-लक्षणस्य। **तत्रापि** अन्तःकरणादिष्वपि. ननु सुखाद्याकारा वृत्तिश्चेत् तद्व्यवधानेनैव तेषां साक्षिवेद्यत्वं वाच्यम्। तच्च न युक्तम्, साक्षात् साक्षि-चैतन्याध्यस्तानामव्यवधानेनैव साक्षिग्राह्यत्वनियमात्। तथा चोक्तं विवरणे—"आत्म-चैतन्येनाव्यवधानात् तत्प्रतिभासोपपत्तेरि"ति। तथा च विवरणविरोध इत्याशङ्कते—**न चे**ति। **विरोध** इति। वृत्तिनिरपेक्ष-साक्षिवेद्यत्वस्य केवलसाक्षिवेद्यत्वाभिमाना-दिति भावः। विवरण-विरोधं परिहरति—**न ही**ति। **वृत्तिं** विनेति। यदि वृत्ति-निरपेक्ष-साक्षिवेद्यत्वस्य केवलसाक्षिवेद्यत्वं स्यात्, तर्हि सुखादीनामहङ्कारादीनाञ्च केवल-साक्षिवेद्यत्वं न स्यात्, तेषामविद्यावृत्तिद्वारैव साक्षिग्राह्यत्वात्, विवरणकृद्भिस्तद्गोचरा-

**मन्तरेण साक्षिविषयत्वम्। अत एवाहङ्कार-टीकायामाचार्यैरहमाकारान्तः-करणवृत्तिरङ्गीकृता। अत एव च प्रातिभासिक-रजतस्थले रजताकाराऽविद्या-**

विद्यावृत्त्यभ्युपगमात्, स्वोक्तिविरोधश्च स्यात्। न च तथेति भावः। किं तर्हीत्यत आह—**किन्त्विव**ति। तथा च प्रमाणवृत्तिनिरपेक्ष-साक्षिग्राह्यस्यैव केवलसाक्षिवेद्यत्वम्। तेन सुखादीनां न केवलसाक्षिवेद्यत्वहानिः, तेषां प्रमाणवृत्तिनिरपेक्षेण साक्षिणा ग्रहणात्, "आत्मचैतन्येनाव्यवधानादि"ति विवरणग्रन्थस्य त्वात्मचैतन्येन प्रमाणवृत्त्यव्यवधानादि-त्यर्थः। तेन न विवरणग्रन्थविरोध इति भावः। उक्तार्थे विवरणसम्मतिं दर्शयति—**अत एवे**ति। अन्तःकरण-तद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमादेवेत्यर्थः। **अहङ्कारटीकायां** पञ्चपादिकाग्रन्थान्तर्गताहङ्कारग्रन्थटीकायाम्। **आचार्यैः** विवरणाचार्यैः प्रकाशात्मपादैः। **अहमाकारान्तः**करणवृत्तिरिति। जीवाकारायाऽहन्त्वप्रकारिकायाऽविद्यावृत्तेरन्तरन्तरङ्गा करणवृत्तिः प्रमाणवृत्तिरित्यर्थः। जीवाकाराऽविद्यावृत्तिर्जीवप्रकाशायाऽन्तःकरणवृत्ति-रपेक्ष्यते। न ह्यन्तःकरणवृत्तिमन्तरेण केवलयाऽविद्यावृत्त्या जीवप्रकाशो भवति। अत-एवानुभवोऽहं घटं जानामीति। तथा चोक्तमद्वैतसिद्धावविद्याविषयनिरूपणे—"परिणता-न्तःकरणेनाऽन्तःकरणपरिणामभूत-ज्ञानरूप-वृत्तिसंसर्गेण जीवोऽभिव्यज्यत"इति। अह-माकाराऽन्तःकरणवृत्तिस्तु न भवति, अन्तःकरणवृत्तेरिन्द्रिय-व्यापाराधीनत्वादहमर्थादि-ष्विन्द्रिय-व्यापाराभावात्। किञ्चाहमाकारवृत्तेरन्तःकरणवृत्तित्वे तस्याः प्रमाणवृत्तितया प्रमातृगोचरस्य चरमवृत्ति-निवर्त्तनीयस्याप्यज्ञानस्य ततो निवृत्तिः स्यात्। ततश्च प्रमातु-र्जीवस्य सद्यो मोक्षप्रसङ्गः। तथा चोक्तं न्यायामृतेऽज्ञानविषयभंगे—अस्तु वा वृत्तिरेवाऽ-ज्ञानविरोधिनी, तथाप्यात्मविषया सेदानीमप्यस्तीति कथं तत्राज्ञानमिति। तद्विवरणे च न्यायामृतप्रकाशे—"श्रवणादिरूपवृत्तेरिदानीं साक्षात्कारात् पूर्वमपि सत्त्वेनाज्ञाननिवृत्त्या-पत्त्या मोक्षापातेन संसारोपलम्भो न स्यादि"ति। तस्मादहमाकारा वृत्तिर्नान्तःकरण-वृत्तिः, किन्त्वविद्यावृत्तिरेव। तथा चोक्तमद्वैतसिद्धावविद्याविषयोपपत्तौ—"जीवविषया-वृत्तिरविद्यावृत्तिः, न तु प्रमाणवृत्तिरि"ति। अहमाकाराविद्यावृत्तिरिति वक्तव्ये यदन्तः-करणवृत्तिरित्युक्तम्, तज् जाग्रत्यविद्यावृत्तिदशायामन्तःकरणवृत्तेः सहकारित्वज्ञापनार्थम्। अत एवान्तःकरणवृत्त्यभावकालेऽहङ्कारादीनां सत्त्वेऽपि नानुभवोऽहमितीति भावः।

एतेन—"अहमाकारान्तःकरणवृत्त्यङ्गीकारादि"ति परिभाषाप्रकाशिकाकृतां व्याख्यानं विवरणादि-ग्रन्थविरोधादुपेक्ष्यम्।

**वृत्तिः साम्प्रदायिकैरङ्गीकृता। तथा 'चान्तःकरण-तद्धर्मादिषु केवल-साक्षिवेद्येषु वृत्त्युपहितत्वघटित-लक्षणस्य सत्त्वान्नाव्याप्तिः। तदयं नि-**

अङ्गीकृतेति। जीवाकाराऽहंवृत्तिपरिणतान्तःकरणेन जीवोऽभिव्यज्यत इत्यनेन ग्रन्थेनेति भावः। नन्वेवमपि प्रातिभासिक-रजतादिप्रत्यक्षे प्रत्यक्षरजतादावुक्तलक्षणस्याव्याप्तिः, तद्गोचराया वृत्तेः प्रयोजनाभावेनानभ्युपगमादुक्तलक्षणस्य तत्राभावादित्यत आह—**अत एवे**ति। प्रातिभासिकादीनां वृत्तिविषयत्वाभ्युपगमादेवेत्यर्थः। **रजतस्थले** रजतादिप्रत्यक्षकाले। **रजताकारे**ति। रजताद्याकारेत्यर्थः। **साम्प्रदायिकैः** विवरणानुसारिभिः। न त्वन्यैर्नृसिंहाश्रम-प्रभृतिभिः, तैः साक्षिग्राह्येष्वविद्यावृत्त्यनभ्युपगमात्।

**तेषामयमा**शयः—अध्यस्तरजतादेः प्रतिभासार्थं नाविद्यावृत्त्यपेक्षा, इदमाकारवृत्त्यभिव्यक्त-साक्षिणैव तत्प्रतिभासोपपत्तेः। नाप्यावरणनिवृत्त्यर्थं तदपेक्षा, प्रमाणागम्यत्वेन संशय-विपर्ययादेरदर्शनेन तेषामावरणाज्ञानानभ्युपगमात्। अत एव ज्ञानसुखादावपि प्रतिभासार्थमावरणनिवृत्त्यर्थं वा नाविद्यावृत्त्यभ्युपगमः, तेषामनावृतसाक्षिचैतन्याध्यासादेव प्रतिभासोपपत्तेः, संशय-विपर्ययादर्शनेनावरणाज्ञानानुपपत्तेश्च। नापि संस्कारार्थं तदपेक्षा, रजताद्यवच्छिन्नचिन्नाशेनैव सुखादाविव तदुपपत्तेः। तस्मात् प्रयोजनाभावात् प्रातिभासिकादि-गोचराऽविद्यावृत्तिर्नाभ्युपगन्तव्येति।

**विवरणानु**सारिणामाशयस्तु—अनावृतचैतन्याध्यासमात्रं न जड़भानप्रयोजकम्, अनुमेय-वह्न्यादेरभानापत्तेः, तेषां परोक्षवृत्त्या विषयगताज्ञान-नाशानभ्युपगमात्। ततश्च सर्वजड़प्रतिभासानुगतं किमप्येकं प्रयोजकान्तरं मृग्यम्। तच्चान्यस्यासम्भवात् चैतन्यस्य तदाकारत्वं वक्तव्यम्। चैतन्यं यदाकारं भवति, तत् प्रतिभासत इत्यर्थः। चैतन्यस्य तदाकारत्वं न स्वतः, असङ्गत्वात्, किन्तु क्वचित् प्रतिबिम्बात्, क्वचित् तदाकारवृत्ति-सम्बन्धात्। तत्र सात्त्विकान्तःकरण-तद्धर्मादिषु प्रतिबिम्बात्, तामसेषु रजतादिषु तदाकारवृत्ति-सम्बन्धात्। तथा च रजतादिभानं तदाकारवृत्तिं विना नोपपद्यत इति तदाकाराऽविद्यावृत्तिरुपेयते इति।

एतेन—"अन्तःकरण-तद्धर्मसुखादीनां साक्षिभास्यानामप्यस्वच्छत्वाद् वृत्तिरङ्गीकरणीयेति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, अस्वच्छत्वस्य वृत्त्यङ्गीकारहेतुत्वेऽन्तःकरण-तद्धर्म-सुखादिषु वृत्त्यनङ्गीकारप्रसङ्गात्, तेषां स्वच्छत्वात्।

प्रातिभासिकेष्वविद्यावृत्तिस्वीकारफलं दर्शयति—**तथा चेति**। अन्तःकरण-

गलितोऽर्थः—**स्वाकारवृत्त्युपहित-प्रमातृचैतन्यसत्तातिरिक्त-सत्ताकत्वशून्यत्वे सति योग्यत्वं विषयस्य प्रत्यक्षत्वम्।**

**तत्र संयोग-संयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभिव्यञ्जक-वृत्ति-**

तद्धर्मादि-गोचराविद्यावृत्त्यभ्युपगमे सतीत्यर्थः। **तद्धर्मादिष्वित्या**दिपदेन प्रातिभासिक-रजतादि-परिग्रहः। अभ्याससौकर्याय निष्कृष्टलक्षणं दर्शयति—**तदय**मिति। **स्वाकारे**ति। स्वविषयेत्यर्थः। **विषयस्य** विषयनिष्ठम्।

वस्तुतस्त्वभिव्यक्तचैतन्याभिन्नत्वं विषयस्य प्रत्यक्षत्वम्। तच्च नित्याभिव्यक्त-जीवचैतन्याभिन्ने ब्रह्मणि स्वाभाविकम्, यत् साक्षादपरोक्षाद् ब्रह्मेति श्रुतौ तत्प्रत्यक्षत्वस्यानौपाधिकत्वोक्तेः। घटादिषु तु तन्न स्वाभाविकम्, तेषां जड़त्वात्, किन्त्वभिव्यक्तचैतन्याभेदाध्यासोपाधिकम्, घटादिवृत्त्याऽभिव्यज्यमाने घटाद्यवच्छिन्नचैतन्ये घटादीनामभेदेनाध्यासात्। अत एव वृत्तौ सत्यां प्रत्यक्षोऽयं घट इत्यादि-व्यवहारः। ज्ञानानां प्रत्यक्षत्वं त्वपरोक्षार्थ-व्यवहारानुकूल-ज्ञानत्वम्। तच्च स्वस्मिन् स्वप्रकाशरूपे नित्याभिव्यक्तचैतन्ये वानुगतं स्वाभाविकम्, स्वस्य साक्षिणश्च ज्ञानत्वादपरोक्षार्थ-व्यवहारानुकूलत्वाच्च। घटादिवृत्तिषु चापरोक्षचैतन्याभेदाध्यासोपाधिकम्, तासामपरोक्षभूतेऽभिव्यक्तचैतन्येऽभेदेनाऽध्यासात्। अत एव घटमहं जानामीत्यादि-ज्ञानव्यवहार इति।

नन्वेवमपीन्द्रियसन्निकर्षाणां वैयर्थ्यं, प्रत्यक्षस्येन्द्रियार्थसन्निकर्षजन्यत्वानभ्युपगमादित्यत आह—**तत्रे**ति। ज्ञानस्य प्रत्यक्षत्वे विषयस्य प्रत्यक्षत्वे चेत्यर्थः। **संयुक्ततादात्**म्यादीनामिति। आदिपदेन संयुक्ताभिन्न-तादात्म्यपरिग्रहः। तथा च द्रव्यस्य प्रत्यक्षे द्रव्येण सहेन्द्रियस्य संयोगः सन्निकर्षः। विषयेन्द्रिययोर्द्रव्यत्वात्, द्रव्ययोरेव संयोग इति नियमात्। स च संयोगः सन्निकर्षो द्रव्याकार-वृत्त्युत्पत्तौ कारणम्। द्रव्यगतस्य रूप-रसादेर्गुणस्य गमनादेश्च कर्मणः प्रत्यक्षे रूप-रसादिना गुणेण गमनादिना च कर्मणा सहेन्द्रियस्य संयुक्ततादात्म्यं सन्निकर्षः, इन्द्रिय-संयुक्ते द्रव्ये रूप-रसादेर्गुणस्य गमनादेश्च कर्मणस्तादात्म्यात्, द्रव्यगुणयोर्द्रव्यकर्मणोश्च भेदाभावेन तादात्म्याङ्गीकारात्। तथा चोक्तमाचार्येण परमाणुजगदकारणत्वाधिकरणे—"नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति। तस्माद् द्रव्यात्मकता गुणस्ये"ति। तच्च संयुक्ततादात्म्यं रूपरसाद्याकार-वृत्त्युत्पत्तौ गमनाद्याकार-वृत्त्युत्पत्तौ च कारणम्। रूपत्वादि-सामान्यप्रत्यक्षे रूपत्वादिना सहेन्द्रियस्य संयुक्ताभिन्न-तादात्म्यं सन्निकर्षः, इन्द्रियसंयुक्ताभिन्ने रूपादौ

**जनने विनियोगः। सा च वृत्तिश्चतुर्विधा—संशयो निश्चयो गर्वः स्मरणमिति। एवं सति वृत्तिभेदेनैकमप्यन्तःकरणं मन इति बुद्धिरित्यहङ्कार इति चित्तमिति चाख्यायते। तदुक्तम्—**

**मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम्।**
**संशयो निश्चयो गर्वः स्मरणं विषया इमे॥**

रूपत्वादीनां तादात्म्यात्। तच्च संयुक्ताभिन्न-तादात्म्यं रूपत्वाद्याकार-वृत्त्युत्पत्तौ कारणम्। एवमन्यत्रापि यथायथमूह्यम्। एवञ्चेन्द्रियार्थसन्निकर्षस्य प्रत्यक्षोत्पत्तावुपयोगाभावेऽपि तत्तदाकारवृत्त्युत्पत्तावुपयोगान्न वैयर्थ्यमिति भावः। **चैतन्याभिव्यञ्जक-वृत्तीति।** चैतन्यावरणनिवर्त्तक-प्रमाणवृत्तीत्यर्थः। अविद्यावृत्तिस्तु विषयेन्द्रियसम्बन्धं नापेक्षत इति भावः।

वस्तुतस्तु द्वावेव सन्निकर्षौ संयोगः संयुक्ततादात्म्यञ्च, अधिकस्य वैयर्थ्यात्। न च सामान्यादिषु संयुक्ततादात्म्याभावात् कथं तदाकारा वृत्तिरिति वाच्यम्, सामान्यादीनां द्रव्यात्मकत्वात्। तथा च भाष्यम्—"तस्माद् द्रव्यात्मकता गुणस्य। एतेन कर्म-सामान्य-विशेष-समवायानां द्रव्यात्मकता व्याख्याते"ति।

यत् त्वत्र शिखामणिकृतां "संयोग-संयुक्ततादात्म्य-संयुक्ताभिन्नतादात्म्यानामिन्द्रियसन्निकर्षाणां वृत्तिजनने विनियोग" इति, परिभाषाप्रकाशिकाकृतां "तादृशवृत्तिजनन एव चक्षुःसंयोगसंयुक्तसमवायादिसन्निकर्षाणामुपयोग" इति च व्याख्यानं, तत् प्रत्युक्तं, विवरणादिग्रन्थविरोधाद्, सन्निकर्षद्वयेनैवोपपत्तावधिक-कल्पनाया वैयर्थ्यात्, समवायानभ्युपगमाच्च।

प्रसङ्गात् पराभ्युपगतमन्तःकरणभेदं दर्शयति—**सा चे**ति। प्रसिद्धा वृत्तिस्त्वित्यर्थः। अन्तःकरणभेदं दर्शयति—**एवं सती**ति। वृत्तेर्नानात्वे सतीत्यर्थः। **वृत्तिभेदेन** संशयादिभेदेन। **आख्यायत** इति। संशयाकारवृत्तिमदन्तःकरणं मन इति, निश्चयाकारवृत्तिमदन्तःकरणं बुद्धिरिति, गर्वाकारवृत्तिमदन्तःकरणमहङ्कार इति, स्मरणाकारवृत्तिमदन्तःकरणं चित्तमिति च परैराख्यायत इत्यर्थः। उक्तार्थेऽभियुक्तसम्मतिमाह—**मनो-बुद्धिरि**ति। **इमे** संशयादयः। **विषयाः** कार्याणि। यद्यपि परनये संशयादीनामन्तःकरणवृत्तित्वं युज्यते, तैरन्तःकरणस्येन्द्रियत्वाभ्युपगमात्, वृत्तिभेदेन तद्भेदाभ्युपगमाच्च, तथापि सिद्धान्ते प्रमात्मकनिश्चयस्यान्तःकरणवृत्तित्वेऽपि भ्रमात्मकनिश्चयस्य संशयादीनां

**तच्च प्रत्यक्षं द्विविधम्, सविकल्पक-निर्विकल्पक-भेदात्। तत्र सविकल्पकं वैशिष्ट्यावगाहि-ज्ञानम्। यथा घटमहं जानामीत्यादि-ज्ञानम्। निर्विकल्पकं तु संसर्गानवगाहि-ज्ञानम्। यथा सोऽयं देवदत्तस्तत्त्वमसीत्यादि-वाक्यजन्यं ज्ञानम्।**

चान्तःकरणवृत्तित्वं नैव युज्यते, अन्तःकरणवृत्तेरिन्द्रियादि-प्रमाणव्यापार-सापेक्षत्वात् संशयादीनामविद्यावृत्त्यात्मकतया प्रमाणव्यापारानपेक्षत्वादन्तःकरणस्यानीन्द्रियत्वाभ्युपगमाच्च। न चैतत् सर्वं मन एवेति श्रुतिविरोधस्तत्र संशयादीनां मनःपरिणामत्व-निर्देशादिति वाच्यम्, एकस्मिन् धर्मिणि कोटिद्वयाकारवृत्त्यभिव्यक्त-चैतन्यस्य विचिकित्सात्वेन तस्या विशेष्याकार-मनोवृत्तिघटितत्वेनैककोट्याकारमनोवृत्तिघटितत्वेन वा मनस्तादात्म्यनिर्देशात्।

प्रत्यक्षज्ञानं विभजते—**तच्चेति**। **प्रत्यक्षं** प्रत्यक्षज्ञानम्। **सविकल्पके**ति। सर्ववादि-सिद्धत्वात् सर्वव्यवहारहेतुत्वाच्च प्रथमं सविकल्पकस्य निर्देशः। प्रथमोद्दिष्टस्य सविकल्पकस्य स्वरूपं दर्शयितुमुपक्रमते—**तत्रे**ति। तयोर्द्वयोर्मध्ये इत्यर्थः। सविकल्पकं परिचाययति—**वैशिष्टे्य**ति। वैशिष्ट्यं विशेष्यविशेषणयोः सम्बन्धमवगाहते विषयीकरोतीति वैशिष्ट्यावगाहि। तच्च तज् ज्ञानञ्चेति वैशिष्ट्यावगाहिज्ञानमिति विग्रहः। यस्मिन् ज्ञाने विशेष्यं विशेषणं तयोः सम्बन्धश्च विषयो भवति, तज् ज्ञानं सविकल्पकमिति भावः। निर्विकल्पक-व्यावर्त्तनाय विशेषणदलम्। सविकल्पकमुदाहरति—**यथे**ति। घटविषयकज्ञानवानहमित्यस्मिन् घटविषयकज्ञानसाक्षात्कारेऽहङ्कारो विशेष्यतया, तत्र च घटज्ञानं विशेषणतया, तयोर्घटज्ञानाऽहङ्कारयोः सम्बन्धश्च संसर्गतया, घटज्ञाने घटश्च विशेषणतया, तयोर्घट-घटज्ञानयोः सम्बन्धश्च संसर्गतया, घटे घटत्वं विशेषणतया, तयोर्घटघटत्वयोः सम्बन्धश्च संसर्गतया भासत इति भवतीदं ज्ञानं वैशिष्ट्यविषयकतया सविकल्पकम्। **जानामी**त्यादिपदेन पटं जानामीत्यादिज्ञान-परिग्रहः। निर्विकल्पकमुदाहरति—**निर्विकल्पकं** त्विति। **संसर्गान**वगाहि संसर्गाविषयकं, विशेष्यविशेषणयोः सम्बन्धाविषयकमिति यावत्। तस्योदाहरणमाह—**यथे**ति। **सोऽयं** देवदत्त इति लौकिकमुदाहरणम्। **तत्त्वमसी**ति वैदिकम्। प्रत्यभिज्ञायामधिगतमेकत्वं परस्मै प्रतिपादयति सोऽयं देवदत्त इति। तद्वाक्यं शृण्वतः पुरुषस्य प्रथमं तदिदम्पदयोः सामानाधिकरण्यज्ञानं भवति। ततस्तस्य शक्त्या तच्छब्दात् तद्देशकालविशिष्टस्येदंशब्दादेतद्देशकालविशिष्टस्य देवदत्त-

शब्दाद् देवदत्तस्योपस्थितिर्भवति। ततस्तस्य द्वयोर्विशिष्टयोरभेदान्वयो जायते तद्देशकाल-विशिष्टाभिन्न एतद्देशकालविशिष्टाभिन्नो देवदत्त इति। परन्तु द्वयोर्विशिष्टयोरभेदान्वयो न भवितुमर्हति, विशिष्टयोर्द्वयोर्भिन्नत्वात्, विशेषणभेदेन विशिष्टस्य भेदादिति विशिष्टा-भेदस्य मुख्यार्थस्य बाधप्रतिसन्धानं जायते। ततस्तस्य पुरुषस्य देवदत्तस्वरूपमात्रबोधस्य तात्पर्यविषयत्वात् विशिष्टवाचकाभ्यां पदाभ्यां विरुद्धस्य स्वार्थैकदेशस्य तदेतद्देशकालस्य परित्यागेन देवदत्तस्वरूपलक्षणया देवदत्तस्वरूपमात्रविषयकं ज्ञानं भवति। तदुक्तं संक्षेप-शारीरके—"सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः पश्चादेष विशेषणेतरतया पश्चाद् विरोधोद्भवः। उत्पन्ने च विरोध एकरसके वस्तुन्यखण्डात्मके वृत्तिर्लक्षणया भवत्ययमिह ज्ञेयः क्रमः सूरिभि"रिति। तच्च ज्ञानं स्वरूपमात्र-विषयकत्वात् संसर्गानवगाहि भवति शब्दजन्यमपि सन्निकृष्ट-देवदत्त-विषयकत्वात् प्रत्यक्षञ्च, सन्निकृष्टविषये शब्दादपि प्रत्यक्ष-ज्ञानाभ्युपगमात्। एवं तत्त्वमसीत्यत्र तच्छब्देन शक्त्या सर्वज्ञत्वादि-विशिष्टस्य चैतन्यस्य युष्मच्छब्देनाऽसर्वज्ञत्वादि-विशिष्टस्य चैतन्यस्य प्रथमया च विभक्त्याऽभेदस्योपस्थिति-र्भवति। ततो विशिष्टयोर्द्वयोरभेदान्वयो जायते। ततो मुख्यार्थस्य विशिष्टाभेदस्य बाधज्ञानं सम्पद्यते। ततो विशिष्टवाचकाभ्यां पदाभ्यां विरुद्धांशस्य सर्वज्ञत्वादेः परित्यागेन चैतन्यस्वरूपलक्षणया चैतन्यस्वरूपमात्रविषयकं ज्ञानं जायते। तच्च ज्ञानं संसर्गाविषयक-त्वात् सन्निकृष्टविषयकत्वाच्च निर्विकल्पकं प्रत्यक्षम्। इदं प्राचां विवरणकारादीनां मतम्। तदुक्तं विवरणेऽष्टमवर्णके—"सोऽयमिति विशिष्टाभिधायिभ्यां पदाभ्यां स्वार्थैकदेश-परित्यागेनैकदेशलक्षणया देवदत्तस्वरूपैक्यमेव प्रतिपादयती"ति। नव्यानां मतं तूत्तरत्र प्रदर्शयिष्यते। न चैकेनैव पदेन स्वरूपावबोध-सम्भवे द्वितीयपदाभिधानं निरर्थक-मिति वाच्यम्, तस्य लक्षणासमर्पकत्वेन सार्थक्यात्, तच्छब्दादेः वाच्यार्थपरित्यागेन देवदत्तादि-स्वरूपलक्षकत्वमिदंशब्दादिसामानाधिकरण्ये सति घटते। एवमिदंशब्दादे-रपि वाच्यार्थपरित्यागेन देवदत्तादि-स्वरूपबोधकत्वं तच्छब्दादि-सामानाधिकरण्ये सति घटते नान्यथेति द्वयोः पदयोः सार्थक्यात्, तत्तेदन्त्वाद्युपस्थितिद्वारकाभेदबोधस्यैव "अयं स न वा" "अयं नैव स" इत्यादि-भेदभ्रम-निवर्त्तकत्वं नान्यस्येति तत्तेदन्ताद्युपस्थापकत्वेन च तयोः सार्थक्यात्। यद्यपि प्रत्यक्षविभाग-प्रकरणे निर्विकल्पकस्यैव प्रत्यभिज्ञा-प्रत्यक्ष-स्योदाहरणत्वमत्रोचितम्, नाभिज्ञाप्रत्यक्षस्य, तस्य निर्विकल्पकत्वे मानाभावात्, सति विशेष्य-विशेषण-तत्सम्बन्धसन्निकर्षे प्रतिबन्धकाभावे च तज्ज्ञानोत्पत्तौ विलम्बायोगात्।

**ननु शाब्दमिदं ज्ञानं न प्रत्यक्षमिन्द्रियाजन्यत्वादिति चेन्न, न हीन्द्रिय-**

न च विशिष्टबुद्धौ विशेषणज्ञानं कारणम्। तच्चाद्यं विशेषणज्ञानं निर्विकल्पमेवाङ्गीकर्त्तव्यमन्यथाऽनवस्थाप्रसङ्गादिति वाच्यम्, विशेषणज्ञानस्य विशिष्टबुद्धिजनकत्वानभ्युपगमात्, अभ्युपगमे वा निर्विकल्पकस्याप्यभावज्ञानस्योत्पत्त्यापत्तेः, विनिगमनाभावाद् विशेष्यज्ञानस्यापि विशिष्टज्ञानजनकत्वापत्तेश्च। तथा चोक्तमद्वैतसिद्धावज्ञानप्रत्यक्षोपपत्तौ—"विशेषणज्ञानस्य विशिष्टज्ञानजनकत्वे मानाभावात्, प्रतियोगित्वाभावत्वयोः पूर्वानुपस्थितयोरपि तार्किकैरभावबोधे प्रकारीभूय भानाभ्युपगमादि"ति। तर्कताण्डवे च निर्विकल्पकवादे—अनुव्यवसाये रजतत्वप्रकारकत्वरूपस्य विशेषणस्याऽभावज्ञाने प्रतियोगित्वादिरूपस्य च विशेषणस्य पूर्वमज्ञातस्यैव भानमिति स्वीकृतत्वादि"ति। तथापि तत्त्वमसीत्यादि-वैदिकवाक्यजन्य-निर्विकल्पकप्रत्यक्षे वाक्यजन्य-निर्विकल्पकप्रत्यक्षान्तरस्योदाहरणत्वं युक्तमिति प्रत्यभिज्ञाप्रत्यक्षं विहाय तदभिलापक-वाक्यजन्य-निर्विकल्पकज्ञानस्योदाहरणत्वं ज्ञापयति—**वाक्यजन्ये**ति। न च प्रत्यभिज्ञाप्रत्यक्षस्य निर्विकल्पकत्वं न युक्तं, सविकल्पक-प्रत्यक्षकारणस्य विशेष्येन्द्रिय-सन्निकर्ष-विशेषणज्ञानासंसर्गाग्रहरूपस्य तत्र सत्त्वात्, बाधकाभावात्, तत्तेदन्तोल्लेखित्वाच्चेति वाच्यम्, सत्यपि प्रत्यक्षकारणे विशिष्टाभेद-प्रत्यक्षप्रतिबन्धकस्य विरुद्धविशेषणयोरभेदबाधस्य सत्त्वेन तस्य स्वरूपमात्रविषयत्वौचित्यात्, भासमानवैशिष्ट्य-प्रतियोगित्वस्यैव प्रकारत्वनियमेन तत्तेदन्तासंसर्गस्याभानात् तयोस्तत्तेदन्तयोर्भासमानवैशिष्ट्य-प्रतियोगित्वेनाऽननुभवात् प्रकारत्वायोगात्, अभेदस्य स्वरूपतयाऽप्रकारत्वात्, विशेष्यत्वस्य प्रकारत्वस्य चाननुभवेन तत्तेदन्तोल्लेखित्वायोगाच्च।

एतेन—"सत्यमभेदविषयज्ञानमिन्द्रियजन्यमिति। तथापि तन्न निर्विकल्पकम्, सन्निकर्षवशादुपलक्षण-देशकालादेरपि तत्र भान-सम्भवादि"ति शिखामणिकृतां व्याख्यानं प्रत्युक्तम्, अभिज्ञाभिलापयोरेकविषयत्वनियमात्, अविद्यमानस्योपलक्षणस्य देशकालादेः प्रत्यक्षत्वायोगात्, देशकालादेः साक्षिवेद्यतया सन्निकर्षजन्य-प्रत्यक्षासम्भवाच्च।

नन्विदं निर्विकल्पकस्योदाहरणं न युक्तम्, इन्द्रियाणामेव प्रत्यक्षज्ञानजनकत्वात्, वाक्यस्य प्रत्यक्षज्ञानजनकत्वेऽलौकिकार्थानां वैदिकानां यजेतेत्यादिवाक्यानामपि प्रत्यक्षज्ञानजनकत्व-प्रसङ्गादिति चोदयति—**नन्वि**ति। शाब्दज्ञानस्याप्रत्यक्षत्वे हेतुमाह—**इन्द्रिये**ति। यज् ज्ञानमिन्द्रियजन्यं, तदेव प्रत्यक्षम्। न च शाब्दज्ञानमिन्द्रियजन्यम्,

**जन्यत्वं प्रत्यक्षत्वे तन्त्रम्, दूषितत्वात्। किन्तु योग्य-वर्त्तमान-विषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमित्युक्तम्। तथा च सोऽयं देवदत्त इति वाक्यजन्य-ज्ञानस्य सन्निकृष्ट-विषयतया बहिर्निःसृतान्तःकरण-वृत्त्यभ्युपगमेन देवदत्तावच्छिन्न-चैतन्यस्य वृत्त्यवच्छिन्न-चैतन्याभेदेन सोऽयं देवदत्त इति वाक्यजन्य-ज्ञानस्य प्रत्यक्षत्वम्। एवं तत्त्वमसीत्यादि-**

इन्द्रियं विनापि तज्ज्ञानोत्पादात्। इन्द्रियाजन्यञ्च कथं प्रत्यक्षम्? तस्मान्नेदं निर्विकल्पकस्योदाहरणं भवितुमर्हतीति पूर्वपक्षाशयः। आशङ्कां निराकरोति—**ने**ति। तत्र हेतुमाह—**न ही**ति। **तन्त्रं** व्याप्यं व्यापकं वा। यदीन्द्रियजन्यत्वं प्रत्यक्षत्वस्य व्याप्यं, तर्हि यत्रेन्द्रियजन्यत्वम्, तत्र प्रत्यक्षत्वं स्यात्। न च तथा, अनुमित्यादौ सत्यपि मनोरूपेन्द्रियजन्यत्वे प्रत्यक्षत्वाभावात्। तस्मात् तन्न व्याप्यम्। नापि व्यापकम्। यदि तद् व्यापकं स्यात्, तदा यत्र प्रत्यक्षत्वम्, तत्रेन्द्रियजन्यत्वं स्यात्। न च तथा, ईश्वरज्ञाने व्यापकस्येन्द्रियजन्यत्वस्याभावेन व्याप्यस्यापि प्रत्यक्षत्वस्याभावप्रसङ्गात्। अभ्युपगम्यते च तस्य प्रत्यक्षत्वम्। तस्मात् तन्न व्यापकमित्यर्थः। **दूषितत्वादि**ति। प्राक् निराकृतत्वादित्यर्थः। यदीन्द्रियजन्यत्वं प्रत्यक्षत्वस्य न तन्त्रम्, किं तर्हीति चेत्, तत्राह—**किन्त्वि**ति। **चैतन्या**भिन्नत्वमित्यस्य **तन्त्र**मिति पूर्वतनेनान्वयः। उदाहृते सोऽयं देवदत्त इति वाक्यजन्यज्ञाने प्रत्यक्षलक्षणं योजयति—**तथा** चेति। **सन्निकृष्ट**विषयतया इन्द्रियसन्निकृष्ट-विषयकतया। वाक्यजन्यज्ञान-विषयस्य देवदत्त-स्यास्तीन्द्रियेण सन्निकर्षः। स च वृत्तेर्बहिर्निर्गमन-हेतुः, अतो वृत्तेर्बहिर्गमनमित्याह—**बहिर्निःसृते**ति। सोऽयं देवदत्त इत्यस्माद् वाक्याद् जायमानाया देवदत्ताकाराया अन्तःकरणवृत्तेर्विषयसंसृष्टेन्द्रियप्रणाल्या विषयदेशगमनाभ्युपगमादित्यर्थः। अनेन वृत्त्य-वच्छिन्न-चैतन्यस्य विषयावच्छिन्न-चैतन्याभेदे हेतुरुक्तः। **चैतन्या**भेदेनेति। अभेद-प्रयोजकस्योपाध्योरेकदेशस्थत्वस्यात्र सत्त्वादिति भावः। **प्रत्यक्षत्वमि**ति। तथा च प्रत्यक्षत्वप्रयोजकस्य वृत्त्यवच्छिन्नचैतन्य-विषयावच्छिन्नचैतन्ययोरभेदस्य तत्प्रयोजकस्य चोपाध्योरेकदेशस्थत्वस्य तत्प्रयोजकस्य च विषयेन्द्रिय-सन्निकर्षस्यात्र सत्त्वात् ज्ञानस्य प्रत्यक्षत्वमिति भावः।

तत्त्वमसीति वाक्यजन्यज्ञानेऽपि प्रत्यक्ष-लक्षणमस्तीत्याह—**एवमि**ति। सोऽयं देवदत्त इति वाक्यजन्यज्ञानवदित्यर्थः। **तत्त्वमसीत्या**दीत्यादिपदेनाऽहं ब्रह्मास्मि,

**वाक्यजन्य-ज्ञानस्यापि। तत्र प्रमातुरेव विषयतया तदुभयाभेदस्य सत्त्वात्।**

**ननु वाक्यजन्य-ज्ञानस्य पदार्थ-संसर्गावगाहितया कथं निर्विकल्पकत्वम्? उच्यते। वाक्यजन्य-ज्ञानविषयत्वे हि न पदार्थसंसर्गवत्त्वं तन्त्रम्, अनभिमतसंसर्गस्यापि वाक्यजन्य-ज्ञानविषयत्वापत्तेः, किन्तु तात्पर्यविषयत्वम्।**

अयमात्मा ब्रह्म, प्रज्ञानं ब्रह्मेति महावाक्यानां सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्यानां च परिग्रहः। **ज्ञानस्यापी**त्यस्य **प्रत्यक्षत्व**मिति पूर्वतनेनान्वयः। तत्प्रत्यक्षत्वे हेतुमाह—**तत्रे**ति। **प्रमातुरेवे**ति। प्रमातृत्वोपलक्षित-स्वरूपचैतन्यस्यैवेत्यर्थः, न त्वन्तःकरणावच्छिन्न-चैतन्यस्य, तस्यात्मस्वरूपातिरिक्तत्वात्, कोऽहमित्यात्मस्वरूपस्यैव प्रश्नविषयत्वेन तदुत्तर-वचनस्यापि तत्त्वमसीत्यादेस्तद्विषयत्वौचित्यादिति भावः। **विषयतया** अहं ब्रह्मेत्याकारवृत्ति-विषयतया। **तदुभया**भेदस्य स्वरूपाकारवृत्त्यवच्छिन्नचैतन्य-स्वरूपचैतन्ययोरभेदस्य। ननु कथमिदं ज्ञानं प्रत्यक्षम्? वृत्त्यवच्छिन्नचैतन्य-विषयावच्छिन्नचैतन्ययोरभेदे हि ज्ञानं प्रत्यक्षं भवति। न चात्र तथा। वृत्त्यवच्छिन्नचैतन्यस्य सोपाधिकत्वात्, विषयस्य निरुपाधिकत्वात्, सोपाधिक-निरुपाधिकचैतन्ययोरभेदायोगादिति चेन्न, स्वरूपस्य धर्मधर्मिभाववदुपाध्युपधेयभावकल्पनया सोपाधिकत्वसम्भवात्, भेदप्रयोजकस्योपाध्योर्भिन्नदेशत्वस्यात्राभावेनाभेदोपपत्तेः।

नन्वस्तु तत्त्वमस्यादि-वाक्य-जन्य-ज्ञानस्य प्रत्यक्षत्वम्। निर्विकल्पकत्वन्तु तस्य न युक्तं, वाक्यजन्यज्ञानस्य संसर्गविषयकत्व-नियमात्, अन्यथा घटोऽस्ति सोमेन यजेतेत्यादि-वाक्यानामपि निर्विकल्पकत्व-प्रसङ्गादिति शङ्कते—**नन्वि**ति। **पदार्थ**संसर्गावगाहितया पदार्थसंसर्ग-विषयकतया। **कथमि**त्याक्षेपे, निर्विकल्पकत्वं न युक्तमित्यर्थः। वाक्यजन्यज्ञानस्य संसर्गविषयकत्व-नियमादिति भावः। शङ्कां परिहरति—**उच्यत** इति। **हि** यस्मात्। **पदार्थ**संसर्गवत्त्वम् एकपदार्थेऽपरपदार्थसंसर्गवत्त्वम्। **न तन्त्रं** न व्याप्यं व्यापकञ्च। कुतो न व्याप्यं व्यापकञ्चेत्यत आह—**अनभिमत**-संसर्गस्यापीति। अनभिमतः अनभिप्रेतो यः संसर्गस्तस्यापि, अनभिमतः संसर्गो यस्यार्थस्य तस्यापि वेत्यर्थः। यदि पदार्थसंसर्गवत्त्वं वाक्यजन्यज्ञानविषयत्वस्य व्याप्यं भवेत्, तर्हि यत्र संसर्गवत्वं तत्र वाक्यजन्य-ज्ञानविषयत्वं स्वीकरणीयम्। तथा सति भोजनकाले सैन्धवमानयेत्यत्राऽश्वसंसर्गस्य यष्टीः प्रवेशयेत्यत्र च दण्डसंसर्गस्य वाक्यजन्य-ज्ञानविषयत्वापत्तिः, व्याप्यस्याश्वादिसंसर्गस्य तत्र तत्रापि सत्त्वात्। न चाश्वस्य दण्डस्य

**प्रकृते च "सदेव सौम्येदमग्र आसीदि"त्युपक्रम्य "तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्यमवसित-**

वा तदा वाक्यजन्य-ज्ञानविषयत्वम्। तस्मात् संसर्गवत्त्वं न व्याप्यम्। नापि व्यापकम्। यदि संसर्गवत्त्वं व्यापकं भवेत्, तर्हि यत्र वाक्यजन्य-ज्ञानविषयत्वं, तत्र पदार्थसंसर्गवत्त्वं स्वीकरणीयम्। तथा सति वाक्यजन्य-ज्ञानविषयीभूतस्य संसर्गस्य संसर्गवत्त्वापत्तिः, तत्र व्याप्यस्य वाक्यजन्य-ज्ञानविषयत्वस्य सत्त्वात्। न च संसर्गस्य संसर्गवत्त्वम्, अनवस्थापातात्। तस्मात् संसर्गवत्त्वं न व्यापकम्। अत एव वाक्यजन्य-ज्ञानस्य संसर्गविषयकत्वनियमाभावात् तत्त्वमस्यादि-वाक्यजन्य-ज्ञानस्यापि न संसर्ग-विषयकत्वम्। अतस्तस्य निर्विकल्पकत्वं युक्तमिति भावः। यदि संसर्गवत्त्वं न तन्त्रं, किं तर्हीति चेत् तत्राह—**किन्त्व**ति। **तात्पर्य**विषयत्वमित्यस्य **तन्त्र**मिति पूर्वेणान्वयः। तथा च घटोऽस्तीत्यादावस्तित्वादि-संसर्गे तात्पर्यविषयत्व-सत्त्वाद् वाक्यजन्य-ज्ञानविषयत्वम्। सैन्धवमानयेत्यादावश्वादौ तात्पर्यविषयत्वस्य व्यापकस्याभावाद् व्याप्यस्य वाक्यजन्य-ज्ञानविषयत्वस्याभाव इति भावः।

नन्वेवमपि तत्त्वमसीत्यादौ पदार्थसंसर्गस्य तात्पर्यविषयत्वाद् वाक्यजन्यज्ञान-विषयत्वमिति तद्वाक्यजन्य-ज्ञानस्य न निर्विकल्पकत्वमिति चेत्, तत्राह—**प्रकृते** चेति। तत्त्वमस्यादावित्यर्थः। विशुद्धे ब्रह्मणि तात्पर्यमवसितमित्युत्तरेणान्वयः। **विशुद्धे** निष्प्रकारके पदार्थसंसर्गशून्ये। **ब्रह्मणि** स्वरूपचैतन्ये। **अवसितम्** निश्चितम्। ननु तत्त्वमस्यादीनां संसर्गशून्ये स्वरूपचैतन्ये एव तात्पर्यमवसितं न पदार्थसंसर्गे इति केन हेतुना निश्चितमित्यत आह—**सदेवे**ति। श्रुत्यर्थस्तु—हे **सौम्य**! **इदं** प्रत्यक्षभूतं नामरूपात्मकं जगत् **अग्रे** उत्पत्तेः प्राक् **सदेव** सदात्मकमेव निर्विशेष-ब्रह्मात्मकमेवा-**सीदि**ति। **इत्युपक्रम्य** इत्यारभ्य। अनेनोपक्रमो दर्शितः। स च तात्पर्यग्राहकेष्वाद्यः। **तत्सत्य**मिति। **तत्** सदाख्यं निर्विशेषं ब्रह्म **सत्यं** परमार्थसत् परमार्थसदेव, ततोऽन्यत् सर्वमविद्याकल्पितमपारमार्थिकमिति भावः। अत एव **स आत्मा** जगतः स्वरूपम्। अतः हे **श्वेतकेतो तत्** सदाख्यं निर्विशेषं ब्रह्म **त्वमसी**ति। **इत्युपसं**हारेण इत्युपसंहार-वाक्यस्यैकार्थनिष्ठत्वेन। अनेनोपक्रमोपसंहारयोरैक्यं दर्शितम्। तच्च तात्पर्यग्राहकेष्वाद्यं लिङ्गम्। एतच्चाभ्यासादीनामप्युपलक्षणम्, तेषामपि तात्पर्यग्राहकत्वात्। तथाचोक्तम्—"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये"। इति।

**मिति कथं तात्पर्याविषयं संसर्गमवबोधयेत्। इदमेव तत्त्वमस्यादि-वाक्या-**

तत्रोपक्रमोपसंहारपदाभ्यां विचार्य-वाक्यस्याऽऽद्यन्तभागयोरेकार्थनिष्ठत्वं लक्ष्यते। तथा चोपक्रमोपसंहारयोरेकार्थनिष्ठत्वमेकं लिङ्गम्। उपक्रम-वाक्यस्य योऽर्थः, स एव यद्युपसंहार-वाक्यस्यार्थो भवेत्, तदोपक्रमोपसंहारयोरेकार्थनिष्ठत्वम्। तेनैतज् ज्ञायते—तात्पर्यविषयत्वेन संदिग्धेषु बहुष्वर्थेषु यस्मिन्नर्थे आद्यन्त-वाक्ययोः पर्यवसानम्, तस्मिन्नर्थे तद्वाक्यस्य तात्पर्यम्, अन्यथा तयोरेकार्थ-पर्यवसानस्य वैयर्थ्यापत्तेः। अभ्यासः अनन्यपरं पुनः श्रवणम्। स च क्रियाविषयकः सिद्धविषयकश्च। यद्यपि समिधो यजति, इडो यजतीत्यादि-क्रियाविषयकोऽभ्यासो नानाकर्म-विधाने तात्पर्य-ग्राहकः, विहित-विधानायोगात्। तथापि सिद्धार्थविषयकोऽभ्यासो यस्मात् तात्पर्य-विषयत्वेन सन्दिग्धेषूत्कृष्टानुत्कृष्टेषु बहुष्वर्थेषूपक्रमोपसंहार-प्रतिपाद्यस्याऽभ्यस्यमानस्य सिद्धार्थस्याऽर्थान्तरादुत्कृष्टत्वरूपं प्राशस्त्यं बोधयति, तस्माज् ज्ञायते तस्मिन्नेवार्थे तद्वाक्यस्य तात्पर्यमिति। अन्यथाऽभ्यासस्य प्राशस्त्यकीर्त्तनस्य च वैयर्थ्यप्रसङ्गात्। अर्थवादः स्तुति-निन्दान्यतर-बोधकं वाक्यम्। यस्मादर्थवादस्तात्पर्यविषयत्वेन सन्दिग्धेषु बहुष्वर्थेषु प्रशस्ताप्रशस्तेष्वभ्यस्यमानस्यार्थस्य बलवदनिष्टाजनकत्वरूपं प्राशस्त्यं बोधयति, तस्माज् ज्ञायते—तद्वाक्यस्य तस्मिन्नेवार्थे तात्पर्यमिति। अन्यथा स्तुति-निन्दान्यतर-बोधनस्य वैयर्थ्यापातात्। एतत् त्रयं शब्दघटितत्वाच्छब्दनिष्ठम्। अर्थनिष्ठं तु त्रिविधमपूर्वता फलमुपपत्तिश्चेति। तत्रापूर्वता उक्तवाक्यार्थधीविषये उक्तधीपूर्वमज्ञातत्वम्। फलमुक्तधीविषयस्य प्रयोजनवत्त्वम्। उपपत्तिरुक्तधीविषयस्याऽबाधितत्वम्। तत्राऽपूर्वत्वं तात्पर्यविषयत्वेन सन्दिग्धेषु ज्ञाताज्ञातेषु बहुष्वर्थेष्वभ्यस्यमाने प्रशस्तेऽज्ञातेऽर्थे तद्वाक्यस्य तात्पर्यं ग्राहयति, अन्यथा ज्ञातार्थपरत्वे तद्वाक्यस्य ज्ञातज्ञापकत्वेनाऽनुवादितयाऽप्रामाण्यं स्यात्। न च तस्याप्रामाण्यम्। तस्मात् तत्वाक्यस्याऽज्ञातार्थे तात्पर्यम्। एवं फलमित्यादावपि द्रष्टव्यम्।

**इतिहेतौ**। यस्मात् षड्विधतात्पर्य-ग्राहकेण लिङ्गेन तत्त्वमस्यादि-वाक्यानां निष्प्रकारके ब्रह्मणि तात्पर्यं गृहीतम्, न संसर्गे, तत्रोपक्रमाद्यभावात्, तस्मादित्यर्थः। **कथमाक्षेपे**। तत्त्वमस्यादिवाक्यमिति शेषः। ननु तत्त्वमस्यादिवाक्यानामखण्डार्थकत्वं, तथैव प्रसिद्धेः, न संसर्गानवगाहित्वमिति चेत्, तत्राह—**इदमेवेति**। **एवकारेणा**ऽखण्डार्थकत्वस्य पदार्थान्तरत्वनिरासः। **तत्त्वमस्यादि**वाक्यानामपर्याय-शब्दानाम्।

**नामखण्डार्थत्वं यत् संसर्गानवगाहि-यथार्थज्ञानजनकत्वमिति। तदुक्तम्—**

बहुवचनेन सम्भूयैकार्थजनकत्वलाभः। तथा चोक्तं संक्षेपशारीरके—"यथा सच्चिदानन्द-शब्दास्तदर्थं तथा तत्त्वमावात्मनो ब्रह्मभावम्। विरोधान्मिथो लक्षणावर्त्मनेमौ किमर्थं न सम्भूय वक्तुं समर्थौ" ॥ इति। **आदि**शब्देनाहं ब्रह्मास्मि, अयमात्मा ब्रह्म, प्रज्ञानं ब्रह्मेति महावाक्यानां सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि-लक्षणवाक्यानाञ्च परिग्रहः। **इदमे**वेति सामान्यतो यन्निर्दिष्टं, तदेव विशेषतो दर्शयति—**यदि**ति। तत्त्वमस्यादि-वाक्यानां यत् संसर्गानवगाहि-यथार्थ-ज्ञानजनकत्वम्, इदमेवाऽखण्डार्थत्वमित्यन्वयः। तथा च संसर्गानवगाहि-यथार्थज्ञानजनकत्वाखण्डार्थत्वयोरैक्ये वेदान्तानामखण्डार्थत्वप्रसिद्धौ सुतरां तेषां निर्विकल्पकज्ञान-जनकत्वसिद्धिरिति भावः। अखण्डार्थत्वस्य चित्सुखोक्तं लक्षणमाह—**संसर्गानव**गाहीति। संसर्गपदेनात्र स्वघटक-पदवृत्ति-स्मारितातिरिक्तं सम्भूयैकार्थप्रतिपादकत्वे सत्यपर्यायानेकनाम-घटितत्वञ्च विवक्षितम्। तथा च सम्भूयैकार्थ-प्रतिपादकत्वे सत्यपर्यायानेकनाम-घटितत्वे सति स्वघटक-पदवृत्ति-स्मारितान्याविषयकप्रमाजनकत्वमखण्डार्थत्वमिति लक्षणं पर्यवसितम्। प्रमाजनकत्वमखण्डार्थत्वमित्येतावत्युक्ते गामानयेति वाक्येऽतिव्याप्तिस्तस्यापि प्रमाजनकत्वात्, अतः पदवृत्ति-स्मारितान्याविषयकेति प्रमाविशेषणम्। तथा च नातिव्याप्तिस्तत्र पदवृत्तिस्मारितान्यस्य गोसंसर्गस्य प्रतिपाद्यमानत्वात्। पदवृत्ति स्मारित-विषयक-प्रमाजनकत्वमित्युक्तौ संसर्गप्रमापके वाक्येऽतिव्याप्तिस्तस्यापि पदवृत्ति-स्मारित-विषयक-प्रमाजनकत्वात्। अतः स्मारितान्याविषयकपर्यन्तानुधावनम्। तावत्युक्तेऽसम्भवः, सर्वेषामप्यर्थानां तत्तद्वाचकपदवृत्तिस्मारितत्वेन तदन्यस्याप्रसिद्धेः। अतः स्वघटकेति पदविशेषणम्। तथा च नासम्भवः, संसर्गादेः संसर्गादि-पदस्मारितत्वेऽप्यखण्डार्थक वाक्यघटक-पदवृत्तिस्मारितत्वाभावात् तत्र तदन्यत्वप्रसिद्धेः। तत्रापि पदवृत्ति-स्मारितेति त्यक्त्वा पदज्ञाप्येत्युक्ते विषं भुङ्क्ष्वेति वाक्येऽतिव्याप्तिः स्यात्, तत्र स्वघटक-पदज्ञाप्यान्याविषयक-प्रमाजनकत्व-सत्त्वात्, तद्वाक्यस्य स्वघटक-पदज्ञाप्यानिष्टसाधनत्वमात्रविषयकप्रमाजनकत्वात्। अतस्तद्वारणायाह—पदवृत्तीति। तथा च नातिव्याप्तिस्तद्वाक्यस्य स्वघटक-पदवृत्ति-स्मारितान्यानिष्टसाधनत्वविषयक-प्रमाजनकत्वात्, अनिष्टसाधनत्वस्य वाक्यलक्षणयोपस्थितत्वेन स्वघटक-पदवृत्तिस्मारितान्यत्वात्। तत्रापि पदवृत्तिस्मारितेत्यनुक्त्वा पदवृत्तिज्ञाप्येत्युक्तौ सर्वप्रमाणवाक्येऽतिव्याप्तिः स्यात्, वाक्यार्थभूत-संसर्गस्य वृत्त्याऽनुभाव्यस्याऽन्विताभिधानवादि-

**संसर्गासङ्गि-सम्यग्-धी-हेतुता या गिरामियम्।**
**उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता॥**
**प्रातिपदिकार्थमात्रपरत्वमखण्डार्थत्वमिति चतुर्थपादार्थः।**

मतेऽभिहितान्वयवादिमते च वृत्तिज्ञाप्यत्वात्तस्य वृत्तिज्ञाप्यान्याविषयक-प्रमाजनकत्वात्। अतो वृत्तिज्ञाप्येत्यनुक्त्वा वृत्तिस्मारितेत्युक्तम्। तथाच नातिव्याप्तिः, संसर्गस्य वृत्तिज्ञाप्यत्वेऽपि वृत्तिस्मारितत्वाभावात्। तावत्युक्ते लक्षणवाक्यार्थज्ञानविषयीभूत सन्निकृष्टार्थविषयक-निर्विकल्पकज्ञानजनकेन्द्रियेऽतिव्याप्तिः स्यात्, तस्य पदवृत्तिस्मारितान्यविषयकप्रमाज्ञानाजनकत्वात्। अत उक्तं—नामघटितत्वे सतीति। तावत्युक्ते प्रकृति-प्रत्ययसमुदायात्मके घट इति वाक्येऽतिव्याप्तिः, तस्यापि पदवृत्ति-स्मारितान्याविषयकप्रमाजनकत्वात्, प्रथमाविभक्तेः प्रातिपदिकार्थानतिरिक्तविषयार्थत्वात्। तथा च पाणिनिसूत्रम्—"प्रातिपदिकार्थमात्रे प्रथमे"ति। अतोऽनेकेति नामविशेषणम्। तथा च नातिव्याप्तिः, घट इत्यस्यानेकनामघटितत्वाभावात्। तावत्युक्ते घटः कलश इति वाक्येऽतिव्याप्तिः, तस्यापि पदवृत्तिस्मारितान्याविषयक-प्रमाजनकत्वादनेकनामघटितत्वाच्च। अतोऽपर्यायेति विशेषणम्। तावत्युक्ते धव-खदिर-पलाशा इति वाक्येऽतिव्याप्तिः, तस्यापि पदवृत्ति-स्मारितान्याविषयकप्रमाजनकत्वादपर्यायानेकनामघटितत्वाच्च। अत आह—सम्भूयैकार्थप्रतिपादकत्वे सतीति। तथा च नातिव्याप्तिस्तद्वाक्यस्य नानार्थपरत्वेन सम्भूयैकार्थप्रतिपादकत्वाभावात्। न चाखण्डार्थपरे संयोगलक्षणवाक्येऽव्याप्तिरिति वाच्यं, तस्य संयोगस्य पदवृत्तिस्मारितत्वात्। तत्त्वमसीत्यादि-वाक्यघटकतत्त्वमादिपदवृत्त्या स्मारितस्य स्वरूपचैतन्यमात्रस्यैव प्रमाजननात् पदवृत्तिस्मारितान्यस्य प्रमानुत्पादाल्लक्ष्ये लक्षण-समन्वयः। एवंविधाऽखण्डार्थे चित्सुखाचार्यसम्मतिमाह—**तदुक्त**मिति। चित्सुखाचार्यैरिति शेषः। **संसर्गासङ्गी**ति। **गिराम**पर्यायशब्दानाम् **या संसर्गा**सङ्गिसम्यग्धीहेतुता संसर्गासङ्गिनी संसर्गानवगाहिनी, संसर्गाविषयिणीति यावत् या सम्यग्धीर्यथार्थज्ञानं तस्या या हेतुता, **इयमखण्डार्थता उक्ता** प्राचीनैरिति शेषः। अखण्डार्थस्य लक्षणादोषशून्यं लघुभूतं लक्षणमाह—**यद्वे**ति। **तदि**ति। गिरामपर्यायशब्दानां या तत्प्रातिपदिकार्थता, इयमखण्डार्थतेत्यन्वयः। स प्रातिपदिकः प्रातिपदिकार्थः अर्थो येषां ते तत्प्रातिपदिकार्थास्तस्य भावस्तत्प्रातिपदिकार्थत्वमिति विग्रहः। तथा च गिरां यः प्रातिपदिकार्थो नामार्थस्तत्प्रातिपदिकाथत्वं तस्या-

**तच्च प्रत्यक्षं पुनर्द्विविधम्—जीवसाक्षीश्वरसाक्षि चेति। तत्र जीवो**

खण्डार्थत्वमित्यर्थः। नन्विदं लक्षणं न युक्तं, संसर्गपरे हि गामानयेत्यादिवाक्ये तत्प्रातिपदिकार्थत्वस्य सत्त्वादतिव्याप्तेरतस्तत्प्रातिपदिकार्थत्वस्यार्थमाह—**प्रातिपदिकार्थमात्रे**ति। मात्रपदेन प्रातिपदिकार्थान्यस्य व्युदासः। तथा च यस्माद् वाक्यात् प्रातिपदिकार्थः प्रतीयते तदन्यार्थश्च, तद् वाक्यं न प्रातिपदिकार्थमात्रपरम्। यस्माच्च प्रातिपदिकार्थः प्रतीयते न तदन्यार्थस्तद् वाक्यं प्रातिपदिकार्थमात्रपरम्। गामानयेत्यादिवाक्यं तु न तथा, तस्मात् प्रातिपदिकार्थान्यस्य संसर्गादेः प्रतीयमानत्वादतस्तत्र नातिव्याप्तिः। नाप्यौपगवादि-प्रश्नोत्तरे श्यामो दीर्घो लोहिताक्ष औपगव इत्यादिवाक्येऽव्याप्तिस्तस्यापि प्रातिपदिकार्थमात्रस्य गोसमीपवृत्त्यपत्यत्वविशिष्टस्य प्रश्नविषयत्वेन प्रातिपदिकार्थमात्रपरत्वात्। नापि प्रकृति-प्रत्ययसमुदायात्मके घट इति वाक्ये वाऽतिव्याप्तिस्तस्यापि प्रातिपदिकार्थान्यस्य प्रत्ययार्थस्य प्रमापकत्वेन प्रातिपदिकार्थमात्रपरत्वाभावादिति भावः।

सविकल्पक-निर्विकल्पकभेदेन प्रत्यक्षज्ञानस्य द्वैविध्यं निरूपितम्। इदानीं प्रकारान्तरेण तस्य द्वैविध्यं निरूपयति—**तच्च प्रत्यक्ष**मिति। द्वैविध्यस्वरूपमाह—**जीवे**ति। जीवसाक्षिप्रत्यक्षमीश्वरसाक्षिप्रत्यक्षमिति प्रत्यक्षज्ञानं द्विविधमित्यर्थः। वस्तुतस्तु प्रत्यक्षमष्टविधं जीवसविकल्पकं जीवनिर्विकल्पकं जीवसाक्षिसविकल्पकं जीवसाक्षिनिर्विकल्पकमीश्वरसविकल्पकमीश्वरनिर्विकल्पकमीश्वरसाक्षिसविकल्पकमीश्वरसाक्षिनिर्विकल्पकञ्चेति। तत्र यदा घटादिविषयक-प्रत्यक्षवृत्त्या प्रमातृचैतन्यावरकस्य विषयावच्छिन्नचैतन्यावरकस्य चाज्ञानस्य निवृत्तौ प्रमातृचैतन्यं विषयावच्छिन्नचैतन्यञ्चाभिव्यक्तं भवति। तदा तेषां चैतन्यानां परस्परं भेदाभावाद् घटादेर्विषयस्य घटज्ञानस्य प्रमातुर्जीवस्य च युगपदेवानुभवो जायते घटमहं जानामीति। न त्वादौ विषयज्ञानरूपो व्यवसायोऽयं घट इति। अनन्तरञ्च ज्ञानज्ञानरूपोऽनुव्यवसायो घटमहं जानामीति, अप्रकाशमानस्याऽनुव्यवसायस्य ज्ञानप्रकाशकत्वायोगात्, प्रकाशमानस्य प्रकाशकत्वाभ्युपगमेऽनवस्थापातात् स्वप्रकाशत्वापाताद्वा, भासकसम्बद्धानां भासने विलम्बायोगाच्च। तस्मिंश्चानुभवे घटगतेन चिदभिव्यक्तिजननयोग्य-वृत्त्यभिव्यक्तचैतन्येन प्रमित्यभिधेयेन घटादिकं सम्बद्धमिति तदेव प्रमातृचैतन्यमनुभवति, न तु तदतिरिक्तं, तस्य प्रमातृचैतन्यासम्बन्धात्, तं प्रत्यावृतत्वाच्च। तथा चोक्तं सिद्धान्तबिन्दौ—"चिदभिव्यक्तियोग्येन येनान्तःकरणेन यदा

**नामाऽन्तःकरणावच्छिन्न-चैतन्यम्। तत्साक्षि त्वन्तःकरणोपहित-चैतन्यम्। अन्तःकरणस्य विशेषणत्वोपाधित्वाभ्यामनयोर्भेदः।**

यत् सम्बद्धं भवति, तदेव तदा तदवच्छिन्नो जीवोऽनुभवती"ति। योऽयं जीवानुभवस्तदेव जीवप्रत्यक्षम्। तच्च घटोऽयमित्यादिव्यवहार-प्रयोजकम्। यश्च घटादिज्ञानानुभवो घटं जानामीति, यश्च प्रमातृसाक्षात्कारोऽहमिति, स न जीवसाक्षात्कारः, तं प्रत्यावृतत्वात्। अपि तु साक्षिसाक्षात्कारः, तस्य सर्वदैवाऽनावृतत्वात्। अन्यथा प्रमातृसाक्षात्कारो ज्ञानसाक्षात्कारश्च न स्याताम्। योऽयं प्रमातृसाक्षात्कारस्तदेव साक्षि-प्रत्यक्षम्। एवमीश्वरप्रत्यक्षमित्यत्रापि द्रष्टव्यम्। नन्विन्द्रियजन्यज्ञानस्यैव निर्विकल्पकत्वनियमादीश्वरज्ञानस्य कथं निर्विकल्पकत्वं, तस्येन्द्रियाभावेन तज्ज्ञानस्य नित्यतया चेन्द्रियजन्यत्वाभावादिति चेन्न, निर्विकल्पकज्ञानस्येन्द्रियजन्यत्वनियमाभावात्, शब्दादपि निर्विकल्पकज्ञानाभ्युपगमादीश्वरस्यानित्यज्ञानाभ्युपगमाच्च। तदुक्तं विवरणे पञ्चमवर्णके—"एवं तत्तत्कालेऽतीत-सर्वविषयावगमादनुभूतविषयाऽसंप्रमोषा स्मृतिः स्वमायापरिणामोपाधिरनावरणा सर्वविषया कल्प्यते। तथा सृष्टेः प्रागपि सृज्यमान-पदार्थावधारणस्य कुलालादिषु दृष्टत्वादागामि-सर्वविषयज्ञानं स्वमायापरिणामोपाधि कल्प्यत इति युक्ता सर्वज्ञते"ति। लघुचन्द्रिकायाञ्चात्मस्वप्रकाशत्वोपपत्तिप्रकरणे—"नैका वृत्तिः सर्वविषयिका किन्तु भविष्येष्वनुमितिर्भूतेषु स्मृतिर्विद्यमानेषु प्रत्यक्षरूपे"ति। जीवप्रत्यक्षस्याऽविवादादौ जीवस्वरूपं निरूपयितुमाह—**तत्रे**ति। तयोर्द्वयोर्जीव-तत्साक्षिणोर्मध्य इत्यर्थः। क्रमप्राप्तं जीवं निरूपयति—**जीवो** नामेति। **अन्तःकरणे**ति। अन्तःकरण-तादात्म्यापन्नं चैतन्यमित्यर्थः। अज्ञानतादात्म्यापन्नं चैतन्यं यदाऽन्तःकरणेन तादात्म्यमापद्यते, तदन्तःकरणच्छुरितमन्तःकरणानुप्रविष्टं चैतन्यं जीव इति व्यपदिश्यते इति भावः। इदं वाचस्पतिमतम्। विवरणमते त्वविद्याप्रतिबिम्बितं चैतन्यम्। तदुक्तं नवमवर्णके—"ननु कोऽयं जीवो नाम? यस्य स्वरूपं त्वंपदेन लक्ष्यमाणं ब्रह्मैव वाक्यार्थः सम्पद्यते। ब्रह्मैवाऽविद्याप्रतिबिम्बितमिति वदाम" इति। विवरणानुसारिणां तन्मतेनैव जीवनिरूपणमुचितम्। तत्तु कथं न कृतमिति विभावनीयम्। जीवसाक्षिस्वरूपं दर्शयति—**तत्साक्षी**ति। जीवसाक्षीत्यर्थः। **अन्तःकरणो**पहितेति। यच्चैतन्यमन्यस्माच्चैतन्यादन्तःकरणैर्व्यावृत्तमप्यन्तःकरणाननुप्रविष्टं, तच्चैतन्यं जीवसाक्षीत्यभिधीयत इति भावः।

नन्विदं साक्षिलक्षणं नैव युक्तं, तस्यैवासिद्धेः, प्रमात्रादिचतुष्टयेनैव सर्वव्यवहारो-

**विशेषणश्च कार्यान्वयि व्यावर्त्तकं वर्त्तमानम्। उपाधिश्च कार्यानन्वयी**

पपत्तौ तत्कल्पनानवकाशादिति चेन्न, ज्ञानादिविषयग्रहणान्यथाऽनुपपत्त्या तत्कल्पनात्। तथा हि—ज्ञानेच्छादयस्तावत् सर्ववादिसिद्धा दृश्यन्ते। न च तेषां प्रमाणगम्यत्वम्। न हि बाह्यं प्रत्यक्षं तद्ग्राहकं, बाह्यमात्र-ग्राहकाणां तेषामान्तरग्राहकत्वायोगात्, ज्ञानादीनाञ्चान्तरत्वात्। नापि मानसं प्रत्यक्षम्, अस्माभिस्तदनभ्युपगमात्, अस्वयंप्रकाशस्य च तस्य प्रकाशकत्वायोगात्, प्रकाशमानस्यैव प्रकाशकत्वात्। तथा चोक्तं तत्त्वशुद्धौ —"प्रतिभासमानस्यैव ज्ञानस्य तत्साधकत्वं वक्तव्यमि"ति। न च तत्प्रत्यक्षान्तरप्रकाश्यं, तस्याप्रकाशमानत्वात्, तस्यापि प्रत्यक्षान्तरप्रकाश्यत्वे तस्यापि तथैवेति ज्ञानमालाप्रसङ्गात्। न च चक्षुरादिवदप्रकाशमानमेव तत् प्रकाशकम्, विषयादेरपि प्रकाशकत्वापातात्, अप्रकाशमानत्वाविशेषात्, इन्द्रियादीनां प्रकाशकत्वानभ्युपगमादन्यथा तेषामात्मत्वप्रसङ्गात्। नापि हानादिव्यवहारस्तत्साधकस्तस्याप्यप्रकाशमानत्वात्, ज्ञानावगमात् प्राग् व्यवहारासिद्धेश्च। नापि जीवस्तद्ग्राहकः, तस्यावृतत्वात्, सहकारिप्रमाणमन्तरेण तदावरणनिवृत्त्ययोगात्। न च प्रमाणं तत्सहकारि, बाह्यस्याप्रवर्त्तनात्, अन्तःकरणस्याप्रमाणत्वाद्, अनुमानादीनाञ्च दूरनिरस्तत्वात्। तस्माद् ज्ञानेच्छादीनां प्रमाणग्राह्यत्वासम्भवात् तद्ग्राहकः कश्चित् कल्पनीयः। यश्च तद्ग्राहकः, स साक्षी, अन्यथा ज्ञानादिव्यवहारविलोपप्रसङ्गात्। तथा चोक्तं तत्त्वशुद्धौ—"सर्वैरपि साक्षिस्वरूपमभ्युपगन्तव्यमन्यथा व्यवहारानुपपत्तेरि"ति। एवञ्च प्रतीयमानकर्त्तृत्वादिनिर्वाहाय यथान्तःकरणावच्छिन्नचैतन्यरूपो जीवः पृथगङ्गीकर्त्तव्यस्तथा ज्ञानसुखादिविषयप्रकाशनिर्वाहाय जीवसाक्ष्यपीति युक्तं तल्लक्षणाभिधानम्। विस्तरस्तु तत्त्वशुद्धौ द्रष्टव्यः।

नन्वेकमेवान्तःकरणं जीवचैतन्यं यथा व्यावर्त्तयति, तथा साक्षिणमपीति कथं जीवसाक्षिणोर्भेद इत्यत आह—**अन्तःकरण**स्येति। **अनयो**र्जीवसाक्षिणोः। **भेद** इति। व्यावर्त्तकयोरुपाधि-विशेषणयोर्भेदाद् जीवसाक्षिणोर्भेद इति भावः।

उपाधिविशेषणयोर्भेदं दर्शयति—**विशेषण**मिति। **कार्यान्वयि** स्वान्वितविशेष्यांशे यद् विधेयम्, तदन्वयि। स्वं विशेषणम्। तथा च स्वान्वितांशविधेयान्वयित्वे सति वर्त्तमानत्वे सति व्यावर्त्तकत्वं विशेषणत्वमिति विशेषणलक्षणं फलितम्। उपाधावतिव्याप्तिव्यावृत्त्यर्थं—स्वान्वितेत्यादि। उपलक्षणव्यावृत्त्यर्थं—वर्त्तमानत्वे सतीति। घटपटौ पश्येत्यत्र घटस्य पटविशेषणतानिरासार्थं—विशेष्यदलम्। न च पण्डितपुत्रो मूर्खः,

**व्यावर्त्तको वर्त्तमानश्च। यथा रूपविशिष्टो घटोऽनित्य इत्यत्र रूपं विशेषणम्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्णशष्कुल्युपाधिः। अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते। प्रकृते चान्तःकरणस्य**

वह्निमान् पर्वतो धूमवानित्यादौ विधेयानन्वयिनो वह्न्यादेर्विशेषणत्वं न स्यादिति वाच्यम्, इष्टापत्तेः, वह्न्यादेस्तत्र तत्रोपाधित्वात्। उपाधिलक्षणं दर्शयति—**उपाधिश्चे**ति। **कार्यानन्वयि** स्वान्वितविशेष्यांशे यद् विधेयं, तदनन्वयि। तथा च स्वान्वितांश-विधेयानन्वयित्वे सति वर्त्तमानत्वे सति व्यावर्त्तकत्वमुपाधित्वमित्युपाधिलक्षणं फलितम्। स्वमुपाधिः। तत्र व्यावर्त्तकत्वमित्युक्ते उपलक्षणस्यापि व्यावर्त्तकत्वादतिव्याप्तिरत उक्तं—वर्त्तमानत्वे सतीति। काकैर्गृहं पश्येत्यादौ काकादेरुपलक्षणस्य व्यावर्त्तकत्वेऽपि वर्त्तमानत्वाभावान्न तत्रातिव्याप्तिरिति भावः। तावत्युक्ते नीलं घटं पश्येत्यादौ नीलादि-विशेषणेऽतिव्याप्तिस्तस्यापि वर्त्तमानत्वाद् व्यावर्त्तकत्वाच्चेत्यत आह—स्वान्वितेत्यादि। तथा च नीलादेर्वर्त्तमानत्वेऽपि व्यावर्त्तकत्वेऽपि स्वान्वितघटांशे विधेयेन दर्शनेन सहान्वयान्न तत्रातिव्याप्तिरिति भावः। धवं छिन्धि खदिरं पश्येत्यादि-तात्पर्यके धव-खदिरौ छिन्धि पश्येत्यादौ खदिरांशे धवस्योपाधिता-निरासार्थं व्यावर्त्तकत्व-दलम्। धवस्य स्वान्वित-खदिरांशे विधेयेन छेदनेनान्वयित्वाभावेऽपि वर्त्तमानत्वेऽपि व्यावर्त्तकत्वाभावान्न तत्रातिव्याप्तिरिति भावः। विशेषणस्योदाहरणमाह—**यथा रूपे**ति। अत्र रूपस्य घटव्यावर्त्तकत्वाद् वर्त्तमानत्वात् स्वान्वित-घटांशे विधेयेनाऽनित्य-त्वेन सहान्वयाच्च विशेषणत्वम्। उपाधेरुदाहरणमाह—**कर्ण**शष्कुलीति। कर्णरन्ध्र-मित्यर्थः। अत्र कर्णशष्कुल्या नभोऽन्तर-व्यावर्त्तकत्वाद् वर्त्तमानत्वात् स्वान्वित-नभोंऽशे विधेयेन श्रोत्रत्वेनाऽनन्वयित्वाच्चोपाधित्वम्। ननु कर्णशष्कुल्याः परिचायकत्वं तार्किकै-रुक्तम्, नोपाधित्वम्। तथा चोपाधिलक्षणस्य तत्रातिव्याप्तिरिति चेन्न, परिचायको-पाध्योरेकत्वादित्याह—**अयमेवे**ति। नन्वेवमपि जीवपक्षेऽन्तःकरणं विशेषणम्, साक्षिपक्षे तूपाधिरित्यत्र किं कारणमिति चेत्, तत्राह—**प्रकृते** चेति। शुद्धचैतन्यस्य निर्विकार-त्वात् केवलस्य च चेतनानधिष्ठितस्याऽन्तःकरणस्य जडत्वात् कर्त्तृत्वलक्षणजीवत्वान्वया-सम्भवेऽप्यन्योन्य-तादात्म्यापन्नयोस्तयोर्जीवत्वान्वये बाधकाभावादन्तःकरणस्य स्वान्वित-चैतन्यांशे विधेयेन जीवत्वेनाऽन्वयाद् वर्त्तमानत्वाद् व्यावर्त्तकत्वाच्च विशेषणत्वं युक्तम्। साक्षिपक्षे तु तस्यान्तःकरणस्य विशेषणत्वं नैव युक्तम्। विषयावभासकत्वं हि साक्षित्वम्।

**जड़तया विषयभासकत्वायोगेन विषयभासक-चैतन्योपाधित्वम्। अयञ्च जीवसाक्षी प्रत्यात्मं नाना, एकत्वे चैत्रावगते मैत्रस्याऽप्यनुसन्धानप्रसङ्गः।**

**ईश्वरसाक्षी तु मायोपहितं चैतन्यम्। तच्चैकम्, तदुपाधिभूताया**

न चान्तःकरणस्य तद् युज्यते, जड़त्वाद् विकारित्वाच्च। अत एवोक्तं विवरणे—"सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एवे"ति। तस्मात् स्वान्वितचैतन्यांशे विधेयेन साक्षित्वेनाऽन्तःकरणस्यानन्वयात् तस्योपाधित्वं युक्तमित्याह—**अन्तःकरण**-स्येति। **विषय**भासकत्वायोगेन साक्षित्वानन्वयित्वेन। **विषय**भासकचैतन्येति। विषयभासक-साक्षिचैतन्येत्यर्थः। जीवसाक्षिणां भेदे प्रयोजनं दर्शयति—**अयञ्चे**ति। **प्रत्यात्मं** प्रतिशरीरम्। **नाने**ति। यद्यपि साक्षिचैतन्यं स्वरूपेणैकम्, तथापि भेदकस्य तदुपाधिभूतान्तःकरणस्य प्रतिशरीरं भेदात् तदुपधेय-साक्षिचैतन्यस्यापि भेद इति भावः। एकत्वे दोषमाह—**एकत्वे** इति। साक्षिचैतन्यस्य प्रतिशरीरमेकत्व इत्यर्थः। **अनुसन्धान**प्रसङ्गः स्मरणप्रसङ्गः, दर्शनकर्त्तुरेव स्मरणनियमात्, चैत्रमैत्रयोश्च दर्शनकर्त्तुरेकत्वात्। इदमुपलक्षणं चैत्रकृतकर्मणा मैत्रस्यापि फलभोक्तृत्वप्रसङ्ग इत्यपि द्रष्टव्यम्।

इदानीं क्रमप्राप्तमीश्वरसाक्षिस्वरूपं निरूपयति—**ईश्वर**साक्षीति। यद्यपीश्वर-निरूपणमेवादावुचितम्, तथापि जीवसाक्षिनिरूपणदशायामीश्वरसाक्षिणो बुद्धिस्थत्वात् तस्यैवादौ निरूपणम्। ईश्वरस्वरूपं त्वग्रे वक्ष्यते मायाया विशेषणत्वे ईश्वरत्वमिति। **मायोपहित**मविद्योपहितम्, विवरणसिद्धान्ते मायाऽविद्ययोर्भेदाभावात्। मायाऽविद्य-योर्भेदपक्षे तु मायोपहितमिति विशुद्धसत्त्वप्रधानोपहितमित्यर्थः। विशुद्धसत्त्वप्रधाना माया मलिनसत्त्वप्रधाना त्वविद्येति तयोर्भेदात्। तथा चोक्तं पञ्चदश्यां—"तमोरजः-सत्त्वगुणा प्रकृतिर्द्विविधा च सा। सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते"॥ इति। विवरणेप्ययं पक्षो दर्शितः खण्डितश्च। न चेयमविद्या ज्ञानाभावरूपा, अहमज्ञो मयि ज्ञानं नास्तीत्यादि-प्रत्यक्षानुभव-विषयत्वात्। न चाभावः प्रत्यक्षविषयः, तस्यानु-पलब्धि-प्रमाणविषयत्वात्। तदुक्तं विवरणे प्रथमवर्णके—"अभावस्य च षष्ठप्रमाणगोचर-त्वादि"ति। प्रत्यक्षविषयत्वाभ्युपगमेऽपि ज्ञानाभावो न प्रत्यक्षः, धर्मिप्रतियोगि-ज्ञाना-ज्ञानाभ्यां व्याहतत्वात्। तथा हि—मयि ज्ञानं नास्तीति प्रतीतौ ज्ञानाभावस्यानुयोगिनः प्रतियोगिनश्च ज्ञानसद्भावे तत्र ज्ञानस्य सत्त्वाद् ज्ञानसामान्याभावरूपस्याज्ञानस्यानुभवो न स्यात्। धर्मिप्रतियोगिनोर्ज्ञानाभावे तु सुतराम्, अभावानुभवं प्रति धर्मिप्रतियोगि-

**मायाया एकत्वात्, "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतौ मायाभिरिति बहुवचनस्य मायागत-शक्तिविशेषाभिप्रायकतया मायागत-सत्त्व-रजस्तमोगुणाभिप्रायकतया चोपपत्तेः।**

**मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्।**

ज्ञानस्य हेतुत्वात्। तस्मादविद्या न ज्ञानाभावरूपा किन्त्वनादिभावरूपा ज्ञाननिवर्त्त्या। भावत्वमत्राऽभावविलक्षणत्वं बोध्यम्। किं तत्राऽज्ञाने प्रमाणमिति चेत्, न किमपि, साक्षिसिद्धत्वात् तस्य। न हि साक्षिसिद्धं वस्तु प्रमाणसिद्धं भवति। प्रमाणप्रदर्शनं त्वत्राऽभाववैलक्षण्यादि-साधनायेति बोध्यम्। **तच्च** ईश्वरसाक्षिचैतन्यञ्च। **एक**मित्यत्र हेतुमाह—**तदुपाधी**ति। ईश्वरसाक्षिचैतन्योपाधीत्यर्थः।

ननु मायाया एकत्वमयुक्तम्, इन्द्रो मायाभिरिति बृहदारण्यकश्रुतौ तस्या बहुत्वाभिधानादित्यत आह—**इन्द्र** इति। **इन्द्रः** परमेश्वरः **मायाभिः** मायागत-शक्तिविशेषैर्मायागत-गुणविशेषैर्वा। **पुरुरूपः** बहुरूपः **ईयते** प्राप्यते प्रतीयते वेत्यर्थः। **शक्तिविशेषे**ति। विक्षेपशक्तिविशेष-विषयकतयेत्यर्थः। तथा चैकस्यां मायायां बहुवचनार्थस्य बहुत्वस्यान्वये विरोधाद् मायाशब्दाल्लक्षणया मायागत-शक्तेरुपस्थितिर्भवति। तत्र च बहुत्वस्यान्वयो न मायायाम्। एवञ्चैषा श्रुतिर्न मायाया बहुत्वं ब्रवीति किन्तु तद्गतायाः शक्तेरिति मायाया एकत्वे न कोऽपि विरोध इति भावः। ननु मायाशब्दस्य तद्गतशक्तिविशेषलक्षणायामप्यन्वयानुपपत्तिस्तथैव, तत्र विक्षेपावरणरूप-शक्तिद्वयाङ्गीकारात्। तदुक्तं विवरणे प्रथमवर्णके—"एकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन मायाच्छादन-प्राधान्येनाविद्येति व्यवहारभेद" इतीत्यस्वरसादाह—**मायागते**ति। माया-घटक-सत्त्वरजस्तमोगुणविषयकतयेत्यर्थः। तथा च परमेश्वरस्य सात्त्विकरूपप्राप्तौ सत्त्व-गुणस्य राजसरूपप्राप्तौ रजोगुणस्य तामसरूपप्राप्तौ तमोगुणस्य प्राधान्येन हेतुत्वादत्र माया-शब्दाद् गुणसमष्टिभूताया एकरूपाया मायाया नोपस्थितिः किन्तु व्यष्टिभूतस्य गुणत्रयस्य, तत्र च बहुत्वस्यान्वयो नैकरूपायां मायायाम्। एवञ्चैषा श्रुतिर्न मायाया एकत्वं ब्रवीति किन्तु तद्घटकं गुणत्रयमिति मायाया एकत्वे न कोऽपि विरोध इति भावः।

ननु बहुवचनबलान्मायाया बहुत्वमेवास्तु नैकत्वम्। एकत्वप्रतिपादिकाः श्रुतयस्त्वेक-जातीयपराः स्युरिति चेन्न, बह्वीनामेकत्व-प्रतिपादकश्रुतीनां विरोधेनैकस्या बहुत्वप्रति-पादिकायाः श्रुतेरन्यपरत्वौचित्याल्लाघवादित्यावेदयितुमेकत्वप्रतिपादिकां श्वेताश्वतरश्रुतिं

**तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते।**
**योगी मायाममेयाय तस्मै विद्यात्मने नमः।**
**अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।**
**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥**

**इत्यादि-श्रुतिष्वेकवचन-बलेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते।**

दर्शयति—**मायान्त्विति**। **प्रकृतिं मायामेव** जानीयान्न तु प्रकृतिर्मायातो भिन्ना। एवं **महेश्वरन्तु मायिनं** मायाश्रयं जानीयादित्यर्थः। ननु मायाशब्दोत्तरं यथा बहुवचनं श्रूयते, तथैकवचनमपि। तत् कथं मायाया एकत्वमेव निश्चेतव्यं न बहुत्वम्. मायाया बहुत्वेऽप्येकवचनश्रुतेर्जातिपरत्वसम्भवादिति चेन्न, एकवचनश्रुतीनां बहुत्वाद् बहुवचन-श्रुतेश्चैकत्वान्नानैकवचन-श्रुत्यनुरोधेन बहुवचनश्रुतेरन्यपरत्वौचित्यादित्यभिप्रायेणैकवचन-श्रुत्यन्तरं दर्शयति—**तरतीति**। **यस्मिन्** ब्रह्मणि **हृदि** निवेशिते ब्रह्माकारवृत्त्या विषयीकृते **योगी** जीवब्रह्मैक्यध्यानाभ्यासी **विततां** विश्वव्यापिनीं मायामविद्यां **तरति** निवर्त्तयति, **तस्मै अमेयाय** अवेद्याय स्वयंप्रकाशमानाय **विद्यात्मने** चिदात्मकाय ब्रह्मणे **नमः** इति श्रुत्यर्थः। अत्र मायाविद्ययोः सामानाधिकरण्येन ज्ञाननिवर्त्त्यत्वनिर्देशान्माया-विद्ययोरैक्यमेकत्वञ्च दर्शितम्। मायैकत्वप्रतिपादकं श्रुत्यन्तरं दर्शयति—**अजामि**ति। **अजाम**नुत्पन्नां **लोहितशुक्लकृष्णां** तेजोवन्नलक्षणां कार्यकारणयोरभेदाभिमानात् **सरूपाः** सामानाकारा **बह्वीः प्रजाः** कार्याणि **सृजमाना**मुत्पादयन्तीम**जो ह्येको** विज्ञानात्माऽनादि-काम-कर्मविनाशितः स्वयमात्मानं मन्यमानो **जुषमाणः** सेवमानो**ऽनुशेते** भजते। **अन्योऽज** आचार्योपदेशप्रकाशावसादिताविद्यान्धकार **एनां भुक्तभोगां** प्रकृतिं **जहाति** त्यजतीत्यर्थः। **इत्यादी**त्यादिपदेन—"अविद्यायामन्तरे वर्त्तमाना" "अनादिमायया सुप्त" इत्यादि-श्रुतिपरिग्रहः। ननूदाहृतासु श्रुतिषु मायाया एकत्वं प्रातिपदिकबलाद् विज्ञायते एकवचनबलाद्वा ? नाद्यः, प्रातिपदिकस्य मायाशब्दस्यैकत्वानभिधायकत्वात्, विशेषणी-भूतस्यैकप्रातिपदिकस्य च बहुवचनस्वारस्यादेकजातीयार्थकत्वौचित्यात्। न द्वितीयः, बहुवचनस्यापि विद्यमानत्वादित्यत आह—**एकवचने**ति। एकस्य बहुवचनस्यानुरोधेन बहूनामेकवचनानां जातिपरत्व-वर्णनापेक्षया बहूनामेकवचनानामनुरोधेनैकस्य बहुवचन-स्याऽन्याभिप्रायकत्वं युक्तमिति भावः। नन्वेकवचनश्रुतीनां बहुत्वेऽपि नैकत्वसिद्धिः, एकेनापि बलवता बहूनामन्यथात्वदर्शनात्, एकेनापि बलवता बाधकज्ञानेन बहूनां

**ततश्च तदुपहितं चैतन्यमीश्वरसाक्षि। तच्चानादि, तदुपाधेर्मायाया अनादित्वात्। मायावच्छिन्नं चैतन्यं परमेश्वरः। मायाया विशेषणत्वे ईश्वरत्वम्, उपाधित्वे साक्षित्वमितीश्वरत्व-साक्षित्वयोर्भेदः। न तु धर्मिणोरीश्वर-साक्षिणोर्भेदः। स च परमेश्वर एकोऽपि स्वोपाधिभूत-माया-निष्ठ-सत्त्व-रजस्तमोगुणभेदेन ब्रह्म-विष्णु-महेश्वरादि-शब्दवाच्यतां भजते।**

प्रमाणामेकेनापि विधिना बहूनामर्थवादानामन्यथात्व-दर्शनादित्यत आह—**लाघवानुगृहीतेनेति**। मायाया बहुत्वे ईश्वरस्यापि बहुत्वं स्यात्, तदवच्छिन्नचैतनस्यैवेश्वरत्वात्। न च तदिष्टम्, एकेनैव सर्वज्ञेनैकयैव च मायया सर्वोपपत्तौ सर्वज्ञान्तरकल्पनाया वैयर्थ्यादित्यादि-लाघवतर्क-सहितेनेत्यर्थः। तथा च लाघवतर्क-सहितस्यैकवचनस्य बलवत्त्वात् तद्विरोधेन बहुवचनस्यान्याभिप्रायकत्त्वं युक्तमिति भावः। ईश्वरसाक्ष्येकत्वमुपसंहरति—**ततश्चेति**। तस्मान्मायैकत्व-निश्चयादित्यर्थः। **तदुपहितं** मायोपहितम्। **ईश्वरसाक्षीति**। एकमिति शेषः, तदुपाधिभूताया मायाया एकत्वादिति भावः। **तच्च** ईश्वरसाक्षिचैतन्यञ्च। **अनादि** अजन्यम्, ईश्वरस्येश्वरसाक्षिणश्च कार्यत्वे तयोः किमपि कारणमभ्युपगन्तव्यम्। ततश्च यस्मात् कारणादीश्वरस्येश्वरसाक्षिणश्चोत्पत्तिस्तस्मादेव सर्वजगदुत्पत्तिः कल्प्यताम्, किमन्तर्गडुनेश्वरेणेति तस्य जगत्कर्तृत्वोपपत्तयेऽनादित्वमभ्युपगन्तव्यम्। ईश्वरस्यानादित्वे हेतुमाह—**तदुपाधे**रिति। ईश्वरसाक्ष्युपाधेरित्यर्थः।

**ईश्वर**स्वरूपं दर्शयति—**मायावच्छिन्न**मिति। **परमेश्वरः** ईश्वरः। सोऽप्येकोऽनादिश्चेति शेषः। ईश्वरत्वसाक्षित्वयोर्भेदे हेतुमाह—**मायाया** इति। ननु धर्मयोरीश्वरत्व-साक्षित्वयोर्भेदे तद्धर्मिणोरपीश्वरसाक्षिणोर्भेदः स्यात्, अन्यथा गवाश्वयोरपि भेदो न स्यादित्यत आह—**न त्विति**। न हि धर्मभेदो धर्मिभेदे हेतुः, सत्यप्येकधर्मिगतानां नानाधर्माणां पाचकत्व-पाठकत्वादीनां भेदे धर्मिणो देवदत्तस्य भेदादर्शनात्। किन्तु विरुद्धधर्म एव धर्मिभेदकः। ईश्वरत्व-साक्षित्वे तु न विरुद्धे, तयोरेकचैतन्यवृत्तित्वात्। तस्मात्तयोर्न भेदकत्वमिति भावः। नन्वीश्वरोपाधिभूताया मायाया एकत्वे ईश्वरस्याप्येकत्वात् तस्य बहुरूपत्वं न स्यात्। न ह्येकस्मादेकजातीयाद्वा विजातीय-कार्योद्भवः सम्भवति। तथा चोक्तं न्यायकुसुमाञ्जलौ—"एकस्य न क्रमः क्वापि वैचित्र्यं च समस्य ने"ति। उक्तञ्च तस्य बहुरूपत्वं—"पुरुरूप ईयत" इति। तथा ब्रह्मविष्ण्वादिभेदेन तद्भेदव्यपदेशोऽपि न स्यात्। अस्ति च तद्भेदव्यपदेशो ब्रह्मा विष्णुर्महेश्वर इति। न चैष ब्रह्मादीनां भेद-

**नन्वीश्वर-साक्षिणोरनादित्वे "तदैक्षत बहु स्यां प्रजायेये"त्यादिना सृष्टिपूर्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते। उच्यते। यथा विषयेन्द्रिय-सन्निकर्षादि-कारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते। तथा सृज्यमान-प्राणिकर्म-वशेन परमेश्वरोपाधिभूत-मायाया वृत्तिविशेषा इदमिदानीं स्रष्टव्यमिदमिदानीं पालयितव्यमिदमिदानीं संहर्त्तव्यमित्याकारा जायन्ते। तासां च वृत्तीनां सादित्वात् तत्प्रतिबिम्बित-**

व्यपदेशो नेश्वरस्येति वाच्यम्, तेषामीश्वरत्वप्रसिद्धेः। तथा च शास्त्रं—"ईशानः सर्वविद्यानामीश्वरः सर्वभूताना"मितीत्यत आह—**स्वोपाधी**ति। परमेश्वरचैतन्योपाधिभूता या माया, तन्निष्ठा तद्घटका ये सत्त्वरजस्तमोगुणास्तेषां भेदेनेत्यर्थः। तथा चैकमेवेश्वर-चैतन्यं यदा सत्त्वप्रधान-मायावच्छिन्नं भवति, तदा तद्विष्णुनाम्ना, यदा च रजःप्रधान-मायावच्छिन्नं, तदा तदेव ब्रह्मनाम्ना, यदा च तमःप्रधान-मायावच्छिन्नं, तदा तदेव महेश्वर-नाम्ना व्यपदिश्यते। एवञ्च गुणत्रयकार्यविशेषनिबन्धनोऽयमीश्वरस्य रूपभेदो न स्वरूप-भेदनिबन्धन इति भावः। तथा च मैत्रेयोपनिषद्—अथ यो ह खलु वास्य राजसोऽंशोऽसौ स योऽयं ब्रह्मा। अथ यो ह खलु वाऽस्य तामसोऽंशोऽसौ स योऽयं रुद्रः। अथ यो ह खलु वाऽस्य सात्त्विकोऽंशोऽसौ स योऽयं विष्णुरिति। विष्णुपुराणञ्च—"सर्गस्थित्यन्तकरणाद् ब्रह्मविष्णुशिवात्मिकाम्। स संज्ञां याति भगवानेक एव जनार्दनः॥" इति।

ईश्वर-साक्षिज्ञानस्य जन्यत्वमुपपादयितुं शङ्कते—**नन्वि**ति। **तदि**ति। **तत्** सर्वज्ञ-मद्वितीयं सच्छब्दवाच्यं ब्रह्म **ऐक्षत** ईक्षणमालोचनमकरोदित्यर्थः। तत् कथमैक्षतेत्याह—**बहु स्या**मिति। **बहु** प्रभूतं **स्यां** भवेयम् **प्रजायेय** प्रकर्षेणोत्पद्येयेत्यर्थः। **इत्यादी**-त्यादिपदेन—"स ऐक्षत लोकान्नु सृजा इती"त्यादि-श्रुतिपरिग्रहः। **आगन्तुकं** निमित्तजन्यम्। **ईक्षणं** दर्शनमालोचनमिति यावत्। **कथ**मुपपद्यत इति। किमाक्षेपे, नोपपद्यत इत्यर्थः। ईश्वरस्येश्वरसाक्षिणश्चानादित्वान्नित्यज्ञानवत्त्वाद् ज्ञानसाधनानां शरीरेन्द्रियादीनामभावात् तज्ज्ञानस्यानादित्वं युक्तमिति भावः। शङ्कासमाधानमाह—**उच्यत** इति। **सन्निकर्षा**दित्यादिशब्देन व्याप्तिज्ञानादि-परिग्रहः। **जीवो-पाध्यन्तःकरणस्य** जीवचैतन्ये विशेषणीभूतस्यान्तःकरणस्य, अन्तःकरणस्योपाधितादशायामन्तःकरणवृत्त्यभाव इति भावः। **प्राणिकर्मे**ति। जीवादृष्टेत्यर्थः। **परमेश्वरो-**पाधिभूतमायाया परमेश्वरचैतन्ये विशेषणीभूतमायाया उपाधिभूतमायायाश्च। **तत्प्रति-**

**चैतन्यमपि सादीत्युच्यते। एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञान-द्वैविध्यम्।**

**प्रत्यक्षत्वं ज्ञेयगतं ज्ञप्तिगतञ्च निरूपितम्। तत्र ज्ञप्तिगत-प्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वमेव, पर्वतो वह्निमानित्यादावपि वह्न्याद्याकार-वृत्त्युपहित-**

बिम्बितेति। मायावृत्त्यभिव्यक्तेत्यर्थः। **सादी**तीति। विशेषणीभूताया मायावृत्तेः सादित्वाद् विशिष्टस्य तद्‌वृत्त्यभिव्यक्त-चैतन्यस्यापि सादित्वं, विशिष्टस्य विशेष्य-विशेषणोभयानतिरिक्तत्वादिति भावः। प्रत्यक्षद्वैविध्यमुपसंहरति—**एवमि**ति। **साक्षि-द्वै**विध्येन जीवसाक्षीश्वरसाक्षिभेदेन।

प्रत्यक्षादिप्रमाणषट्कात् प्रत्यक्षादिज्ञानषट्कं जायते। तत्र प्रत्यक्षदशायामिन्द्रिय-सन्निकर्षाद् यज् ज्ञानं जायते, तज् ज्ञानं स्वरूपतः प्रत्यक्षम्। तस्मिंश्च ज्ञाने जायमाने घटादिर्विषयः साक्षिणा गृह्यमाणो यथा प्रत्यक्षो भवति। तथैव तज् ज्ञानमपि साक्षिणा गृह्यमाणं प्रत्यक्षं भवति। न हि ज्ञानमुत्पद्यमानमप्रत्यक्षं भवति, ज्ञातैकसत्त्वस्वभावत्वात्। अन्यथा ज्ञानमुत्पन्नं न वेति सन्देहः स्यात्। न चैवं कस्यचित् सन्देहः। तस्माद् विषय-वद् विषयज्ञानस्यापि प्रत्यक्षत्वमभ्युपगन्तव्यम्। विषयज्ञानस्य प्रत्यक्षत्वे भवत्यय-मभिलापो घटं पश्यामीति। अनुमित्यादि-दशायां तु व्याप्तिज्ञानादिना यज् वह्न्यादि-विषयकं ज्ञानं जायते, तज् ज्ञानमनुमित्यादिरूपं विषयतः परोक्षम्। तस्मिंश्चानु-मितिज्ञाने जायमाने यद्यप्यनुमेयस्य वह्न्यादेः प्रत्यक्षं न भवति, विषयेन्द्रियसन्निकर्षाद्य-भावेन प्रमातृचैतन्याभेदाभावात्, तथाप्यनुमितिः साक्षिणा गृह्यमाणा प्रत्यक्षविषयवत् प्रत्यक्षा भवति। तस्य च प्रत्यक्षस्याभिलापो वह्निमनुमिनोमीति। एवमुपमित्यादि-ज्ञानं विषयतः परोक्षमपि साक्षिणा गृह्यमाणं स्वरूपतः प्रत्यक्षं भवति। तत्र प्रत्यक्षत्वं त्रिविधं विज्ञायते घटादिविषयगतं तद्‌विषयक-प्रत्यक्षज्ञानगतं साक्षिग्राह्य-ज्ञानगतञ्चेति। तेष्वेतेषु प्रत्यक्षत्वत्रितयेषु ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं निरूपयितुं वृत्तं स्मार-यति—**प्रत्यक्षत्वमि**ति। **निरूपित**मिति। प्रमाणचैतन्यस्येत्यादि-ग्रन्थेनेति शेषः। विशेषस्य सामान्यव्याप्तत्वादादावनुमित्यादिज्ञानगतस्य तत्तत्प्रत्यक्षत्वविशेषस्य सामान्य-स्वरूपं दर्शयितुमाह—**तत्रे**ति। ज्ञेयगत-ज्ञप्तिगत-प्रत्यक्षत्वयोर्मध्ये इत्यर्थः। **ज्ञप्तिगते**ति। विषयस्य जड़त्वात् चित्त्वस्य जड़धर्मत्वायोगाद् विषयगतप्रत्यक्षत्वं चित्त्वं न भवतीत्युक्तं ज्ञप्तिगतेति। **सामान्यलक्षणं** सामान्यस्वरूपम्। तथा च ज्ञानगतप्रत्यक्षत्वस्य यत् स्वरूपं प्रागुक्तं, तन्नानुमित्यादि-ज्ञानगत-प्रत्यक्षत्व-साधारणम्, अनुमित्यादिविषयक-

**चैतन्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वात्। तत्तद्विषयांशे प्रत्यक्षत्वं तु पूर्वोक्तमेव। तस्य च भ्रान्तिरूप-प्रत्यक्षे नातिव्याप्तिः, भ्रम-प्रमा-साधारण-प्रत्यक्षसामान्य-निर्वचनेन तस्यापि लक्ष्यत्वात्। यदा तु प्रत्यक्षप्रमाया एव लक्षणं वक्तव्यम्, तदा पूर्वोक्तलक्षणेऽबाधितत्वं विषयविशेषणं देयम्।**

प्रमाणवृत्त्यनभ्युपगमात्, तेषां साक्षिमात्रग्राह्यत्वात्। अतो ज्ञप्तिगत-यावत् प्रत्यक्षत्वस्य सामान्य-स्वरूपमत्राभिहितमिति भावः। **चित्त्वं** चेतनत्वम्। अनुमित्यादीनां स्वस्वरूपांशे प्रत्यक्षत्वमुपपादयति—**पर्वत** इति। **इत्यादा**वित्यादि-पदेनोपमित्यादिज्ञान-परिग्रहः। **वृत्त्युपहिते**ति। वृत्त्यभिव्यक्तेत्यर्थः। तस्य च "प्रत्यक्षत्वादि"त्यग्रेतनेनान्वयः। नन्वनुमित्यादीनां प्रत्यक्षत्वे परोक्षप्रमाविलोपप्रसङ्ग इत्यत आह—**स्वात्मांश** इति। स्वस्वरूपांशे इत्यर्थः, स्वविषयकांशे इति यावत्। तथा च वह्न्यादिविषयकांशेऽनु-मित्यादौ परोक्षत्वं, स्वविषयकांशे तु प्रत्यक्षत्वमिति भावः। तत्प्रत्यक्षत्वे हेतुमाह—**स्वप्रकाशतये**ति। अनावृत-स्वप्रकाश-साक्षिचैतन्याभिन्नत्वेन प्रकाशमानतयेत्यर्थः। ननु तत्तज्ज्ञानगतस्य प्रत्यक्षत्वस्य यथैकं सामान्यलक्षणमुक्तम्, एवं तत्तद्विषयगतस्यापि प्रत्यक्षत्वस्य सामान्यलक्षणमुच्यतामित्यत आह—**तत्तद्विषयांश** इति। **पूर्वोक्तमेवे**ति। "घटादेर्विषयस्य प्रत्यक्षं त्वि"त्यादिना ग्रन्थेनेति शेषः। तथा च तद्ग्रन्थेन यल्लक्षण-मुक्तं, तत् सामान्यलक्षणमेव, न विशेषलक्षणम्। तत् तु स्वयमूहितुं शक्यमतोऽत्र नोक्तमिति भावः। नन्विन्द्रियार्थसन्निकर्षोत्पन्न-ज्ञानगत-प्रत्यक्षत्वापेक्षया साक्षिग्राह्य-ज्ञानगतं प्रत्यक्षत्वं यद्वदन्यत्। तद्वत् प्रमेयगत-प्रत्यक्षत्वापेक्षया भ्रमविषयीभूत-रजतादि-गत-प्रत्यक्षत्वमन्यत्, अतस्तदलक्ष्यम्। तद्वृत्तितया च पूर्वोक्तलक्षणमलक्षणमेव, किं पुनः सामान्यलक्षणमित्यत आह—**तस्य चेति**। विषयगत-प्रत्यक्षत्वसामान्यलक्षणस्येत्यर्थः। **भ्रान्तिरूपप्रत्यक्षे** भ्रमीयविषयगतप्रत्यक्षत्वे। अतिव्याप्त्यभावे हेतुमाह—**भ्रमप्रमे**ति। भ्रमप्रमासाधारण-विषयगत-प्रत्यक्षत्वेत्यर्थः। **तस्यापि** भ्रमीयविषयगत प्रत्यक्षत्वस्यापि। **लक्ष्यत्वादि**ति। तथा चोभयसाधारणैकलक्षण-निर्वचनात् तस्य सामान्यलक्षणत्वमेव, न विशेषलक्षणत्वम्। तस्य च लक्ष्ये गमनान्नातिव्याप्तिरिति भावः। किं तर्हि विशेष-लक्षणमित्यत आह—**यदा त्विति**। **प्रत्यक्षप्रमाया** प्रमेयगतप्रत्यक्षत्वस्य। **पूर्वोक्त-लक्षणे** पूर्वोक्त-विषयगत-प्रत्यक्षत्वलक्षणे। **देयमि**ति। तथा च स्वविषयवृत्त्युपहित-प्रमातृ-चैतन्यसत्तातिरिक्त सत्ताशून्यत्वे सत्यबाधितत्वे सति योग्यत्वं प्रमेयगत-प्रत्यक्षत्व-

**शुक्ति-रूप्यादि-भ्रमस्य संसार-कालीन-बाधविषय-प्रातिभासिक-रजतादि-विषयकत्वेनोक्तलक्षणाभावान्नातिव्याप्तिः।**

**ननु विसंवादिप्रवृत्त्या भ्रान्तिज्ञानसिद्धावपि तस्य प्रातिभासिक-तत्-कालोत्पन्न-रजतादि-विषयकत्वे न प्रमाणम्, देशान्तरीय-रजतस्य क्लृप्तस्यैव**

मिति विशेषलक्षणं पर्यवसितमिति भावः। नन्वेवमपि लक्षणमिदं भ्रान्तिरूपप्रत्यक्षेऽतिव्याप्तम्, तद्विषयस्य-तत्कालेऽबाधादबाधितत्वघटित-तल्लक्षणस्य तत्र सत्त्वादित्यत आह—**शुक्तिरूप्यादी**ति। **आदि**पदेन रज्जुसर्पादि-विषयक-भ्रम-परिग्रहः। **संसार-कालीने**ति। व्यवहारकालीनेत्यर्थः। **बाधे**ति। नेदं रजतमित्यादिबाधज्ञानेत्यर्थः। **प्रातिभासिके**ति। प्रतिभासकालमात्रस्थायीत्यर्थः। तथा चात्राबाधितपदेन व्यवहार-कालाबाध्यत्वं विवक्षितम्। शुक्तिरजतादिकन्तु तत्कालोत्पन्नमपि व्यवहारकालबाध्यमिति न तत्र विशेषलक्षणस्यातिव्याप्तिरिति भावः।

यत्त्वत्र परिभाषाप्रकाशिकाकृतां शिखामणिकृताञ्च प्रमागतप्रत्यक्षत्वनिरूपणपरं व्याख्यानं, तत् सङ्गतं न वेति सुधीभिर्विभावनीयम्।

ननु भ्रमप्रत्यक्षं न तत्कालोत्पन्न-रजतादिविषयकं किन्तु देशान्तरीय-सत्यरजतादि-विषयकमिति मन्यमानो नैयायिकः शङ्कते—**नन्वि**ति। **विसंवादि**प्रवृत्त्या तदर्थिन-स्तदप्राप्तिफलकप्रवृत्त्या, निष्फलप्रवृत्त्येति यावत्। **भ्रान्तिज्ञान**सिद्धाविति। नैयायिकनये यदा ज्ञानमनुव्यवसायेन गृह्यते, तदा तेनानुव्यवसायेन तद्गतं भ्रमत्वं प्रमात्वं वा नैव गृह्यते, तयोः परतोग्राह्यत्वात्, "नैयायिकास्ते परत" इत्युक्तेः। किन्तु तज्ज्ञानजन्यया प्रवृत्त्या तदनुमीयते। तथा च प्रयोगः—शुक्तिरजतादिविषयकं ज्ञानं भ्रमः विसंवादि-प्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं यथा प्रमेति। एवंक्रमेण विसंवादिप्रवृत्त्या ज्ञानस्य भ्रमत्वनिश्चय इति भावः। **तस्य** भ्रमज्ञानस्य। **तत्कालोत्**पन्नेति। प्रतिभासकालोत्-पन्नेत्यर्थः। **न प्रमाण**मिति। तथा च शुक्तिरजताद्यनुभवो हि शुक्तिरजतादिमात्रं विषयीकरोति, न तस्य प्रतिभासकालोत्पन्नतां, तत्र तस्या अप्रकाशनात्, अन्यस्य च प्रमाणस्य तत्रौदासीन्यादिति भावः। ननु प्रत्यक्षानुभवस्य विद्यमानविषयकत्व-नियमाद् विद्यमानस्यैव रजतस्य रजतानुभवविषयत्वं वाच्यम्। न च पुरोवर्तिनि रजतं विद्यमानम्, तत्र शुक्तिमात्रस्यैव विद्यमानत्वात्। न चाविद्यमानस्य प्रत्यक्षविषयभावो दृश्यते। तस्मात् प्रत्यक्षानुभवस्य विद्यमानविषयकत्वमन्यथाऽनुपपद्यमानं विषयस्य तत्कालोत्-

**तद्विषयत्वसम्भवादिति चेन्न, तस्यासन्निकृष्टतया प्रत्यक्ष-विषयत्वायोगात्। न च ज्ञानं तत्र प्रत्यासत्तिः, ज्ञानस्य प्रत्यासत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तावनुमानाद्युच्छेदापत्तेः।**

पन्नतां कल्पयति। अन्यथा तदनुभवस्य निर्विषयत्वप्रसङ्ग इत्यत आह—**देशान्तरीये**ति। **क्लृप्तस्य** प्रसिद्धस्य, विद्यमानस्येति यावत्। **तद्विषयत्वे**ति। रजतानुभवविषयत्वेत्यर्थः। तथा च क्लृप्तस्य प्रसिद्धस्य तद्विषयत्वसम्भवे तत्र तदुत्पत्तिकल्पना न न्याय्येति भावः। नैयायिकोक्तं निराकरोति—**ने**ति। देशान्तरीय-सत्यरजतादेर्भ्रमज्ञानविषयत्वं नैव युक्तमित्यर्थः। सिद्धान्ती निषेधे हेतुमाह—**तस्ये**ति। देशान्तरीय-रजतादेरित्यर्थः। **असन्निकृष्टतया** इन्द्रियासम्बद्धतया। **प्रत्यक्ष**विषयत्वायोगादिति। तथा च देशान्तरीय-रजतादीनां वर्त्तमानत्वेऽपीन्द्रियेण सम्बन्धाभावान्न प्रत्यक्षविषयत्वम्, विद्यमानस्यैवेन्द्रिय-सम्बद्धस्य तद्विषयत्वनियमादिति भावः। ननु देशान्तरीय-रजतादिनेन्द्रियस्य लौकिक-सन्निकर्षाभावेऽप्यलौकिको ज्ञानलक्षणः सन्निकर्षोऽस्त्येव। स चावश्यमभ्युपगन्तव्यः। अन्यथा घटमहं जानामीत्याद्याकारकाऽनुव्यवसाये व्यवसायविषयस्य बाह्यस्य घटादेर्मनसा प्रत्यक्षं न स्यात्, बाह्येन घटादिना मनसः सन्निकर्षाभावात्। एवं सुरभि चन्दनमित्यादौ सौरभादेर्घटो नास्तीत्याद्यभावप्रत्यक्षादौ प्रतियोग्यादीनां सोऽयमित्यादि-प्रत्यभिज्ञायां स्मरणाद्युपनीतायास्तत्तायाश्चक्षुरादिना ग्रहणं न स्यात्, सौरभादिना चक्षु-रादेः सन्निकर्षाभावात्। तस्मादनुव्यवसाये बाह्यस्य घटादेश्चक्षुरादिना ग्रहणं सन्निकर्षं विनाऽनुपपद्यमानं चक्षुरादेर्घटादौ कश्चित् सम्बन्धं कल्पयति। एवमिदं रजतमित्यादौ भ्रमे देशान्तरीय-रजतादेश्चक्षुषा ग्रहणं सन्निकर्षं विनाऽनुपपद्यमानं रजतादौ चक्षुरादेः स्वसंयुक्त-मनः-संयुक्तात्मसमवेत-ज्ञानविषयत्वरूपं सम्बन्धं कल्पयति। स च सम्बन्धो ज्ञानलक्षण इत्यभिधीयते। तस्माद् देशान्तरीय-रजतादीनामिन्द्रियसम्बद्धत्वाद् विद्यमानत्वाच्च युक्तं प्रत्यक्षविषयत्वमिति नैयायिकोक्तमाशङ्क्य निराकरोति—**न चे**ति। **ज्ञानं** ज्ञानलक्षणा। **तत्र** देशान्तरीयरजतादौ। **प्रत्यासत्तिः** सन्निकर्षः। ज्ञानस्या-प्रत्यासत्तित्वे हेतुमाह—**ज्ञानस्ये**ति। ज्ञानलक्षणस्येत्यर्थः। **प्रत्यासत्तित्वे** सन्निकर्षत्वे। **तत एव** ज्ञानलक्षणरूपालौकिकसन्निकर्षादेव। **वह्न्यादेः** अनुमितिविषय-वह्न्यादेः। **प्रत्यक्षत्वापत्तावि**ति। इन्द्रियेण सहानुमेय-वह्न्यादेर्ज्ञानलक्षण-सन्निकर्षसत्त्वात् प्रत्यक्ष-मेव स्यान्नानुमितिः, समाने विषये प्रत्यक्षसामग्र्या अनुमितिसामग्रीतो बलवत्त्वात्,

**ननु रजतोत्पादकानां रजतावयवादीनामभावे शुक्तौ कथं तवापि रजत-मुत्पद्यते इति चेत्, उच्यते। न हि लोकसिद्ध-सामग्री प्रातिभासिक-रजतोत्पादिका, किन्तु विलक्षणैव। तथा हि—काचादि-दोष-दूषित-लोचनस्य**

अन्यथाऽनुमितिसामग्र्या बलवत्त्वे संशयानन्तरं प्रत्यक्षोच्छेदप्रसङ्गात्, परामर्शात्मक-विशेषदर्शनरूपाया बलवदनुमितिसामग्र्यास्तत्रापि सत्त्वात्! न च समाने विषयेऽनु-मितिसामग्रीतो लौकिक-प्रत्यक्षसामग्र्या बलवत्त्वेऽप्यलौकिक-प्रत्यक्षसामग्रीतोऽनुमिति-सामग्र्या बलवत्त्वाद् वह्न्यादेरनुमितिरेव स्यान्न प्रत्यक्षमिति वाच्यम्, स्थाणौ स्थाणुर्वा पुरुषो वेति संशयानन्तरं भ्रमात्मक-विशेषदर्शनात् पुरुष एवेति जायमानस्य भ्रमप्रत्यक्ष-स्योच्छेदापातात्, तत्र भ्रमप्रत्यक्ष-जनिकाया ज्ञानलक्षण-सन्निकर्षरूपाया अलौकिक-प्रत्यक्ष-सामग्र्या परामर्शात्मक-विशेषदर्शनरूपाया अनुमिति-सामग्र्याश्च सत्त्वात्, तयोरनुमितिसामग्र्या बलवत्त्वाभ्युपगमात्। न चानुमिति-सामग्रीतो दोषसहितालौकिक-प्रत्यक्ष-सामग्री बलवतीति तादृशसंशयानन्तरं भ्रमप्रत्यक्षमेव स्यात्, तत्र दोषसहिता-लौकिक-प्रत्यक्षसामग्रीसत्त्वादिति वाच्यम्, भ्रमानुमित्युच्छेदापत्तेः, तत्र दोषसहिताया अलौकिकप्रत्यक्षसामग्र्या अपि सत्त्वात्। न च भ्रमानुमित्युच्छेदो न वा संशयानन्तरं प्रत्यक्षोच्छेदः, पश्यामीत्यनुभवात्। तस्मादनुमिति-सामग्र्यपेक्षया प्रत्यक्षसामग्र्या बल-वत्त्वं वाच्यम्। तथा सत्यनुमेय-वह्न्यादेः प्रत्यक्षत्वापत्तिर्दुर्वारा स्यादिति भावः। इष्टापत्तौ दोषमाह—**अनुमानादी**ति। आदिपदेन शाब्दबोधादेः संग्रहः। समाने विषये प्रत्यक्षसामग्र्याः सर्वतो बलवत्त्वात्। तस्याश्च सर्वत्र सुलभत्वादिति भावः।

प्रातिभासिकस्य शुक्तिरजतादेस्तत्कालोत्पत्तिमाक्षिपति—**नन्वि**ति। निमित्त-कारणसहितादुपादानाद्धि भावकार्यमुत्पद्यते। न चात्र रजतस्योपादानं निमित्तं वेत्याह—**रजतो**त्पादकानामिति। **रजता**वयवादीनामिति। आदिपदेन निमित्तकारणानां परिग्रहः। **तवापि** अद्वैतमतेऽपि। शुक्तिरजतस्थले तदुत्पादहेतून्नविद्या-संप्रयोग-संस्कार-दोषान् दर्शयन्नाक्षेपं परिहरति—**उच्यत** इति। **लोक**सिद्धसामग्री पराभिमत-सत्य-रजतोत्पाद-सामग्री रजतावयवादिरूपा। **विलक्षणै**वेति। सत्य-रजतापेक्षया शुक्तिरजतादेर्विलक्षणत्वात् तत्कारणेनापि विलक्षणेन भवितव्यम्, एकस्मादेकजातीयाद् विजातीयकार्योत्पत्तेरनभ्युपगमादिति भावः। ननु शुक्तिरजतं सत्यरजताद् विलक्षणं चेत् कथं तस्य रजतभावेन व्यवहार इदं रजतमिति। न हि पटविलक्षणो घटः पट-

**पुरोवर्त्ति-द्रव्य-संयोगादिदमाकारा चाकचिक्याकारा च काचिदन्तःकरण-वृत्तिरुदेति। तस्यां च वृत्ताविदमंशावच्छिन्नं चैतन्यं प्रतिबिम्बते। तत्र**

भावेन व्यवह्रियते इत्याशङ्कां निराकुर्वन्नादौ कारणवैलक्षण्यं दर्शयितुमुपक्रमते—**तथा** हीति। प्रातिभासिकोत्पत्तेर्दोषरूपं निमित्तकारणं दर्शयति—**काचादी**ति। काचादयो दोषाः, काचादिदोषास्तैर्दूषिते लोचने यस्येति विग्रहः। काचो नेत्ररोगविशेषः। स चान्तरीक्षगतानां चन्द्रादित्यादीनां तेजसाञ्चाग्नयादीनां भ्राजिष्णूनाञ्च सुवर्णादीनां सामान्यधर्माणाञ्च दर्शनाप्रतिबन्धकोऽप्यन्येषां पदार्थानां विशेषधर्माणाञ्च दर्शनप्रतिबन्धकः। तथा चोक्तं शुश्रुते—तस्मिन्नपि तमोभूते नातिरूढ़े महागदे। चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतः। निर्मलानि च तेजांसि भ्राजिष्णूनि च पश्यती"ति। अयञ्च करणगतो दोषः। आदिपदेन विषयगत-दोषस्य सादृश्यादेः प्रमातृगत-दोषस्य रागादेश्च परिग्रहः। तस्माच्च दोषादधिष्ठानविशेषांशस्य शुक्तित्वादेरधिष्ठानाध्यस्यमानयोर्भेदस्य चाग्रहो भवति। संप्रयोगरूपं कारणान्तरं दर्शयितुमाह—**पुरो**वर्त्तिद्रव्येति। शुक्त्यादिद्रव्येन्द्रियसंप्रयोगादित्यर्थः, अधिष्ठानेन्द्रियसम्बन्धादिति यावत्। नन्वीन्द्रियसम्प्रयोगस्य प्रातिभासिकोत्पत्तौ कथं कारणत्वमिति चेत्, अधिष्ठानस्फुरणद्वारेति ब्रूमः। न चाधिष्ठान-स्फुरणमनावश्यकमिति वाच्यम्, अधिष्ठानतादात्म्यापन्नस्यैव प्रातिभासिकस्योत्पत्त्यवभासाभ्युपगमात्, अन्यथा केवलस्य रजतादेः प्रातिभासिकस्योत्पत्तावववभासे च रजतमिति प्रत्ययः स्यान्नेदं रजतमिति। सोपाधिकाध्यासं प्रति सादृश्यस्याकारणत्वेऽपि निरुपाधिकाध्यासं प्रति तस्य कारणत्वं येऽङ्गीकुर्वन्ति, तान् प्रति सादृश्यसद्भावं दर्शयति—**चाकचिक्या**कारेति। सादृश्याकारेत्यर्थः। न्यायनये सिद्धान्त्येकदेशिनये च सादृशस्याध्यासकारणत्वेऽपि विवरणसिद्धान्ते तस्याध्यासकारणत्वं नैवानुमतम्, तदभावेऽप्यध्यास-दर्शनात्। तथा चोक्तं विवरणे—"निरुपाधिक-भ्रमकार्यदर्शनमेव गुणावयव-सामान्याभावेऽपि केतकीगन्धसदृशः सर्पगन्ध इतिवत् सादृश्यं वा शङ्कपीतिमादाविव कारणान्तरं वा कल्पयती"तीति भावः। ननु पुरोवर्त्तिगते इदन्त्वे शुक्तित्वे चाकचिक्ये च सत्यपि समाने इन्द्रियसम्प्रयोगे कथमिदमाकारा चाकचिक्याकारा च वृत्तिर्न शुक्त्याकारा? दोषस्वभावात्, तदंशे तस्य प्रतिबन्धकत्वादिति ब्रूमः। इन्द्रिय-सम्प्रयोग-फलमधिष्ठानसाक्षात्कारं दर्शयति—**तस्या**ञ्चेति। **इदमं**शेति। न तु शुक्त्यवच्छिन्नं चैतन्यं, तदाकारवृत्तेरनुदयादिति भावः। **प्रतिबिम्बते**

**पूर्वोक्तरीत्या वृत्तेर्बहिर्निर्गमनेनेदमंशावच्छिन्नचैतन्यं वृत्त्यवच्छिन्न-चैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति। ततश्च प्रमातृचैतन्याभिन्न-विषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकाऽविद्या चाकचिक्यादि-सादृश्य-सन्दर्शन-समुद्बोधितरजत-संस्कार-सध्रीचीना काचादि-दोषसमवहिता रजतरूपार्थाकारेण रजतज्ञाना-**

अभिव्यज्यते, वृत्त्यभिव्यक्तचैतन्यस्य साक्षात्काररूपत्वादिति भावः। नन्वन्तःकरण-गतया वृत्त्या बाह्यस्येदमंशावच्छिन्न-चैतन्यस्यासम्बन्धात् कथमभिव्यक्तिरित्यत आह—**तत्रे**ति। तादृशंस्थले इत्यर्थः। **वृत्तेः** इदमाकारवृत्तेः। **निर्गम**नेनेति। विषयदेश-प्राप्ताविति शेषः। **अभिन्न**मिति। उपाध्योर्वृत्तिविषययोर्भिन्नदेशत्वाभावादिदमंशा-वच्छिन्न-वृत्त्यवच्छिन्नचैतन्ययोरभेदः। एवं विषयान्तःकरणयोरुपाध्योर्भिन्नदेशत्वाभावात् प्रमातृचैतन्य-विषयावच्छिन्नचैतन्ययोरभेदः। ततश्च विषयावच्छिन्नचैतन्य-वृत्त्यवच्छिन्न-चैतन्य-प्रमातृचैतन्यानामभेदेऽधिष्ठानसामान्यस्येदमस्तद्विषयकज्ञानस्य च प्रत्यक्षत्वं सम्पद्यत इति भावः। प्रातिभासिकस्योपादानं दर्शयितुमाह—**तत**श्चेति। अधिष्ठान-सामान्यस्य साक्षात्कारे सतीत्यर्थः। **प्रमातृ**चैतन्येति। प्रमातृचैतन्याभिन्नं यद् विषयावच्छिन्नचैतन्यमिदमवच्छिन्नचैतन्यं तन्निष्ठा तदाधारेति विग्रहः। प्रमातृचैतन्या-भिन्नेदमवच्छिन्नचैतन्याश्रितेत्यर्थः। **शुक्ति**त्वप्रकारिका शुक्तित्वविषयिणी। **अविद्ये**ति। अविद्या रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते इत्यन्वयः। अविद्याया-स्तादृशपरिणामे उद्बुद्धसंस्काररूपं सहकारिकारणान्तरं दर्शयति—**चाकचिक्यादी**ति। चाकचिक्यादिरूपं यत् सादृश्यं तस्य दर्शनेन समुद्बोधितो यो रजतसंस्कारस्तेन सध्रीचीनेति विग्रहः। आदिपदेनावयवसामान्यादिरूपस्याऽन्यादृश-सादृश्यस्य परिग्रहः। अयञ्च संस्कारस्त्रिगुणात्मकस्याज्ञानस्याङ्गाङ्गिभावरूपं गुणक्षोभं जनयति, येन रजतमेवोत्-पद्यते, नान्यत्, रजतविलक्षणस्यापि प्रातिभासिकस्य सत्यरजतवद् व्यवहारञ्च प्रवर्त्तय-तीति भावः। ननु रजतसंस्काराज् जायमानं चेद् रजतज्ञानं स्मृतिरेव स्यात् प्रत्यभि-ज्ञानं वा, न प्रत्यक्षमित्यत आह—**काचादी**ति। संस्कारस्य स्मृतिहेतुत्वेऽपि दोष-सहितस्य तस्य प्रत्यक्षहेतुत्वाभ्युपगमाद् जायमानं रजतज्ञानं प्रत्यक्षमेव स्यान्न स्मृतिः। उक्तञ्च पञ्चपादिकायां—"इह तु कारणदोषादतथाभूतावभास" इतीति भावः। ननु प्रातिभासिकोत्पत्तौ निमित्तानां दोष-सम्प्रयोग-संस्कारादीनामुपादानस्य चाज्ञानस्य समानत्वात् कथमविद्याया कदाचिद् रजतपरिणामः कदाचिद्वा रङ्गपरिणाम इत्यत आह

**भासाकारेण च परिणमते। परिणामो नामोपादान-समसत्ताक-कार्यापत्तिः।**

—**रजतरूपार्थे**ति। तथा च यत्पुरुषीया याऽविद्या यादृशसंस्कार-सहिता भवति, सा तत्पुरुषसन्निधौ तदाकारेण परिणमते, नान्याकारेण। तथा चोक्तमिष्टसिद्धौ—"यस्याज्ञानं भ्रमस्तस्य भ्रान्तः सम्यक् च वेत्ति स" इति। अत एव कस्यचित् पुरुषस्यैकस्यां शुक्तौ रजतभ्रमः कस्यचिच्च रङ्गभ्रम उपपद्यत इति भावः। दीधितिकृतस्तु विषयाकारपरिणामं नाङ्गीकुर्वन्ति। तथा चोक्तं खण्डनभूषामणौ—"न च तत्राप्यनिर्वचनीयं जलमुत्पद्यत एवेति कस्यचित् वेदान्तिनो मत इष्टापत्तिरिति वाच्यम्; तथा सति सत्त्वेनैव निर्वचनादनिर्वचनीयता-क्षतिप्रसङ्गात्। न चोत्पत्तावपि किञ्चित् प्रमाणमस्ती"ति। विस्तरस्तु तत्रैव द्रष्टव्यः। ये तु नृसिंहाश्रमानुयायिनोऽविद्यावृत्तिं नाभ्युपगच्छन्ति, तान् प्रत्याह—**रजत**ज्ञानाभासेति। रजतज्ञानवत् सत्यरजताकारवृत्तिवदाभासते इति रजतज्ञानाभासो रजताकाराऽविद्यावृत्तिस्तदाकारेणेत्यर्थः। ननु रजतं रजतज्ञानं चेदज्ञानादुत्पन्नं, कथमिदं रजतमित्यत्रेदमि रजत-तादात्म्यस्य रजतत्वस्य रजतत्वसंसर्गस्य च प्रतीतिस्तेषां तत्राभावात्, अज्ञानादनुत्पन्नत्वाच्चेत्यत आह—**चेति**। तथा चानुक्त-समुच्चयार्थक-चकारेण भ्रमविषयीभूतानां रजत-तादात्म्यादीनां तत्कालोत्पन्नत्वमुक्तं वेदितव्यम्। एवं चेदं रजतं रजतमिदमित्यनुभवद्वयानुरोधेन रजतस्य रजतत्वस्येदमि रजत-तादात्म्यस्य रजतत्वसंसर्गस्य रजते इदन्तादात्म्यस्येदन्त्व-संसर्गस्य व्यावहारिक-रजतत्वस्य तत्तदाकाराविद्यावृत्तेश्चाज्ञानादुत्पत्तिरङ्गीकरणीयेति भावः। तथाचोक्तं लघुचन्द्रिकायाम्—"इदमाद्यवच्छेदेन रजतादिकं तत्तादात्म्यं रजतत्वादेः संसर्गश्च रजताद्यवच्छेदेनेदमादेस्तादात्म्यमिदन्त्वादेः संसर्गश्चेति जायते। भ्रमस्थले भ्रमकाले बाध्यस्योत्पत्ति-स्वीकारादि"ति। संक्षेपशारीरककृतस्त्वध्यस्तस्यैव भ्रमे स्फुरणमङ्गीकुर्वन्तो भ्रमविषयीभूतानां सर्वेषां तत्कालोत्पन्नत्वमाहुः। तथा चोक्तं संक्षेपशारीरके—"अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत् कथञ्चन परिस्फुरति भ्रमेष्वि"ति। अद्वैतरत्नरक्षणे च—"यदा पुनरिदं रजतमित्येकैवाविद्यावृत्तिरिदमंशमपि कल्पितं रजतगतमेव गृह्णाति न शुक्तिगतमि"ति। नन्वेवमप्येषामज्ञानं नोपादानं स्यात्, तदनुविद्धतया तेषामप्रतीतेरिदमंशानुविद्धतया प्रतीतेश्चेति चेन्न, शुक्त्यज्ञानस्य तावदन्वयव्यतिरेकाभ्यां कारणत्वावगमात् तस्यैवोपादानत्व-कल्पनात्, अन्यथा शुक्तिज्ञानाद् रजतनाशाभाव-प्रसङ्गात्, उपादाननाशमन्तरा कार्यनाशायोगात्, उपादेये उपादानानुवेधनियमाभावाच्च, रूपं घटः

**विवर्त्तो नामोपादान-विषमसत्ताक-कार्यापत्तिः। प्रातिभासिक-रजतं**

कपालं घट इत्याद्यप्रतीतेः, जड़त्वादिना धर्मेण कथञ्चिदनुवेधस्यात्रापि सत्त्वादिति भावः।

नन्वविद्या-परिणामश्चेद् रजतं ब्रह्मविवर्त्तो न स्याद्, ब्रह्मपरिणामस्यैव ब्रह्मविवर्त्तत्वात्, विवर्त्त-परिणामयोरभेदादित्यत आह—**परिणाम** इति। तथा च विवर्त्त-परिणामयोर्भेदाद् रजतस्य न ब्रह्मविवर्त्तता-हानिः। यथा चैतत्, तथाग्रे उपपादयिष्यत इति भावः। परिणामस्वरूपमाह—**उपादाने**ति। उपादानसमा सत्ता यस्योपादेयस्य कार्यस्य, तत् कार्यमुपादानसमसत्ताकं, तच्च तत् कार्यञ्चेत्युपादानसमसत्ताकं कार्यं, तस्यापत्तिरिति विग्रहः। तत्रोपादीयते स्वात्मनि कार्यमुत्पाद्यते येन, तदुपादानम्। तल्लक्षणन्तु स्वतादात्म्यवति कार्योत्पत्तिहेतुत्वम्। **समसत्ताके**ति। त्रिविधा सत्ता पारमार्थिकी व्यावहारिकी प्रातिभासिकी चेति। तत्राद्या त्रैकालिकनिषेधाप्रतियोगित्वरूपा ब्रह्मणः, द्वितीया ब्रह्मज्ञानेतर-ज्ञानाबाध्यत्वरूपा व्यावहारिकस्याकाशादेः प्रपञ्चस्य, तृतीया ब्रह्मज्ञानेतर-ज्ञानबाध्यत्वरूपा शुक्तिरजतादेः प्रातिभासिकस्य। यदोपादानोपादेययोरेकरूपैव सत्ता, तदा समसत्तेति भावः। **कार्या**पत्तिरिति। आपद्यमानकार्यमित्यर्थः। कार्यञ्चोपादानावस्थाविशेषः। तथा च स्वोपादानसत्ता-समसत्ताकत्वे सति कार्यत्वं परिणामत्वमिति लक्षणं पर्यवसितम्। स्वमुपादेयम्। तत्र कार्यत्वमित्युक्ते विवर्त्तेऽतिव्याप्तिस्तस्यापि कार्यत्वादत आह—**स्वोपादाने**ति। तथा च नातिव्याप्तिस्तस्य कार्यत्वेऽपि समसत्ताकत्वाभावात्। न च स्वोपादानसत्ता-समसत्ताकत्वमेव लक्षणं स्यात्, किं विशेष्यदलेनेति वाच्यम्, इष्टापत्तेः, तस्य बहुव्रीहिसमास-लभ्यान्यपदार्थ-प्रदर्शनपरत्वात्। एवञ्च शुक्त्यवच्छिन्नचैतन्यनिष्ठाया अविद्यायाः शुक्तिरजतस्य च ब्रह्मज्ञानेतर-शुक्तिज्ञानबाध्यत्वात् प्रातिभासिकत्वम्। तथा च शुक्तिरजतादेः स्वोपादान-सत्ता-समानसत्ताकत्वात् परिणामत्वमिति लक्षणसमन्वयः। ननु शुक्तिरूप्यादेरुपादानं मूलाज्ञानं चेन्न तत् समसत्ताकम्, उपादानस्य व्यावहारिकत्वादुपादेयस्य च प्रातिभासिकत्वादिति चेन्न, पारमार्थिकसत्त्वं सत्त्वेन व्यवहारविषयत्वं चेति सत्त्वद्वैविध्यमाश्रित्य समसत्ताकत्वोपपत्तेः। तथा चोक्तमाचार्येणाद्वैतसिद्धौ जगदुपादानत्वोपपत्तौ—"समान-सत्ताकत्वञ्च रूप्यस्थले सत्त्वद्वैविध्येन वा ब्रह्मज्ञानेतर-ज्ञानबाध्यत्वरूप-प्रातिभासिकत्वमादाय वोपपद्यत" इति। न च प्रातिभासिके व्यावहारिकत्वाभावः, भ्रममात्रविषयत्वरूपस्य बाधितत्वरूपस्य वा व्यावहारिकत्वस्य तत्रापि सत्त्वात्। विवर्त्तस्वरूपमाह—**उपा-**

**चाविद्यापेक्षया परिणामः, चैतन्यापेक्षया विवर्त्त इति चोच्यते। अविद्यादानेत्या**दि। पूर्ववद् विग्रहः। तल्लक्षणन्तु स्वोपादानसत्ता-विषमसत्ताकत्वे सति कार्यत्वं विवर्त्तत्वमिति पर्यवसितम्। तत्र परिणामेऽतिव्याप्तिवारणायाह—**स्वोपादाने**ति। तथा च नातिव्याप्तिः, तस्य कार्यत्वेऽपि विषमसत्ताकत्वाभावात्, तत्र समसत्ताकत्वस्यैव सत्त्वात्। विशेष्यदलन्तु पूर्ववद् व्याख्येयम्। अत्रोपादानशब्देन चैतन्यस्य स्वशब्देन चोपादेयस्य परिग्रहः। एवञ्च शुक्तिरूप्योपादानस्येदमवच्छेदे चैतन्यस्य पारमार्थिकी सत्ता, शुक्तिरूप्यस्य तु प्रातिभासिकी। तथा च शुक्तिरूप्यादेः स्वोपादानचैतन्यसत्ता-विषमसत्ताकत्वाद् विवर्त्तत्वमिति तल्लक्षणसमन्वयः। नन्वेकस्मिन् प्रातिभासिके विरुद्धयोर्विवर्त्तत्व-परिणामत्वयोः कथं समावेश इत्यत आह—**प्राति**भासिकेति। **अविद्या**पेक्षयेति। द्विविधमुपादानत्वं परिणामित्वं तत्सत्ताप्रदत्वं वा। तत्राद्यमज्ञानस्य द्वितीयन्तु सत्यज्ञानानन्दात्मक-ब्रह्मणः। यद् यदनुविद्धं जायते, तत् तदुपादानकं भवति। वियदादि-कार्यवर्गश्चैतन्यसत्तानुविद्धो जड़ानुविद्धश्च जायत इत्युभयस्याप्युपादानत्वं युक्तम्। तत्राविद्योपादानकत्वे परिणामत्वं चैतन्योपादानकत्वे तु विवर्त्तत्वम्। न हि यमपेक्ष्य परिणामत्वं तमेवापेक्ष्य विवर्त्तत्वम्। तथा च प्रतियोगिभेदादेकत्रोभयं परत्वापरत्ववन्न विरुद्धमिति भावः। नन्वेकरूपस्य कार्यस्य विरुद्धद्वयमुपादानं न भवितुमर्हति, सितासितसूत्रारब्ध-पटस्य सितासितत्ववत् कार्यस्य विरुद्धरूपत्वप्रसङ्गादिति चेन्न, विरुद्धयोरज्ञानचैतन्ययोः परिणामितयोपादानत्वानङ्गीकारात्, त्रिगुणात्मकस्याज्ञानस्य परिणामितयोपादानत्वेऽपि निर्विकारस्य निरवयवस्य ब्रह्मणस्तदसम्भवात्, तस्य च विवर्त्ताधिष्ठानतयोपादानत्वात्, तद्धर्माणां कार्यान्वयदर्शनेऽप्यविरुद्धत्वाद् विरुद्धरूपत्वानुपपत्तेः। विवर्त्ताधिष्ठानत्वञ्च विवर्त्तकारणाज्ञानविषयत्वम्। न चैवं चैतन्यस्योपादानलक्षणाभावः। स्वतादात्म्यवति कार्यजनिहेतुत्वस्य तल्लक्षणस्य परिणाम्यपरिणाम्युभयसाधारणत्वात्। नन्वेवमपि प्रातिभासिकस्याज्ञानचैतन्योभयाश्रितत्वं स्यात्, कार्यस्योपादानाश्रितत्वनियमात्, अन्यथा सितासितसूत्रारब्ध-पटस्यापि सितासितसूत्राश्रितत्वं न स्यात्। न चेष्टापत्तिः, रजते इदन्तादात्म्यवदज्ञानतादात्म्यस्य चैतन्यतादात्म्यस्य च प्रतीतिप्रसङ्गादित्यत आह—**अविद्या**परिणामेति। **अविद्या**धिष्ठाने अविद्याधारे। यथा ज्ञानमाश्रयविषयनिरूप्यं, ...ऽज्ञानमपि। तत्रेदमवच्छिन्नं चैतन्यमविद्याया आधारः, स्वोपादानाज्ञानाश्रयस्यैवाधारत्वात्। शुक्त्यवच्छिन्नं चैतन्यं त्वधिष्ठानं, स्वोपादानाज्ञान-

**परिणामरूपं च तद्‌ रजतमविद्याधिष्ठान इदमवच्छिन्न-चैतन्ये वर्त्तते, अस्मन्मते सर्वस्यापि कार्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात्।**

**ननु चैतन्यनिष्ठ-रजतस्य कथमिदं रजतमिति पुरोवर्त्ति-तादात्म्यम्?**

विषयस्यैवाधिष्ठानत्वादित्यधाराधिष्ठानयोर्भेदः। तत्राविद्यापरिणामस्य प्रातिभासिकस्याधिकरणमविद्याधारो नाधिष्ठानमिति भावः। अविद्यापरिणामस्येदमवच्छिन्नचैतन्ये वृत्तौ हेतुमाह—**अस्मन्मत** इति। विवरणमत इत्यर्थः। सर्वस्यापि कार्यस्य प्रातिभासिकस्य व्यावहारिकस्य च। **स्वोपादाने**ति। स्वस्य प्रातिभासिकस्य व्यावहारिकस्य चोपादानभूताया अविद्याया यदधिष्ठानमधिकरणं, तदाश्रितत्वनियमादित्यर्थः। यद्यप्यविद्यापरिणामस्योभयमुपादानमज्ञानं चैतन्यञ्चेति। तथापि तस्य चैतन्यमाश्रयो नाज्ञानम्, दोषस्याज्ञानस्य स्वाश्रयगतकार्यजनकत्वनियमात् तत्र तस्योत्पादात्। तथाचोक्तं विवरणे—"इहापि चित्स्वरूपमात्रसम्बन्ध्यज्ञानं तत्र जीवब्रह्मव्यवहारभेदं प्रवर्त्तयती"ति। किञ्चाज्ञानं यद्याश्रयः स्यात्, तस्य प्रतिभासो न स्यात्, अज्ञानस्य जड़त्वात्। तस्मात् प्रातिभासिकं चैतन्याश्रितं, नाज्ञानाश्रितमिति भावः।

वस्तुतस्तु कार्यस्योपादानाश्रितत्वनियमादज्ञानाश्रितत्वमप्यङ्गीकरणीयम्, अन्यथोपादाननाशेऽप्युपादेयानाशप्रसङ्गात्, उपादानाश्रितस्यैवोपादाननाशे नाशाभ्युपगमात्। किञ्चाविद्यापरिणामस्याविद्यानाश्रितत्वे तत्तादात्म्यप्रतिभासो न स्यात्, उपादानाश्रितेष्वेवोपादानतादात्म्यदर्शनात्। न चोपादानतादात्म्यानुपलम्भः, जड़तादात्म्यस्योपलम्भात्, अज्ञानस्य जड़त्वात्। न चेदन्तादात्म्यवदज्ञानतादात्म्यस्याप्युपलम्भः स्यादिति वाच्यम्, उपादेये उपादानसर्वरूपानुवृत्तौ प्रमाणाभावादुपादेयत्व-व्याघाताच्च।

प्रातिभासिकस्य चैतन्याश्रितत्वमाशङ्कते—**नन्वि**ति। **चैतन्य**निष्ठस्य चैतन्याश्रितस्य चैतन्ये तादात्म्येनोत्पन्नस्य। **कथ**मित्याक्षेपे प्रश्ने वा। **पुरो**वर्त्तितादात्म्यमिदन्तादात्म्यम्। यद् यत्र तादात्म्येनोतपद्यते, तत् तदभिन्नतया तदाश्रिततया च प्रतीयते। यथा मृद्‌घटो मृदि घट इति। प्रातिभासिकं चेत् चैतन्ये तादात्म्येनोत्पन्नं चैतन्याभिन्नतया चैतन्याश्रिततया च प्रतीयेत चैतन्यं रजतमिति। न च तथा प्रतीयते, इदं रजतमितीदन्तादात्म्यप्रतीतेः। तच्चायुक्तम्, अन्योपादेयस्यान्यतादात्म्यायोगात्। न चेदमेव चैतन्यं, तस्य तदवच्छेदकत्वात्, चैतन्यस्यावच्छेद्यत्वात्, अवच्छेद्यावच्छेदकयोर्भेदात्। तस्मात् प्रातिभासिकस्य रजतस्य चैतन्यतादात्म्यं

**उच्यते। यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेनोपलम्भः, शरीरस्य सुखाद्यधिकरणतावच्छेदकत्वात्। तथा चैतन्यमात्रस्य रजतं प्रत्यनधिष्ठानतयेदमवच्छिन्नचैतन्यस्य तदधिष्ठानत्वेनेदमोऽवच्छेदकतया रजतस्य पुरोवर्त्ति-संसर्ग-प्रत्यय उपपद्यते। तस्य च विषयचैतन्यस्य तदन्तः-**

युक्तम्, नेदन्तादात्म्यमिति पूर्वपक्षाशयः। आशङ्कां निराकरोति—**उच्यते** इति। **न्याय**मते इति। स्वमते सुखादेरन्तःकरणधर्मत्वाभ्युपगमादिति भावः। **आत्म**निष्ठ-स्यात्मनि समवायेनोत्पन्नस्यात्माश्रितस्य। **शरीर**निष्ठत्वेन शरीराश्रितत्वेन शरीरे मे सुखमित्याद्याकारेणेत्यर्थः। तादृशोपलम्भे हेतुमाह—**शरीरस्ये**ति। **सुखा**द्यधिकरणेति। आदिपदेन दुःखादिपरिग्रहः। न्यायमते शरीरावच्छेदे शरीरान्तर्गते आत्मनि सुखादिक-मुत्पद्यते। आत्मा च सुखादीनां समवायिकारणम्। अत आत्मा सुखाद्यधिकरणम्। तदधिकरणता तु तत्रैव। तस्याश्च सुखाद्यधिकरणताया अवच्छेदकं तावच्छरीरं, तस्य सुखाद्यधिकरणतायाः समानाधिकरणधर्मत्वात्, समानाधिकरणधर्मस्यैवावच्छेदकत्वात्। अतश्चात्मा शरीरावच्छिन्नः। तस्मिन् शरीरावच्छिन्ने आत्मन्याश्रितस्य सुखस्य यथात्मनि संसर्गानुभवोऽहं सुखीति। तथा तदवच्छेदके शरीरेऽपि संसर्गानुभवो देहे मे सुख-मिति। तत् कस्मात्? शरीरस्यावच्छेदकत्वात्, अवच्छेद्यावच्छेदकयोर्भेदेऽप्यवच्छेद्य-गत-पदार्थस्याऽवच्छेदकेऽपि भानदर्शनात्, अन्यथा शरीरे मे सुखमित्यादिप्रतीत्यनुपपत्ते-रिति भावः। दृष्टान्तानुसारेण दार्ष्टान्तिकं योजयितुमाह—**तथे**ति। **चैतन्य**मात्रस्य शुद्धचैतन्यस्य। **रजतं** शुक्तिरजतम्। **अनधिष्ठान**तयेति। यदि शुद्धचैतन्यं रजतस्याधिष्ठानं स्यात्, संसारदशायामज्ञानरजतयोर्बाधो न स्यात्, अधिष्ठानसाक्षात्-काराभावात्, तस्यैवाज्ञाननाशद्वाराऽध्यस्तनाशकत्वात्। तथा रजते इदन्तादात्म्यमपि न प्रतीयात्, इदमोऽनधिष्ठानत्वात्। तस्माच्छुद्धं न रजताधिष्ठानमिति भावः। किं तर्ह्यधिष्ठानमित्यत आह—**इदम**वच्छिन्नेति। **तदधि**ष्ठानत्वेनेति। शुक्तिरजता-धिष्ठानत्वेनेत्यर्थः। तथा चेदमवच्छिन्नचैतन्यस्याधिष्ठानत्वे संसारदशायामधिष्ठान-साक्षात्कारोदयादज्ञानरजतयोर्बाधो रजते इदन्तादात्म्यप्रतीतिश्च स्यातामिति भावः। नन्वस्त्विदमवच्छिन्नं चैतन्यमधिष्ठानं, तथापि रजतस्येदंतादात्म्यं कथमित्याशङ्क्य तत्र हेतुमाह—**इदमो**ऽवच्छेदकतयेति। इदमवच्छिन्नचैतन्यस्याधिष्ठानत्वादिदमोऽवच्छेदक-त्वमिति भावः। इदमोऽवच्छेदकत्वे फलं दर्शयति—**रजत**स्येति। **पुरो**वर्त्तिसंसर्ग-

**करणचैतन्याभिन्नतया विषयचैतन्याध्यस्तमपि रजतं साक्षिण्यध्यस्तं केवल-साक्षि-वेद्यं सुखादिवदनन्यवेद्यमिति चोच्यते।**

प्रत्ययः इदंतादात्म्यप्रत्ययः। तथाच यथा सुखाधिकरणस्यात्मनोऽवच्छेदके शरीरे सुखस्य संसर्गप्रत्ययो भवति, तद्वद् रजताधिकरणस्यावच्छेदके इदमि रजतस्य तादात्म्य-प्रत्ययो भवितुमर्हतीति भावः।

वस्तुतस्तु चेतनोपादानकस्य रजतस्येदन्तादात्म्ये इदमोऽवच्छेदकत्वं न कारणं, दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्, सुखादीनां शरीरादौ भेदसंसर्गानुभववदिम्यपि रजतस्य भेदसंसर्गानुभवप्रसङ्गात्, दृष्टान्ते तथैव दृष्टत्वात्। न च तथा, इदमभिन्नतयैव रजतस्यानुभवात्। तस्मादन्यः कोऽपि हेतुः कल्पनीयः। स चान्योन्याध्यास इति ब्रूमः। तथा चेदमवच्छिन्नचैतन्ये रजतस्य रजते चेदमवच्छिन्नचैतन्यस्य तादात्म्याध्यासाद् रजते इदन्तादात्म्यानुभवः सत्तादात्म्यानुभवश्चोपपन्नो भवति।

ननु रजतस्येदमवच्छिन्नचैतन्याध्यस्तत्वेऽपि प्रकाशके साक्षिण्यनध्यस्ततया सम्बन्धाभावात् प्रत्यक्षं न स्यात्, प्रकाशकसम्बन्धस्य प्रकाशहेतुत्वादित्याशङ्क्य तस्य साक्षिसम्बन्धं दर्शयन् प्रत्यक्षत्वमुपपादयितुमाह—**तस्य चे**ति। येन पुरोवर्त्तिना रजतस्य तादात्म्यप्रत्ययस्तस्येत्यर्थः। **विषय**चैतन्यस्य इदमवच्छिन्नचैतन्यस्य। **तदन्तः**-करणेति। यत्पुरुषीयाविद्ययेदमवच्छिन्नचैतन्ये रजतमुत्पन्नम्, तत्पुरुषीयान्तःकरणावच्छिन्नचैतन्येनेदमवच्छिन्नं चैतन्यमभिन्नम्, इदमाकारवृत्तेर्बहिर्निगमनेनोपाधीनामन्तः-करणेदमाकारवृत्तीदंरूपविषयाणां भिन्नदेशत्वाभावादिति भावः। नन्वस्त्विदमवच्छिन्न-चैतन्यस्यान्तःकरणावच्छिन्नचैतन्येनाभेदस्तथापि रजतस्य साक्षिसम्बन्धः कथमित्यत आह—**विषय**चैतन्याध्यस्तमपीति। इदमवच्छिन्नचैतन्याध्यस्तमपीत्यर्थः। **साक्षिण्य**-ध्यस्तमिति। इदमवच्छिन्नचैतन्यान्तःकरणावच्छिन्नचैतन्ययोरभेदे इदमवच्छिन्नचैतन्यान्तः-करणोपहितचैतन्ययोर्विषयसाक्षिणोरप्यभेदो भवति, अन्तःकरणावच्छिन्नचैतन्यान्तःकरणो-पहितचैतन्ययोरभेदात्। एवञ्चेदमवच्छिन्नचैतन्याध्यस्तं रजतं साक्षिण्यप्यध्यस्तं तादात्म्येन सम्बद्धं भवति, इदमवच्छिन्नचैतन्य-साक्षिचैतन्ययोरभेदात्। तथा चेदमवच्छिन्न-चैतन्याश्रितस्य रजतस्य साक्षात् साक्षिसम्बन्धाद् युक्तं प्रत्यक्षत्वमिति भावः। नन्वन्तः-करणवृत्तिसंसृष्टस्यैव साक्षिग्राह्यत्वं सर्वत्रैव दृष्टम्। न च रजतमन्तःकरणवृत्तिसंसृष्टं, तद्गोचरान्तःकरणवृत्त्यनभ्युपगमात्, तत् कथं तत् साक्षिग्राह्यमित्यत आह—**केवले**ति।

**ननु साक्षिण्यध्यस्तत्वेऽहं रजतमित्यहं रजतवानिति वा प्रत्ययः स्यादहं**

केवलेनान्तःकरणवृत्तिनिरपेक्षेण साक्षिणा वेद्यमित्यर्थः। प्रमेयाणां ग्रहणे साक्षी स्वस्मिन् विषयसम्बन्ध-लाभाय प्रमाणवृत्तिमपेक्षते, प्रमेयाणां बाह्यत्वेन स्वतः साक्षिसम्बन्धाभावात्। प्रातिभासिकस्य तु ग्रहणे न तदपेक्षा, तस्य साक्षात् साक्षिसम्बद्धतयैवोत्पन्नत्वात्। तथा च प्रातिभासिकानां ग्रहणेऽन्तःकरणवृत्तेः प्रयोजनाभावात् तेषां केवलसाक्षिवेद्यत्वम्। एवञ्च किञ्चिद् वस्त्वन्तःकरणवृत्तिसापेक्ष-साक्षिग्राह्यम्, किञ्चिचान्तःकरणवृत्ति-निरपेक्ष-साक्षि-ग्राह्यमिति भावः। नन्वन्तःकरणवृत्तिनिरपेक्ष-साक्षिग्राह्यत्वं क्व दृष्टमित्याशङ्कायां दृष्टान्त-माह—**सुखा**दिवदिति। आदिपदेनान्तःकरणधर्मस्याहङ्कारादेश्च परिग्रहः। यथा सुख-दुःखादिग्रहणे प्रमाणव्यापारो नास्ति, फलाभावात्, आन्तराणां तेषां साक्षात् साक्षि-सम्बद्धतयैवोत्पन्नत्वात्, ज्ञातैकसतां तेषां ज्ञानात् पूर्वमविद्यमानतया तत्र प्रमाणव्यापारा-सम्भवाच्च। तथा प्रातिभासिकग्रहणेऽपि प्रमाणव्यापारो नास्ति, फलाभावात्, ज्ञातैकसत-स्तस्य साक्षात् साक्षिसम्बद्धतयैवोत्पन्नस्य स्वप्रकाशे प्रमाणापेक्षाभावात्, ज्ञानात् पूर्वमविद्य-मानतया प्रमाणव्यापारासम्भवाच्चेति भावः। नन्वेवमपि दुष्टकरणानां पुरुषाणां रजतप्रति-भास-समयेऽदुष्टकरणानां सन्निकृष्टशुक्ति-सम्प्रयोगात् रजतप्रतीतिः स्यात्, तदीयान्तः-करणावच्छिन्नचैतन्याभिन्नेदमवच्छिन्नचैतन्ये तस्याध्यासात् साक्षात् साक्षिसम्बद्धत्वाच्चेत्यत आह—**अनन्य**वेद्यमिति। अन्यवेद्यमदुष्टकरणवेद्यं नेत्यर्थः। तथा च यत्पुरुषीयदोषेणाविद्या परिणमते, तेनैव पुरुषेण स परिणामो गृह्यते, नान्येन पुरुषेण सुखादिवदिति भावः।

नन्वेवमपि सुखादीनामन्तःकरण-धर्माणां साक्षिचैतन्येऽध्यासादविद्याधिष्ठानता-वच्छेदकेनाऽहङ्कारेण सम्बन्धाद् यथाऽहं सुखीति प्रतीतिर्जायते, तथा रजतादीनामपि प्रातिभासिकानां साक्षिण्यध्यासादधिष्ठानतावच्छेदकेनाऽहङ्कारेण सम्बन्धादहं रजतमिति प्रतीतिर्जायताम्, अविद्याधारतावच्छेदकाभेदेनैवाध्यस्तावभास-नियमात्, इदमोऽविद्या-धारतावच्छेदकवदहङ्कारस्याप्यविद्याधारतावच्छेदकत्वादिति शङ्कते—**नन्वि**ति। **साक्षि-णी**ति। शुक्तिरजतस्येत्यादिः। नन्वहं रजतमिति रजताहङ्कारयोरभेदापादनेऽहं सुखीत्ययं दृष्टान्तो न युक्तः, तत्र सुखाहङ्कारयोर्भेदप्रतिभासात्, अहमः सुखाश्रयतया बोधादिति चेन्न, यथा सुखादेः साक्षिचैतन्याध्यासादहमाकार-प्रतीतिविषयत्वं, तथा रजतादेरपि स्यादित्यंशे तस्य दृष्टान्तत्वात्। मास्तु रजताहङ्कारयोरभेदो भेदस्तु स्यादहं सुखीतिवदित्याह—**अहं** रजतवानिति। अहमाकारप्रतीति-विषयत्वस्य परोप-

**सुखीतिवदिति चेत्। उच्यते। न हि सुखादीनामन्तःकरणावच्छिन्न-चैतन्यनिष्ठाऽविद्याकार्यत्वप्रयुक्तमहं सुखीति ज्ञानम्, सुखादीनां घटादिवच्छुद्धचैतन्य एवाध्यासात्। किन्तु यस्य यदाकारानुभवाहित-संस्कार-सहकृताविद्याकार्यत्वं तस्य तदाकारानुभव-विषयत्वमित्येवानुगतं नियामकम्।**

कल्पितं प्रयोजकमनूद्य निराकरोति—**न ही**ति। **अहं** सुखीति ज्ञानं सुखादीनामन्तःकरणावच्छिन्न-चैतन्यनिष्ठाविद्याकार्यत्व-प्रयुक्तं नेत्यन्वयः। **सुखा**दीनामित्यादिपदेन दुःखादिपरिग्रहः। **अन्तः**करणेति। अन्तःकरणावच्छिन्नं यत् चैतन्यं, तन्निष्ठा याऽविद्या, तस्या यत् कार्यं, तन्निष्ठं यत् तादृशकार्यत्वं, तेन प्रयुक्तमिति विग्रहः। **अन्तः**करणावच्छिन्नचैतन्यनिष्ठेति। साक्षिचैतन्यनिष्ठेत्यर्थः। **प्रयुक्त**मिति। प्रयोज्यमित्यर्थः। तथा च सुखादिकं यद्यन्तःकरणावच्छिन्न-चैतन्यनिष्ठाविद्या-कार्यं स्यात्, स्यादहं रजतमित्यहं रजतवानिति वा प्रत्ययः। न च तत् तत्कार्यं, न वा तत्कार्य-प्रयुक्तम्, तत् कथं तस्याहङ्कारप्रतीतिविषयत्वं स्यादिति भावः। सुखादीनामन्तःकरणावच्छिन्नचैतन्यनिष्ठाविद्या-कार्यत्वाभावे हेतुमाह—**सुखा**दीनामिति। **घटा**दिवदिति। यथा घटादिकं शुद्धचैतन्याध्यस्तं शुद्धचैतन्यनिष्ठाविद्याकार्यं,तथेत्यर्थः। **अध्यासा**दिति। तथा च शुद्धचैतन्याध्यस्तं शुद्धचैतन्यनिष्ठाविद्याकार्यं हि सुखादिकं,नान्तःकरणावच्छिन्न-चैतन्यनिष्ठाविद्याकार्यम्। तस्मात् तत्कार्यत्वं नाहमाकारप्रतीतिविषयत्वस्य प्रयोजकमिति भावः। किं तर्हि प्रयोजकमित्यत आह—**किन्त्वि**ति। **यदाका**रेति। यदाकारानुभवाहित-संस्कारसहकृत-वृत्तिविषयत्वमित्यर्थः। यथाश्रुते त्वज्ञोऽहमित्यादिप्रतीत्यनुपपत्तिः, अज्ञानस्याविद्याकार्यत्वाभावात्। विवक्षितार्थग्रहणे त्वहमाकारानुभवविषयत्वस्य नानुपपत्तिः, अज्ञानस्याविद्याकार्यत्वाभावेऽप्यज्ञोऽहमित्याकारानुभवाहित-संस्कार-सहकृताविद्यावृत्तिविषयत्वात्। तथा च यत्र यदाकारानुभवाहित-संस्कारसहकृतवृत्तिविषयत्वं, तत्र तदाकारानुभवविषयत्वमित्यस्य नियमस्य व्यभिचाराभावात् तदाकारानुभवविषयत्वे तदाकारानुभवाहित-संस्कार-सहकृत-वृत्तिविषयत्वमेव प्रयोजकं, नान्यदिति भावः।

वस्तुतस्तु शुक्तिरजतादीनां साक्षिचैतन्याध्यासाङ्गीकारेऽपि नाहमाकारानुभवविषयत्वम्, अविद्याकार्याणामविद्याधारतावच्छेदकाभेदेनैव भाननियमादहमोऽधिष्ठानतानवच्छेदकत्वात्। तथा चोक्तं सिद्धान्तबिन्दौ—"अहङ्कारस्य शुक्तिवदधिष्ठानानवच्छेदकत्वाच्छुक्तिरजतमितिवदहं रजत इति न भ्रमाकारप्रसङ्ग" इति।

**तथा चेदमाकारानुभवाहित-संस्कार-सहकृताविद्याकार्यत्वाद् घटादेरिदमाकारानुभव-विषयत्वम्। अहमाकारानुभवाहित-संस्कार-सहकृताविद्याकार्यत्वादन्तःकरणादेरहमनुभव-विषयत्वम्। शरीरेन्द्रियादेरुभयविधानुभवाहित-संस्कार-सहकृताविद्याकार्यत्वादुभयविधानुभवविषयत्वम्। तथा चोभयविधानुभवः—इदं शरीरमहं देहः, अहं मनुष्यः, अहं ब्राह्मणः, इदं चक्षुरहं काणः, इदं श्रोत्रमहं बधिर इति। प्रकृते च प्रातिभासिक-रजतस्य प्रमातृ-**

स्वोक्तप्रयोजकस्यानुगतिमुदाहरणैर्दर्शयति—**तथा** चेति। **इदमा**कारेति। अयं घट इत्याद्याकारेत्यर्थः। **घटा**देरिति। आदिपदेन बाह्यस्य पटादेः परिग्रहः। **इदमा**कारेति। अयं घट इत्याद्याकारानुभव-विषयत्वम्, न त्वहं घट इत्याद्यनुभव-विषयत्वमिति भावः। **अह**माकारेति। अहं कर्ताऽहं भोक्तेत्याद्याकारेत्यर्थः। **अन्तः**करणादेरित्यादिपदेन मायायाः परिग्रहः। मायावृत्त्येश्वरस्याप्यहमनुभवोदयात्, बहु स्यामिति छान्दोग्यश्रुतेरिति भावः। **शरी**रेन्द्रियादेरिति। आदिपदेन शरीर-धर्माणां स्थौल्यादीनामिन्द्रिय-धर्माणां काणत्वादीनाञ्च परिग्रहः। **उभय**विधेति। अहमाकारानुभवायमाकारानुभवेत्यर्थः। उभयविधानुभवं प्रतिपादयति—**तथा** चेति। इदमाकारप्रतीतिविषयस्य देहाध्यासस्योदाहरणमाह—**इदं शरीर**मिति। अहमाकारप्रतीतिविषयस्य मनुष्यत्व-गौरत्वाद्यवान्तर-धर्म-विशिष्ट-देहाध्यासस्योदाहरणमाह—**अहं** देह इति। अहं स्थूल इत्यर्थः। अत्र देहशब्दस्य देहावान्तरधर्मविशिष्ट-देहपरत्वम्, स्वरूपतो देहत्वादि-सामान्य-धर्मविशिष्टरूपेण देहस्याध्यासानङ्गीकारात्। तथा चोक्तं पञ्चपादिकायां—"न शरीरमात्रं, देहोऽहमिति प्रतीत्यभावादि"ति। सिद्धान्तबिन्दौ च—"देहाध्यासो धर्मि-पुरस्कारेणैवाहं मनुष्य इत्याद्याकारः, न तु स्वरूपतोऽहं देह इत्यध्यासः, तथा प्रतीत्यभावादिती"ति भावः। इदमाकार-प्रतीतिविषयस्येन्द्रिय-धर्माध्यासस्योदाहरणमाह—**इदं** चक्षुरिति। इदं चक्षुष्मदित्यर्थः। अत्रापि चक्षुःशब्दस्य चक्षुर्विशिष्ट-देहपरत्वम्, चक्षुर्धर्मपरत्वं वा, इन्द्रियाणां परोक्षत्वादपरोक्षधर्मिणि तादात्म्याध्यासायोगात्। तथा चोक्तं सिद्धान्तबिन्दौ—"इन्द्रियाणान्तु परोक्षत्वान्नापरोक्षधर्म्यध्यास" इति। तथा चापरोक्षे धर्मिणि परोक्षस्य न तादात्म्याध्यास इति भावः। एवमिदं श्रोत्रमित्यत्रापि श्रोत्रशब्दस्य श्रोत्रविशिष्टदेहपरत्वं श्रोत्रधर्मपरत्वं वा बोध्यम्। **काण** इति। काणत्वं रूपाद्यग्राहकत्वम्। दृष्टान्ते नियामकमुपपाद्य दार्ष्टान्तिके तद्

**चैतन्याभिन्नेदमवच्छिन्न-चैतन्य-निष्ठाऽविद्याकार्यत्वेऽपीदं रजतमिति सत्य-स्थलीयेदमाकारानुभवाहित-संस्कारजन्यत्वादिदमाकारानुभव-विषयता, न त्वहं रजतमित्यहमाकारानुभव-विषयतेत्यनुसन्धेयम्।**

**नन्वेवमपि मिथ्यारजतस्य साक्षात् साक्षि-सम्बद्धतया भानसम्भवे रजत-**

योजयति—**प्रकृते** त्येति। शुक्तिरजत-स्थले इत्यर्थः। **प्रमातृ**चैतन्येति। प्रमातृ-चैतन्याभिन्नं यदिदमवच्छिन्नचैतन्यं, तन्निष्ठा याऽविद्या, तत्कार्यत्वेऽपीति विग्रहः। अनेन शुक्तिरजतस्य साक्षिण्यध्यस्तत्वेऽपि नाहमाकार-प्रतीति-विषयत्वं, साक्षिचैतन्या-ध्यस्तत्वस्य तत्प्रयोजकत्वानभ्युपगमादित्युक्तं वेदितव्यम्। साक्षिचैतन्याध्यस्तस्यापि शुक्तिरजतादेरिदमाकारानुभवविषयत्वे प्रयोजकमाह—**इदं** रजतमिति। **सत्यस्थली-**येति। सत्यस्थलीयो य इदमाकारानुभवस्तेनाहितो यः संस्कारस्तज्जन्यत्वादिति विग्रहः। सत्यस्थलीयशब्दस्य सत्यस्थले सत्याश्रये भव इति व्युत्पत्त्या भ्रमात्मकेत्यर्थः। तस्य चानुभवेन संस्कारेण वाऽन्वयः, विभ्रमसंस्कारस्यैव विभ्रमहेतुत्वात्। अत एवोक्तं भामत्यां—"अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतो विवर्त्ता यस्येते वियदनिल-तेजोबवनय" इति। वार्त्तिकेऽपि—पूर्वपूर्वदेहादिभ्रमसंस्कारस्योत्तरोत्तर-तद्भ्रमहेतुत्वाभ्युप-गमादिती"ति भावः। ननु देह-तद्धर्माणां यथोभयानुभवविषयत्वं, तथा शुक्तिरजतस्यापि स्यादित्यत आह—**न त्वह**मिति। ननु शुक्तिरजतादीनामहमाकारानुभव-विषयत्वा-भावे को हेतुरित्यत आह—**अनु**सन्धेयमिति। शुक्तिरजतादावहं रजतमित्याद्यनुभवस्य कदाप्यजननात् अहमाकारानुभवविषयता-प्रयोजकस्याहमाकारानुभवाहित-संस्कार-सह-कृत-वृत्ति-विषयत्वस्याभावेन तेषां नाहमाकारानुभवविषयत्वमिति भावः।

नन्वस्तु शुक्तिरजतादेरिदमाकारानुभवविषयत्वम्। तथापि तद्विषयाऽविद्यावृत्तेः कल्पना नैव युक्ता, निष्प्रयोजनत्वात्। न च प्रकाशसम्बन्धमन्तरा प्रकाशायोगात् स्वप्रकाशनिर्वाहाय प्रकाशकसम्बन्धार्था सा वृत्तिरिति वाच्यम्, तस्य प्रकाशकसम्बद्ध-तयैवोत्पन्नत्वात्, प्रमातृचैतन्याभिन्नेदमवच्छिन्न-चैतन्य-प्रकाशादेव तत्प्रकाशोपपत्तेः। नाप्यावरणभङ्गार्था, प्रातिभासिकगोचर-संशयविपर्ययादेरदर्शनेन तद्गोचरावरणानभ्यु-पगमात्। नापि संस्कारार्था, रजताद्यवच्छिन्नचिन्नाशादेव तदुपपत्तेरिति नृसिंहाश्रममतं निराकर्त्तुमविद्यावृत्तेः प्रयोजनञ्च दर्शयितुं पूर्वपक्षमारचयति—**नन्वे**वमपीति। शुक्ति-रजतादेरिदमाकारानुभवविषयत्वोपपादनेऽपीत्यर्थः। **साक्षात्** वृत्तिं विना। **साक्षि**सम्बद्ध-

**गोचर-ज्ञानाभासरूपाऽविद्यावृत्तेरभ्युपगमः किमर्थं इति चेत्। उच्यते। स्वगोचर-वृत्त्युपहित-चैतन्यभिन्न-सत्ताकत्वाभावस्य विषयापरोक्षत्व-रूपतया रजतस्यापरोक्षत्वसिद्धये तदभ्युपगमात्।**

**नन्विदंवृत्तेरजताकारवृत्तेश्च प्रत्येकमेकैक-विषयकत्वे गुरुमतवद् विशिष्ट-**

तयेति। बाह्यं हि सत्यरजतं साक्षान्नैव साक्षिसम्बद्धं, देहाद्युपाधिना व्यवधानात्, सत्यरजतावच्छिन्न-चैतन्यसम्बद्धत्वाच्च। यदा तु सत्यरजतावच्छिन्नं चैतन्यं तद्गोचरान्तः-करणवृत्तिद्वारा साक्षिचैतन्याभिन्नं भवति, तदा तत् सत्यरजतं साक्षिसम्बद्धं सत् भासते, मिथ्यारजतं तु साक्षात् तद्गोचरवृत्तिं विनैव साक्षिसम्बद्धं, साक्षिचैतन्याभिन्न-प्रमातृ-चैतन्याभिन्ने इदमवच्छिन्नचैतन्ये तस्योत्पादादिति भावः। **भान**सम्भवे प्रत्यक्षसम्भवे। साक्षात् स्वप्रकाश-साक्षिसम्बन्धादिति भावः। **ज्ञाना**भासरूपायाः रजतज्ञानाकारायाः। आशङ्कां निराकरोति—**उच्यत** इति। **स्वगोचरे**ति। स्वगोचरा स्वविषया या वृत्ति-स्तदुपहितं यच्चैतन्यं, तद्भिन्ना सत्ता यस्य तद्भावः स्वगोचरवृत्त्युपहित-चैतन्यभिन्न-सत्ताकत्वं, तदभावस्येति विग्रहः। **विषया**परोक्षत्वरूपतयेति। योग्यत्वे सति स्वविषय-वृत्त्युपहित-प्रमातृचैतन्यसत्तातिरिक्त-सत्ताशून्यत्वं विषयगतप्रत्यक्षत्वमिति प्राङ्निरूपणा-दिति भावः। **तदभ्यु**पगमात् रजताकाराविद्यावृत्तेरभ्युपगमात्, अन्यथा प्रमातु-स्तदाकारवृत्त्युपहितत्वाभावेन मिथ्यारजतस्य स्वविषयवृत्त्युपहित-प्रमातृचैतन्यसत्तातिरिक्त-सत्ताशून्यत्वाभावात् प्रत्यक्षं न स्यात्। भवति च रजतं प्रत्यक्षम्। अतस्तदाकाराविद्या-वृत्तेरभ्युपगम इति भावः। वस्तुतस्तु लक्षणानुरोधेनाविद्यावृत्तिकल्पनं नैव युक्तम्, लक्षणस्यान्यथापि सम्भवात्। तत्कल्पनाकारणन्तु प्रागेवाभिहितमिति नेह प्रतन्यते।

नन्वेवमपि शुक्तिरजतस्थले इदं रजतमित्याकारकं ज्ञानं भ्रमो न स्यात, सत्यमिथ्या-वस्तुविषयकैकवृत्तेरभावात्, इदमाकारान्तःकरणवृत्तेरिदंविषयकत्वात्, रजताकाराविद्या-वृत्तेश्च रजतविषयकत्वात्, इदमभिन्न-रजतविषयकैकविशिष्टवृत्तेरनभ्युपगमादिति शङ्कते —**नन्वि**ति। **प्रत्येक**मिति। पदमिदं षष्ठ्यन्तमव्ययम्। **एकैक**विषयत्वे इति। इदमाकारवृत्तेरिदंमात्रविषयकत्वम्, रजताकारवृत्तेश्च रजतमात्रविषयकत्वम्, न त्विदम-भिन्नरजतविषयकत्वमिति भावः। **गुरु**मतवत् प्रभाकरमतवत्। तन्मते हीदं रजतमिति नैकं ज्ञानम्, किन्त्विदमिति पुरोवर्तिद्रव्यमात्रविषयकं प्रत्यक्षम्, रजतमिति रजतविषयकं स्मरणम्। यद्यपि तयोर्द्वयोर्ज्ञानयोः स्वरूपतो विषयतश्च भेदोऽस्त्येव, तथापि दोष-

**ज्ञानानभ्युपगमे कुतो भ्रमज्ञानसिद्धिरिति चेन्न, वृत्तिद्वय-प्रतिबिम्बित-चैतन्यस्यैकस्य सत्यमिथ्यावस्तु-तादात्म्यावगाहित्वेन भ्रमत्वस्वीकारात्।**

वशाच्छुक्तित्वसामान्यविशेषस्याग्रहस्तत्त्वांशस्य प्रमोषो भेदस्य चाग्रहो भवति। अगृहीत-भेदञ्च तज्ज्ञानद्वयं ग्रहणस्मरणरूपमभेदव्यवहारस्येदं रजतमिति सामानाधिकरण्य-व्यपदेशस्य च कारणं भवति। तस्माच्चाभेदव्यवहारो लोकानाम्। एवञ्चेदं रजत-मित्यत्र यथैकैकं ज्ञानमेकैकविषयकम्, न विशिष्टविषयकम्, तथा त्वन्मतेऽपीति भावः। **विशिष्ट**ज्ञानानभ्युपगमे सत्यमिथ्यावस्तु-विषयैकवृत्त्यनभ्युपगमे, एकैकस्या वृत्तेरेकैक-मात्रविषयकत्वेन विशिष्टविषयकैकवृत्तेरनभ्युपगमादिति भावः। **कुत** इति। किमाक्षेपे। **भ्रम**सिद्धिरिति। पूर्वपक्षिणस्तावद् व्यधिकरणधर्म-प्रकारकस्य हि ज्ञानस्य भ्रमत्वमङ्गी-कुर्वन्ति। न चेदमिति ज्ञानं व्यधिकरणधर्म-प्रकारकं, तस्येदन्त्वमात्र-प्रकारकत्वात्, तस्य चेदन्त्वस्य समानाधिकरणधर्मत्वात्। एवं रजतमित्यपि ज्ञानं न व्यधिकरणधर्म-प्रकारकं, तस्य रजतत्वमात्र-प्रकारकत्वात्, तस्य च समानाधिकरणधर्मत्वात्। एवञ्चेदं रजतमित्यत्र विशिष्टविषयकैकवृत्त्यनभ्युपगमे एकैकविषयक-वृत्तिद्वयाभ्युपगमे च कस्यापि ज्ञानस्य व्यधिकरणधर्म-प्रकारकत्वं न घटत इति न तस्य भ्रमत्वसिद्धिरिति भावः। परिहरति—**ने**ति। तत्र हेतुमाह—**वृत्तिद्व**येति। इदमाकार-रजताकारवृत्तिद्वयाभिव्यक्त-चैतन्यस्ये-त्यर्थः। **एकस्ये**ति। यद्यपि वृत्तिर्द्विविधा, तथापि तदभिव्यक्तं चैतन्यमेकमेव, इदमाकार-वृत्त्यवच्छेदेन रजताकार-वृत्तेरुदयादिति भावः। वृत्तिद्वयाभिव्यक्त-चैतन्यरूपस्यानुभवस्य भ्रमत्वे हेतुमाह—**सत्य**मिथ्येति। सत्यमिथ्ययोरिदंरजतयोर्यत् तादात्म्यं, तद्विषयकत्वे-नेत्यर्थः। **भ्रमत्वस्वी**कारादिति। वृत्तिद्वयाभिव्यक्त-चैतन्यस्येदमि रजते तत्तादात्म्ये च तादात्म्यरूपविषयतासत्त्वात् सत्यमिथ्यावस्तु-तादात्म्य-विषयकत्वेन भ्रमत्वमिति भावः।

वस्तुतस्तु इदमाकारप्रमाणवृत्त्यनन्तरमिदमभिन्नरजताकाराऽविद्यावृत्तिरेकैवोदेति, अन्यथेदमाकारवृत्तेरिदंमात्र-विषयकत्वाद् रजताकारवृत्तेश्च रजतमात्र-विषयकत्वादिदम-भिन्न-रजताकारवृत्तेरनङ्गीकारादिदं रजततया पश्यामीति रजततादात्म्यानुभवो न स्यात्। तथा चोक्तं संक्षेपशारीरके—"अध्यस्तमेव हि परिस्फुरति भ्रमेषु नान्यत् कथञ्चन परि-स्फुरति भ्रमेष्वि"ति। अद्वैतरत्नरक्षणे च—यदा पुनरिदं रजतमित्येकैवाविद्यावृत्तिरिद-मंशमपि कल्पितं रजतगतमेव गृह्णातीति। न च द्वयोरनृतत्वे शून्यवादप्रसङ्गः, इदमोऽध्य-स्तत्वाकारेण बाध्यत्वेऽपि स्वरूपेणाबाध्यत्वात्, चैतन्यस्याबाध्यस्य सर्वाधिष्ठानस्य सत्त्वात्।

**अत एव साक्षिज्ञानस्य सत्यासत्यविषयतया प्रामाण्यानियमादप्रामाण्योक्तिः साम्प्रदायिकानाम् ।**

**ननु सिद्धान्ते देशान्तरीय-रजतमप्यविद्याकार्यमध्यस्तं चेति कथं शुक्तिरूप्यस्य ततो वैलक्षण्यमिति चेन्न, त्वन्मते सत्यत्वाविशेषेऽपि केषाञ्चित् क्षणिकत्वं केषाञ्चित् स्थायित्वमित्यत्र यदेव स्वभाव-विशेषादिकं नियामकम्,**

वृत्तिद्वयाभिव्यक्त-चैतन्यस्य भ्रमत्वे साम्प्रदायिकसम्मतिमाह—**अत** एवेति । सत्य-मिथ्यावस्तु-तादात्म्यावगाहिनश्चैतन्यस्य भ्रमत्व-स्वीकारादेवेत्यर्थः । साक्षिज्ञानस्य भ्रमत्वे हेतुमाह—**सत्या**सत्यविषयतयेति । व्यवहारकालाबाध्य-व्यवहारकालबाध्यविषयतयेत्यर्थः । तथा चेदमः संसृष्टतया व्यवहारकाल-बाध्यत्वेऽपि स्वरूपतो व्यवहार-कालाबाध्यत्वेन सत्यत्वाद् रजतस्य च व्यवहारकालबाध्यत्वादिदं रजतमित्याकारकस्य साक्षिज्ञानस्य सत्यासत्यविषयत्वमिति भावः । **प्रामाण्या**नियमादिति । प्रमात्वानियतत्वादित्यर्थः, प्रमात्वाभावादिति यावत् । अविद्यावृत्तिविषयो नाज्ञातस्तद्गोचर-संशयविपर्ययादर्शनात् । अतस्तद्विषयको निश्चयो नाज्ञातार्थनिश्चयस्तेन तस्य न प्रमात्वम्, अज्ञातार्थनिश्चयस्यैव प्रमात्वादिति भावः । **अप्रामा**ण्योक्तिरिति । सत्यासत्यविषयक-साक्षिज्ञानस्य प्रमात्वाभावादप्रामाण्यव्यवहारः, न तु बाधितविषयकत्वात् । तथात्वे सुखादिविषयक-साक्षिज्ञानस्याप्रामाण्याभावप्रसङ्गः, तद्विषयस्य सुखादेरबाधितत्वादिति भावः । **साम्प्र**दायिकानां वेदान्तसम्प्रदायविदाम् ।

ननु त्वन्मते यथा सत्यरजतमविद्याकार्यमध्यस्तञ्च, तथा मिथ्याभूतं शुक्तिरजतादिकमपि । तत् कथं सत्यरजतस्य व्यावहारिकत्वं मिथ्यारजतस्य तु प्रातिभासिकत्वमिति नैयायिकः शङ्कते—**नन्वि**ति । **सिद्धान्ते** अद्वैतसिद्धान्ते । **देशान्त**रीयरजतं व्यावहारिक-रजतम् । **अपि**कारेण मिथ्यारजतपरिग्रहः । **इति**र्हेतौ । **कथ**मित्याक्षेपे । **ततः** देशान्तरीयाद् रजतात् । **वैलक्षण्यं** भेदः । तथा च तयोः सत्यमिथ्यारजतयोः प्रातिभासिकत्वेन व्यावहारिकत्वेन च भेदो नाभ्युपगन्तव्यः, नियामकाभावात्, उभयोरविद्याकार्यत्वेऽध्यस्तत्वे च विशेषाभावादिति पूर्वपक्षाशयः । आशङ्कां परिहरति—**नेति** । **तन्मते** नैयायिकमते । **सत्यत्वा**विशेषेऽपीति । यथा गोघटादीनां सत्यत्वं, तथा ज्ञानसुखादीनामपि । तत्र द्वयोः सत्यत्वे कोऽपि विशेषो नास्तीति भावः । **केषा**ञ्चित् ज्ञानसुखादीनाम् **क्षणिकत्वम्** तृतीयक्षणविनाशित्वम् । **केषाञ्चित्** गोघटादीनाम् ।

**तदेव ममापि। यद्वा घटाद्यध्यासेऽविद्यैव दोषत्वेनापि हेतुः, शुक्तिरूप्याध्यासे तु काचादयोऽपि दोषाः। तथा चागन्तुक-दोष-जन्यत्वं प्रातिभासिकत्वे प्रयोजकम्। अत एव स्वप्नोपलब्ध-रथादीनामागन्तुक-निद्रादिदोष-जन्यत्वात् प्रातिभासिकत्वम्। ननु स्वप्नस्थले पूर्वानुभूत-रथादेः स्मरण-**

**स्थायित्वम्** अक्षणिकत्वम्। **इत्यत्र** इत्यस्मिन् विषये। **स्वभाव**विशेषादिकमिति। आदिपदेन कालान्तरोपलम्भानुपलम्भादि-परिग्रहः। **ममापि** अद्वैतमतेऽपि। तथा च पक्षद्वयेऽपि दोष-तत्परिहारयोः समत्वान्नैकः पक्षः पर्यनुयोक्तव्य इति भावः। प्रतिबन्देरनुत्तरत्वादाह—**यद्** **वे**ति। **दोष**त्वेनाऽपीति। अध्यासमात्रं प्रति दोषस्य हेतुत्वाद् व्यावहारिकाध्यासे दोषान्तराभावादगत्याऽविद्याया दोषत्वकल्पनादिति भावः। **अपि**-नोपादानत्वेनापि हेतुत्वमिति सूचितम्। ननु व्यावहारिकाध्यासे यथाऽविद्याया दोषत्वेन हेतुता, तथा प्रातिभासिकाध्यासेऽपि स्यादित्यत आह—**शुक्ति**रूप्याध्यास इति। प्रातिभासिकाध्यास इत्यर्थः। **दोषाः** इति। हेतव इति शेषः। तथा च प्रातिभासिकाध्यासं प्रत्यविद्याया उपादानत्वेन हेतुत्वेऽपि दोषत्वेन न हेतुत्वम्, तत्रातिरिक्तस्य काचादेर्दोषस्य सद्भावादिति भावः। नन्वस्तु प्रातिभासिकाध्यासे काचादीनां दोषत्वम्, व्यावहारिक-प्रातिभासिकयोर्वैलक्षण्यन्तु न युक्तं, द्वयोरविशेषहेतुत्वादित्यत आह—**तथा** चेति। **आगन्तुके**ति। अविद्यातिरिक्तेत्यर्थः। **प्रयो**जकं व्याप्यं व्यापकञ्च। तथा च प्रातिभासिकाध्यासं प्रत्यविद्यातिरिक्तस्य दोषस्य हेतुत्वाद् व्यावहारिकाध्यासं प्रति तस्याऽहेतुत्वात् तयोर्हेतुवैलक्षण्येन वैलक्षण्यमिति भावः। स्वप्नोपलब्धानां स्वाप्नप्रपञ्चानां प्रातिभासिकत्वमुपपादयति—**अत** एवेति। अविद्यातिरिक्तदोषजन्यत्वस्य प्रातिभासिकत्व-प्रयोजकत्वादेवेत्यर्थः। स्वाप्नप्रपञ्चानां प्रातिभासिकत्वे हेतुमाह—**आगन्तुके**ति। अविद्यातिरिक्तेत्यर्थः।

ननु स्वप्नोपलब्धानां प्रातिभासिकत्वाभ्युपगमे स्वप्नदशायां तेषामुत्पत्तिरङ्गीकरणीया। सा च न युक्ता, गौरवान्निष्प्रयोजनत्वाच्च। न च तत्प्रत्यक्षान्यथाऽनुपपत्त्या तदुत्पत्तिः कल्प्यते इति वाच्यम्, अन्यथाऽपि तत्प्रत्यक्षोपपत्तेः, तत्तत्स्मरणस्यैव दोषात् तत्तत्प्रत्यक्षरूपेण प्रतिभासाच्छुक्तिकाया रजतप्रतिभासवदिति शङ्कते—**नन्वि**ति। यदुक्तं स्मरणस्य प्रत्यक्षरूपेणावभासात् स्वाप्नप्रत्यक्षोपपत्तिरिति। तदयुक्तम्, पूर्वाननुभूतस्यापि स्वप्ने प्रतिभासात्, तस्य स्मरणासम्भवेन तत्प्रत्यक्षानुपपत्तेरित्यत आह—**पूर्वानुभूते**ति।

**मात्रेणैव प्रातिभासिकत्व-व्यवहारोपपत्तौ न रथादि-सृष्टि-कल्पनम्, गौरवादिति चेन्न, रथादेः स्मृतिमात्राभ्युपगमे रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभव-विरोधापत्तेः, "अथ रथान् रथयोगान् पथः सृजते" इति रथादि-सृष्टि-प्रतिपादक-श्रुतिविरोधापत्तेश्च। तस्माच्छुक्तिरूप्यादि-**

कदाचिदप्यननुभूतस्य स्वप्नदशायां प्रतिभासे प्रमाणाभावात्, पूर्वपूर्वभ्रमसंस्कारस्य प्रातिभासिकं प्रति हेतुत्वात्, तत्तत्संस्कारजनकतया तद्विषयानुभवावश्यम्भावात् तद्विषय-स्मरणोपपत्तेरिति भावः। **रथादे**रित्यादिपदेन स्वाप्नगजादि-परिग्रहः। **स्मरण**मात्रेणैवेति। मात्रशब्देन प्रातिभासिक-ज्ञानस्यैवशब्देन च प्रातिभासिकविषयस्योत्पत्तिव्यवच्छेदः। **व्यवहारो**पपत्तौ अयं रथ इत्यादि-व्यवहारोपपत्तौ। **गौरवा**दिति। रथादेरुपादानादि-कल्पनेन तदुत्पादविनाशादि-कल्पनेन च गौरवादिति भावः। आशङ्कां निराकरोति—**ने**ति। रथादिज्ञानस्य स्मृतित्वे स्वप्नानुभवविरोधं दर्शयति—**रथं पश्यामी**ति। रथादिज्ञानस्य स्मृतित्वे स्वप्नदशायां रथं स्मरामीति ज्ञानानुभवः स्यात्, न पश्यामीति। भवति च पश्यामीति ज्ञानानुभवः। तस्मात् स्वप्नानुभवविरोधाद् रथादिज्ञानस्य स्मृतित्वं न कल्पनीयमिति भावः। ननु स्वप्नदशायां निद्रादि-दोषवशात् स्मरणस्यैव प्रत्यक्षरूपेण प्रतिभासः, अतः पश्यामीत्यनुभव इत्यत आह—**स्वप्न** इति। रथादिज्ञानस्य स्मृतित्वे निद्रादि-दोषनिवृत्तौ बाधात् सुप्तोत्थितस्य स्मरणानुसन्धानं स्यात्, तस्य स्वरूपतः स्मरणत्वात्, स्मरणस्यैव प्रत्यक्षरूपेण प्रतिभासाङ्गीकारात्, अद्राक्षमिति दर्शनानुसन्धानं न स्यात्। भवति च रथमद्राक्षमिति दर्शनानुसन्धानं, तस्मात् स्वप्नज्ञानं न स्मृतिरूपमिति भावः। ननु दोषवशात् स्मरणस्य प्रत्यक्षरूपेणोत्पन्नत्वात् सुप्तोत्थितस्य तथैव परामर्शो युक्तः, न तु स्मरणपरामर्शः, स्वप्ने स्मरणस्यानुत्पन्नत्वात्। तथाच कथं तादृशानुभवमात्रेण रथादेः सृष्टिसिद्धिरित्याशङ्कां निराकुर्वन् स्वाप्नसृष्टौ बृहदारण्यक-श्रुतिं प्रमाणयति—**अथ** रथानिति। **अथ** जाग्रद्भोगप्रद-कर्मोपरमे स्वाप्नभोगप्रद-कर्माभिव्यक्त्यनन्तरम्। **रथ**योगान् रथोपकरणभूतानश्वादीन्। **पथः** रथगमनोपयुक्तान् मार्गान्। तथा च निर्दोषश्रुतिविरोधात् स्वाप्नज्ञानस्य स्मृतित्वं नैव कल्पनीयमिति भावः। नन्वियं श्रुतिः रथादि-सृष्टौ प्रमाणमपि स्वाप्नसृष्टौ न प्रमाणम्, तथाविधार्थ-बोधक-पदाभावादिति चेन्न, स्वाप्नप्रकरणाम्नातत्वेन तद्वाक्यात् तथाविधार्थबोध-सम्भवात्। सिद्धान्तयति—**तस्मादि**ति। निर्दोषश्रुति-सामर्थ्यात्, स्वाप्नानुभवानुसन्धान-

**वत् स्वप्नोपलब्ध-रथादयोऽपि प्रातिभासिका यावत् प्रतिभासमवतिष्ठन्ते।**

**ननु स्वप्ने रथाद्यधिष्ठानतयोपलभ्यमान-देशविशेषस्यापि तदाऽसन्निकृष्ट-तयाऽनिर्वचनीय-प्रातिभासिक-देशोऽभ्युपगन्तव्यः। तथा च रथाद्यध्यासः कुत्रेति चेन्न, चैतन्यस्य स्वयंप्रकाशस्य रथाद्यधिष्ठानत्वात्। प्रतीयमानो हि**

सामर्थ्याच्चेत्यर्थः। प्रातिभासिकपदस्यार्थमाह—**यावदि**ति। तथा च प्रतिभासकालोत्पन्नाः प्रातिभासिकाः प्रतिभासकालं यावत् तिष्ठन्ति नान्यदेति भावः। तल्लक्षणन्तु सविकल्पकज्ञानबाध्यत्वं ब्रह्मज्ञानेतर-ज्ञानबाध्यत्वं वेति न विस्मर्त्तव्यम्।

नन्वेवमपि स्वप्नोपलब्ध-रथादीनामध्यस्तत्वं नैव युक्तम्, तेषामधिष्ठानाभावात्। न च ब्रह्मचैतन्यमधिष्ठानम्, इदमनुविद्धतया तेषां प्रतिभासात्, ब्रह्मणश्चेदमनास्पदत्वात्, संसारदशायां ब्रह्मज्ञानाभावात् स्वाप्नभ्रमानिवृत्ति-प्रसङ्गात्, अधिष्ठान-साक्षात्कारस्यैवाध्यस्तनिवर्त्तकत्वात्, आकाशादिवत् सर्वसाधारण्यापत्तेश्च। नाप्यहङ्कारावच्छिन्नं चैतन्यम्, अनावृतत्वेन सर्वदा सर्वथा भासमानस्य तस्याधिष्ठानत्वायोगात्, सामान्यरूपेण ज्ञातस्य विशेषरूपेणाज्ञातस्यैवाधिष्ठानत्वनियमात्, अहं गज इति प्रतीत्यापत्तेश्च। नापि देशविशेषः, तस्यासन्निकृष्टत्वात्, सर्वेन्द्रियाणां तदानीमुपरमात्। तस्मादधिष्ठानाभावात् स्वप्नोपलब्ध-रथादीनामध्यस्तत्वं नैव युक्तमिति शङ्कते—**नन्वि**ति। **उपलभ्यमान-देशविशेषस्य** अयं रथ इत्यादिरूपेणेदन्त्वया प्रतीयमानस्याधार-विशेषस्य। **अपि**शब्देन अन्यस्याधिष्ठानयोग्यस्य परिग्रहः। **तदा** स्वप्नदशायाम्। **असन्निकृष्टतये**ति। चैतन्यव्यतिरिक्तस्याधिष्ठानयोग्यस्य विद्यमानत्वेऽपि न प्रकाशमानत्वं सन्निकृष्टत्वं वा, तदा सर्वेन्द्रियाणामुपरमात्, अन्यस्य चाप्रकाशमानस्य नाधिष्ठानत्वं, सामान्यतः प्रकाशमानस्य विशेषतोऽप्रकाशमानस्याधिष्ठानत्वनियमादिति भावः। नन्विन्द्रियाभावादधिष्ठानस्याप्रतीतिश्चेत् कथं तस्यायमिति प्रतीतिरित्यत आह—**अनिर्व**चनीयेति। प्रतीयमानो ह्यधिष्ठानदेशो न व्यावहारिको येनेन्द्रियाभावादप्रत्यक्षः स्यात्, किन्तु प्रातिभासिकः प्रतिभासकालेऽविद्ययोत्पन्नोऽविद्यावृत्त्या प्रकाशत इति भावः। अधिष्ठानतयोपलभ्यमानस्य व्यावहारिकत्वं व्यावर्त्तयति—**प्राति**भासिकेति। इन्द्रियाभावेनाप्रकाशमानस्य व्यावहारिकस्याश्रयत्वायोगात् तस्य प्रातिभासिकत्वं स्वीकरणीयमिति भावः। **देशः** अध्यस्ताधारः। भवत्वध्यासाधारस्य प्रातिभासिकत्वं, प्रकृते तु किमायातमित्यत आह—**तथा चे**ति। अधिष्ठानतयोपलभ्यमानस्य देशस्य प्रातिभासिकत्वे इत्यर्थः।

**रथादिरस्तीत्येव प्रतीयते इति सद्रूपेण प्रकाशमानं चैतन्यमेवाधिष्ठानम् ।**

**अध्यासः** स्वप्नाध्यासः। **कुत्रे**ति। अज्ञातस्यैवाधिष्ठानत्वनियमात् प्रातिभासिकस्याज्ञातत्वाभावेनाऽधिष्ठानत्वायोगात्, अन्यस्य चाधिष्ठानयोग्यस्यादर्शनात् स्वप्नाध्यासो नैव युक्त इति भावः। मनोऽवच्छिन्नस्य जीवचैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वमुपपादयन्नाशङ्कां निराकरोति—**नेति**। **चैतन्यस्ये**ति। मनोऽवच्छिन्नस्य जीवचैतन्यस्येत्यर्थः।

यद्यपि ब्रह्मचैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वे न कोऽपि दोषः, स्वप्नाध्यासहेतुभूतानां मनोवासनानामसाधारण्यात् तदसाधारण्योपपत्तेः, रज्ज्वां दण्डज्ञानेन सर्पभ्रमतिरोधानवदधिष्ठानज्ञानाभावेऽपि जाग्रद्ज्ञानादिना स्वप्नभ्रमतिरोधानोपपत्तेश्च, तथापि ग्रन्थकर्त्तुस्तत्र नादरः, अहं गज इत्याद्युत्तरग्रन्थस्वारस्यात्। न च गजादेः शुद्धचैतन्याध्यस्तत्वे इत्याद्युत्तरग्रन्थानुपपत्तिरिति वाच्यं, तस्य पक्षान्तरोपन्यास-परत्वात्, अन्यथाऽहं गज इत्यापादनपर-ग्रन्थानुपपत्तेर्दुष्परिहरणीयत्वात्।

एतेन—"शुद्धचैतन्यस्यैवाधिष्ठानत्वान्न रथाद्यध्यासानुपपत्ति"रिति शिखामणिकृतां व्याख्यानं "चैतन्यं त्वनवच्छिन्नमविद्याप्रतिविम्बितं वाऽधिष्ठानमि"ति परिभाषाप्रकाशिकाकृतां व्याख्यानञ्च प्रत्युक्तं वेदितव्यं, शुद्धचैतन्यस्याधिष्ठानत्वेऽहं गज इत्यापादनानुपपत्तेः।

नन्वपरोक्षभ्रमज्ञानमपरोक्षाधिष्ठानमपेक्षते, न त्वारोप्याधिष्ठानयोरेकेन्द्रियग्राह्यत्वं, व्यभिचारात्। तथा चोक्तं संक्षेपशारीरके—"अपरोक्षरूपविषयभ्रमधीरपरोक्षमास्पदमपेक्ष्य भवेदि"ति। न चेन्द्रियागोचरस्यात्मनोऽपरोक्षत्वं, तत् कथमस्याधिष्ठानत्वमित्यत आह—**स्वयं**प्रकाशस्येति। तथा चाधिष्ठानस्यापरोक्षत्वं क्वचित् स्वतः, क्वचिन्मनसः, क्वचिच्चक्षुरादितो भवतीति युक्तं तस्याधिष्ठानत्वमिति भावः। ननु जीवचैतन्यस्यानावृतत्वेन सर्वदा भासमानस्याऽधिष्ठानत्वं न युक्तं, विशेषतोऽज्ञातस्य सामान्यतो ज्ञातस्यैवाधिष्ठानत्वादिति चेन्न, स्वप्नाध्यासानुकूलस्य व्यावहारिक-शरीरसङ्घातभानविरोधिनोऽवस्थाज्ञानस्य तत्राप्यभ्युपगमात् तदुपपत्तेः। नन्वेवमपि जीवचैतन्यं नाधिष्ठानं, तदभिन्नतया स्वाप्नरथादीनामप्रतिभासादित्यत आह—**प्रतीय**मान इति। **अस्ती**त्येवेति। एवकारेणाधिष्ठान-निष्ठस्य सत्त्वातिरिक्त-धर्मान्तरस्य भाननिरासः कृतः। तथा च सन् घट इतिवत् सन् रथ इत्यादौ रथादेः सदभिन्नतयाऽवभासाद् ज्ञानानन्दादिरूपेणाप्रकाशमानस्य सद्रूपेण च प्रकाशमानस्य जीवचैतन्यस्याधिष्ठानत्वं युक्तमिति भावः।

**देशविशेषोऽपि चिदध्यस्तः प्रातिभासिकः। रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकम्, तदा सर्वेन्द्रियाणामुपरमात्। अहं गज इति प्रतीत्यापादनन्तु पूर्ववन्निरसनीयम्।**

ननु जीवचैतन्यस्याधिष्ठानत्वेऽयं रथ इति देशविशेषाधिष्ठानको रथाद्यध्यासो न स्यादित्यत आह—**देश**विशेषोऽपीति। अध्यस्ताभिन्नतया प्रतीयमानो देशविशेषोऽपीत्यर्थः। **चिद्**ध्यस्तः जीवचैतन्ये कल्पितः। **प्रातिभासिक** इति। तथा च नासौ देशविशेषो रथादेरधिष्ठानं, प्रातिभासिकत्वात्, पारमार्थिकस्य व्यावहारिकस्य वा प्रातिभासिकाधिष्ठानत्वादिति भावः। ननु जीवचैतन्यस्य रथाद्यधिष्ठानत्वे रथादाविन्द्रिय-ग्राह्यत्वादिभानं न स्यात्, भासमानस्यैवाधिष्ठान-धर्मस्याध्यस्ते भाननियमात्। न चेन्द्रियग्राह्यत्वमधिष्ठानगतं, तस्येन्द्रियाग्राह्यत्वात्। तस्माज् जीवचैतन्यं नाधिष्ठानमित्यत आह—**रथादावि**ति। **इन्द्रिय**ग्राह्यत्वमपीति। अपिकारेणेदन्त्वस्य परिग्रहः। नन्विन्द्रियग्राह्यत्वं पारमार्थिकमस्तु, रथादेरिन्द्रिययोग्यत्वादत आह—**तदे**ति। स्वप्नदशायामित्यर्थः। **सर्वे**न्द्रियाणां बाह्येन्द्रियाणां, सव्यापारस्य मनसस्तदानीं सत्त्वादिति भावः। **उपर**मात् निर्व्यापारत्वात्, जाग्रद्भोगप्रद-कर्मणां वृत्तिरोधेन देवतानुग्रहाभावात्, "य एष सुप्तेषु जागर्त्ती"त्यादि-श्रुतेरितीति भावः। नन्वन्तःकरणावच्छिन्नस्य जीवचैतनस्याधिष्ठानत्वे रथादेरहङ्कार-सामानाधिकरण्येन प्रतीतिः स्यात्, अध्यासाधार-सामानाधिकरण्येनैवाऽध्यस्तस्य भाननियमात्, इदं-सामानाधिकरण्येन रजत-प्रतीतिवदित्यत आह—**अहं** गज इति। **पूर्व**वदिति। यस्य यदाकारानुभवाहितेत्यादिग्रन्थोक्त-प्रकारवद्रित्यर्थः। ननु जीवचैतन्यस्य स्वप्नाध्यासाधिष्ठानत्वे किं प्रमाणम्? वेद इति चेत्? कोऽसौ? "स हि कर्त्ता स धीः स्वप्नो भूत्वेमं लोकमनुसञ्चरेदि"त्यादिरिति बोध्यम्।

अन्तःकरणावच्छिन्नं चैतन्यं स्वप्नाधिष्ठानमिति पञ्चपादिकाकाराः। तथा चोक्तं पञ्चपादिकायाम्—तस्य च तदवच्छिन्नापरोक्षचैतन्यस्थाविद्याशक्तिरालम्बनतया विवर्त्तत इति। अन्तःकरणोपहितं चैतन्यं स्वप्नाधिष्ठानमिति नृसिंहाश्रमपादाः। तथा चोक्तं विवरणभावप्रकाशिकायाम्—अन्तःकरणोपहितचैतन्यमेव स्वप्नाधिष्ठानमिति।

एतेन—"अथ रथान् रथयोगान् पथः सृजत इतीश्वरकर्त्तृकसृष्टिवाक्यानुपपत्तेरि"ति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, तद्वाक्यस्य जीवकर्त्तृक-सृष्टिप्रतिपादनपरत्वात्।

**स्वाप्नगजादयः साक्षान्मायापरिणामा इति केचित्। अन्तःकरणद्वारा तत्परिणामा इत्यन्ये। ननु गजादेः शुद्धचैतन्याध्यस्तत्वे इदानीं तत्साक्षात्-**

नन्वेवमपि स्वाप्नरथादीनामध्यस्तत्वं नैव युक्तं, परिणाम्युपादानाभावात्। न चात्मा परिणाम्युपादानम्, निरवयस्य तस्य कूटस्थस्य परिणामायोगात्। नाप्यन्तःकरणं, स्वाप्नरथाद्यपेक्षया तस्याल्पपरिमाणत्वात्, भिन्नदेशत्वाच्च, रथादीनां बाह्यत्वादन्तःकरणस्योपादानस्य चान्तरत्वादित्यत आह—**स्वाप्न**गजादय इति। **साक्षादि**ति। अवयवादिकं विनेत्यर्थः। यथा हि व्यावहारिक-घटादिसृष्टावज्ञानं कपालाद्यवयवादिकमपेक्षते, कपालादिपरिणाम-क्रमेणैव घटादिपरिणामोदयात्, अन्यथा घटादिनाशे कपालादीनामनुपलब्धिप्रसङ्गात्। तथा चोक्तं विवरणप्रमेयसंग्रहे—"शरीरस्यापि पृथिवीद्वारेणात्मन्येव लय" इति। नैवं स्वाप्नरथादिसृष्टावज्ञानं तदवयवादिकमपेक्षते, स्वाप्नरथादीनां नाशे तदवयवादीनामनुपलब्धेः। यश्च कदाचित् तदवयवोपलम्भः, सोऽपि तदैवोत्पन्नः प्रातिभासिक इति भावः। यद्वा **साक्षादि**ति। अन्तःकरणवृत्तिं विनेत्यर्थः। एतन्मते यद्यप्यहङ्काराद्यनवच्छिन्नं चैतन्यं देहान्तरेव स्वाप्नप्रपञ्चस्याधिष्ठानं, तथाप्यनभिव्यक्तं तन्नाधिष्ठानम्, अभिव्यक्तस्यैवाधिष्ठानत्वनियमात्। सा चाभिव्यक्तिरन्तःकरणवृत्तिं विनैव स्वतः, स्वाप्नप्रपञ्चाध्यासाधिष्ठानस्याहङ्काराद्यनवच्छिन्नचैतन्यस्याप्यनावृतत्वाभ्युपगमात्। तथा चोक्तं सिद्धान्तलेशसंग्रहे—"तस्मात् स्वतोऽपरोक्षमहङ्काराद्यनवच्छिन्नचैतन्यं तदधिष्ठानमिती"ति भावः। **माया**परिणामाः अहङ्काराद्यनवच्छिन्नचैतन्यस्थाविद्यापरिणामाः। तथा च मायायाः परिणाम्युपादानत्वसम्भवान्न स्वाप्नरथाद्यध्यासानुपपत्तिरिति भावः। **केचित्** नृसिंहाश्रमश्रीचरणादयः। तथा चोक्तं तैर्विवरणभावप्रकाशिकायाम्—"न तु स्वप्ननिवर्त्तक-जाग्रद्बोधवदिति। मूलाविद्याकार्यस्य स्वकारणविनाशादेव नाशाद्, ज्ञानस्य तद्धेत्वविद्यानिवर्त्तकस्यैव तन्निवर्त्तकत्वादि"ति। भारतीतीर्थादीनां मतं दर्शयितुमाह—**अन्तः**करणद्वारेति। अन्तःकरणवृत्तिद्वारेत्यर्थः। शरीरान्तर्गतस्यैवाहङ्काराद्यनवच्छिन्नचैतन्यस्य स्वाप्नप्रपञ्चाध्यासाधिष्ठानत्वेऽभ्युपगम्यमानेऽपि तस्यावृतत्वेन तत्राध्यस्तानां स्वाप्नगजादीनामनवभासप्रसङ्गात् तस्याभिव्यक्तिर्वाच्या। सा चाभिव्यक्तिरन्तःकरणवृत्त्या, शरीरान्तरन्तःकरणस्य स्वतन्त्रस्य चक्षुरादिकं विनैव वृत्तिसम्भवात्। तस्मान्निद्रादिदोषोपहितान्तःकरणवृत्त्यभिव्यक्तचैतन्यस्थाऽविद्या स्वाप्नगजाद्याकारेण परिणमत इति स्वाप्नसृष्टावन्तःकरणवृत्तेर्द्वारत्वमिति भावः। **अन्ये** भारतीतीर्थादयः।

**काराभावेन जागरणेऽपि स्वप्नोपलब्ध-गजादयोऽनुवर्त्तेरन्। उच्यते। कार्य-विनाशो द्विविधः कश्चिदुपादानेन सह। कश्चित् तु विद्यमान एवोपादाने। आद्यो बाधः, द्वितीयस्तु निवृत्तिः। आद्यस्य कारणमधिष्ठान-साक्षात्कारः, तेन विनोपादानभूताया अविद्याया अनिवृत्तेः। द्वितीये विरोधि-वृत्त्युत्पत्ति-र्दोषनिवृत्तिर्वा। तदिह ब्रह्मसाक्षात्काराभावात् स्वाप्नप्रपञ्चो मा बाधिष्ट।**

तथा चोक्तं विवरणप्रमेयसंग्रहे—जागरणे स्वप्नेऽप्यन्तःकरणवृत्तिरेव तृतीयं कारणमिति। ननु स्वाप्नगजादीनां साक्षादविद्यापरिणामत्वे तेषामहङ्काराद्यनवच्छिन्नचैतन्येऽध्यासाद् जागरेऽपि प्रतिभासः स्यात्, तत्र तदधिष्ठानसाक्षात्काराभावेन तेषामनिवृत्तेरिति शङ्कते —**नन्वि**ति। **शुद्ध**चैतन्याध्यस्तत्वे इति। अहङ्काराद्यनवच्छिन्न चैतन्याध्यस्तत्वे इत्यर्थः। **इदानीं** जागरे। **तत्**साक्षात्काराभावेन अहङ्काराद्यनवच्छिन्न-चैतन्यरूपस्य स्वप्नाधि-ष्ठानस्य साक्षात्काराभावेन। **अनु**वर्त्तेरन्निति। अधिष्ठानसाक्षात्कारस्योपादान-निवृत्तिद्वाराऽध्यस्तनिवर्त्तकत्वाज् जागरे स्वाप्नगजादीनामधिष्ठानस्याहङ्काराद्यनवच्छिन्न-चैतन्यस्य साक्षात्काराभावेनाऽनिवृत्तेरिति पूर्वपक्षाशयः। जागरे स्वाप्नगजादीनां बाधा-भावेऽपि निवृत्तेर्न प्रतिभासापत्तिरिति प्रतिपादयितुमादौ विनाशद्वैविध्यं दर्शयन् बाध-निवृत्त्योः स्वरूपं निरूपयति—**उच्यत** इति। **कश्चित्** कार्यनाशः। **उपादानेन** परि-णाम्युपादानेनाज्ञानेन, न तु विवर्त्तोपादानेन चैतन्येन, तस्य नित्यत्वादिति भावः। तयोः कार्यनाशयोर्नामभेदमाह—**आद्य** इति। स्वोपादानेन सह कार्यस्य नाश इत्यर्थः। **द्वितीयस्तु** विद्यमानोपादानकस्य कार्यस्य नाशस्तु। **आद्यस्य** बाधस्य। **तेन** अधिष्ठान-साक्षात्कारेण। **उपा**दानभूतायाः अध्यासोपादानभूतायाः। **अनि**वृत्तेरिति। समाना-श्रयविषययोर्ज्ञानाज्ञानयोर्विरोधादधिष्ठानाविषयक-ज्ञानेनाधिष्ठानविषयकाज्ञानस्य नि-वृत्त्ययोगादिति भावः। द्वितीयकार्यनाशस्य कारणमाह—**द्वितीय** इति। द्वितीय-कार्यनाश इत्यर्थः। कारणमित्यग्रेतनेनान्वयः। **विरोधि**वृत्त्युत्पत्तिरिति। स्वप्नदशायां विरोधिवृत्त्युत्पत्तिर्निवृत्तेः कारणम्, न दोषनिवृत्तिः, तदानीं निद्रारूपस्य दोषस्य सत्त्वात्। जागरे विरोधिवृत्त्युत्पत्तिर्दोषनिवृत्तिर्वा निवृत्तेः कारणमिति भावः। नन्वेकस्मिन् स्वप्ने विद्यमाने स्वप्नान्तरस्योदयदर्शनात् कथमुत्तरवृत्तेः पूर्ववृत्तिविरोधित्वमिति चेन्न, फलबल-कल्प्यत्वाद् विरोधितायाः। यस्योदये यन्निवर्त्तते तस्यैव तद्विरोधित्वम्, न वृत्तिमात्रस्य स्वोत्तरोत्पन्नस्य, तथात्वे स्वप्नदशायामरण्यादौ गजदर्शनानन्तरोत्पद्यमान-वृकदर्शनदशायां

**मुषलप्रहारेण घटादेरिव विरोधि-वृत्त्यन्तरोदयेन स्वजनकीभूत-निद्रादि-दोष-नाशेन वा गजादि-निवृत्तौ को विरोधः। एवं शुक्तिरूप्यस्य शुक्त्यवच्छिन्न-**

तयोरुभयोरनुभवो न स्यात्। भवति च तयोरनुभवः। तस्मात् तस्यैव तन्निवर्त्तकत्वं यस्योदये यन्निवर्त्तत इति। ननु विरोधिवृत्त्यन्तरोदयस्य स्वप्ननिवर्त्तकत्वे जागराव्यवहितोत्तरक्षणे गजादिनिवृत्तिर्न स्यात्, तदा विरोधिवृत्तेरनुदयादित्यत आह—**दोषनि-**वृत्तिर्वेति। निद्रादिदोषनिवृत्तिर्वेत्यर्थः। जाग्रद्दशायां स्वप्नाध्यासहेतोर्निद्रादिदोषस्य निवृत्तिः स्वाप्नप्रपञ्चस्य निवर्त्तक इति भावः। वाकारोऽत्रानास्थायाम्। तथा च स्वप्नदशायां विरोधिवृत्त्यन्तरस्य जागरे निद्रादिदोषनाशस्य निवर्त्तकत्वाभ्युपगमेऽननुगतनिवर्त्तककल्पनापत्तिः। तस्मादनुगतस्यैव विरोधिवृत्त्यन्तरस्य सर्वत्र निवर्त्तकत्वं बोध्यम्। तेन सुषुप्तौ साक्ष्याकार-सुखाकारवृत्तेः सत्त्वाद् जागरे चोत्थानसमय एवाहमाकारवृत्तेरुदयाद् गजादिनिवृत्तौ न क्वाप्यनुपपत्तिः। तथा चोक्तं सिद्धान्तबिन्दौ—"तत्र जाग्रत्स्वप्नभोग्यपदार्थज्ञानाभावेऽपि साक्ष्याकारं सुखाकारमवस्थाज्ञानाकारञ्चाविद्याया वृत्तित्रयमभ्युपगम्यत" इति, "अहमाकारस्तूत्थान समय एवानुभूयत" इति चेति।

एतेन—फलबलेनाऽननुगतस्यैव निवर्त्तकत्वाभ्युपगमादित्यादिशिखामणिकृतां व्याख्यानं प्रत्युक्तम्, उक्तरीत्यानुगतस्यैव निवर्त्तकत्वसम्भवात्।

**तत्** तस्माद् बाधनिवृत्त्योर्भेदात्। **इह** जागरे। **ब्रह्म**साक्षात्काराभावात् अधिष्ठानसाक्षात्काराभावात्, अहङ्काराद्यनवच्छिन्नं ब्रह्मचैतन्यं स्वाप्नप्रपञ्चाध्यासस्याधिष्ठानमिति पक्षाश्रयादिति भावः। **मा बा**धिष्टेति। अविद्यया सह न निवर्त्ततेत्यर्थः, स्वाप्नप्रपञ्चस्य बाधो माभूदिति यावत्। अन्तःकरणोपलक्षित-जीवचैतन्यस्याधिष्ठानत्वे तु बाध एव, तदुपादानभूतस्याऽवस्थाज्ञानस्य जागरोत्पन्नाधिष्ठानज्ञानेन नाशादिति भावः। नन्वधिष्ठानसाक्षात्काराभावाद् यदि बाधरूपा स्वाप्नप्रपञ्चस्य न निवृत्तिस्तर्हि कीदृशी निवृत्तिरित्यत आह—**मुषले**ति। यथा भवन्मते सत्येवोपादाने मुषलप्रहारेण घटादेर्निवृत्तिस्तद्वदस्मन्मतेऽपि सत्येवोपादाने स्वाप्नगजादीनां निवृत्तिर्न तु बाधः, उपादानस्य विद्यमानत्वादिति भावः। ननु घटादिनिवृत्तौ यथा मुषलादिकं कारणान्तरं विद्यते, न चैवं स्वप्ननिवृत्तौ कारणान्तरमित्याशङ्क्य निवृत्तेः कारणं दर्शयति—**विरोधी**ति। तथा च न केवलमुपादाननाशात् कार्यनाशः, किन्तु कारणान्तरादपीति भावः। पूर्वोक्तं निवृत्तेः कारणान्तरं दर्शयति—**स्वजन**केति। स्वप्नजनकेत्यर्थः। **निद्रादी**त्यादि-

**-चैतन्यनिष्ठ-तूलाविद्या-कार्यत्वपक्षे शुक्तिरिति ज्ञानेन तदज्ञानेन सह रजतस्य बाधः। मूलाविद्याकार्यत्वपक्षे तु मूलाविद्याया ब्रह्मसाक्षात्कारमात्र-निवर्त्यतया शुक्तितत्त्वज्ञानेनाऽनिवर्त्यतया तत्र शुक्तिज्ञानात् निवृत्तिमात्रम्, मुद्गरप्रहारेण घटस्येव।**

पदेनाऽदृष्टादिपरिग्रहः। **क** इति। किमाक्षेपे। **विरोधः** अनुपपत्तिः, न काप्यनुपपत्ति-रित्यर्थः। तथा चाधिष्ठान-साक्षात्काराभावेनोपादानस्याऽज्ञानस्य नाशानुत्पत्तावपि स्वाप्नप्रपञ्चस्य नाशान्न प्रतिभासापत्तिरिति भावः। स्वप्नदशायामुत्पन्नस्य प्रातिभासिकस्य विनाशद्वैविध्योपपादनेन निवृत्तिमुपपाद्य जाग्रद्दशोत्पन्ने प्रातिभासिके तदतिदिशति—**एव**मिति। कार्यनाशस्य द्वैविध्ये सतीत्यर्थः। ननु शुक्तिरूप्यादीनां प्रातिभासिकाना-मेकरूपैव निवृत्तिस्तेषां मूलाविद्याकार्यत्वादिदानीं तदधिष्ठानसाक्षातकाराभावेनोपादानं विनैव कार्यमात्रस्य निवृत्त्युदयात्। तत् कथं स्वाप्नविनाशद्वैविध्यस्य जाग्रत्-प्राति-भासिकेऽतिदेश इत्याशंक्येष्टसिद्धिकारमतमनुस्मरन् तामाशङ्कां परिहर्त्तुमाह—**शुक्त्य-**वच्छिन्नेत्यादि। त्रिविधा खल्वविद्या मूलाविद्याऽवस्थाविद्या तूलाविद्या चेति। तत्र मूलाविद्याऽनादिभावभूताऽऽवरणविक्षेपशक्तिमती ब्रह्मज्ञाननाश्या शुद्धब्रह्माश्रया तद्-विषया च। अवस्थाऽऽविद्याऽऽवरणविक्षेप-शक्तिमती ब्रह्मज्ञानान्यज्ञाननाश्या मूला-ज्ञानतादात्म्यापन्ना सोपाधिकचिदाश्रया तद्विषया च। तूलाऽविद्या त्वावरणविक्षेपशक्ति-मती ब्रह्मज्ञानान्य-ज्ञाननाश्या मूलाज्ञानतादात्म्यानापन्ना सोपाधिकचिदाश्रया तद्विषया च। तत्र शुक्तिरजतादिकं तूलाविद्याकार्यमितीष्टसिद्धिकाराः। तथा चोक्तमिष्टसिद्धौ—"किमनन्तानि शुक्त्यज्ञानानि? वाढम्, अनन्तान्येवे"ति।

एतेन—"मूलाज्ञानस्यानाद्यवस्थाभेद एव तूलाज्ञानमि"ति शिखामणिकृतां व्याख्यानं प्रत्युक्तम्, तूलाज्ञानावस्थाज्ञानयोर्भेदात्। तथा चोक्तमद्वैतसिद्धौ प्रतिकर्मव्यवस्थायां—"तूलाज्ञाननाशाद्वाऽवस्थाविशेष-प्रच्यवाद् वे"ति। विवरणाचार्यास्तु—मूलाज्ञानस्यैवाऽ-वस्थाभेदा रजताद्युपादानानीति शुक्तिरजतादीनामवस्थाविद्याकार्यत्वमाहुः। विवरणानु-सारिणां ग्रन्थकृतां तन्मतपरित्यागबीजं सुधीभिर्विभावनीयम्।

**शुक्ति**रितीति। इयं शुक्तिरित्याकारकेणाधिष्ठानतत्त्वसाक्षात्कारेण। **तदज्ञाने**नेति। शुक्तिरजताद्युपादानभूतेन तूलाज्ञानेनेत्यर्थः। तूलाज्ञानस्य ब्रह्मज्ञानान्यज्ञाननाश्यत्वादिति भावः। प्रातिभासिकस्य बाधमुपपाद्य निवृत्तिमुपपादयति—**मूला**विद्येति। **शुक्तिरूप्य-**

**ननु शुक्तौ रजतस्य प्रातिभासिकसत्ताभ्युपगमे नेदं रजतमिति त्रैकालिकनिषेधज्ञानं न स्यात्, किन्त्विदानीमिदं न रजतमिति, इदानीं घटः श्यामो** स्येत्यनेनान्वयः। **ब्रह्म**साक्षात्कारेति। समानाश्रयविषयक-ज्ञानाज्ञानयोर्विरोधादिति भावः। **अनिवर्त्यतये**त्यस्य **मूला**विद्याया इत्यनेनान्वयः। ज्ञानस्य शुक्तिविषयकत्वादज्ञानस्य ब्रह्मविषयकत्वात् तयोः समानाश्रयविषयकत्वाभावेन शुक्तिज्ञानान्न मूलाविद्याया निवृत्तिरिति भावः। **तत्र** शुक्तौ। **निवृत्ति**मात्रमिति। मात्रशब्देन बाधनिवृत्तिः, उपादानस्य मूलाज्ञानस्य सत्त्वादिति भावः।

नन्वेवमपि शुक्तिरजतादीनां तत्तदविद्याकार्यत्वाभ्युपगमेऽपि स्वप्रकारकप्रतीतिविशेष्यनिष्ठ-त्रैकालिकनिषेध-प्रतियोगित्वरूपं मिथ्यात्वं न स्यात्, निषेधप्रतियोगिनो रजतादेस्तत्र प्रतिभासकाले विद्यमानत्वेन नात्र त्रिषु कालेषु रजतादिकं नास्तीति त्रैकालिकनिषेधायोगात्, तद्विरोधिनो यदा कदाचित् प्रतियोगिसत्त्वस्य तत्र विद्यमानत्वादिति शङ्कते—**नन्वि**ति। **शुक्तौ** शुक्त्यवच्छिन्नचैतन्ये। **प्राति**भासिकसत्तेति। स्वाभाविकसत्ताभ्युपगमे बाधाभावप्रसङ्गादिति भावः। **नेदं** रजतमिति। नात्र रजतमित्याकारकमित्यर्थः। यथाश्रुते त्वस्य नात्यन्ताभाव-विषयत्वम्, किन्त्वन्योन्याभाव-विषयत्वमेव, अभिलापवाक्यजन्य-प्रतीतेरन्योन्याभाव-विषयकत्वादभिलप्यमानप्रतीतेरपि तद्विषयविषयत्वौचित्यात्। तथा हि विषयज्ञानवान् हि पुरुषः पुरुषान्तरे स्वनिष्ठज्ञानसमानाकारज्ञानोत्पादनाय यद् वाक्यं प्रयुङ्क्ते, तदभिलापवाक्यम्। तद्वाक्यजनितज्ञानस्य यो विषयो यश्चाकारः, प्रयोक्तृपुरुषज्ञानस्य स एव विषयः, स एवाकारः, अन्यथा पुरुषान्तरे प्रयोक्तृपुरुषज्ञान-समानाकार-ज्ञानानुदयप्रसङ्गात्। प्रकृते तु नेदं रजतमित्यभिलापवाक्याद् जायमानं शाब्दज्ञानं यदा रजतान्योन्याभावं विषयीकरोति, नात्यन्ताभावम्, एकविभक्त्यन्तपदोपस्थापिते धर्मिणि नञोऽन्योन्याभाव-बोधकत्वनियमात्, तदाऽभिलप्यमानप्रतीतेरप्यन्योन्याभावविषयत्वं युक्तम्। तथा चोक्तमद्वैतसिद्धौ द्वितीयमिथ्यात्वनिरूपणे—"अभिलापजन्यप्रतीति-तुल्यत्वादभिलप्यमान-प्रतीतेर्नेदं रजतमिति व्याक्याभिलप्यप्रतीतेरन्योन्याभाव-विषयत्वमेवे"ति। तथा च नेदं रजतमित्यभिलप्यज्ञानस्याप्यन्योन्याभावविषयत्वमेव, नात्यन्ताभावविषयत्वमतो नेदं रजतमित्यत्र नात्र रजतमिति वक्तव्यमिति भावः। **त्रैकालिक**निषेधज्ञानम् अत्यन्ताभावज्ञानम्, ध्वंसप्रागभावरूपयोर्निषेधयोर्व्यावर्त्तनाय त्रैकालिकेति निषेधविशेषणम्। **न स्या**दिति। यदा कदाचित्

**नेतिवदिति चेन्न, न हि तत्र रजतत्वावच्छिन्न-प्रतियोगिताकाभावो निषेधधी-विषयः, किन्तु लौकिक-पारमार्थिकत्वावच्छिन्न-प्रातिभासिक-रजत-प्रति-**

प्रतियोगिसत्त्वस्य त्रैकालिकाभावविरोधित्वादिति भावः। यद्यत्र त्रैकालिकनिषेधज्ञानं न भवेत्, कीदृशं तर्हि निषेधज्ञानमित्यत आह—**किन्त्विति**। **इदानी**मिदमिति। इदानीं नात्र रजतमित्यर्थः। तथा च रजतस्येदमि कदाचिन्निषेधान्न मिथ्यात्वं, त्रैकालिकाभावप्रतियोगिन एव मिथ्यात्वादिति भावः। तत्र दृष्टान्तमाह—**इदानी**मिति। **घटः** श्यामो नेति। घटे श्यामो नास्तीत्यर्थः। तथा च पाकरक्ते घटे श्यामरूपाभावेऽपि यथा श्यामरूपस्य न मिथ्यात्वम्? तत् कस्य हेतोः? श्यामरूपस्य कदाचिन्निषेधात्। एवं शुक्तिरजतादेरपि कदाचिन्निषेधान्न मिथ्यात्वमिति पूर्वपक्षाशयः। परिहरति—**ने**ति। तत्र हेतुमाह—**न ही**ति। **तत्र** त्रिषु कालेषु नात्र रजतमिति रजतनिषेधस्थले। **रजत**-त्वेति। रजतत्वेनावच्छिन्ना प्रतियोगिता यस्याभावस्य स रजतत्वावच्छिन्न-प्रतियोगिताकः, प्रतियोगिनिष्ठाया अभावीयप्रतियोगितायाः किञ्चिद्धर्मावच्छिन्नत्वनियमात्। स चासावभावश्चेति विग्रहः। **न निषेध**धीविषयः नात्यन्ताभावज्ञानविषयः। अयं भावः—यस्यात्यन्ताभावः, स तस्याभावस्य प्रतियोगी। तस्मिन् प्रतियोगिनि या प्रतियोगिता विद्यते, सा केनचिद्धर्मेण केनचित् सम्बन्धेन चावच्छिद्यते। येन धर्मेण निषेधः क्रियते, स प्रतियोगितावच्छेदको धर्म इति येन च सम्बन्धेन निषेधः क्रियते, स प्रतियोगितावच्छेदकः सम्बन्ध इति च व्यवह्रियते। तथा चात्र रजतं नास्तीत्यत्र यदि प्रातिभासिक-रजतत्वेन रजतस्य निषेधः स्यात्, तदा तादृशाभावप्रतियोगिनि रजते या प्रतियोगिता सा रजतत्वावच्छिन्ना भवेत्, रजतत्वेन रजतस्य निषेधात्। अभावश्च रजतत्वावच्छिन्न-प्रतियोगिताको भवेत्। न चात्र तादृशनिषेधः सम्भवति, रजतत्वेन रजतस्य प्रतियोगिनस्तत्र सत्त्वात्, तस्य चात्यन्ताभावविरोधित्वात्। किन्त्वन्यरूपेण निषेधस्तेन रजतत्वावच्छिन्न-प्रतियोगिताकाभावो न निषेधधीविषय इति भावः। कीदृशस्तर्हि निषेधो निषेधधीविषय इत्यत आह—**किन्त्विति**। **लौकिक**पारमार्थिकत्वेति। ब्रह्मभिन्नस्य पारमार्थिकत्वाभावेऽप्ययं पारमार्थिक इति यस्य लोके पारमार्थिकत्वेन व्यवहारस्तस्यैव धर्मो लौकिकपारमार्थिकत्वं, तेन लौकिकपारमार्थिकत्वेन धर्मेणावच्छिन्ना प्रतियोगिता यस्य प्रतिभासिकरजताभावस्य सोऽभावो लौकिकपारमार्थिकत्वावच्छिन्न-प्रातिभासिक-रजतप्रतियोगिताक इत्यर्थः। अस्य च निषेधधीविषय इत्यनेनान्वयः।

**योगिताकः, व्यधिकरण-धर्मावच्छिन्न-प्रतियोगिताकाभावाभ्युपगमात्।** तथा च शुक्तौ रजतस्य निषेधो न प्रातिभासिकरजतत्वेन किन्तु लौकिकपारमार्थिकत्वेन। तेन लौकिकपारमार्थिकत्वावच्छिन्न-प्रतियोगिताको रजताभावस्तत्र निषेधधीविषयो न प्रातिभासिकरजतत्वावच्छिन्नप्रतियोगिताकः। तथाच तत्र प्रातिभासिकरजतत्वावच्छिन्न-प्रातिभासिकरजतसत्त्वेऽपि लौकिकपारमार्थिकत्वावच्छिन्नरजतस्य निषेधो न विरुध्यते, प्रातिभासिकरजतत्वावच्छिन्न-प्रतियोगिताक-रजताभावेन सह प्रातिभासिकरजतत्व-विशिष्टरजतस्य विरोधेऽपि लौकिकपारमार्थिकत्वावच्छिन्न-प्रतियोगिताक-रजताभावेना-विरोधात्, समानधर्मावच्छिन्न-प्रतियोग्यभावयोर्विरोधादिति भावः। ननु प्रतियोग्य-वृत्तिधर्मस्य प्रतियोगितावच्छेदकत्वे व्यधिकरणधर्मस्यापि प्रतियोगितावच्छेदकत्वापत्ति-रित्यत आह—**व्यधि**करणेति। विभिन्नं प्रतियोगिभिन्नं सद् रजतादिकमधिकरणं यस्य स व्यधिकरणः, व्यधिकरणश्चासौ धर्मश्चेति व्यधिकरणधर्मस्तेनावच्छिन्ना प्रतियोगिता यस्याभावस्य स व्यधिकरणधर्मावच्छिन्न-प्रतियोगिताकाभावस्तस्य स्वीकारादित्यर्थः। तथा च यत्र घटत्वेन पटो निषिध्यते, तत्र पटः पटाभावस्य प्रतियोगी, पटत्वं तु नैवा-भावीय-प्रतियोगिताया अवच्छेदकं, पटत्वेन पटस्य निषेधाकरणात्, किन्तु घटत्वं, तेनैव धर्मेण तस्य निषेधात्। एवं प्रकृतेऽपि लौकिकपारमार्थिकत्वेन प्रातिभासिक-रजतस्य निषेधात् लौकिकपारमार्थिकत्वं व्यधिकरणमपि प्रातिभासिकरजताभावस्य प्रतियोगिताया अवच्छेदकम्, न प्रातिभासिकरजतत्वं, तेनैव रूपेण तस्यानिषेधात्। न च प्रतियोग्य-वृत्तिधर्मस्य न प्रतियोगितावच्छेदकत्वमिति वाच्यम्, मानाभावात् बाधकाभावाच्च। अन्यथा प्रतियोग्यवृत्तिधर्मस्याभावज्ञानविषयीभूतस्य प्रतियोगितानवच्छेदकत्वे व्यधि-करण-धर्मेण प्रतियोगिनो निषेधाभावप्रसङ्गादिति भावः।

वस्तुतस्त्वयं निषेधो न व्यधिकरणधर्मावच्छिन्न-प्रतियोगिताकस्तथात्वे लौकिकपार-मार्थिकत्वावच्छिन्न-शुक्तिरजतादेर्निषेधेऽपि लौकिकपारमार्थिकत्वावच्छिन्न-प्रतियोगिता-काभावेन प्रातिभासिकत्वावच्छिन्न-प्रतियोगिनो विरोधाभावेन प्रातिभासिकत्वावच्छिन्न-शुक्तिरजतादेः शुक्तावनिषेधाद् मिथ्यात्वं न स्यात्, स्वाश्रयनिष्ठात्यन्ताभावप्रति-योगित्वस्यैव मिथ्यात्वात्। तथा चोक्तं भाष्यवार्त्तिके—"तच्च व्यधिकरणधर्मावच्छिन्न-विशेष्यकज्ञानमित्यपास्तं, नेदं रजतमिति स्वरूपबाधानुपपत्ते"रिति। तस्माद् येन रूपेण रजतादिकं प्रसक्तं, तेनैव रूपेण तत्र तस्य निषेधो वक्तव्यः। शुक्त्यादौ तु प्रातिभासिकत्वेन

**ननु प्रातिभासिके रजते पारमार्थिकत्वमवगतं न वा ? अनवगते प्रतियोगितावच्छेदकावच्छिन्न-ज्ञानाभावादभावप्रत्यक्षानुपपत्तिः । अवगतेऽपरोक्षावभासस्य तत्कालीन-विषयसत्ता-नियतत्वाद् रजते पारमार्थिकत्वमप्यनिर्वच-**

व्यावहारिकत्वेन च रजतादिकं प्रसक्तमिति तस्य प्रातिभासिकत्वेन व्यावहारिकत्वेन च तत्र निषेधो युक्तः। न च व्यावहारिकत्वेन रजतादिकं नैव प्रसक्तमिति वाच्यम्, व्यावहारिकरजतार्थिनस्तत्र प्रवृत्तिदर्शनात् प्रातिभासिकत्वेनेव व्यावहारिकत्वेनापि तत्-प्रसक्तेरिष्टत्वात्। तथा चोक्तं लघुचन्द्रिकायां—"प्रातीतिकरूप्ये व्यावहारिकरूप्यस्य सद्रजतत्व-स्वरूपेण तादात्म्यं प्रसक्तमेव, अन्यथा प्रातीतिकरूप्ये व्यावहारिकरूप्यलिप्सोः प्रवृत्त्यनुपपत्ते"रिति। न च लौकिकपरमार्थत्वेन रजतनिषेधदशायां प्रातिभासिकत्वावच्छिन्नरजतस्यानिषेधादिदं रजतमिति प्रतीत्यापत्तिः स्यादिति वाच्यम्, इयं शुक्तिरित्याद्याकारेणाधिष्ठान-तत्त्वसाक्षात्कारेण प्रातिभासिकरजतोपादानस्याज्ञानस्य निवृत्तौ तदुपादेयस्य प्रातिभासिकस्यापि निवृत्तेस्तत्प्रतीत्यापादनायोगात्। न च यदाधिष्ठान-ज्ञानं नैवोत्पन्नम्, उत्पन्नञ्च नेदं रजतं, नात्र रजतमित्यादिकं ज्ञानं, तदा तत्प्रत्यक्षापत्तिरिति वाच्यम्, नेदं रजतं नात्र रजतमित्यादीनामधिष्ठानज्ञानोत्तरकालभावित्वेनानुवादत्वात्। तथा चोक्तं पञ्चपादिकायां—"शुक्तिकेयमित्येव निराकाङ्क्षं वाक्यम्, नेदं रजतमित्याद्यनुवाद" इति। तस्माद् रजत-रजतत्वादिवद् व्यावहारिकरजततादात्म्यस्य व्यावहारिकत्वस्य च तत्रोत्पन्नत्वात् तदवच्छिन्न-प्रतियोगिताकाभावो न व्यधिकरण-धर्मावच्छिन्न-प्रतियोगिताकः, किन्तु समानाधिकरणधर्मावच्छिन्न-प्रतियोगिताक इति।

नन्वस्तु व्यधिकरणधर्मावच्छिन्न-प्रतियोगिताकोऽभावस्तथापि तस्य ज्ञानं नैव भवेत्, व्यधिकरणधर्मावच्छिन्नस्य प्रतियोगिनो ज्ञानाभावात्। अभावज्ञानं प्रति प्रतियोगितावच्छेदकावच्छिन्नस्य प्रतियोगिनो ज्ञानस्य हेतुत्वादिति शङ्कते—**नन्विति**। अनवगतत्वपक्षे दोषमाह—**अनवगत** इति। **प्रति**योगितेति। प्रतियोगितावच्छेदकेन पारमार्थिकत्वेनावच्छिन्नस्य प्रतियोगिनः प्रातिभासिक-रजतादेर्ज्ञानाभावादित्यर्थः। **प्रत्यक्षानुप**पत्तिरिति। प्रतियोगितावच्छेदकावच्छिन्नस्य प्रतियोगिनो ज्ञानस्याभावज्ञानं प्रति हेतुत्वादिति भावः। अवगतत्वपक्षे दोषमाह—**अवगत** इति। **अपरोक्षा**वभासस्य प्रत्यक्षज्ञानस्य। **तत्**कालीनेति। तत्कालीना प्रत्यक्षज्ञानकालीना या विषयसत्ता, तया नियतत्वाद् व्याप्तत्वादित्यर्थः। तथा च यत्रापरोक्षावभासस्तत्र विषयसत्त्वमिति-

**नीयं रजतवदेवोत्पन्नमिति तदवच्छिन्नरजतसत्त्वे तदवच्छिन्नाभावस्तत्र कथं वर्त्तत इति चेन्न, पारमार्थिकत्वस्याधिष्ठाननिष्ठस्य रजते प्रतिभाससम्भवेन रजतनिष्ठ-पारमार्थिकत्वोतपत्त्यनभ्युपगमात्। यत्रारोप्यमसन्निकृष्टम्, तत्रैव प्रातिभासिक-वस्तूत्पत्तेरङ्गीकारात्। अत एवेन्द्रिय-सन्निकृष्टतया जवा-कुसुमगत-लौहित्यस्य स्फटिके भानसम्भवान्न स्फटिकेऽनिर्वचनीय-लौहित्यो-**

त्पत्तेः, प्रत्यक्षं प्रति विषयस्य कारणतया तत्पूर्वं तत्सत्त्वावश्यकत्वादिति भावः। **रजते** प्रातिभासिकरजते। **पार**मार्थिकत्वमपीति। अपिकारेण तत्संसर्गस्यापि परिग्रहः। **अनिर्व**चनीयं प्रातिभासिकम्। **रजत**वदिति। यथा शुक्तौ रजतप्रत्यक्षान्यथानुपपत्त्या रजतस्योत्पत्तिस्तथा प्रतियोगितावच्छेदकावच्छिन्नस्य प्रतियोगिनः प्रत्यक्षान्यथानुपपत्त्या तत्र प्रतियोगितावच्छेदकस्य लौकिकपारमार्थिकत्वस्याप्युत्पत्तिरिति भावः। **इति**हेतौ। **तद्**वच्छिन्नेति। लौकिकपारमार्थिकत्वावच्छिन्नेत्यर्थः। **तद्**वच्छिन्नेति। लौकिकपार-मार्थिकत्वावच्छिन्न-प्रतियोगिताको रजताभाव इत्यर्थः। **तत्र** प्रतियोग्यधिकरणे शुक्तौ। **कथ**मिति। किमाक्षेपे, कथमपि नेत्यर्थः। प्रतियोगितावच्छेदकावच्छिन्न-प्रति-योगिसत्त्वस्य तदवच्छिन्नप्रतियोगिताकाभाव-विरोधित्वादिति भावः। आशङ्कां परि-हरति—**ने**ति। **अधि**ष्ठानस्येति। प्रातिभासिकरजतोपादानाज्ञानाश्रयगतस्येत्यर्थः। **प्रति**भाससम्भवेनेति। यथाऽज्ञानाश्रयगतस्येदन्त्वस्य रजते संसर्गप्रतिभासस्तथाधारगतस्य लौकिकपारमार्थिकत्वस्यापि रजते संसर्गप्रतिभासः, रजताधाराभिन्नत्वाद् रजतस्येति न तत्र लौकिकपारमार्थिकत्वोत्पत्तिरिति भावः। नन्वेवमपि इदमि रजतत्वसंसर्गोऽपि नोत्पद्यताम्, इदमभिन्नतयैव रजतस्योत्पन्नत्वात् तद्गतरजतत्वस्याप्येवंरूपेण भानसम्भ-वादित्यत आह—**यत्रे**ति। यस्यां दशायामित्यर्थः। **असन्निकृष्ट**मिन्द्रियासम्बद्धम्। **तत्रैव** तस्यां दशायामेव। **अङ्गी**कारादिति। तथा च यथेदन्त्वं पारमार्थिकत्वञ्चेन्द्रिय-सन्निकृष्टं, नैवं रजतत्वं, तस्य प्रतिभासकालोत्पन्नत्वेन प्रतिभासात् पूर्वमसत्त्वात्। तस्मात् तस्योत्पत्तिरेष्टव्या, अन्यथा तस्य प्रत्यक्षावभासायोगात्, नैवमिदन्त्वस्य, तस्य सन्निकृष्टतया प्रत्यक्षत्वसम्भवादिति भावः। नन्वेवमरुणः स्फटिक इत्यत्रापि स्फटिके लौहित्योत्पत्तिर्न स्यात्, जवाकुसुमगत-लौहित्यस्य सन्निकृष्टस्य तत्र भानसम्भवादित्या-शङ्कामिष्टापत्त्या परिहरति—**अत** एवेति। आरोप्यसन्निकर्षस्थले आरोप्यप्रतिभास-सम्भवादेवेत्यर्थः। **भान**सम्भवादिति। जवास्फटिकयोस्तादात्म्याभावेऽपि द्वयोर्दुष्टे-

**त्पत्तिः। नन्वेवं यत्र जवाकुसुमं द्रव्यान्तर-व्यवधानादसन्निकृष्टम्, तत्र लौहित्य-प्रतीत्या प्रातिभासिकं लौहित्यं स्वीक्रियतामिति चेन्न, इष्टत्वात्। एवं प्रत्यक्षभ्रमान्तरेष्वपि प्रत्यक्षसामान्य-लक्षणानुगमो यथार्थ-प्रत्यक्षलक्षणा-सद्भावश्च दर्शनीयः।**

न्द्रियसन्निकृष्टतया स्फटिके लौहित्यसंसर्ग-प्रतिभास इति भावः। **लौहित्यो**त्पत्तिरिति। प्रत्यक्षप्रतिभासान्यथानुपपत्त्या हि प्रातिभासिकोत्पत्तिः स्वीक्रियते, तत्र त्वन्यथा लौहित्यप्रतिभाससम्भवान्न तदुत्पत्तिरिति भावः। नन्वेवं यत्र स्फटिकमात्रं सन्निकृष्टं, जवाकुसुमञ्च पेटिकादिद्रव्येण व्यवधानादसन्निकृष्टं, तत्र स्फटिके लौहित्योत्पत्तिः स्यात्, तस्यासन्निकृष्टत्वादित्याशङ्कते—**नन्वेव**मिति। **लौहित्य**प्रतीत्या अरुणः स्फटिक इति प्रत्यक्षप्रतीतेरुदयात्। **स्वीक्रि**यतामिति। प्रत्यक्षस्य वर्त्तमानविषयकत्वनियमात् तत्र प्रातिभासिक-लौहित्योत्पत्तेरापत्तिरिति भावः। इष्टापत्त्या परिहरति—**ने**ति। **इष्ट**-त्वादिति। तत्र लौहित्योत्पत्तेरिष्टत्वादिष्टप्रसञ्जनमेव कृतं, नानिष्टप्रसञ्जनमिति न कोऽपि दोष इति भावः।

वस्तुतस्तु जवाकुसुमद्वारेन्द्रियसम्बद्धस्य लौहित्यस्य स्फटिके संसर्गज्ञानाभ्युपगमेऽन्यथा-ख्यातिरेव स्यान्नानिर्वचनीयख्यातिः। न चारोप्यसन्निकर्षस्थलेऽन्यथाख्यातिरेव, नानि-र्वचनीयख्यातिरिति वाच्यम्, तथा सति रजतादाविदन्त्वसंसर्गस्य शङ्खादौ पीतता-संसर्गस्यात्मन्यन्तःकरणधर्मसंसर्गस्य चाध्यासाभावप्रसङ्गात्, पञ्चपादिकादिग्रन्थविरोध-प्रसङ्गाच्च, तैः स्फटिकलौहित्यस्य मिथ्यात्वाभ्युपगमात्। तथा चोक्तं पञ्चपादिकायाम् —"तेनान्तःकरणोपरागनिमित्तं मिथ्यैवाऽहंकर्त्तृत्वमात्मनः स्फटिकमणेरिवोपधान-निमित्तो लोहितिमे"ति। विवरणे च—"मिथ्यात्वं स्फटिकलौहित्यस्य क्लृप्तप्रतीति-सत्तयोः कारणाभावादि"ति। किञ्च यत्रैव यत् सन्निकृष्टं तत्रैव तत् प्रतिभासतामन्यत्र तत्प्रतिभासस्तु कथम्? न ह्येकत्र सन्निकृष्टस्यान्यत्र प्रतिभासो दृष्टचरः सोपपत्तिको वाऽतिप्रसङ्गात्। लौहित्यञ्च जवासन्निकृष्टं जवायां प्रतिभासताम्, स्फटिके तत्-प्रति-भासस्तु कथम्? न हि लौहित्यं स्फटिके नयनसन्निकृष्टम्। यदि दुष्टेन्द्रियबलात् स्फटिके तत्प्रतिभास इत्युच्येत. तर्हि रजतस्यापि तद्बलाच्छुक्तौ प्रतिभाससम्भवेऽनिर्वच-नीयख्यातिर्दत्तजलाञ्जलितामीयात्। तथा चोक्तं तन्त्रवार्त्तिके—"प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः। नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे"॥ इति।

**उक्तं प्रत्यक्षं प्रकारान्तरेण द्विविधम्—इन्द्रियजन्यं तदजन्यं चेति। तत्रेन्द्रियाजन्यं सुखादि-प्रत्यक्षम्, मनस इन्द्रियत्व-निराकरणात्। इन्द्रियाणि पञ्च घ्राण-रसन-चक्षुः-श्रोत्र-त्वगात्मकानि। सर्वाणि चेन्द्रियाणि स्व-स्व-विषयसंयुक्तान्येव प्रत्यक्षज्ञानं जनयन्ति। तत्र घ्राण-रसन-त्वगात्मकानीन्द्रियाणि स्वस्थानस्थितान्येव गन्ध-रस-स्पर्शोपलम्भान् जनयन्ति। चक्षुः-श्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः,**

तस्मादारोप्यसन्निकर्षस्थलेऽपि स्फटिके लौहित्यान्तरं प्रातिभासिकमभ्युपगमनीयम्। प्रत्यक्षसामान्यलक्षणं प्रत्यक्षप्रमालक्षणञ्च निरूप्य प्रत्यक्षभ्रमान्तरे तदतिदिशति—**एव**मिति। उक्तरीत्येत्यर्थः। **प्रत्यक्ष**भ्रमान्तरे पीतः शङ्खस्तिक्तो गुड़ इत्यादिभ्रमे।

प्रकारद्वयेन पुनः प्रत्यक्षज्ञानं विभजते—**उक्तं प्रत्यक्षमि**ति। प्रत्यक्षज्ञानमित्यर्थः। **इन्द्रियजन्य**मिति। यद्यपीन्द्रियस्य प्रत्यक्षज्ञानं प्रति साक्षान्न कारणत्वं, तथापि वृत्त्युपजननद्वारा तदिति बोध्यम्। **सुखादि**प्रत्यक्षमिति। आदिपदेनाऽन्तःकरण-तद्धर्माणां प्रातिभासिकानाञ्च प्रत्यक्षपरिग्रहः। एतेषां प्रत्यक्षं नैवेन्द्रियजन्यं, मनसः इन्द्रियत्वनिराकरणादिति भावः। षड़ेव ज्ञानेन्द्रियाणीति नैयायिकादयो मन्यन्ते, तान् प्रत्याह—**इन्द्रियाणि** पञ्चेति। ज्ञानेन्द्रियाणि पञ्चैवेत्यर्थः। मनसः इन्द्रियत्व-निराकरणादिति भावः। इन्द्रियाणि विषयसम्बन्धं विनैव ज्ञानजनकानीति सौगता मन्यन्ते, तान् प्रत्याह—**सर्वाणी**ति। **स्वस्व**विषयसंयुक्तान्येव स्वस्वविषयसम्बद्धान्येव। इन्द्रियाणामसम्बद्धार्थग्राहकत्वेऽतिदूरवर्त्तिनामिन्द्रियसम्बन्धशून्यानां गन्धादीनामपि प्रत्यक्षत्वप्रसङ्गादिति भावः। ननु विषयसम्बद्धानामिन्द्रियाणां विषयज्ञानजनकत्वं चेत् सोऽयं विषयेन्द्रियसम्बन्धः किं विषयाणामिन्द्रियदेशगमनाद् जायत इन्द्रियाणां वा विषयदेशगमनादित्यत आह—**तत्रे**ति। पञ्चेन्द्रियेषु मध्ये इत्यर्थः। **स्वस्थान**स्थितान्येवेति। स्वाधिकरणस्थितान्येवेत्यर्थः। एवकारेण चक्षुरादिवत् स्वस्थानस्थितानामेषां विषयदेशगमनं व्यवच्छिद्यते। चक्षुःश्रोत्रयोर्विशेषमाह—**चक्षु**रिति। **स्वत** एव स्वसामर्थ्यादेव स्वस्थानस्थिते एव वा। तेन विषयसम्बन्धदशायां देहस्य न निरिन्द्रियत्वापत्तिरिति भावः। **गत्वा** शब्दावच्छेदक-देशेन चक्षुर्वत् संयुज्य। तथा च श्रोत्रं स्वसंयुक्तावच्छिन्नत्वसम्बन्धेन शब्दस्य ग्राहकम्, तत्पुरुषीयकर्णावच्छेदेनाऽनुत्पद्यमानस्यापि दूरस्थस्य शब्दस्य तत्पुरुषीयश्रोत्रेण ग्रहणात्, दूरे शब्द इति प्रत्ययात्। स्वं श्रोत्रं,

**त्पत्तिः। नन्वेवं यत्र जवाकुसुमं द्रव्यान्तर-व्यवधानादसन्निकृष्टम्, तत्र लौहित्य-प्रतीत्या प्रातिभासिकं लौहित्यं स्वीक्रियतामिति चेन्न, इष्टत्वात्। एवं प्रत्यक्षभ्रमान्तरेष्वपि प्रत्यक्षसामान्य-लक्षणानुगमो यथार्थ-प्रत्यक्षलक्षणा-सद्भावश्च दर्शनीयः।**

न्द्रियसन्निकृष्टतया स्फटिके लौहित्यसंसर्ग-प्रतिभास इति भावः। **लौहित्यो**त्पत्तिरिति। प्रत्यक्षप्रतिभासान्यथानुपपत्त्या हि प्रातिभासिकोत्पत्तिः स्वीक्रियते, तत्र त्वन्यथा लौहित्यप्रतिभाससम्भवान्न तदुत्पत्तिरिति भावः। नन्वेवं यत्र स्फटिकमात्रं सन्निकृष्टं, जवाकुसुमञ्च पेटिकादिद्रव्येण व्यवधानादसन्निकृष्टं, तत्र स्फटिके लौहित्योत्पत्तिः स्यात्, तस्यासन्निकृष्टत्वादित्याशङ्कते—**नन्वेव**मिति। **लौहित्य**प्रतीत्या अरुणः स्फटिक इति प्रत्यक्षप्रतीतेरुदयात्। **स्वीक्रि**यतामिति। प्रत्यक्षस्य वर्त्तमानविषयकत्वनियमात् तत्र प्रातिभासिक-लौहित्योत्पत्तेरापत्तिरिति भावः। इष्टापत्त्या परिहरति—**ने**ति। **इष्ट**-त्वादिति। तत्र लौहित्योत्पत्तेरिष्टत्वादिष्टप्रसञ्जनमेव कृतं, नानिष्टप्रसञ्जनमिति न कोऽपि दोष इति भावः।

वस्तुतस्तु जवाकुसुमद्वारेन्द्रियसम्बद्धस्य लौहित्यस्य स्फटिके संसर्गज्ञानाभ्युपगमेऽन्यथा-ख्यातिरेव स्यान्नानिर्वचनीयख्यातिः। न चारोप्यसन्निकर्षस्थलेऽन्यथाख्यातिरेव, नानिर्वचनीयख्यातिरिति वाच्यम्, तथा सति रजतादाविदन्त्वसंसर्गस्य शङ्खादौ पीतता-संसर्गस्यात्मन्यन्तःकरणधर्मसंसर्गस्य चाध्यासाभावप्रसङ्गात्, पञ्चपादिकादिग्रन्थविरोध-प्रसङ्गाच्च, तैः स्फटिकलौहित्यस्य मिथ्यात्वाभ्युपगमात्। तथा चोक्तं पञ्चपादिकायाम्—"तेनान्तःकरणोपरागनिमित्तं मिथ्यैवाऽहंकर्त्तृत्वमात्मनः स्फटिकमणेरिवोपधान-निमित्तो लोहितिमे"ति। विवरणे च—"मिथ्यात्वं स्फटिकलौहित्यस्य क्लृप्तप्रतीति-सत्तयोः कारणाभावादि"ति। किञ्च यत्रैव यत् सन्निकृष्टं तत्रैव तत् प्रतिभासतामन्यत्र तत्प्रतिभासस्तु कथम्? न ह्येकत्र सन्निकृष्टस्यान्यत्र प्रतिभासो दृष्टचरः सोपपत्तिको वाऽतिप्रसङ्गात्। लौहित्यञ्च जवासन्निकृष्टं जवायां प्रतिभासताम्, स्फटिके तत्-प्रति-भासस्तु कथम्? न हि लौहित्यं स्फटिके नयनसन्निकृष्टम्। यदि दुष्टेन्द्रियबलात् स्फटिके तत्प्रतिभास इत्युच्येत, तर्हि रजतस्यापि तद्बलाच्छुक्तौ प्रतिभाससम्भवेऽनिर्वच-नीयख्यातिर्दत्तजलाञ्जलितामीयात्। तथा चोक्तं तन्त्रवार्त्तिके—"प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः। नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे"॥ इति।

**उक्तं प्रत्यक्षं प्रकारान्तरेण द्विविधम्—इन्द्रियजन्यं तदजन्यं चेति। तत्रेन्द्रियाजन्यं सुखादि-प्रत्यक्षम्, मनस इन्द्रियत्व-निराकरणात्। इन्द्रियाणि पञ्च घ्राण-रसन-चक्षुः-श्रोत्र-त्वगात्मकानि। सर्वाणि चेन्द्रियाणि स्व-स्व-विषयसंयुक्तान्येव प्रत्यक्षज्ञानं जनयन्ति। तत्र घ्राण-रसन-त्वगात्मकानीन्द्रियाणि स्वस्थानस्थितान्येव गन्ध-रस-स्पर्शोपलम्भान् जनयन्ति। चक्षुः-श्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्वविषयं गृह्णीतः,**

तस्मादारोप्यसन्निकर्षस्थलेऽपि स्फटिके लौहित्यान्तरं प्रातिभासिकमभ्युपगमनीयम्। प्रत्यक्षसामान्यलक्षणं प्रत्यक्षप्रमालक्षणञ्च निरूप्य प्रत्यक्षभ्रमान्तरे तदतिदिशति—**एव**मिति। **उक्त**रीत्येत्यर्थः। **प्रत्यक्ष**भ्रमान्तरे पीतः शङ्खस्तिक्तो गुड़ इत्यादिभ्रमे।

प्रकारद्वयेन पुनः प्रत्यक्षज्ञानं विभजते—**उक्तं प्रत्यक्षमि**ति। प्रत्यक्षज्ञानमित्यर्थः। **इन्द्रियजन्य**मिति। यद्यपीन्द्रियस्य प्रत्यक्षज्ञानं प्रति साक्षान्न कारणत्वं, तथापि वृत्त्युपजननद्वारा तदिति बोध्यम्। **सुखादि**प्रत्यक्षमिति। आदिपदेनाऽन्तःकरण-तद्धर्माणां प्रातिभासिकानाञ्च प्रत्यक्षपरिग्रहः। एतेषां प्रत्यक्षं नैवेन्द्रियजन्यं, मनसः इन्द्रियत्वनिराकरणादिति भावः। षड़ेव ज्ञानेन्द्रियाणीति नैयायिकादयो मन्यन्ते, तान् प्रत्याह—**इन्द्रियाणि** पञ्चेति। ज्ञानेन्द्रियाणि पञ्चैवेत्यर्थः। मनसः इन्द्रियत्व-निराकरणादिति भावः। इन्द्रियाणि विषयसम्बन्धं विनैव ज्ञानजनकानीति सौगता मन्यन्ते, तान् प्रत्याह—**सर्वाणी**ति। **स्वस्व**विषयसंयुक्तान्येव स्वस्वविषयसम्बद्धान्येव। इन्द्रियाणामसम्बद्धार्थग्राहकत्वेऽतिदूरवर्त्तिनामिन्द्रियसम्बन्धशून्यानां गन्धादीनामपि प्रत्यक्षत्वप्रसङ्गादिति भावः। ननु विषयसम्बद्धानामिन्द्रियाणां विषयज्ञानजनकत्वं चेत् सोऽयं विषयेन्द्रियसम्बन्धः किं विषयाणामिन्द्रियदेशगमनाद् जायत इन्द्रियाणां वा विषयदेशगमनादित्यत आह—**तत्रे**ति। पञ्चेन्द्रियेषु मध्ये इत्यर्थः। **स्वस्थान**स्थितान्येवेति। स्वाधिकरणस्थितान्येवेत्यर्थः। एवकारेण चक्षुरादिवत् स्वस्थानस्थितानामेषां विषयदेशगमनं व्यवच्छिद्यते। चक्षुःश्रोत्रयोर्विशेषमाह—**चक्षु**रिति। **स्वत** एव स्वसामर्थ्यादेव स्वस्थानस्थिते एव वा। तेन विषयसम्बन्धदशायां देहस्य न निरिन्द्रियत्वापत्तिरिति भावः। **गत्वा** शब्दावच्छेदक-देशेन चक्षुर्वत् संयुज्य। तथा च श्रोत्रं स्वसंयुक्तावच्छिन्नत्वसम्बन्धेन शब्दस्य ग्राहकम्, तत्पुरुषीयकर्णावच्छेदेनाऽनुत्पद्यमानस्यापि दूरस्थस्य शब्दस्य तत्पुरुषीयश्रोत्रेण ग्रहणात्, दूरे शब्द इति प्रत्ययात्। स्वं श्रोत्रं,

**श्रोत्रस्यापि चक्षुर्वत् परिच्छिन्नतया भेर्यादि-देशगमन-सम्भवात्। अत एवानुभवो भेरीशब्दो मया श्रुत इति। वीचितरङ्गादि-न्यायेन कर्णशष्कुली-**

तत्संयुक्तः शब्दस्यावच्छेदको देशः, यस्मिन् श्रोत्रसंयुक्ते देशे आकाशे शब्द उत्पद्यते, स एव शब्दस्यावच्छेदको देशः, तेनावच्छिन्नः शब्द इति शब्दे स्वसंयुक्तावच्छिन्नत्वं विद्यत इति स्वसंयुक्तावच्छिन्नत्वसम्बन्धेन श्रोत्रं शब्दस्य ग्राहकमिति भावः। **स्वस्व-**विषयमिति। चक्षुर्विषयं रूपादिकं श्रोत्रविषयं शब्दादिकञ्चेत्यर्थः। ननु विषयदेश-प्राप्तयोरेव चक्षुःश्रोत्रयोः स्वस्वविषयग्राहकत्वे झटित्यादित्य-नक्षत्राद्यनुभवो न स्यात्, न स्याच्च शब्दाद्यनुभवः, आदित्यादिदेशप्राप्तौ विलम्बादिति चेन्न तैजसस्य चक्षुषो द्रुतगति-मत्त्वात्, अदृष्टोपगृहीतेन बाह्यालोकभागेनैकीभावाद्वा झटिति तावद्विषयसम्बन्धोपपत्तेः। ननु तैजसस्य चक्षुरिन्द्रियस्य गतिमत्त्वात् परिच्छिन्नत्वाच्च विषयदेशगमनसम्भवेऽप्या-काशात्मकस्य श्रोत्रस्य तन्न युज्यते, तस्य विभुत्वेन निष्क्रियत्वादित्यत आह—**श्रोत्रस्या-**पीति। **चक्षुर्व**दिति। यथा गोलकाधिष्ठानं चक्षुस्तैजसाद् भूतादुत्पन्नं परिच्छिन्नं वस्त्वन्तरम्, एवं श्रोत्रमपि कर्णशष्कुल्यधिष्ठानमाकाशादुत्पन्नं परिच्छिन्नं वस्त्वन्तरम्। तथा चोक्तं श्लोकवार्त्तिके—"तेनाकाशैकदेशो वा यद्वा वस्त्वन्तरं भवेदि"तीति भावः। **भेर्यादी**ति। यथाऽपरिच्छिन्नस्य तेजसो निष्क्रियत्वेऽपि परिच्छिन्नस्य तस्य क्रिया-वत्त्वाद् विषयदेशगमनम्, तद्वदाकाशादुतपन्नस्य परिच्छिन्नस्य श्रोत्रस्य क्रियावत्त्वाद् विषयदेशगमनम्। तदुक्तं विवरणे चतुर्थवर्णके—"चक्षुःश्रोत्रयोरपि प्राप्यकारित्वमनु-मीयते, तस्माद् भौतिकानि परिच्छिन्नानि प्राप्यकारीणीन्द्रियाणी"ति। बिन्दुसन्दीपने च —"चक्षुर्वच्छ्रोत्रस्यापि पञ्चभूतकार्यत्वेन क्रियाशक्तिमत्त्वाद् दूरदेशगमनसामर्थ्यमतो गत्वैव गृह्यत" इति भावः। परिच्छिन्नस्य गतिमत्त्वे प्रमाणं दर्शयति—**अत** एवेति। परिच्छिन्नस्य भेर्यादिदेशगमनसम्भवादेवेत्यर्थः। **भेरी**शब्द इति। भेरीदण्डसंयोगा-भिव्यक्तो भेरीदेशावच्छिन्नो विजातीयः शब्द इत्यर्थः। श्रोत्रस्य भेर्यादिदेशगमनान-भ्युपगमे भेरीदेशावच्छिन्नशब्दस्याप्रत्यक्षप्रसङ्गः, शब्दावच्छेदकस्य भेर्यादिदेशस्य श्रोत्र-देशागमनाद् तदवच्छिन्नशब्दस्य श्रोत्रदेशे गमनायोगादिति भावः। ननु भेरीदण्ड-संयोगाद् भेर्यवच्छिन्नाकाशे कश्चिद् विजातीयः शब्दो जायते, तस्माच्च शब्दात् तज्जातीयं शब्दान्तरं तस्माच्च तज्जातीयमित्येवंरीत्या श्रोत्रदेशसमागतस्य तस्य श्रोत्रेण ग्रहणमस्तु, किं श्रोत्रस्य विषयदेशगमनकल्पनया, भेरीशब्दो मया श्रुत इत्यादिप्रतीतेः शब्दवैजात्या-

**प्रदेशेऽनन्त-शब्दोत्पत्ति-कल्पनागौरवं भेरी शब्दो मया श्रुत इति प्रत्यक्षस्य भ्रमत्वकल्पना-गौरवञ्च स्यात्। तदेवं व्याख्यातं प्रत्यक्षम्।**

**इति श्रीमन्महामहोपाध्याय-धर्मराजाध्वरीन्द्र-विरचितायां वेदान्त-परिभाषायां प्रत्यक्षपरिच्छेदः**

दप्युपपत्तेरित्यत आह—**वीचि**तरङ्गादीति। प्रथमं वातेनैका वीचिरुत्पद्यते, ततस्तयैव वीच्यन्तरं, तेनाप्यन्यदित्येवंक्रमेण पूर्वपूर्वतरङ्गाद् येयमुत्तरोत्तरतरङ्गाणामुत्पत्तिः, सोऽयं-वीचितरङ्गन्यायस्तेन न्यायेनेत्यर्थः। आदिपदेन कदम्बकोरकन्याय-परिग्रहः। **अनन्ते**ति। वीचितरङ्गन्यायेन भेरीदण्डसंयोगाद् भेरीदेशे कश्चिच्छब्दो जायते. तस्माच्च शब्दात् तज्जातीयं शब्दान्तरं, तस्माच्च तज्जातीयमित्येवंरीत्या कर्णशष्कुलीदेशं यावच्छब्दोत्पत्ति-कल्पनेऽनन्तशब्दोत्पत्तिकल्पनारूपं गौरवं स्यादिति भावः। ननु वीचितरङ्गन्यायेन शब्दाच्छब्दान्तरोत्पत्त्यनभ्युपगमे किम्पुरुषदेशोच्चरितस्य तत्तच्छब्दस्य कथमत्रानुभव इति वाच्यम्, आकाशवत् सर्वगतानां तत्तच्छब्दानां यन्त्राद्यभिव्यञ्जकेनात्राभिव्यक्तानां श्रोत्रसम्बन्धाद् ग्रहणोपपत्तेः। अन्यथा महाप्रान्तरप्रान्तभागोच्चरितानां शब्दानां प्रति-बन्धकसंसर्गशून्यानां विपरीतप्रान्तस्थितैस्तुल्यग्रहणप्रसङ्गात्। न च तत्र प्रतिबन्धक-वैजात्यात् कस्यचिद् ग्रहणं कस्यचिदग्रहणमिति वाच्यम्, तत्र तादृशप्रतिबन्धक-सद्भावे प्रमाणाभावात्, अन्यथा प्रतिबन्धकवशादतिनिकटवर्त्तिनामपि शब्दानामग्रहणप्रसङ्गात्। गौरवान्तरं दर्शयति—**भेरी**शब्द इति। **भ्रम**त्वेति। भेर्यवच्छिन्नाकाशे जायमानो विजातीयः शब्द एव भेरीशब्दः। स च कर्णदेशं नैवागच्छेत्, तदवच्छेदिकाया भेर्याः कर्णदेशागमनात्। यश्च भवन्मते कर्णदेशमागच्छति। स न भेरीशब्दः, किन्तु शब्दमात्रम्। तेन शब्दमात्रे भेरीशब्दज्ञानं भ्रम एव। न च भ्रमत्वं तस्य युक्तम्, नेदं रजतमितिवन्नायं भेरीशब्द इति बाधादर्शनादिति भावः। प्रत्यक्षनिरूपणमुपसं-हरति—**तदि**ति। प्रकृतमित्यर्थः। **एवमि**ति। उक्तरीत्येत्यर्थः। **प्रत्यक्षं** प्रत्यक्षप्रमाणम्।

इति श्रीमन्महामहोपाध्याय-द्राविड़-लक्ष्मण-शास्त्रि-पूज्यपाद-शिष्य-श्रीमन्महामहोपाध्याय-योगेन्द्रनाथ-तर्कसांख्यवेदान्ततीर्थ-श्रीचरणान्तेवासि-श्रीपञ्चानन-भट्टाचार्य-विरचिते परिभाषा-संग्रहे प्रत्यक्षपरिच्छेदः

मानादिति भावः। एतेन ज्ञायमानलिङ्गस्यानुमितिकरणत्वं निराकृतं वेदितव्यम्, तस्य तत्करणत्वेऽतीतादिलिङ्गकानुमित्युच्छेदापत्तेः, अतीतादिलिङ्गस्य तदानीमविद्यमानत्वेन ज्ञायमानत्वासम्भवात्, विद्यमानस्यैव ज्ञानविषयीभूतस्य ज्ञायमानत्वात्। नन्वेवमपि व्याप्तिज्ञानं न करणं, व्यापाराभावात्, व्यापारवत्कारणस्यैव करणत्वादत आह—**तत्**संस्कार इति। व्याप्तिसंस्कार इत्यर्थः। **अवान्तर**व्यापारः कार्यकारणयोर्व्याप्तिज्ञानानुमित्योर्मध्यवर्त्ती व्यापारः। व्याप्तिसंस्कारस्य व्याप्तिज्ञानजन्यत्वाद् व्याप्तिज्ञानजन्यानुमिति-जनकत्वाच्च युक्तं तस्य व्यापारत्वम्। एवञ्च सति व्याप्तिज्ञानस्याप्यनुमितिकरणत्वं नानुपपन्नम्, व्याप्तिसंस्काररूप-व्यापारद्वारैव तस्यानुमितिजनकत्वादिति ग्रन्थकर्त्तुराशयः। नन्वेवमपि व्याप्तिज्ञानं नैव करणं, जनक-जनकत्वेनाऽन्यथासिद्धतया तस्याऽकारणत्वात्, कारणविशेषस्यैव करणत्वादिति चेन्न, व्यापारेण व्यापारिणोऽन्यथासिद्धत्वायोगात्। अयं भावः—यत्र हि जन्यस्य पूर्ववर्त्तित्वेऽवगते पश्चाज् तज्जनकस्य पूर्ववर्त्तित्वं गृह्यते, तत्र जन्येन जनकस्यान्यथासिद्धिः। यत्र तु जनकस्य पूर्ववर्त्तित्वे गृहीते तज्जन्यस्य पूर्ववर्त्तित्वावगमस्तत्र जन्येन जनकस्य नान्यथासिद्धिः। किन्तु तद्द्वारा तस्य जनकत्वमेव। तथा चोक्तं मणावीश्वरानुमाने—"यत्र जन्यस्य पूर्वभावेऽवगते जनकस्य पूर्वभावोऽवगम्यते, तत्र जन्येन जनकस्यान्यथासिद्धिः। यत्र च जनकस्य तथात्वेऽवगते जन्यस्य पूर्वभावावगमस्तत्र तद्द्वारा तस्य जनकत्वमेवे"ति। तथा च दर्शपौणमासाभ्यां स्वर्गकामो यजेत इत्यादौ यागादेः श्रूयमाण-स्वर्गसाधनत्वनिर्वाहाय कल्पितस्यापूर्वस्य न स्वर्गसाधनत्वविरोधः। अत एव व्यापारेण व्यापारिणो नान्यथासिद्धत्वमिति नियमः। तस्माद् व्याप्तिज्ञानस्य करणत्वं नानुपपन्नमिति।

वस्तुतस्तु व्याप्तिज्ञानं नैवानुमितिकरणम्, अनुमित्यकारणत्वात्, कारणविशेषस्यैव करणत्वात्। न च व्याप्तिज्ञानं कारणम्, तस्यानुमितिकारणत्वे पक्षधर्मताज्ञानस्याहेतुत्वापातात्, ज्ञानद्वययौगपद्यायोगात्। न हि पक्षधर्मताज्ञान-व्याप्तिज्ञानयोर्यौगपद्यं सम्भवति, मनःसंयोगभेदस्य धारावाहिकज्ञानभेदे प्रयोजकत्वात् पक्षधर्मताज्ञानजनक-संयोगातिरिक्तव्याप्तिज्ञानजनक-संयोगोत्पत्तेः प्रागेव पक्षधर्मताज्ञानस्य विनष्टत्वात्। अत एवोक्तं विवरणे—"ननु लिङ्गज्ञानं व्याप्तिस्मृतिश्च लिङ्गिज्ञानकारणं न संस्कार इति, नेत्याह——संस्कारानुद्बोध इति। ज्ञानद्वययोगपद्याभावादित्यर्थ" इति। तस्माद् व्याप्तिज्ञानं नैवानुमिति-कारणं, किन्तु तत्संस्कारः। तथा च लिङ्गज्ञानान्नानुमित्यनुपपत्तिः। अत

**व्यापारः। न तु तृतीय-लिङ्गपरामर्शोऽनुमितौ करणम्, तस्यानुमिति-हेतुत्वासिद्धया तत्करणत्वस्य दूरनिरस्तत्वात्। न च संस्कार-जन्यत्वेना-**

एवानुभवो धूमाद् वह्निमनुमिनोमीति। तथा चोक्तं पञ्चपादिकायां—"दृश्यते हि लिङ्गज्ञान-संस्कारयोः सम्भूय लिङ्गिज्ञानोत्पादनमि"ति। एवं व्याप्तिसंस्कारस्यापि व्यापारत्वं नैव युक्तं, करणजन्यस्यैव व्यापारत्वात्, व्याप्तिसंस्कारस्य व्याप्त्यनुभव-जन्यत्वेऽपि करणाजन्यत्वात्। न च स्मृत्यात्मकं व्याप्तिज्ञानं करणम्, तस्माच्च संस्कारो जायत इति वाच्यम्, तस्याकरणत्वात्, स्मृतित्वेन संस्काराजनकत्वाच्च। अस्तु तर्हि दृष्टान्तगत-व्याप्त्यनुभवः करणं न स्मृतिरिति चेन्न, तस्य चिरातीतत्वेना-हेतुत्वात्। न च स्वजन्य-संस्काररूप-व्यापारवत्तासम्बन्धेन यागादिवत् तस्य हेतुत्वमिति वाच्यम्, तद्व्यापारस्यैव संस्कारस्य वृत्त्युदयद्वारा जनकत्वसम्भवे तज्जनकस्य व्याप्त्यनु-भवस्य जनकत्वकल्पनानौचित्यात्, व्यापारस्य जनकत्वग्रहोत्तरं व्यापारिणो जनकत्व-ग्रहेणाऽन्यथासिद्धत्वात्, तज्जनकत्वे प्रमाणाभावाच्च। न चान्वयव्यतिरेकौ तत्र प्रमाण-मिति वाच्यम्, तयोः संस्कारविषयत्वेनाऽन्यथासिद्धत्वात्। किञ्च निरपेक्षस्यैव व्यापारस्य कार्यदर्शनादपि व्याप्तिसंस्कारस्य व्यापारत्वं नैव कल्पनीयम्, तस्य वृत्ति-सापेक्षतयैवानुमितिजनकत्वात्। न हि संस्कारोद्बोधानन्तरमनुमित्युदयोऽपि त्वनुमेया-कार-वृत्त्युदयानन्तरम्। तस्मादनुमेयाकारवृत्तिरेवानुमितिकरणं न व्याप्तिज्ञानम्। लिङ्ग-स्यानुमितिकरणत्वं तु वृत्तिजनकतयैव भाक्तं वेदितव्यम्।

ननु तृतीय-लिङ्गपरामर्शस्यानुमितिकरणत्वं प्राचीनैरुक्तम्। तथा चोक्तं न्याय-वार्त्तिके—"वयन्तु पश्यामः सर्वमनुमानम्, अनुमितेस्तन्नान्तरीयकत्वात्। प्रधानोप-सर्जनताविवक्षायां लिङ्गपरामर्श इति न्याय्यमि"ति। तत् कथमुच्यते व्याप्तिज्ञानं करणमिति। अत आह—**न त्वि**ति। **तृतीयलिंगे**ति। महानसादौ दृष्टान्ते हेतौ साध्यव्याप्तिप्रत्यक्षदशायां यद् लिङ्गज्ञानं, तदादिमम्। पर्वतो धूमवानित्याद्याकारक-पक्षधर्मता-ज्ञानदशायां यल्लिङ्गज्ञानं, तद् द्वितीयम्। वह्निव्याप्य-धूमवान् पर्वत इत्याद्या-कारक-परामर्शज्ञानदशायां यल्लिङ्गज्ञानं, तदेव तृतीय-लिङ्गपरामर्श इत्युच्यते। स चानु-मितौ न करणमित्यर्थः। तस्यानुमित्यकरणत्वे हेतुमाह—**तस्ये**ति। तृतीयलिङ्ग-परामर्शस्येत्यर्थः। **अनु**मितिहेतुत्वासिद्धयेति। मनःसंयोगभेदस्य धारावाहिकज्ञानभेदे प्रयोजकत्वाभ्युपगमादन्यत्र तत्परित्यागे कारणाभावात् पक्षधर्मताज्ञानजनक-संयोगाति-

**ऽनुमितेः स्मृतित्वापत्तिः, स्मृति-प्रागभाव-जन्यत्वस्य संस्कारमात्र-जन्यत्वस्य वा स्तृतित्व-प्रयोजकतया संस्कारध्वंस-साधारण-संस्कारजन्य-**रिक्त-मनःसंयोगात् परामर्शज्ञानोत्पत्तौ तत्प्रागेवाऽऽशुतरविनाशिनः पक्षधर्मताज्ञानस्य नाशेनाऽनुमित्यनुदयात् पक्षधर्मताज्ञान-व्याप्तिसंस्कारयोरेवानुमितिहेतुत्वम्, न लिङ्ग-परामर्शस्येति भावः। अधिकं विवरणभावप्रकाशिकायां द्रष्टव्यम्। **तत्**करणत्वस्येति। अनुमितिकरणत्वस्येत्यर्थः। **दूर**निरस्तत्वादिति। करणत्वस्य हि व्यापकं कारणत्वम्, तस्य च लिङ्गपरामर्शेऽभावात् तद्व्याप्यस्य करणत्वस्याप्यभाव इति भावः। नन्वनुमिते-र्व्याप्तिसंस्कारजन्यत्वे स्मृतित्वापत्तिः, संस्कारजन्य-ज्ञानस्य स्मृतित्वादित्याशङ्कां निरा-कर्तुमाह—**न चे**ति। अनुमितेः स्मृतित्वापत्तौ हेतुमाह—**संस्कार**जन्यत्वेनेति। व्याप्तिसंस्कारजन्यत्वेनेत्यर्थः। संस्कारजन्य-ज्ञानत्वस्य तल्लक्षणत्वादनुमितौ च तत्-सद्भावादिति भावः। स्मृतित्वानापत्तौ हेतुमाह—**स्मृति**प्रागभावेति। तथा च स्मृतिप्रागभावजन्य-ज्ञानस्यैव स्मृतित्वनियमादनुमितेः स्मृतिप्रागभावाजन्यतया न स्मृति-त्वमिति भावः। ननु स्मृतिप्रागभावजन्य-ज्ञानस्य स्मृतित्वं नैव युक्तं, स्मृतिप्रागभाव-साक्षात्कारस्य स्मृतिप्रागभावजन्यतया स्मृतित्वापातादात्माश्रयापाताच्चेत्यस्वरसादाह—**संस्कार**मात्रेति। संस्कारेतरेन्द्रियसन्निकर्षाद्यसाधारणकारणाजन्यत्वे सति संस्कार-जन्यत्वस्येत्यर्थः। संस्कार-ध्वंसेऽविद्याद्वितय-जन्ये प्रपञ्चे तदनुभवे चातिव्याप्तिवारणाया-ऽजन्यान्तं विशेषणम्। तथा चानुमितेः संस्कारेतर-पक्षधर्मताज्ञानरूपासाधारणकारण-जन्यतया प्रपञ्चस्य तदनुभवस्य च दोषरूपासाधारणकारणजन्यतया न स्मृतित्वमिति भावः। ननु संस्कारमात्रजन्यत्वापेक्षया संस्कारजन्यत्वस्य लघुत्वात् तदेवास्तु स्मृतेः प्रयोजकमित्यत आह—**संस्कारध्वंसे**ति। तथा च स्मृतौ यथा संस्कारजन्यत्वं विद्यते, तथा संस्कारध्वंसेऽपीत्युभयसाधारणधर्मस्यैकतरलक्षणत्वं न युक्तम्, असाधारण-धर्मस्यैव लक्षणत्वात्, अन्यथाऽतिव्याप्त्यादि-दोषापत्तेरिति भावः। यद्यपि स्मृतिं प्रति समानविषयकस्यैव संस्कारस्य संस्कारत्वेन कारणत्वात् संस्कारध्वंसस्य न स्मृतित्वं, तं प्रति संस्कारस्य प्रतियोगित्वेन कारणत्वात् तत्र संस्कारत्वेन संस्कारजन्यत्वाभावात्। नाप्यनुमितेः स्मृतित्वं, तस्या व्याप्तिसंस्कारजन्यत्वेऽपि साध्यसंस्काराजन्यत्वात्, तथापि प्रातिभासिकानुभवे संस्कारत्वेन संस्कारजन्यत्वसत्त्वात् स्मृतित्वापत्तिर्दुर्वारा स्यादतः संस्कारमात्रजन्यत्वस्यैव स्मृतित्वप्रयोजकत्वं युक्तम्, न संस्कारजन्यत्वस्य लघुभूतस्येति

**त्वस्य तदप्रयोजकत्वात्। न च यत्र व्याप्तिस्मरणादनुमितिस्तत्र कथं संस्कारो हेतुरिति वाच्यम्, व्याप्ति-स्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमिति-हेतुत्वात्। न हि स्मृतेः संस्कारनाशकत्व-नियमः, स्मृतिधारा-दर्शनात्।**

भावः। **तदप्र**योजकत्वात् स्मृतित्वाप्रयोजकत्वात्। ननु यत्र पक्षधर्मताज्ञानाद् व्याप्ति-स्मरणाच्चानुमितिस्तत्र व्याप्तिसंस्कारो नानुमितेर्हेतुः, व्याप्तिस्मृत्या तत्संस्कारस्य नाशादित्याशङ्कते—**न चे**ति। **यत्र** यस्मिन् काले। **तत्र** तस्मिन् काले। **कथं हेतु**रिति। न हेतुरित्यर्थः। अनुमितेः पूर्वं संस्काराभावात्, व्याप्तिस्मृत्या तन्नाशात, विद्यमानस्यैव हेतुत्वादिति भावः। निराकरण-हेतुमाह—**व्याप्ति**स्मृतीति। यथा व्याप्त्यनुभवस्थले उद्बुद्धस्यैव व्याप्तिसंस्कारस्यानुमितिकारणत्वम्, तथा व्याप्तिस्मृतिस्थलेऽपीति भावः। **संस्कार**स्यैवेति। **एव**कारेण व्याप्तिस्मृति-परामर्शयोर्व्यवच्छेदः।

एतेन—एवकारेण व्याप्तिस्मृतिजन्यसंस्कारो व्यावर्त्यत इति परिभाषाप्रकाशिका-कृतां व्याख्यानं प्रत्युक्तम्, व्याप्त्यनुभवजन्यसंस्कारापेक्षया व्याप्तिस्मृतिजन्यसंस्कारस्य वैजात्याभावात्, स्मृतिसंस्कारयोः संस्कारानुभवयोर्वा समानविषयत्वेनैव कार्यकारण-भावाङ्गीकाराद् व्याप्तिस्मृतितो विजातीयसंस्कारोत्पादासम्भवात्, तत्सम्भवे वा स्मृतेः प्रातिभासिकवद् वैजात्यप्रसङ्गात्। अत एवोक्तमद्वैतसिद्धौ तृतीयमिथ्यात्वविचारे—"तेषां दृढ़त्वञ्च समानविषयक-संस्कारानेकत्वमि"ति।

**अनुमिति**हेतुत्वादिति। तदानीं संस्कारस्य विद्यमानत्वाद् व्यापाररूपेण तस्यानु-मितिहेतुत्वं युक्तमिति भावः। ननु व्याप्तिसंस्कारस्यानुमितिहेतुत्वं न युक्तम्, व्याप्ति-स्मृत्या तत्संस्कारस्य नाशात्, अनुमितेः पूर्वं तस्याभावादित्यत आह—**न ही**ति। यदि स्मृत्या संस्कारनाशः स्यात्, तदा सोऽविद्यमानोऽनुमितिहेतुर्न स्यात्। न च स्मृत्या संस्कारनाशः, प्रमाणाभावात्। तस्मात् स्मरणोत्तरानुमिति-दशायां संस्कारस्य विद्यमानत्वात् तद्धेतुत्वं युक्तमिति भावः। ननु संस्कारस्य फलनाश्यत्वात् स्मृतेश्च संस्कारफलत्वात् तया संस्कारनाशो युक्तस्तत् कथमुच्यते संस्कारो न स्मृतिनाश्य इत्याशंक्य स्मृतेः संस्कारनाशकत्वे बाधकमाह—**स्मृति**धारेति। यदि प्रथमस्मृत्या संस्कारस्य नाशः स्यात्, तदा स्मृत्युत्तरं स्मृतिर्न स्यात्, ततकारणस्य संस्कारस्य पूर्वम-भावात्। भवति च स्मृत्युत्तरं स्मृतिः। तस्मात् स्मृतिर्न संस्कारनाशिका। अत एव संस्कारस्य न फलनाश्यत्वम्, किन्तु कालनाश्यत्वं रोगनाश्यत्वं चरमफलनाश्यत्वं वा

**न चानुद्बुद्धसंस्कारादप्यनुमित्यापत्तिः, तदुद्बोधस्यापि सहकारित्वात्। एवञ्चायं धूमवानिति पक्षधर्मताज्ञाने धूमो वह्निव्याप्य इत्यनुभवाहित-संस्कारोद्बोधे च सति वह्निमानित्यनुमितिर्भवति, न तु मध्ये व्याप्तिस्मरणं तज्जन्यं वह्निव्याप्य-धूमवानयमित्यादि-विशिष्टज्ञानं वा हेतुत्वेन कल्पनीयम्,**

कल्पनीयमिति भावः। ननु यस्य पक्षधर्मताज्ञानानन्तरं न व्याप्तिस्मृतिर्न वा तत्-संस्कारोद्बोधस्तस्याप्यनुमितिर्जायताम्, तत्कारणस्य व्याप्तिसंस्कारस्य तदानीं सत्त्वादित्याशंक्य निराकरोति—**न चे**ति। **अनुद्बुद्धे**ति। अनभिव्यक्तेत्यर्थः। शङ्कानिराकरणहेतुमाह—**तदुद्बोधस्यापी**ति। व्याप्तिसंस्कारोद्बोधस्येत्यर्थः। उद्बोधश्चाभिव्यक्तिः, फलजननोन्मुखतेति यावत्। तत्कारणानि प्रणिधानादीनि न्यायसूत्रोक्तानि वेदितव्यानि। **सहकारित्वात्** कारणतावच्छेदकत्वात्। न हि संस्कारसामान्यस्य कारणत्वम्। किन्तूद्बुद्धसंस्कारस्य। तथा चोक्तं पञ्चपादिकायाम्—"संस्कारानुद्बोधे तदभावा"दिति। तथा च यस्य नोद्बुद्धः संस्कारस्तस्य नानुमितिरिति भावः। अनुमितिकारणनिरूपण-मुपसंहरन्ननुमितेरसाधारणं कारणं समुच्चित्य दर्शयति—**एवञ्चे**ति। अनुमितौ परामर्शस्य कारणत्वे निराकृते उद्बुद्धसंस्कारस्य कारणत्वे सिद्धे चेत्यर्थः। पर्वतो वह्निमानित्यनुमिति-मभिप्रेत्य तदसाधारणकारणस्य पक्षधर्मताज्ञानस्याकारं दर्शयति—**अयं** धूमवानिति। **पक्ष**धर्मताज्ञान इति। पक्षस्य धर्म एव पक्षधर्मता, स्वार्थे ताप्रत्ययात्। सा च धूमादि-रूप-लिङ्गवत्ता, तस्या ज्ञाने, लिङ्गप्रकारक-पक्षविशेष्यक-ज्ञाने इति यावत्। अत एवायं धूमवानित्याकारो दर्शितः। अनुमितेर्द्वितीयमसाधारणं कारणं दर्शयितुमाह—**धूम** इति। **अनुभवाहिते**ति। अनुभवजनितेत्यर्थः। तथा चादौ महानसादिषु धूमे हेतौ साध्यसह-चारदर्शनात् साध्यव्यभिचारादर्शनाच्च साध्यसामानाधिकरण्यरूपाया व्याप्तेरनुभवो जायते। तेन चानुभवेन तद्विषयकः संस्कारो जन्यते। अथ तद्व्याप्तिसंस्कारवतः पुरुषस्य लिङ्ग-दर्शनात् तत्संस्कारस्योद्बोधो भवति। ततोऽनुमितिर्जायते। एतेनोद्बुद्धव्याप्तिसंस्कार-स्यासाधारण-कारणत्वं दर्शितमिति भावः। नैयायिकास्तु पक्षधर्मताज्ञानं व्याप्तिज्ञानं परामर्शज्ञानञ्चानुमितेरसाधारणकारणं मन्यन्ते, तन्मतनिराकरणमुपसंहरति—**न त्वि**ति। **कल्पनी**यमित्यनेनास्यान्वयः। **मध्ये** पक्षधर्मताज्ञानानुमित्योरन्तरा। **व्याप्तिस्मरणं** धूमो वह्निव्याप्य इत्याद्याकारकं स्मरणम्। **तज्जन्यं** व्याप्तिस्मरणजन्यम्। **इत्यादि-**विशिष्टज्ञानम् इत्याद्याकारकं परामर्शज्ञानम्। व्याप्तिस्मरणस्य पक्षधर्मताज्ञानस्य चानु-

**गौरवाद् मानाभावाच्च। तच्च व्याप्तिज्ञानं वह्निविषयकत्वांश एव कारणम्, न तु पर्वत-विषयकत्वांश इति। पर्वतो वह्निमानिति ज्ञानस्य वह्न्यंश एवानुमितित्वम्, न तु पर्वताद्यंशे, तदंशे प्रत्यक्षत्वस्योपपादितत्वात्।**

**व्याप्तिश्चाशेष-साधनाश्रयाश्रित-साध्य-सामानाधिकरण्य-रूपा। सा च**

मितिहेतुत्वे बाधकमाह—**गौरवा**दिति। पक्षधर्मताज्ञानोद्बुद्धसंस्काराभ्यामनुमित्युपपत्तौ कारणान्तरकल्पने गौरवं बाधकमिति भावः। अधिकन्तु प्रागेवोक्तम्। ननु प्रमाणसिद्ध-गौरवस्यादोषत्वादबाधकत्वमित्याशङ्कायामाह—**माना**भावादिति। यदि व्याप्तिस्मरणस्य परामर्शज्ञानस्य चानुमितिहेतुत्वं प्रामाणिकं भवेत्, भवेत् तद् गौरवं प्रामाणिकमबाधकम्। न च व्याप्तिस्मरणादेरनुमितिहेतुत्वे किञ्चित् प्रमाणमस्ति। तस्मादप्रामाणिकगौरवस्य बाधकत्वं युक्तमिति भावः। नन्वेवमप्येतल्लक्षणं नैव युक्तम्, पर्वतो वह्निमानित्याद्यनुमितौ सन्निकृष्टपक्षविषयकत्वांशे ज्ञानस्य व्याप्तिज्ञानाजन्यत्वात्, तस्य प्रत्यक्षत्वेनेन्द्रियजन्यत्वादित्यत आह—**तच्चे**ति। **व्याप्ति**ज्ञानं व्याप्त्यनुभवः। **वह्नि**विषयेति। वह्निर्विषयो यस्य ज्ञानस्य तज् ज्ञानं वह्निविषयकं, तस्य भावो वह्निविषयकत्वं, तद्रूपांशे इति विग्रहः। तथा च पर्वतो वह्निमानित्याकारकस्य ज्ञानस्य द्वावंशौ, एकः पर्वतविषयकत्वांशोऽपरश्च वह्निविषयकत्वांशः। तत्र वह्निविषयकत्वांशे एव ज्ञाने व्याप्तिज्ञानं करणमिति भावः। एवकारस्य व्यवच्छेद्यमाह—**न पर्वते**ति। तत्र हेतुमाह—**पर्वत** इति। **तदंशे** सन्निकृष्टपक्षकांशे पर्वताद्यंशे। **उप**पादितत्वादिति। प्रागिति शेषः। तथा च पर्वतविषयकत्वांशे ज्ञानस्यानुमितित्वाभावात् तदंशे व्याप्तिज्ञानजन्यत्वाभावेऽपि लक्षणस्य नाव्याप्तिरिति भावः। यथा च सर्वांशेऽपि ज्ञानस्यानुमितित्वम्, तथा प्राक् प्रतिपादितमिति नेह प्रतन्यते।

व्याप्तिज्ञानविषयीभूताया व्याप्तेः स्वरूपमाह—**व्याप्ति**श्चेति। **अशेषे**ति। अशेषो यावान् साधनाश्रयस्तदाश्रितं यत् साध्यं तत्समानाधिकरणस्तदधिकरणवृत्तिर्यो हेतुः सोऽशेषसाधनाश्रयाश्रित-साध्यसमानाधिकरणस्तद्धर्मो यदशेषसाधनाश्रयाश्रितसाध्यसामानाधिकरण्यं, सैव व्याप्तिरित्यर्थः। साध्यसामानाधिकरण्यञ्च साध्याधिकरणनिरूपितवृत्तित्वम्। तत्र साध्यसामानाधिकरण्यं व्याप्तिरित्युक्ते वह्निमान् धूमादित्यादावव्याप्तिः, व्याप्तिविशिष्टे व्याप्ये धूमादिहेतौ व्याप्तेरभावात्। तथा हि—अत्रानुमितौ साध्यो वह्निः,व्याप्यो धूमादिस्तत्र साध्याधिकरणायोगोलकादिनिरूपितवृत्तित्वरूपस्य साध्यसामानाधिकरण्य-

स्याभावादव्याप्तिरतः साध्यविशेषणमाह—साधनाश्रयाश्रितेति। साधनस्याश्रये आश्रितं यत् साध्यं, तादृशसाध्यस्य सामानाधिकरण्यं व्याप्तिरिति फलितम्। तथा च नाव्याप्तिः, धूमादौ साध्याधिकरणायोगोलकादि-निरूपित-वृत्तित्वरूपस्य साध्यसामानाधिकरण्यस्याभावेऽपि साधनाश्रयाश्रितसाध्यसामानाधिकरणस्य सत्त्वात्। अयोगोलको हि न साधनाश्रयस्तत्र साधनस्य धूमस्याभावात्। तदाश्रितं यत् साध्यं, तन्न साधनाश्रयाश्रित-साध्यम्। यत् तु महानसाद्याश्रितं साध्यं, तदेव साधनाश्रयाश्रितं साध्यं, महानसादीनां साध्याश्रयत्वात् साधनाश्रयत्वाच्च। तस्य च साधनाश्रयाश्रित-साध्यस्याधिकरणं नायोगोलकादि, किन्तु महानसाद्येव। तत्र च धूमादिर्वर्त्तते इति धूमादौ साधनाश्रयाश्रित-साध्यसामानाधिकरण्यस्य सत्त्वान्नाव्याप्तिरिति। तावत्युक्ते धूमवान् वह्नेरित्यादावतिव्याप्तिः, व्याप्तिरहिते वह्न्यादिहेतौ उक्तलक्षण-व्याप्तेः सत्त्वात्। तथा हि—साधनस्य वह्न्यादेः कस्मिंश्चिदेकस्मिन्नाश्रये महानसादावाश्रितो धूमः। अतो धूमः साधनाश्रयाश्रितः। तस्य च सामानाधिकरण्यं महानसाद्याश्रिते वह्नौ वर्त्तते। तथा च व्याप्तिरहिते वह्न्यादौ साधनाश्रयाश्रितस्य साध्यस्य धूमादेः सामानाधिकरण्यस्य सत्त्वादतिव्याप्तिरत आश्रयविशेषणमाह—अशेषेति। तथा च नातिव्याप्तिः, वह्न्यादिहेतौ साधनाश्रयाश्रित-साध्यसामानाधिकरण्यसत्त्वेऽप्यशेष-साधनाश्रयाश्रित-साध्यसामानाधिकरण्यस्याभावात्, साधनाश्रयेऽयोगोलकादौ साध्यस्य धूमादेरसत्त्वेन तत्र साध्येऽशेषसाधनाश्रयाश्रितत्वाभावात्। एवं च धूमादिर्नाशेषसाधनाश्रयाश्रितस्तस्य यद् वह्न्यादौ सामानाधिकरण्यं, तन्नाशेषसाधनाश्रयाश्रित-साध्य-सामानाधिकरण्यम्। अतो वह्न्यादिहेतौ व्याप्तिलक्षणाभावान्नातिव्याप्तिः। तथा चाशेषसाधनाश्रयाश्रित-साध्यसामानाधिकरण्यं व्याप्तिरिति फलितम्। नन्वेवमपि पर्वतो वह्निमान् धूमादित्यादावव्याप्तिः, धूमादिहेतावशेषसाधनाश्रयाश्रित-साध्यसामानाधिकरण्याभावात्। तथा हि—येन सम्बन्धेन पर्वतादौ पक्षे हेतुर्वर्त्तते, स हेतुतावच्छेदकः सम्बन्धः। तेन हेतुतावच्छेदक-संयोगादिसम्बन्धेन साधनाश्रयः पर्वतादिरपि समवायादिसम्बन्धेन साधनाश्रयो न पर्वतादिः किन्तु धूमावयवादिरेव। तत्र च साध्यो वह्न्यादिर्न वर्त्तते। अतः साध्यो नाशेषसाधनाश्रयाश्रितस्तेन धूमादावशेषसाधनाश्रयाश्रित-साध्यसामानाधिकरण्याभावादव्याप्तिरिति चेन्न, हेतुतावच्छेदकसम्बन्धेन साधनाश्रयत्वस्य विवक्षितत्वात्। तथा चात्र हेतुतावच्छेदक-संयोग-सम्बन्धेन साधनाश्रयो न धूमावयवः, किन्तु पर्वतादिरेव। तत्र च साध्यो वह्न्यादिर्वर्त्तते। अतोऽशेष-साधनाश्रयाश्रितस्य

**व्यभिचारादर्शने सति सहचारदर्शनेन गृह्यते। तच्च सहचारदर्शनं सकृद्-**

वह्न्यादेः सामानाधिकरण्यस्य धूमादिहेतौ सत्त्वान्नाव्याप्तिः। एवञ्चाशेषहेतुतावच्छेदक-सम्बन्धावच्छिन्न-साधनाश्रयाश्रित-साध्यसामानाधिकरण्यं व्याप्तिरिति फलितम्। नन्वेवमपि द्रव्यं गुणकर्मान्यत्वविशिष्ट-सत्त्वादित्यादावव्याप्तिः, हेतौ तादृशसाध्यसामानाधिकरण्याभावात्। तथा हि—अत्र साध्यं द्रव्यत्वम्, हेतुस्तु गुणकर्मान्यत्वविशिष्ट-सत्ता। गुणकर्मान्यत्वं नाम गुणकर्मभेदः। स च द्रव्ये वर्त्तते। तत्र सत्तापि वर्त्तते। अत एव सा सत्ता सामानाधिकरण्यसम्बन्धेन गुणकर्मान्यत्वविशिष्टा। सा च गुणकर्मान्यत्वविशिष्ट-सत्ता शुद्धसत्तातो नातिरिक्ता, विशिष्टं शुद्धान्नातिरिच्यत इति न्यायात्। विशिष्टसत्तायाः शुद्धसत्तायाश्चैक्ये गुणकर्मणी अपि साधनाधिकरणे भवतः, तयोः सत्ताधिकरणत्वात्, विशिष्टसत्तायाश्च सत्तारूपत्वात्। परन्त्वत्र साध्यं द्रव्यत्वं नास्तीति साध्यं नाशेषसाधनाश्रयाश्रितमतो हेतावशेषसाधनाश्रयाश्रित-साध्य सामानाधिकरण्याभावादव्याप्तिरिति चेन्न साधनतावच्छेदकावच्छिन्नसाधनाश्रयत्वस्य विवक्षितत्वात्। तथा च नाव्याप्तिः, गुणकर्मणोः सत्ताधिकरणत्वेऽपि विशिष्टसत्तात्वावच्छिन्नाधिकरणत्वाभावात्, द्रव्यस्यैव तथात्वात्। तत्र च साध्यसत्त्वेन तत्राशेषसाधनाश्रयाश्रितत्वसत्त्वात्। दूषणान्तर-परिहारोऽप्येवं कर्त्तव्य इत्यलमतिप्रसङ्गेन। एवञ्चाशेषहेतुतावच्छेदक-सम्बन्धावच्छिन्न-हेतुतावच्छेदकावच्छिन्न-साधनाश्रयाश्रित-साध्यसामानाधिकरण्यं व्याप्तिरिति फलितम्। नन्वस्त्वेवंरूपा व्याप्तिस्तथापि तज्ज्ञानं नैवानुमितेः करणम्, तद्ग्राहक-प्रमाणाभावात्। तथा हि—न तावद् बाह्यं प्रत्यक्षं तद्ग्राहकं, तस्य सन्निकृष्ट-वर्त्तमान धूमनिष्ठाया व्याप्तेर्ग्राहकत्वेऽपि भूत-भविष्यद्-धूमनिष्ठाया व्याप्तेर्ग्रहणे सामर्थ्याभावात्, भूत-भविष्यद्-धूमस्य प्रत्यक्षायोग्यतया तन्निष्ठाया व्याप्तेरपि प्रत्यक्षायोग्यत्वात्, प्रत्यक्षवृत्ति-धर्मस्यैव प्रत्यक्षत्वनियमात्। नाप्यान्तरं प्रत्यक्षं, बहिरिन्द्रियतन्त्रस्य तस्य स्वातन्त्र्येण बाह्यार्थग्रहणे योग्यताभावात्। तथा चोक्तं विधिविवेके—"चक्षुराद्युक्तविषयं परतन्त्रं वहिर्मनः" इति। नाप्यनुमानं तद्ग्राहकं, तद्साधनीभूताया व्याप्तेरप्यनुमानान्तरेण ग्रहणेऽनवस्थापातात्। एवं शब्दोऽपि न तद्ग्राहकस्तस्यानुमानमूलकतया प्रागुक्तदोषा-निर्मोक्षात्। तस्माद् व्याप्तिज्ञानोपायाभावान्नानुमितेः कारणं व्याप्तिज्ञानमिति चार्वाक-शङ्कां निराकुर्वन् व्याप्तिग्रहोपायं दर्शयति—**सा चेति**। व्याप्तिश्चेत्यर्थः। **व्यभिचारेति**। हेतुनिष्ठं यत् साध्याभाववद्-वृत्तित्वं साध्यासामानाधिकरण्यं वा स व्यभिचारस्तस्या-

**दर्शनं भूयोदर्शनं वेति विशेषो नादरणीयः, सहचारदर्शनस्यैव प्रयोजकत्वात्।**

**तच्चानुमानमन्वयिरूपमेकमेव, न तु केवलान्वयि, सर्वस्यापि धर्मस्या-**

दर्शने ज्ञानाभावे इत्यर्थः। व्यभिचारज्ञानस्य व्याप्तिज्ञान-प्रतिबन्धकत्वेन तदभावस्य तत्कारणत्वं युक्तमिति भावः। **सहचार**दर्शनेन सहचारज्ञानेन। सहचारज्ञानमात्रस्य व्याप्तिज्ञानहेतुत्वे महानसादौ वह्निधूमयोः सहचारदर्शनाद् धूम इव वह्नावपि धूमव्याप्ते-र्ज्ञानं स्यात्। अतो व्यभिचारज्ञानाभावस्यापि तत्कारणत्वं वक्तव्यम्। तथा सति वह्नौ न धूमस्य व्याप्तिग्रहः, तत्र धूमव्यभिचारज्ञानोदयात्, धूमाभाववत्ययोगोलके वह्नेः सत्त्वात्। नापि व्यभिचाराग्रहमात्रस्य व्याप्तिज्ञानहेतुत्वम्, व्यभिचारिणि हेतौ व्यभिचार-ज्ञानाभावदशायां व्याप्तिग्रहणप्रसङ्गात्। तस्माद् व्यभिचारादर्शनसहकृत-सहचारदर्शनस्यैव व्याप्तिज्ञानहेतुत्वं बोध्यम्। एतेन—कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमोऽदर्शनान्न तु दर्शनादिति बौद्धोक्तं तादात्म्य-तदुत्पत्त्यो-र्व्याप्तिग्राहकत्वं निराकृतं वेदितव्यम्, अतादात्म्ययोरपि कार्यकारणभावशून्ययोर्द्रव्यत्व-गुणयोर्व्याप्तिदर्शनात्। ननु सकृत् सहचारदर्शनं व्याप्तिज्ञानकारणमसकृद्वेत्यत आह—**तच्चे**ति। **विशेषो** नादरणीय इति। सकृत्सहचारज्ञानं व्याप्तिज्ञानकारणमित्येवं विशिष्टं सहचारज्ञानं कारणं न ब्रूमः, व्यभिचारशङ्कोदये सकृत्सहचारज्ञानेऽपि व्याप्ति-ज्ञानानुदयात्। असकृत् सहचारज्ञानं व्याप्तिज्ञान-कारणमित्येवमपि विशिष्टं सहचार-ज्ञानं कारणं न ब्रूमः, व्यभिचारास्फूर्त्तौ सकृत्सहचारदर्शनेनापि व्याप्तिज्ञानोदयसम्भवा-दिति भावः। विशिष्टसहचारज्ञानस्य हेतुत्वानादरे हेतुमाह—**सहचारे**ति। व्यभिचार-ज्ञानाभावेन सह सहचारज्ञानस्य सहचारज्ञानत्वेनैव हेतुत्वोपपत्तौ विशिष्टस्य हेतुत्वकल्पना नोचितेति भावः। व्यभिचारज्ञानाभावश्च क्वचित् स्वतः क्वचित् परत इत्यन्यदेतत्।

नैयायिकास्तु केवलान्वयि-केवलव्यतिरेक्यन्वयव्यतिरेकिभेदेनाऽनुमानं त्रिविधं मन्यन्ते। तथा चोक्तं न्यायवार्त्तिके—त्रिविधमिति। अन्वयी व्यतिरेक्यन्वयव्यतिरेकी चेतीति। तत्रात्यन्ताभावाप्रतियोगिसाध्यकमन्वय-सहचारमात्र-गृहीतव्याप्तिकं वानुमानं केवलान्वयि। यस्य हेतुरूपानुमानस्य साध्यमत्यन्ताभावस्य प्रतियोगि न भवति, तदनुमानं केवलान्वय्यनुमानम्। यद्वा यस्य हेतुरूपानुमानस्य व्याप्तिरन्वयसहचार-मात्रेण गृहीता, न व्यतिरेकसहचारेण, तदनुमानं वा केवलान्वय्यनुमानम्। एवं व्यतिरेक-सहचारमात्र-गृहीत-व्याप्तिकं केवलव्यतिरेकि। यस्मिन् हेतुरूपेऽनुमाने व्यतिरेक-

**स्मन्मते ब्रह्मनिष्ठात्यन्ताभाव-प्रतियोगित्वेनात्यन्ताभावाप्रतियोगि-साध्यकत्व-रूप-केवलान्वयित्वस्याऽसिद्धेः। नाप्यनुमानस्य केवलव्यतिरेकि-रूपत्वम्, साध्याभावे साधनाभाव-निरूपित-व्याप्तिज्ञानस्य साधनेन साध्यानुमितावनु-**

सहचार-मात्रेण व्याप्तिर्गृह्यते नान्वयसहचारेण, तदनुमानं केवलव्यतिरेक्यनुमानम्। एवमन्वयव्यतिरेक-सहचार-गृहीत-व्याप्तिकमन्वयव्यतिरेक्यनुमानम्। यस्मिन् हेतुरूपेऽनुमानेऽन्वयसहचारेण व्यतिरेकसहचारेण वा व्याप्तिर्गृह्यते, तदनुमानमन्वयव्यतिरेक्यनुमानम्। तन्मतं निराकरोति—**तच्चे**ति। **अनुमान**मनुमितिकारण-लिङ्गज्ञानविषयीभूतं लिङ्गम्। **अन्वयि**रूपमिति। अनुमानस्यान्वयित्वं नामान्वय-सहचारमात्र-गृहीतव्याप्तिकत्वम्। अन्वयसहचारश्च साधनसत्त्वे साध्यसत्त्वरूपः। एवकारस्य व्यावर्त्यमाह—**न त्वि**ति। केवलान्वय्यनङ्गीकारे हेतुमाह—**सर्वस्याऽपी**ति। **धर्मस्ये**ति। ध्रियत इति व्युत्पत्त्या कार्यस्येत्यर्थः। ब्रह्मभिन्नस्याऽस्तित्वादिविशिष्ट-वस्तुसामान्यस्य, प्रपञ्चस्येति यावत्। **अस्मन्मते** अद्वैतवेदान्तिमते। **ब्रह्मनिष्ठे**ति। ब्रह्मनिष्ठो योऽत्यन्ताभावस्तत्प्रतियोगित्वेनेत्यर्थः। तथा च "नेह नानास्ति किञ्चने"ति श्रुत्या ब्रह्मणि ब्रह्मभिन्नस्याऽस्तित्वादिविशिष्ट-वस्तुसामान्यस्याभावो बोध्यते। तस्य चाभावस्य प्रतियोगि ब्रह्मभिन्नं वस्तुसामान्यम्। तेन तस्मिन् वस्तु-सामान्ये तदभावप्रतियोगित्वमस्त्येवेति भावः। नन्वस्तु ब्रह्मभिन्ने वस्तु-सामान्ये तदभावस्य प्रतियोगित्वम्। तेन किमायातं केवलान्वय्यनुमानस्येत्यत आह—**अत्यन्ताभावे**ति। तथा च नैयायिकनये केवलान्वयिसाध्यकानुमानं केवलान्वय्यनुमानम्। साध्यस्य केवलान्वयित्वं वृत्तिमदत्यन्ताभावाप्रतियोगित्वम्। यत् साध्यं वृत्तिमदत्यन्ताभावस्य प्रतियोगि न भवति, तदेव केवलान्वयिसाध्यम्। 'नेह नानास्ति किञ्चने'ति श्रुत्या तु ब्रह्मणि ब्रह्मभिन्नस्य वस्तु-सामान्यस्याऽभावबोधनात् तदभावप्रतियोगित्वं वस्तु-सामान्यस्येति वृत्तिमदत्यन्ताभावाप्रतियोगि-साध्याभावात् तथाविधसाध्यकानुमानमेव न भवतीति केवलान्वय्यनुमानस्यासिद्धिरिति भावः। ननु मास्तु केवलान्वय्यनुमानम्, केवलव्यतिरेक्यनुमानन्तु भवत्येवेत्यत आह—**नाप्यनुमानस्ये**ति। **केवल**व्यतिरेकिरूपत्वमिति। व्यतिरेक-सहचारमात्र-गृहीत-व्याप्तिकत्वमित्यर्थः। तदस्वीकारे हेतुमाह—**साध्याभाव** इति। निष्ठत्वं सप्तम्यर्थः। **साधनाभावे**ति। तथा च साध्याभावनिष्ठा साधनाभावनिरूपिता या व्याप्तिस्तज्-ज्ञानस्येत्यर्थः। अस्य **चानुपयोगा**दित्यग्रेतनेनान्वयः। ननु ह्रदो धमाभाववान्

**पयोगात्। कथं तर्हि धूमादन्वय-व्याप्तिमविदुषोऽपि व्यतिरेक-व्याप्तिज्ञानाद-नुमितिः ? अर्थापत्ति-प्रमाणादिति वक्ष्यामः। अत एवाऽनुमानस्य नान्वय-व्यतिरेकि-रूपत्वम्, व्यतिरेकव्याप्ति-ज्ञानस्यानुमित्यहेतुत्वात्।**

वह्न्यभावादित्यादौ साधनाभाव-साध्यकानुमाने वह्न्यभावादिरूप-साध्याभावनिष्ठाया धूमाभावादिरूप-साधनाभावनिरूपिताया व्याप्तेर्हेतुत्वमस्त्येव, तत् कथमुच्यते साध्याभाव-निष्ठाया व्याप्तेर्ज्ञानं न प्रयोजकमित्यत आह—**साधनेने**ति। तथा च साध्याभावेन साधनाभावानुमितौ तादृशं व्याप्तिज्ञानं प्रयोजकमपि साधनेन साध्यानुमितौ न प्रयोजक-मिति भावः। **अनुपयोगात्** अप्रयोजकत्वात्। अयम्भावः—व्याप्येन हि साधनेन व्यापकं साध्यमनुमीयते। तदनुमितौ च साध्यनिरूपितायाः साधननिष्ठाया व्याप्तेर्ज्ञानं कारणं भवेदपि साधनाभावनिरूपितायाः साध्याभावनिष्ठाया व्याप्तेर्ज्ञानं नैव कारणम्, अन्यगतव्याप्तेर्ज्ञानस्यान्यलिङ्गकानुमितिहेतुत्वे कार्यत्वहेतुनिष्ठ-व्याप्तेर्ज्ञानेन वह्न्यनुमित्या-पातात्, अन्यत्वाविशेषात्। न ह्येषां व्याप्यान्यत्वे कश्चिदतिशयो दृश्यते। तस्मा-दन्यनिष्ठ-व्याप्तेर्ज्ञानमन्यलिङ्गकानुमितौ न कारणम्। तथा चोक्तं दीधितौ केवलान्वयि-ग्रन्थे—"एवं साध्याभावव्यापकीभूताभावप्रतियोगित्वमपि नानुमित्यौपयिकं, गौरवाद् व्यभिचारज्ञानाविरोधित्वाच्चे"ति। यदा तु साधननिष्ठ-व्यतिरेकव्याप्तेर्ज्ञानं नैवानुमितौ कारणम्, तदा कैव कथा साध्याभावनिष्ठव्याप्तेर्ज्ञानस्येति।

एतेन—"स्वव्यभिचारधीविरोधि-धीविषय-व्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्यानुमिति-हेतुत्वात्, अस्य च व्यतिरेकव्याप्तिज्ञान-साधारणत्वादिति शिखामण्युक्तं प्रत्युक्तम्, आचार्यैर्व्याप्तिज्ञानस्यानुमितिहेतुत्वानभ्युपगमात्; व्यतिरेकव्याप्तिज्ञानस्य साध्याभाव-व्यापकीभूताभाव-प्रतियोगित्वरूपस्य व्यभिचारज्ञानाविरोधित्वाच्च।

ननु व्यतिरेकव्याप्तिज्ञानमप्यनुमितिकारणमभ्युपगन्तव्यम्। कथमन्यथा धूमादावन्वय-व्याप्त्यग्रहदशायां व्यतिरेकव्याप्तिज्ञानाद् वह्न्यनुमितिरित्याह—**कथमि**ति। **तर्हि** व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वे। **धूमादा**वित्यादिपदेन गन्धवत्त्वादि-हेतुपरिग्रहः। **अविदुषो**ऽपीति। अन्वयव्याप्तिज्ञानहेतुभूतस्यान्वयसहचारज्ञानस्यानुदयादिति भावः। **अनुमिति**रिति। ज्ञानमित्यर्थः। वह्नेरिति शेषः। **अर्थापत्ति**प्रमाणादिति। अस्यानु-मितिरिति प्राक्तनेनान्वयः। सत्यमन्वयाग्रहदशायां व्यतिरेकज्ञानाद् वह्निज्ञानम्। किन्तु न सानुमितिस्तत्कारणाजन्यत्वात्, किन्त्वर्थापत्तिप्रमाणजन्यत्वादर्थापत्तिरिति भावः।

**तच्चानुमानं स्वार्थ-परार्थ-भेदाद् द्विविधम्। तत्र स्वार्थं तूक्तमेव। परार्थं तु न्यायसाध्यम्। न्यायो नामावयव-समुदायः। अवयवाश्च त्रय**

**वक्ष्यामः** अर्थापत्तिपरिच्छेदे उपपादयिष्यामः। ननु मास्तु केवलव्यतिरेक्यनुमानम्, अन्वयव्यतिरेक्यनुमानन्तु कस्मान्न भवेदित्यत आह—**अत** एवेति। व्यतिरेकव्याप्तिज्ञानस्याहेतुत्वादेवेत्यर्थः। **अन्वय**व्यतिरेकिरूपत्वम् अन्वयव्यतिरेकसहचारगृहीत-व्याप्तिकत्वम्। तन्निराकरणे हेतुमतः-शब्दार्थमाह—**व्यतिरेके**ति।

प्रकृतमनुमानं विभजते—**तच्चे**ति। **स्वार्थ**परार्थभेदात् स्वार्थानुमान-परार्थानुमानभेदात्। **तत्र** तयोः स्वार्थानुमान-परार्थानुमानयोर्मध्ये। **स्वार्थं** न्यायप्रयोगानपेक्षं स्वमात्रनिष्ठ-प्रतीति-फलकम्। **उक्तमि**ति। व्यभिचारादर्शने सतीत्यादिग्रन्थेनेति शेषः। **एवे**ति। भिन्नक्रमः स्वार्थमित्यनन्तरं द्रष्टव्यः। **परार्थं** परपुरुषनिष्ठ-प्रतीति-फलकम्। **न्यायसाध्यम्** न्यायप्रयोज्यम्। न्यायपदार्थमाह—**न्याय** इति। न्यायत्वमुचितानुपूर्वीक-प्रतिज्ञादि-त्रितय-समुदायत्वम्। **अवयवे**ति। प्रतिज्ञादिवाक्यविशेषा अवयवास्तेषां समुदाय इत्यर्थः। ननु प्रतिज्ञादि-वाक्यविशेषाणां न्यायावयवत्वं कथम्? अनुमितिकारण-पक्षधर्मताज्ञान-प्रयोजक-शाब्दज्ञान-जनक-वाक्यत्वादित्यवेहि। तथा हि—अनुमितेः कारणं पक्षधर्मताज्ञानं पर्वतो धूमवानित्याकारकम्। पक्षधर्मत्वञ्च पक्षे व्याप्य-वर्त्तनम्। तज्ज्ञानञ्च पक्षज्ञानमपेक्षते व्याप्यज्ञानञ्च। न हि पक्षज्ञानं व्याप्यज्ञानं विना कस्यचित् पक्षे व्याप्यवर्त्तनस्य ज्ञानं भवति। व्याप्यज्ञानमपि व्याप्तिज्ञानमपेक्षते। अतः प्रतिज्ञादिवाक्यं साक्षात् परम्परया वानुमितिकारण-पक्षधर्मताज्ञानस्य कारणम्। तत्र पर्वतो वह्निमानिति प्रतिज्ञावाक्यजन्याद् वह्निसम्बन्ध्यभिन्नः पर्वत इत्याकारकाज् ज्ञानात् पक्षज्ञानं सम्पद्यते। तच्च कुत इति हेतुविषयकाकाङ्क्षोत्थापनद्वारा व्याप्यज्ञानकारणं भवति। धूमवत्त्वादिति हेतुवाक्यजन्याद् धूमवत्त्वज्ञानज्ञाप्यत्वमित्याकारकाच्छाब्दज्ञानाद् धूमस्य पक्षवृत्तिताज्ञानं सम्पद्यते। यो यो धूमवान् सोऽग्निमानित्युदाहरणवाक्यजन्याद् धूमसम्बन्ध्यभिन्न-धूमव्यापकवह्निसम्बन्ध्यभिन्न इत्याकारकाच्छाब्दज्ञानाद् धूमनिष्ठायाः स्वव्यापकसाध्य-सामानाधिकरण्यरूपाया व्याप्तेर्ज्ञानं भवति। तथा च प्रतिज्ञादिवाक्यत्रयादनुमितिकारणं पक्षधर्मताज्ञानं सम्पद्यत इति युक्तं तेषां न्यायावयवत्वम्। "तच्च पञ्चतयं केचिद् द्वयमन्ये वयं त्रयम्। उदाहरणपर्यन्तं यद्वोदाहरणादिक"मिति मीमांसकमतमनुस्मरन्नवयवसंख्यां निरूपयति—**अवयवाश्चे**ति। के ते त्रय इत्याकाङ्क्षायामाह—**प्रतिज्ञे**ति। तत्र हेत्वभि-

**एव—प्रतिज्ञा-हेतूदाहरण-रूपाः, उदाहरणोपनय-निगमन-रूपा वा। न तु** धान-प्रयोजक-जिज्ञासा-जनकं हि वाक्यं प्रतिज्ञावाक्यम्। यथा पर्वतो वह्निमानित्यादि-वाक्यम्। तथाविधवाक्यं हि हेत्वभिधानप्रयोजक-जिज्ञासाया जनकम्, पर्वतो वह्निमानिति साध्यनिर्देशानन्तरं कुत इति हेत्वभिधानप्रयोजक-जिज्ञासाया नियमेनोत्थानात्। प्रतिज्ञा-वाक्यधीजन्यकारणाकाङ्क्षानिवर्तक-ज्ञानजनक-हेतुविभक्तिमद्-वाक्यं हि हेतुवाक्यम्। यथा धूमवत्त्वादित्यादि-वाक्यम्। तथाविधवाक्यस्यैव प्रतिज्ञावाक्यधीजन्यायाः कारणाकाङ्क्षायाः कुत इत्याद्याकारिकाया निवर्त्तकज्ञान-जनकत्वात्, धूमवत्त्वादिति वाक्यजन्यज्ञानस्यैव कुत इति प्रतिज्ञावाक्यधीजन्याया कारणाकाङ्क्षाया निवर्त्तकत्वात्, हेतुविभक्तिमत्त्वाच्च। न्यायान्तर्गतं सद् व्याप्तिविषयक-बोधजनकन्तु वाक्यमुदाहरणवाक्यम्। यो यो धूमवान् सोऽग्निमान् यथा महानसमित्यादिवाक्यं हि न्यायान्तर्गतं व्याप्तिविषयक-बोधजनकञ्च। यो यो धूमवान् सोऽग्निमानित्यादिवाक्याद् धूमसम्बन्ध्यभिन्नो धूमव्यापकवह्निसम्बन्ध्य-भिन्न इत्यादिज्ञाने सति स्वव्यापक-साध्यसामानाधिकरण्यरूपाया व्याप्तेर्बोधो जायत इति युक्तं तथाविधवाक्यस्योदाहरणत्वम्। मीमांसकाभिमतं पक्षान्तरमाह—**उदाहरणे**ति। **उपनये**ति। हेतुभिन्नं पक्षधर्मताज्ञानजनकं हि वाक्यमुपनयवाक्यम्। तच्च तथा-चायमित्यादिवाक्यम्, तथाविधवाक्यस्य हेतुभिन्नस्य पक्षधर्मताज्ञानजनकत्वात्। तथा चायमित्यादिवाक्याद् धूमसम्बन्ध्यभिन्नः पर्वत इत्यादिज्ञाने जाते पक्षे व्याप्यवर्त्तनरूपायाः पक्षधर्मताया ज्ञानं जायते इति युक्तं तथाविधवाक्यस्योपनयत्वम्। **निगमनरूपा** इति। उपनयवाक्यधीजन्य-साध्याकाङ्क्षानिवर्त्तकं हि वाक्यं निगमन-वाक्यम्। तच्च तस्मात् तथेत्यादिवाक्यम्। तथाविधवाक्यस्योपनयवाक्यधीजन्याया धूमादिना किं साध्यं साधनीयमित्याकारिकायाः साध्याकाङ्क्षाया निवर्त्तकत्वात्। तस्मात् तथेति वाक्यात् पक्षवृत्तिधूमज्ञानज्ञाप्य-वह्निसम्बन्ध्यभिन्नः पर्वत इत्यादिज्ञाने जाते वह्निरूप-साध्यलाभात् साध्याकाङ्क्षा निवर्त्तते इति युक्तं तस्य निगमनत्वम्। **वेति**। वाकारो-ऽनास्थायाम्, प्रतिज्ञादि-त्रयस्यैवावयवत्वौचित्यात्, प्रथमं साध्यनिर्देशाभावे व्याप्त्या-द्यभिधानस्यानवसरत्वात्। अत एवाचार्याणां विवरणकृतां विमतं प्रमाणज्ञानमित्याद्युदा-हरणान्तो न्याय-प्रयोगः। एतेन—उदाहरणोपनयाभ्युपगन्तॄणां द्व्यवयववादिनां बौद्धानां मतं प्रत्युक्तम्, साध्याध्याहार-दोषप्रसङ्गात्, साध्यनिर्देशाभावे निराकाङ्क्षस्य लिङ्गादेरभिधानायोगात्। तथा चोक्तं मानमेयोदये—तदेवं पौनरुक्त्येन तथाध्याहार-

**पञ्चावयवाः, अवयव-त्रयेणैव व्याप्ति-पक्षधर्मतयोरुपदर्शन-सम्भवेनाऽधिकावयव-द्वयस्य व्यर्थत्वात्।**

**एवमनुमाने निरूपिते तस्माद् ब्रह्मभिन्न-निखिल-प्रपञ्चस्य मिथ्यात्व-सिद्धिः। तथा हि—ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वात्, यदेवं तदेवं यथा शुक्तिरूप्यम्। न च दृष्टान्तासिद्धिः, तस्य साधितत्वात्। न चाप्रयोजक-**

दोषतः। तर्कबौद्धमते हित्वा वयं त्र्यवयवे स्थिताः॥ इति। नैयायिकाभिमतं पञ्चावयवं निराकरोति—**न त्वि**ति। तत्र हेतुमाह—**अवयव**त्रयेणैवेति। एवकारेण त्रितयाधिकस्यावयवस्य व्यवच्छेदः। **उपदर्शने**ति। ज्ञानेत्यर्थः। **अधिका**वयव-द्वयस्य प्रतिज्ञाहेतुरूपस्योपनयनिगमनरूपस्य वा। **व्यर्थत्वा**दिति। प्रतिज्ञया निगमनार्थस्य हेतुना चोपनयार्थस्य लाभादिति भावः। तथा चोक्तं मानमेयोदये—प्रतिज्ञया निगमनं हेतुनोपनयस्तथा। गतार्थ इति कः कुर्यात् पञ्चावयव-घोषणम्॥ इति।

एवं सपरिकरमनुमानं निरूप्य तदुपयोगं दर्शयितुमुपक्रमते—**एवमि**ति। **तस्मात्** अनुमानात्। **ब्रह्मभिन्ने**ति। ब्रह्मणोऽपि प्रपञ्चान्तर्गतत्वेन पक्षत्वे बाधः स्यात्, तस्याऽमिथ्यात्वात्, अतो ब्रह्मभिन्नेति प्रपञ्चविशेषणम्। ब्रह्मभिन्नप्रपञ्चस्य प्रातिभासिकस्यानुमानेन मिथ्यात्वसिद्धौ सिद्धसाधनता, तत्र मिथ्यात्वस्य सिद्धत्वात्, अतो निखिलेति प्रपञ्च-विशेषणम्। तथा च प्रातिभासिकस्यानुमानात् प्राङ् मिथ्यात्वसिद्धावपि तदतिरिक्तस्य प्रपञ्चस्य न मिथ्यात्वसिद्धिः, अतो नानुमानस्य सिद्धसाधनतेति भावः। **मिथ्यात्व-सिद्धि**रिति। अविद्यायां भावत्वादेरप्युपलक्षणमेतत्। तस्मान्मिथ्यात्वादिसिद्धावनुमान-स्योपयोग इति भावः। अनुमानाद् यथा ब्रह्मभिन्नप्रपञ्चस्य मिथ्यात्वसिद्धिस्तथा दर्शयति—**तथा** हीति। अनुमानप्रयोगं दर्शयति—**ब्रह्मभिन्नं** सर्वमिति। अनेन पक्षो दर्शितः। तत्र सर्वस्य पक्षत्वे ब्रह्मणोऽपि पक्षकोटौ प्रवेशादंशतो बाधः स्यात्, तद् वारणायाह—**ब्रह्मभिन्न**मिति। ब्रह्मभिन्नमात्रस्य पक्षत्वे ब्रह्मभिन्ने शुक्तिरूप्यादौ साध्यसिद्धेः सिद्ध-साधनता, तद्वारणायाह—**सर्व**मिति। तथा चांशतः साध्यसिद्धावपि ब्रह्मभिन्ने सर्वस्मिन् तदसिद्धेर्न सिद्धसाधनत्वमिति भावः। साध्यं दर्शयति—**मिथ्ये**ति। अत्र च मिथ्यात्वं साध्यम्। तच्च स्वाश्रयत्वाभिमत-यावन्निष्ठात्यन्ताभाव-प्रतियोगित्वमित्यग्रे वक्ष्यते। हेतुं दर्शयति—**ब्रह्मभिन्नत्वा**दिति। उदाहरणं दर्शयति—**यदेवमि**ति। **यद्** वस्तु **एवं** ब्रह्मभिन्नं, **तद्** वस्तु एवं मिथ्येत्यर्थः। तदेव स्वरूपतो दर्शयति—**यथा शुक्ति-**

**त्वम्, शुक्तिरूप्यादीनां मिथ्यात्वे ब्रह्मभिन्नत्वस्यैव लाघवेन प्रयोजकत्वात्।**

**रूप्यमि**ति। यथा शुक्तिरूप्ये ब्रह्मभिन्नत्वं वर्तते मिथ्यात्वञ्च। एवमन्यत्रापि यत्र ब्रह्मभिन्नत्वं वर्त्तते, नूनं तत्र मिथ्यात्वमिति व्याप्तिनिश्चयाद् ब्रह्मभिन्न-निखिल-प्रपञ्चस्य मिथ्यात्वसिद्धिरिति भावः। ननु सिद्धे हि शुक्तिरूप्यादेर्दृष्टान्तत्वे तद्बलेनान्यत्र साध्य-सिद्धिः स्यात्। न च शुक्तिरूप्यादेर्दृष्टान्तत्वम्, तन्मिथ्यात्वग्राहक-प्रमाणाभावात्, निश्चितसाध्यवतो दृष्टान्तत्वात्। न चानुमानात् तन्मिथ्यात्वनिश्चयः, तत्रापि दृष्टान्त-सिद्धावनुमानान्तरापेक्षायामनवस्थापातादित्यत आह—**न च दृष्टान्ते**ति। तत्र हेतुमाह—**तस्ये**ति। तन्निष्ठमिथ्यात्वस्येत्यर्थः। **साधितत्वा**दिति। एवं शुक्तिरूप्यस्येत्यादि-प्रत्यक्षपरिच्छेदोक्तग्रन्थेनेति शेषः। तथा चेयं शुक्तिरिति ज्ञानाद् रजतस्य तदुपादानस्य चाज्ञानस्य निवृत्तौ नात्र रजतमिति स्वाश्रये रजताभाव-प्रतीतिर्जायते। तत्र प्रतीतौ रजतनिष्ठमभावीय-प्रतियोगित्वमपि भासते इति सिद्धं रजतस्य स्वाश्रयनिष्ठात्यन्ताभाव-प्रतियोगित्वरूपं मिथ्यात्वम्। अत एवोक्तं विवरणे—बाधकज्ञानसिद्धस्य प्रतिपन्नो-पाधावभाव-प्रतियोगित्वलक्षणस्य मिथ्यात्वस्येतीति भावः।

एतेन—प्रत्यक्षप्रमाणेन मिथ्यात्वस्य प्रत्यक्षपरिच्छेदे साधितत्वादिति शिखामणि-कृतं व्याख्यानं प्रत्युक्तम्, स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वरूपस्य मिथ्यात्वस्य प्रत्यक्षायोग्यतया प्रत्यक्षप्रमाणासाध्यत्वात्।

नन्वेवमप्ययं हेतुर्न साध्यसाधकः, तत्र मिथ्यात्वव्याप्तेरग्रहात्, शुक्तिरूप्यादौ दृष्टान्तेऽविद्योपादानकत्वे एव मिथ्यात्वव्याप्तेर्दर्शनाद् ब्रह्मभिन्नत्वे चादर्शनादित्याशङ्कां निराकरोति—**न चे**ति। **अप्रयोजकत्वम्** असाधकत्वम्, अव्याप्यत्वमिति यावत्। हेतोरिति शेषः। तत्र हेतुमाह—**शुक्ति**रूप्यादीनामिति। **मिथ्यात्वे** मिथ्यात्वसिद्धौ। **प्रयोजकत्वात्** साधकत्वात्। तत्र हेतुमाह—**लाघवेने**ति। अयमाशयः—यथैवाज्ञान-कार्याणां मिथ्यात्वं, तथैवाज्ञानादीनामपि, "अतोऽन्यदार्त्त"मित्यादिश्रुत्या ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वावगमात्। तत्राज्ञानकार्यस्य मिथ्यात्वेऽविद्योपादानकत्वस्य दोषजन्यत्वस्य वा प्रयोजकत्वेऽप्यज्ञानादीनां मिथ्यात्वे तत्तन्न प्रयोजकम्, तेषामनादित्वेन निरुपादानक-त्वात्। अतस्तन्मिथ्यात्वेऽन्यत् किमपि प्रयोजकं कल्पनीयमिति मिथ्यात्वस्य प्रयोजक-द्वय-कल्पनायां गौरवम्। अविद्या-तत्कार्यसाधारणस्य ब्रह्मभिन्नत्वस्य प्रयोजकत्वे तु न गौरवमपितु लाघवमतस्तस्य मिथ्यात्व-प्रयोजकत्वमिति। न च तत्र व्यभिचारशङ्कोदयः,

**मिथ्यात्वञ्च स्वाश्रयत्वेनाऽभिमत-यावन्निष्ठात्यन्ताभाव-प्रतियोगित्वम्। अभिमतपदमसम्भव-वारणाय। यावत्पदमर्थान्तर-वारणाय। तदुक्तम्—**

ब्रह्मभिन्नत्वं यदि मिथ्यात्वव्यभिचारि स्यात्, तदा दृग्दृश्ययोः सम्बन्धो न स्यादित्याकारकस्य व्यभिचारशङ्कानिवर्त्तकस्यानुकूलतर्कस्य जागरूकत्वात्। 'अतोऽन्यदार्त्त'मित्याद्यागमा अप्यनुकूलतर्कत्वेनानुसन्धेयाः।

एतेन—यदत्र परिभाषाप्रकाशिकाकृतां शिखामणिकृताञ्चाप्रयोजकत्वशब्दस्य व्यभिचारशङ्कानिवर्त्तकानुकूलतर्कराहित्यार्थकत्ववर्णनम्, तत् प्रत्युक्तं वेदितव्यम्, ग्रन्थकृतां तदुत्तरग्रन्थानुपपत्तेर्दुर्वारत्वात्।

चितसुखाचार्योक्तमनुस्मरन् साध्यं मिथ्यात्वं निर्वक्ति—**मिथ्या**त्वं चेति। **स्वाश्रये**ति। स्वस्याश्रयत्वेनाभिमता यावन्तस्तेषु निष्ठः स्थितो योऽत्यन्ताभावस्तत्प्रतियोगित्वमिति विग्रहः। अत्र स्वपदं यस्य मिथ्यात्वं साधनीयम्, तत्परम्। अभिमतपदं प्रमितिव्यावृत्त-प्रतीतिविशेष्यपरम्। यावत्पदमशेषपरम्। तथा च स्वाश्रयत्वेन स्वप्रकारकप्रतीतिविशेष्यत्वेनाऽभिमते प्रतीते यावति सकले निष्ठः स्थितो विद्यमानो यः स्वात्यन्ताभावस्तत्प्रतियोगित्वं स्वस्य मिथ्यात्वमित्यर्थः। यथेदं रजतमित्यत्र स्वं शुक्तिरूप्यं, तदाश्रयत्वेन तत्प्रकारकप्रतीतिविशेष्यत्वेनाऽभिमतं प्रतीतं यद् यदिदमात्मक-पुरोवर्त्तिद्रव्यं, तस्मिन् यावति समस्ते पुरोवर्त्तिनि द्रव्ये निष्ठः स्थितो यः स्वस्य शुक्तिरूप्यस्यात्यन्ताभावस्तत्प्रतियोगित्वं शुक्तिरूप्यस्येति मिथ्याभूते प्रातिभासिके लक्षणसमन्वयः। एवं स्वप्रकारकप्रतीतिविशेष्ये स्वाधिष्ठानचैतन्ये सर्वस्यापि व्यावहारिकाभावस्य विद्यमानत्वात् तत्प्रतियोगित्वं सर्वस्यैव व्यावहारिकस्येति व्यावहारिकेऽपि लक्षणसमन्वयः कार्यः। न च नित्येष्वनाश्रिताकाशादिषु लक्षणस्याव्याप्तिरिति वाच्यम्, 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादिश्रुत्या तेषां कार्यत्वाभिधानात्, कार्यस्य च स्वोपादानाश्रितत्वनियमात्। ननु स्वाश्रययावन्निष्ठात्यन्ताभावप्रतियोगित्वमेव लक्षणमस्तु, किमभिमतपदेनेत्यत्राह—**अभिमते**ति। **असम्भवे**ति। लक्षणस्यासम्भवदोष-परिहारायेत्यर्थः। लक्ष्ये लक्षणागमनमसम्भवः। तथा च यद्युक्तरूपं लक्षणं स्यात्, तदाऽसम्भवः स्यात्, स्वाश्रये स्वात्यन्ताभावस्यैवाविद्यमानतया स्वस्मिन् स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वाभावात्। अभिमत-पददाने तु नासम्भवः, स्वानाश्रयस्यापि स्वाश्रयत्वेन प्रतीतौ तस्मिन् स्वाश्रयत्वेन प्रतीते स्वात्यन्ताभावसम्भवेन तत्प्रतियोगित्वस्य स्वस्मिन् सुलभत्वादिति भावः। ननु

**सर्वेषामेव भावानां स्वाश्रयत्वेन सम्मते ।**
**प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता ॥**

स्वप्रकारकधीविशेष्यनिष्ठात्यन्ताभाव-प्रतियोगित्वमेव लक्षणमस्तु, किमशेषार्थकेन यावत्-पदेनेत्यत आह—**यावत्**पदमिति । **अर्थान्तर**वारणायेति । अव्याप्यवृत्तित्वादिरूपार्थान्तरवारणाय सिद्धसाधनवारणाय चेत्यर्थः । तथा च यद्येतदनुमानस्य साध्यं स्वप्रकारकधीविशेष्यनिष्ठात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वं स्यात्, तदा वृक्षः कपिसंयोगीत्यादौ संयोगाद्याश्रयत्वेन प्रतीतिविशेष्ये वृक्षादौ विद्यमानस्य संयोगादेरत्यन्ताभावस्य प्रतियोगितायाः संयोगादौ सिद्धतया सिद्धस्य तादृशप्रतियोगित्वस्यानुमानेन साधनात् सिद्धसाधनं स्यादर्थान्तरञ्च, मिथ्यात्वसाधने प्रवृत्तस्यानुमानस्याव्याप्यवृत्तित्वमादाय पर्यवसानात् । अशेषार्थक-यावत्पद-निवेशे तु न सिद्धसाधनं न वाऽर्थान्तरम्, मूलावच्छेदे वृक्षे संयोगाद्यभावस्य सिद्धत्वेऽपि संयोगादेर्यावदधिकरणे तदभावस्यासिद्धत्वादिति भावः ।

यद्यपि सिद्धान्ते संयोगादिकमादाय न सिद्धसाधनम्, तेषामव्याप्यवृत्तिताऽनभ्युपगमात्, स्वात्यन्ताभावसमानाधिकरणस्यैवाऽव्याप्यवृत्तित्वात्, संयोगादीनामतथात्वात्, अग्रे वृक्षः कपिसंयोगी न मूले इत्यादिप्रतीत्या वृक्षाग्रस्याऽग्रावच्छिन्नवृक्षस्य वा संयोगाधिकरणतया मूलस्य मूलावच्छिन्नवृक्षस्य वा तदभावाधिकरणतया च भानात् । अग्र-मूलयोर्मूलाग्रावच्छिन्नयोर्वा वृक्षयोः परस्परं भेदेन संयोगादीनां स्वाभाव-सामानाधिकरण्याभावात्, अन्यथा भावाभावयोरेकाधिकरणताभ्युपगमे विरोधस्य जगति दत्तजलाञ्जलित्वप्रसङ्गात् । तथा चोक्तमद्वैतसिद्धौ द्वितीयमिथ्यात्वनिरूपणे—"अग्रे वृक्षः कपिसंयोगी मूले नेति प्रतीतेरग्रमूलयोरेव संयोगतदभाववत्तयोपपत्तेरि"ति । तथापि स्वाश्रयत्वेन भ्रमात्मकप्रतीतिविशेष्ये विद्यमानस्य स्वात्यन्ताभावस्य प्रतियोगितायाः स्वस्मिन् सिद्धत्वात् सिद्धसाधनता दुर्वारा स्यात् । यावतपदनिवेशे तु न सिद्धसाधनता, स्वाश्रयत्वेनाभिमते यावति स्वात्यन्ताभावस्यानुमानात् प्रागसिद्धत्वात् । न चाभिमतपदेन प्रमितत्वस्य विवक्षणान्नोक्तदोषावकाश इति वाच्यम्, अनुमानस्य बाधितत्वप्रसङ्गात्, प्रतियोग्यधिकरणत्वेन प्रमिते तदत्यन्ताभावाभावस्यैव प्रमितत्वात्, प्रतियोग्यभावयोर्नित्यविरोधात् ।

एवंविधमिथ्यात्वलक्षणे चित्सुखाचार्योक्तं प्रमाणयति—**तदुक्त**मिति । चित्सुखाचार्यैरिति शेषः । **सर्वेषामि**ति । सर्वेषामपि भावानामाश्रयत्वेन सम्मतेऽत्यन्ताभावं प्रति यत् प्रतियोगित्वम्, तदेव तेषां मृषात्मत्वमिति योजना । **भावानां** सताम् ।

**इति। यद्वा—अयं पट एतत्तन्तुनिष्ठात्यन्ताभाव-प्रतियोगी पटत्वात्, पटान्तरवदित्यनुमानं मिथ्यात्वे प्रमाणम्। तदुक्तम्—**

सत्त्वञ्चात्र कालसम्बन्धित्वम्। तेनाभावस्यापि परिग्रहः। **स्वाश्रयत्वेन** स्वोपादानत्वेन स्वपदं मिथ्यात्वेनाभिमतपरम्। **सम्मते** प्रतीते न तु प्रमिते। तेन **च** बाधः परिहृतः। सप्तम्यर्थो निष्ठत्वम्। तथाच सर्वेषां घटपटादीनां भावानां सतां स्वाश्रयत्वेन स्वोपादानत्वेन सम्मताः प्रतीता ये तन्त्वादयस्तन्निष्ठो यः स्वात्यन्ताभावस्तत्प्रतियोगित्वमेव तेषां मिथ्यात्वमिति श्लोकार्थः। तेन स्वोपादाननिष्ठात्यन्ताभाव-प्रतियोगित्वमेव मिथ्यात्वमिति पर्यवसितम्। नन्वेतावता भावानां मिथ्यात्वं कथमिति चेत्? उच्यते। न तावत् तेषामात्मवदनाश्रितत्वम्, कार्यत्वेन स्वोपादानाश्रितत्वात्। सामान्यादीनामपि धर्मत्वात् समानमाश्रितत्वम्। तस्मादाश्रितानामुपादानादन्यत्र स्थित्यभावादुपादानदेशेऽपि चेत् स्थित्यसिद्धिस्तदा बलान्मिथ्यात्वसिद्धिरिति। चित्सुखाचार्योक्तमनुमानप्रकारं दर्शयितुमुपक्रमते—**यद्** **वे**ति। अनुमानप्रयोगं दर्शयति—**अयं** पट इति। अनेन दृश्यमानस्य कस्यचित् पटविशेस्य पक्षत्वं दर्शितम्। पटमात्रं पक्षीकृत्य तत्रैतत्तन्तुनिष्ठात्यन्ताभाव-प्रतियोगित्वसाधने स्यात् सिद्धसाधनता, पटान्तरस्यैतततन्तावविद्यमानस्यैतत्तन्तौ तदत्यन्ताभावस्य सत्त्वेन तत्प्रतियोगिताया अनुमानात् प्राक् तत्र सिद्धत्वात्। तन्निवृत्त्यर्थमाह—**अयमि**ति। तथा च न सिद्धसाधनता, एततपटे एततन्तुनिष्ठात्यन्ताभावप्रतियोगिताया अनुमानात् प्रागसिद्धत्वादिति भावः। साध्यं दर्शयति—**एतत्तन्तुनिष्ठे**ति। तत्र तन्तुनिष्ठात्यन्ताभावप्रतियोगीत्युक्ते एततपटाजनक-तन्त्वन्तरमादाय सिद्धसाधनता, एतत्पटाजनकतन्तावेतत्पटस्याविद्यमानतया तत्र तन्निष्ठात्यन्ताभाव-प्रतियोगित्वस्यानुमानात् प्राक् सिद्धत्वात्। तन्निवृत्त्यर्थमेतदिति तन्तुविशेषणम्। अत्रैतत्तन्तुशब्देनैतत्पटजनकास्तन्तव एवोच्यन्ते, स्वोपादानमिति यावत्। एतततन्तुनिष्ठाभावप्रतियोगीत्युक्ते सिद्धसाधनता, एतत्तन्तुष्वेतत्पटान्योन्योभाव-प्रागभाव-प्रध्वंसाभाव-स्वीकारेणैतत्पटे तत्प्रतियोगित्वस्यानुमानात् प्राक् सिद्धत्वात्। तन्निवृत्त्यर्थमत्यन्तेत्यभावविशेषणम्। अत्यन्ताभावप्रतियोगीत्युक्ते सिद्धसाधनता, यत्किञ्चिन्निष्ठात्यन्ताभावप्रतियोगित्वस्य तत्र सिद्धत्वात्, तत्परिहारार्थमेतत्तन्तुनिष्ठेत्युक्तम्। अनेन स्वोपादाननिष्ठ-स्वात्यन्ताभाव-प्रतियोगित्वरूपस्य मिथ्यात्वस्य साध्यत्वं दर्शितम्। न चैतत् साध्यमप्रसिद्धम्, एतत्तन्त्वानारब्धे पटान्तरे तस्य सिद्धत्वात्। हेतुमाह—**पटत्वा**दिति। कार्यत्वादित्यपि

**अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः ।**
**अंशित्वादितरांशीव दिगेषैव गुणादिषु ॥**

द्रष्टव्यम् । उदाहरणमाह—**पटान्तरवदि**ति । पटान्तरस्यैतत्पटोपादाने एतत्तन्ताव-विद्यमानतयैतत्तन्तुनिष्ठात्यन्ताभाव-प्रतियोगित्वस्य तत्र गृहीतत्वाद् युक्तं तस्योदाहरणत्व-मिति भावः । न चायमसिद्धो हेतुः, एतत्पटस्यैतत्पटत्ववत्त्वे कार्यत्ववत्त्वे वा वादिनो-रविवादात् । नापि विरुद्धः, एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगिनि विपक्षे आत्मनि हेतोरसत्त्वात्, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगिनि पटान्तरे हेतोः सत्त्वाच्च साध्या-भावाव्याप्तत्वात् । अत एव नानैकान्तिकोऽपि, हेतोर्विपक्षावृत्तित्वात् । न चेह तन्तुषु पट इत्यादिना प्रत्यक्षेणैतत्पटस्यैतत्तन्तुनिष्ठतावगमात् कालात्ययापदिष्टता, एतत्पटस्यैतत्तन्तु-निष्ठात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वता तस्य प्रामाण्यानभ्युपगमात्, तस्य भ्रमसाधारण-तया चन्द्रप्रादेशिकत्वप्रत्यक्षवदप्रामाण्यशङ्कास्कन्दितत्वेनाबाधकत्वात् । इह नभसि नीलमिति प्रत्ययबाधेनाकाशारूपित्वानुमानप्रवृत्तिवदत्राप्यनुमानप्रवृत्त्युपपत्तेः । न चायं पटः एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगी एतत्तन्तुसमवेतत्वात्, व्यतिरेकेण पटान्तर-वदिति सत्प्रतिपक्षता, अप्रयोजकत्वात्, एतत्तन्तुसमवेतत्वस्यैतत्तन्तुनिष्ठप्रागभावप्रति-योगित्वेनैवोपपत्तेः, यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वम्, तत्रैतत्तन्तुसमवेतत्वाभाव इति व्यतिरेकव्याप्तावेतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वेन हेतोर्हीनबलत्वाच्च । प्रपञ्चस्त्वाकरे द्रष्टव्यः । **मिथ्यात्वे** एतत्पटमिथ्यात्वे । उक्तानुमाने चित्सुखाचार्य-सम्मतिं दर्शयति—**तदुक्त**मिति । चित्सुखाचार्यैरिति शेषः । श्लोकेनानुमानप्रयोगं दर्शयति—**अंशिन** इति । अवयविन इत्यर्थः । **स्वांश**गात्यन्तेति । स्वोपादाननिष्ठात्य-न्ताभावस्येत्यर्थः । स्वपदं पक्षीभूत-पटविशेषपरम् । अनेनावयविविशेषस्य पक्षत्वं स्वोपा-दाननिष्ठात्यन्ताभावप्रतियोगित्वस्य च साध्यत्वं दर्शितम् । हेतुमाह—**अंशित्वादि**ति । अवयवित्वादित्यर्थः, कार्यत्वेन सम्मतत्वादिति यावत् । दृष्टान्तमाह—**इतरे**ति । इतरांशिन इवेत्यर्थः । यथेतरांशिनामंशित्वादेतदवयवनिष्ठात्यन्ताभाव-प्रतियोगित्वम्, तद्वदेतदंशिनोऽप्यंशित्वादेतदवयवनिष्ठात्यन्ताभावप्रतियोगित्वसिद्धौ मिथ्यात्वसिद्धिरिति भावः । अन्यत्रैतदतिदिशति—**एषा** दिगिति । एव मार्ग इत्यर्थः, एष प्रकार इति यावत् । कुत्रैष प्रकार इत्यत्राह—**गुणादिष्वि**ति । गुणादिमिथ्यात्वे इत्यर्थः । आदि-पदेन कर्म-सामान्यादीनां परिग्रहः । एतद् रूपं स्वोपादाननिष्ठात्यन्ताभावप्रतियोगि

**इति। न च घटादेर्मिथ्यात्वे सन् घट इति प्रत्यक्षविरोधः। अधिष्ठान-ब्रह्मसत्तायास्तत्र विषयतया घटादेः सत्यत्वासिद्धेः। न च नीरूपस्य ब्रह्मणः कथं चाक्षुषादिज्ञान-विषयतेति वाच्यम्, नीरूपस्यापि रूपादेः प्रत्यक्ष-**

रूपत्वादितररूपवत्। एवं स्पर्शादिष्वपि। एतच्चलनं स्वोपादाननिष्ठात्यन्ताभावप्रतियोगि चलनत्वादन्यचलनवत्। तथा तन्तुत्वम् तन्तुनिष्ठात्यन्ताभावप्रतियोगि जातित्वात् घटत्ववत्। एवं समवायेऽपि द्रष्टव्यम्। अयमन्त्यविशेष एतदात्म-निष्ठात्यन्ताभाव-प्रतियोगी विशेषत्वादात्मान्तरगत-विशेषवदिति रीत्या मिथ्यात्वमनुमेयमिति भावः।

नन्विदमनुमानं घटादेर्मिथ्यात्वे न मानम्, सन् घट इत्याद्यध्यक्षविरोधात्, वह्नि-शैत्यानुमानवत्। तथा हि—सन् घट इत्यादिप्रत्यक्षं हि घटादीनां सत्त्वमवगमयति। तच्च मिथ्यात्वविरोधीति मिथ्यात्वानुमानं मिथ्यात्वं साधयितुं नालमित्याशङ्कां निराकरोति—**न चे**ति। **मिथ्यात्वे** मिथ्यात्वानुमितौ। विरोधाभावे हेतुमाह—**अधिष्ठाने**ति। आरोप्यतादात्म्यापन्न-सद्रूपाधिष्ठानस्येत्यर्थः। **तत्र** सन्निति प्रत्यक्षे। **सत्यत्वासिद्धेः** सत्यत्वानिश्चयात्। अयं भावः—सन् घट इति प्रत्यक्षं हि सद्रूपमधिष्ठान-मारोप्यघटादितादात्म्यापन्नं विषयीकरोति, न तु घटादेः सत्त्वम्। तत् कथं मिथ्यात्वानु-मानस्य प्रत्यक्षेण विरोधः? द्वयोर्हि विरुद्धयोरेकाधिकरणत्वे विरोधिता, न तु भिन्नाधिकरणत्वे। न हि भवत्यात्मा नित्यो बुद्धिरनित्येति विरुद्धम्। तत् कस्मात्? द्वयोर्भिन्नाधिकरणत्वात्। न चात्र सत्यत्व-मिथ्यात्वयोरेकाधिकरणता, सत्यत्वस्य सदात्मक-ब्रह्माश्रितत्वात्, मिथ्यात्वस्य घटाद्याश्रितत्वात्। नाप्यनयोर्विरुद्धता, अधिष्ठानस्याध्यस्ताविरोधात्। यच्च मिथ्यात्वविरोधि सत्त्वं कालत्रयाबाध्यत्वरूपम्, तन्नाध्यक्षयोग्यम्। यच्चान्यत् सत्तासामान्यरूपमर्थक्रियाकारित्वरूपमसद्वैलक्षण्यरूपं कालसम्बन्धित्वरूपं वा सत्त्वम्, तन्न मिथ्यात्वविरोधि, मिथ्यात्वेन तेषां सामानाधिकरण्यात्। तस्मान्नानेनानु-मानेन सत्त्वग्राहिणः प्रत्यक्षस्य विरोध इति भावः। ननु मिथ्यात्वविरोधि सत्त्वं यथा नाध्यक्षयोग्यं, तद्वत् सदधिष्ठानमपि, तस्य नीरूपत्वात्। न हि नीरूपस्य प्रत्यक्ष-विषयत्वं क्वचिद् दृष्टमिति वैशेषिकशङ्कां निराकर्त्तुमाह—**न चे**ति। **कथ**मित्याक्षेपे। **चाक्षुषादी**ति। आदिपदेन त्वाचादिप्रत्यक्षपरिग्रहः।

एतेन—अत्र चाक्षुषादीत्यादिपदमधिकमिति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, सत्प्रतीतेः त्वाचादि-प्रत्यक्ष-साधारणत्वात्।

**विषयत्वात्। न च नीरूपस्य द्रव्यस्य चक्षुराद्ययोग्यत्वमिति नियमः, मन्मते ब्रह्मणो द्रव्यत्वासिद्धेः। गुणाश्रयत्वं समवायिकारणत्वं वा द्रव्यत्वं तेऽभिमतम्। न हि निर्गुणस्य ब्रह्मणो गुणाश्रयता। नापि समवायिकारणता, समवायासिद्धेः। अस्तु वा द्रव्यत्वं ब्रह्मणः, तथापि नीरूपस्य कालस्येव चाक्षुषादि-ज्ञान-विषयत्वे न विरोधः।**

**ज्ञान**विषयतेति। प्रत्यक्षविषयतेत्यर्थः। प्रत्यक्षे रूपादिमत्त्वस्य प्रयोजकत्वात्, ब्रह्मणश्च रूपादिरहितत्वादिति भावः। आशङ्कां निराकरोति—**नीरूपस्या**पीति। यदि प्रत्यक्षं प्रति रूपं निमित्तं स्यात्, तर्हि गुणकर्मादीनां प्रत्यक्षं न स्यात्, तेषां रूपाद्यभावात्, गुणादिर्निर्गुणक्रिय इति तत्-सिद्धान्तात्। भवति च गुणादीनां प्रत्यक्षम्। तस्माद् रूपादिकं न प्रत्यक्षनिमित्तम्। अत एव ब्रह्मणः प्रत्यक्षविषयत्वमिति भावः। ननु प्रत्यक्षमात्रं प्रति रूपादिकं न निमित्तम्, किन्तु द्रव्यप्रत्यक्षं प्रति। ब्रह्म तु नीरूपं द्रव्यम्। तस्मात् तस्य प्रत्यक्षं न युक्तमिति स्वाभिप्रायमाविष्कुर्वन् पूर्वपक्षी पुनः शङ्कते—**न चे**ति। आशङ्कां निराकरोति—**मन्मत** इति। अद्वैतवेदान्तिमत इत्यर्थः। **द्रव्यत्वा**सिद्धेरिति। तथा च द्रव्यप्रत्यक्षे चक्षुषो रूपापेक्षा, न त्वन्यप्रत्यक्षे। ब्रह्म तु न द्रव्यम्। तथा चोक्तं विवरणे पञ्चमवर्णकान्ते—"ब्रह्म तु न द्रव्यं, प्रमाणाभावात्। समवायिकारणत्वाद् द्रव्यमिति चेत्, न, आरम्भवादानभ्युपगमात्। उपादानकारणत्वाद् द्रव्यमिति चेत्, न, गुणादीनामपि ग्रहणधर्मत्वादि-धर्मोपादानत्वादि"ति। तस्मात् तस्य प्रत्यक्षत्वं युक्तमिति भावः। नन्वेवं स्याद् यदि ब्रह्मणोऽद्रव्यत्वं सिद्धं स्यात्। न चाद्यापि तत् सिद्धमित्याशङ्क्य ब्रह्मणोऽद्रव्यत्वे हेतुमाह—**गुणाश्रयत्व**मिति। **ते** तव वैशेषिकस्य नैयायिकस्य च। **अभिमतमि**ति। "क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षण"मिति वैशेषिकसूत्रादिति भावः। ननु ब्रह्मणोऽपि क्रियागुणवत्त्वं श्रूयते, "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति "आनन्दं ब्रह्मणो विद्वानि"ति च श्रुतेरिति चेत्, तत्राह—**निर्गुणस्ये**ति। साक्षी चेता केवलो निर्गुणश्चेत्यादि-बहुतर-श्रुतिविरोधेनोदाहृतश्रुतीनामन्यार्थपरत्वौचित्यादिति भावः। **समवाया**सिद्धेरिति। प्रमाणाभावात्, अनवस्थारूप-बाधकसद्भावाच्च। तथा च वेदान्तसूत्रम्—समवायाभ्युपगमाच्च साम्यादनवस्थितेरितीति भावः। तुष्यतुदुर्जनन्यायेन ब्रह्मणो द्रव्यत्वमभ्युपगम्य प्रत्यक्षविषयत्वमुपपादयति—**अस्तु** वेति। रूपादिरहितस्यापि द्रव्यस्य

**यद्वा—त्रिविधं सत्त्वम्। पारमार्थिकसत्त्वं ब्रह्मणः। व्यावहारिकसत्त्वमाकाशादेः। प्रातिभासिकसत्त्वं शुक्तिरूप्यादेः। तथा च घटः सन्निति प्रत्यक्षस्य व्यावहारिकसत्त्व-विषयत्वेन प्रामाण्यम्। अस्मिन् पक्षे घटादेर्ब्रह्मणि निषेधो न स्वरूपेण, किन्तु पारमार्थिकत्वेनैवेति न विरोधः।**

प्रत्यक्षत्वे दृष्टान्तमाह—**नीरूपस्या**पीति। कालस्य च रूपादिहीनस्य मीमांसकादिभिः सर्वेन्द्रिय-ग्राह्यत्वाभ्युपगमात्, न सोऽस्ति प्रत्ययो लोके कालो यत्र न भासते इत्युक्तेः, प्रतीतेः समयविशेषविषयत्वनियमादिति परिशुद्धिप्रकाशकृदुक्तेश्चेति भावः। **न विरोध** इति। यथा नीरूपस्य कालस्य चाक्षुषादिज्ञानविषयत्वम्, तथा सदात्मकब्रह्मणोऽपीति नानुमानेन प्रत्यक्षस्य विरोध इति भावः।

एकसत्त्वमतेन प्रत्यक्षाविरोधमुपपाद्य सत्त्वत्रैविध्यमतेनापि तमुपपादयति—**यद्वे**ति। **त्रिविध**मिति। पारमार्थिकसत्त्वं व्यावहारिकसत्त्वं प्रातिभासिकसत्त्वञ्चेत्यर्थः। तत्र पारमार्थिकसत्त्वं कालत्रयाबाध्यत्वम्। व्यावहारिकसत्त्वं ब्रह्मप्रमातिरिक्ताबाध्यत्वम्। प्रातिभासिकसत्त्वं ब्रह्मप्रमातिरिक्तबाध्यत्वम्। तानि क्रमेणोदाहरति—**पारमा**र्थिकेति। प्रकृतमुपपादयति—**तथा चे**ति। त्रिविधसत्त्वेऽभ्युपगम्यमाने चेत्यर्थः। **प्रामाण्यं** व्यावहारिकप्रामाण्यम्, तद्विषयस्य व्यावहारिकसत्त्वस्य व्यवहारकालाबाध्यत्वादिति भावः। ननु घटाकाशादेर्व्यावहारिकसत्ताङ्गीकारे नेह नानास्ति किञ्चनेति श्रुत्या ब्रह्मणि निषेधो न स्यात्, व्यावहारिकसत्त्वेन घटादेस्तत्र विद्यमानत्वात्, येन रूपेण यद् यत्र विद्यते, तेन रूपेण तत्र तन्निषेधायोगादित्यत आह—**अस्मिंश्च** पक्ष इति। **निषेध** इति। नेह नानास्ति किञ्चनेत्यादि-श्रुत्येति शेषः। **न स्वरूपेण** न व्यावहारिकत्वेन। **न विरोध** इति। घटः सन्नित्यादि प्रत्यक्षं हि घटादेर्व्यावहारिकसत्त्वमवगमयति, श्रुतिस्तु पारमार्थिकसत्त्वाभावम्। तेन न प्रत्यक्षविरोध इति भावः। न च तन्निषेधश्रुतीनां पारमार्थिकत्वेन द्वैतनिषेधपरत्वेऽप्रसक्तप्रतिषेध इति वाच्यम्, परोक्षप्रसक्तेः सम्भवात्, "नान्तरीक्षेऽग्निश्चेतव्य" इत्यादिवदप्रसक्तप्रतिषेधस्याप्युपपत्तेश्च। वस्तुतस्तु यत्र निषेधे तात्पर्यम्, तत्र प्रतियोगिप्रसक्तिं विना तत्कल्पनवैयर्थ्यात् तदावश्यकता। यत्र तु निषेधे न तात्पर्यम्, किन्तु मानान्तरसिद्ध-तदनुवाद-द्वारा विधेयस्तुतिपरत्वम्, तत्र न तदावश्यकतेति मन्तव्यम्।

ननु सत्तात्रैविध्याङ्गीकारे उक्तं मिथ्यात्वलक्षणं न स्यात्, असम्भवात्, केनचित्

**अस्मिन् पक्षे च मिथ्यात्वलक्षणे पारमार्थिकत्वावच्छिन्न-प्रतियोगिताकत्व-मत्यन्ताभाव-विशेषणं द्रष्टव्यम्। तस्मादुपपन्नं मिथ्यात्वानुमानमिति।**

**इति श्रीमन्महामहोपाध्याय-धर्मराजाध्वरीन्द्र-**
**विरचितायां वेदान्त-परिभाषायाम्**
**अनुमानपरिच्छेदः**

सत्त्वेन स्वाश्रयाभिमते वस्तुनि तेन रूपेण तत्र तदत्यन्ताभावासम्भवादित्यत आह— **अस्मिन्** पक्षे चेति। सत्तात्रैविध्यपक्षे चेत्यर्थः। **मिथ्यात्व**लक्षणे उक्तमिथ्यात्वलक्षणे। **पारमार्थिक**त्वेति। पारमार्थिकत्वावच्छिन्ना प्रतियोगिता यस्याभावस्य, तत्त्वमिति विग्रहः। तथा च स्वप्रकारक-प्रतीतिविशेष्यनिष्ठ-पारमार्थिकत्वावच्छिन्न-प्रतियोगिताक-स्वात्यन्ताभाव-प्रतियोगित्वं मिथ्यात्वमिति लक्षणं वक्तव्यम्। तेन नासम्भवः, शुक्तिरजता-दीनां प्रातिभासिकसत्त्ववत्त्वेऽपि व्यावहारिकाणां वियदादीनां व्यावहारिक-सत्त्ववत्त्वेऽपि पारमार्थिकसत्त्वाभावात् पारमार्थिकत्वेन रूपेण तदभावस्य तदाश्रये सत्त्वात् तत्प्रतियोगि-त्वस्य वियदादौ विद्यमानत्वादिति भावः। प्रकृतं प्रत्यक्षाविरोधमुपसंहरति **तस्मादि**ति। मिथ्यात्वलक्षणस्य पारमार्थिकत्वावच्छिन्न-प्रतियोगिताकात्यन्ताभावघटितत्वादित्यर्थः। **उपपन्नं** युक्तम्। अनुमानस्य पारमार्थिकत्वाभावविषयकत्वात् प्रत्यक्षस्य च व्याव-हारिकसत्त्वविषयकत्वात् तयोर्भिन्नविषयत्वेनाविरोधाद् युक्तं मिथ्यात्वानुमानमिति भावः।

इति श्रीमन्महामहोपाध्याय-द्राविड़-लक्ष्मण-शास्त्रि-पूज्यपाद-शिष्य-
श्रीमन्महामहोपाध्याय-योगेन्द्रनाथ-तर्कसांख्यवेदान्ततीर्थ-
श्रीचरणान्तेवासि-श्रीपञ्चानन-भट्टाचार्य-विरचिते
परिभाषा-संग्रहे अनुमानपरिच्छेदः

## उपमानपरिच्छेदः

**अथोपमानं निरूप्यते। तत्र सादृश्यप्रमाकरणमुपमानम्। तथा हि प्राङ्गणेषु दृष्टगोपिण्डस्य पुरुषस्य वनं गतस्य गवयेन्द्रिय-सन्निकर्षे सति भवति प्रतीतिरयं पिण्डो गोसदृश इति। तदनन्तरञ्च भवति निश्चयोऽनेन सदृशी**

क्रमप्राप्तमुपमानं लौकिक-वैदिक-व्यवहारविशेषौपयिक-सादृश्यज्ञान-फलकं निरूपयितुं प्रतिजानीते—**अथे**ति। अनुमाननिरूपणानन्तरमित्यर्थः। **उपमानम्** उपमितिकरणम्। **निरूप्यते** स्वरूप-लक्षण-फलैर्ज्ञाप्यते। **तत्र** स्वरूप-लक्षण-फलेषु। यद्यप्युपमानज्ञानस्योपमितिज्ञानसापेक्षत्वादुपमितिनिरूपणमेवादावुचितम्, तथाप्युपमितिस्वरूपे विवादादुपमानस्वरूपे चाविवादादौ तत्स्वरूपं भट्टमतमनुसृत्याह—**सादृश्य**प्रमेति। सादृश्यप्रमायाः करणमिति विग्रहः। सादृश्यप्रमाऽसन्निहित-गोगत-गवयसादृश्यविषयिणी प्रमा। सैवोपमितिः, प्रत्यक्षादि-विलक्षणत्वात्। तत्करणञ्च सन्निहित-गवयनिष्ठ-गोसादृश्यज्ञानम्। तदेवोपमानमिति भावः। एतेनोपमितिकरणत्वमुपमानत्वमित्युपमानलक्षणं सूचितम्। तदेवोपपादयति—**तथा** हीति। **प्राङ्गणे**ष्वित्यत्र नगरेष्विति क्वचित् पाठः। **गोपिण्डस्य** गोदेहस्य। **अयं पिण्डः** अयं गवयदेहः। **गोसदृश** इति। गोसादृश्यवानित्यर्थः। सादृश्यञ्च तदसाधारणधर्मशून्यत्वे सति तद्गतधर्मवत्त्वम्। स च धर्मो जातिरूपो वोपाधिरूपो वेत्यन्यदेतत्।

एतेन सादृश्यं पदार्थान्तरमिति प्राभाकराणां मतं प्रत्युक्तम्, तद्गतधर्मेणैव सादृश्यप्रतीत्युपपत्तावतिरिक्त-पदार्थकल्पनाया अन्याय्यत्वात्। किञ्च सादृश्यस्यातिरिक्तत्वे बहुसदृशमीषत्सदृशमित्युत्कर्षापकर्षप्रत्ययानां कथमुपपत्तिः। न हि प्राभाकरमते सादृश्यस्याल्पत्वबहुत्वे सम्भवतः। न च परिमाणभेदादल्पत्वबहुत्वे इति वाच्यम्, द्रव्यव्यतिरिक्तानामपरिमाणत्वात्। न चाश्रयपरिमाणभेदात् सादृश्यपरिमाण-भेदः, आश्रयस्यैकत्वात्। अस्माकं तु नानुपपत्तिः, गुणावयवादीनां न्यूनाधिकसंख्यावत्त्वेन तदुपपत्तेः। ननु सादृश्यप्रतीतेर्गुणावयवसामान्यादिविषयत्वे तदिति प्रतीतिः स्यान्नतु तद्वदिति चेन्न। गवयगतानां गुणावयवादीनां स्वरूपेण निरूप्यमाणानां तदिति बुद्धिविषयत्वेऽपि गवाश्रितत्वाकारेण निरूप्यमाणानां तद्वद्बुद्धिविषयत्वनियमात्। तस्मात् सादृश्यं न पदार्थान्तरमिति।

**मदीया गौरिति। तत्रान्वय-व्यतिरेकाभ्यां गवयनिष्ठ-गोसादृश्यज्ञानं करणम्। गोनिष्ठ-गवयसादृश्यज्ञानं फलम्।**

**नचेदं प्रत्यक्षेण सम्भवति, गोपिण्डस्य तदेन्द्रियासन्निकृष्टत्वात्। नाप्यनु-**

**तदनन्तरं** गवयगत-गोसादृश्य-दर्शनानन्तरम्। **अनेन** गवयेन। **गौरिति**। निश्चय इति प्राक्तनेनास्यान्वयः। गोगत-गवयसादृश्यज्ञानमित्यर्थः। एतयोः पूर्वापरीभूतयोः सादृश्यज्ञानयोः कतरत् करणं कतरद् वा फलमिति विभज्य स्पष्टयति—**तत्रे**ति। तयोः सादृश्यज्ञानयोर्मध्ये इत्यर्थः। **अन्वयव्यतिरेकाभ्यामिति**। गवयनिष्ठ-गोसादृश्यज्ञान-सद्भावे गोनिष्ठगवयसादृश्यज्ञानस्योदय इत्यन्वयस्तदसद्भावे चानुदय इति व्यतिरेकस्ताभ्या-मित्यर्थः। **करणमि**ति। प्रमाणमित्यर्थः। गोपदार्थस्मरणरूपव्यापारवत्त्वादिति भावः।

वस्तुतस्तूपमेयाकारवृत्तेरेवोपमितिकरणत्वम्, तज्जनकतया गवयगत-गोसादृश्यज्ञानस्य भाक्तं करणत्वम्। अन्यथा तस्य मुख्यकरणत्वे उपमेयाकारवृत्तिं विनैव प्रमाणव्यापारा-नन्तरमुपमित्युत्पत्त्यापत्तेः। **फलं** उपमितिः, उपमानप्रमाणजन्यत्वादिति भावः।

एतेन—सम्बन्धस्य परिच्छेदं संज्ञायाः संज्ञिना सह। प्रत्यक्षादेरसाध्यत्वादुपमान-फलं विदुरित्युदयनोक्तं प्रत्युक्तम्, अतिदेशवाक्यार्थानुसन्धानं विनापि गवयज्ञानदर्शनात्, गवयो गवयपदवाच्यः गोसदृशत्वात्, अतिदेशवाक्यावगत-पिण्डवदित्यनुमानेनापि गवये गवयपद-वाच्यत्वज्ञानसम्भवात्, कमलेन लोचनमुपमिनोमीति लौकव्यवहाराभावप्रसङ्गात् शक्तेस्तत्राभावात्। तथा चोक्तं श्लोकवार्त्तिके—श्रुतातिदेशवाक्यत्वं न चातीवोपजीव्यते। येऽपि ह्यश्रुततद्वाक्यास्तेषामपि भवत्ययम्॥ इति।

सांख्यास्तु—उपमानं न प्रमाणान्तरं प्रमेयाभावात्। यच्चासन्निहिते गवि गवयसादृश्यं, तत्र तस्य प्रमेयं, तस्य प्रत्यक्षविषयत्वात्, गवयनिष्ठसादृश्यस्य प्रत्यक्षत्वे गव्यपि तस्य प्रत्यक्षत्वौचित्यात्, गुणकर्माऽवयव-सामान्ययोग-रूपस्य तस्यैकरूपत्वात्। तथा चोक्तं तत्त्वकौमुद्यां—भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्त्ती जात्यन्तरे सादृश्यमुच्यते। सामान्ययोगश्चैकः। स चेद् गवये प्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्तीती-त्याहुस्तन्मतमपाकरोति—**न चे**ति। **इदं** गोनिष्ठ-गवयसादृश्यविषयकं ज्ञानम्। **प्रत्यक्षेण** प्रत्यक्षप्रमाणेन। **सम्भवति** जायते, गोगत-गवयसादृश्येनेन्द्रियस्य सन्निकर्षाभावादिति भावः। तत्र हेतुमाह—**गोपिण्डस्ये**ति। **तदा** गोगत-सादृश्य-ज्ञानकाले। **इन्द्रिया-सन्निकृष्टत्वादिति**। यदा तु सादृश्यधर्मिणा गोपिण्डेनेन्द्रियसन्निकर्षो नास्ति, तदा कैव

**मानेन, गवयनिष्ठ-सादृश्यस्यातल्लिङ्गत्वात्। नापि मदीया गौरेतद्गवय-सदृशी, एतन्निष्ठ-सादृश्य-प्रतियोगित्वात्, यो यद्गत-सादृश्यप्रतियोगी, स तत्सदृशः, यथा मैत्रनिष्ठ-सादृश्य-प्रतियोगी चैत्रो मैत्रसदृश इत्यनुमानात् तत्सम्भव इति वाच्यम्, एवंविधानुमानानवतारेऽप्यनेन सदृशी मदीया गौरिति प्रतीते-**

कथा तद्धर्मेण सादृश्येन, परम्परासम्बन्धस्य साक्षात्सम्बन्धपूर्वकत्वात्, न ही धर्मीन्द्रिय-सन्निकर्षाभावे धर्मेन्द्रिय-सन्निकर्षो जायते। तस्माद् गोगत-सादृश्येनेन्द्रियसन्निकर्षाभावात् तज् ज्ञानं नैवेन्द्रियजन्यमिति भावः। न च गवयगत-सादृश्यस्येन्द्रियसन्निकृष्टत्वाद् गोगत सादृश्यस्यापीन्द्रिय-सन्निकृष्टत्वं, सामान्ययोगरूपस्य सादृश्यस्यैकत्वादिति वाच्यम्, तस्यैकत्वासिद्धेः, सामान्ययोगस्य स्वरूपतो भेदाभावेऽपि गोगवयगतत्वेन भिन्नत्वात्, अन्यथा गोसदृशं पश्यतो गवय-सदृशं पश्यामीत्यनुव्यवसायापत्तेः। वैशेषिकास्तु गवयगत गोसादृश्यज्ञानाद् यद् गोगत-गवयसादृश्यज्ञानं, तदनुमानमित्याहुस्तान्निरा-करोति—**नापी**ति। **अनुमानेने**ति। इदं सम्भवतीति प्राक्तनेन सम्बध्यते। गोगत-गवयसादृश्यज्ञानस्यानुमितित्वे गवयनिष्ठ-गोसादृश्यस्य लिङ्गत्वं गवयनिष्ठ-गोसादृश्य-प्रति-योगित्वस्य वेत्याशङ्क्याद्यं निराकरोति—**गवयनिष्ठ**सादृश्येति। तत्र हेतुमाह—**अतल्लिङ्गत्वा**दिति। गोनिष्ठ-गवयसादृश्यानुमितौ गवयनिष्ठ-सादृश्यस्याहेतुत्वादित्यर्थः। गवयनिष्ठ-गोसादृश्यस्य गोभेदघटितत्वेन गोनिष्ठ-गवयसादृश्यस्य गवयभेदघटितत्वेन परस्परं भिन्नतया गवयनिष्ठगोसादृश्यस्य गव्यभावादिति भावः। द्वितीयं निराकरोति—**नापी**ति। **मदीया** गौरिति। अनेन पक्षो दर्शितः। **एतद्गवय**सदृशीति। एतद्गवयप्रतियोगिक-सादृश्यवतीत्यर्थः। अनेनैतद्गवयप्रतियोगिक-सादृश्यस्य साध्यत्वं दर्शितम्। हेतुं दर्शयति—**एतन्निष्ठे**ति। गवयानुयोगिकसादृश्य-प्रतियोगित्वादित्यर्थः। यस्य सादृश्यं, स तत्सादृश्यस्य प्रतियोगी। यत्र सादृश्यं, स तत्सादृश्यस्यानुयोगी। यदा गवये गोसादृश्यं, तदा तत्सादृश्यस्य गवयोऽनुयोगीति गौश्च प्रतियीगीति तत् सादृश्यं गवयानुयोगिकं गोप्रतियोगिकमिति व्यवह्रियते। अत एव गवयानुयोगिक-सादृश्य-प्रतियोगित्वस्य गवि विद्यमानत्वात् तस्य तल्लिङ्गत्वं युक्तमिति भावः। ननु व्याप्तिविशिष्टस्यैव हेतुत्वनियमादत्र च व्याप्तेरदर्शनात् कथं तस्य लिङ्गत्वमित्याशङ्क्य तत्र व्याप्तिं दर्शयति—**यो यद्ग**तेति। **तत्सदृशः** तत्-प्रतियोगिक-सादृश्यवान्। व्याप्तिग्रहणस्थानमुदाहरणं दर्शयति—**यथे**ति। **मैत्रसदृशः** मैत्रप्रतियोगिकसादृश्यवान्।

**रनुभवसिद्धत्वात्, उपमिनोमित्यनुव्यवसायाच्च। तस्मादुपमानं मानान्तरम्।**

**इति श्रीमन्महामहोपाध्याय-धर्मराजाध्वरीन्द्र-**
**विरचितायां वेदान्त-परिभाषायाम्**
**उपमान-परिच्छेदः**

**सम्भवः** गोनिष्ठ-गवयसादृश्यज्ञान-सम्भवः। निराकरणे हेतुमाह—**एवंविधे**ति। उक्त-रूपलिङ्गज्ञानाद्यभावेऽपीत्यर्थः। अयं भावः—यदैतल्लिङ्गज्ञान-व्याप्तिज्ञाने भवतः, भवेत् तदा तज्जन्य-गोगत-गवयसादृश्यज्ञानस्यानुमितित्वम्। यदा तु नैतल्लिङ्गज्ञानं न वा व्याप्तिज्ञानम्, तदापि तज्ज्ञानस्योदयात् तस्यानुमितित्वं नैव युक्तं, व्यभिचारित्वाल्लिङ्ग-ज्ञानस्येति भावः। ननु गवयनिष्ठ-सादृश्यप्रतियोगित्वरूपस्य व्याप्तिविशिष्टलिङ्गस्य ज्ञाने सत्येव गोगत-गवयसादृश्यज्ञानं जायते, नान्यथा। तत् कथमुच्यते लिङ्गज्ञानस्य व्यभि-चारित्वादिति। तत्राह—**उपमिनोमी**ति। यद्येतत् सादृश्यज्ञानमनुमितिः स्यात्, तदाऽनुमिनोमीत्यनुव्यवसायः स्यात्, नोपमिनोमीति। भवति चोपमिनोमित्यनुव्यवसाय-स्तस्मात् तस्यानुमितित्वं नैव युक्तमिति भावः। उपसंहरति—**तस्मादि**ति। उपमिनोमी-त्यनुव्यवसायबलादित्यर्थः। **मानान्तरमि**ति। यदा तु गवयनिष्ठसादृश्यज्ञानाज्जाय-मानं गोगत-गवयसादृश्यज्ञानं प्रत्यक्षादिविलक्षणम्, तदा तत्प्रमाणेनापि प्रत्यक्षादि-विलक्षणेन भवितव्यम्। यच्च प्रत्यक्षादि-विलक्षणं प्रमाणान्तरं, तदेवोपमानमिति भावः।

इति श्रीमन्महामहोपाध्याय-द्राविड़-लक्ष्मण-शास्त्रि-पूज्यपाद-शिष्य-
श्रीमन्महामहोपाध्याय-योगेन्द्रनाथ-तर्कसांख्यवेदान्ततीर्थ-
श्रीचरणान्तेवासि-श्रीपञ्चानन-भट्टाचार्य-विरचिते
परिभाषा-संग्रहे उपमान-परिच्छेदः

## आगमपरिच्छेदः

**अथागमो निरूप्यते। यस्य वाक्यस्य तात्पर्य-विषयीभूत-संसर्गो मानान्तरेण न बाध्यते, तद् वाक्यं प्रमाणम्।**

क्रमप्राप्तमद्वैतब्रह्म-साक्षात्कारानुकूलमागमप्रमाणं निरूपयितुं प्रतिजानीते—**अथे**ति। उपमाननिरूपणानन्तरमित्यर्थः। **आगम** इति। आ सम्यग् गम्यते ज्ञायतेऽर्थोऽनेनेत्यागमो वाक्यविशेषः। स एव प्रमाणमित्यर्थः। ननु कीदृशो वाक्यविशेषः प्रमाणमित्याशङ्कायां तत्स्वरूपं निरूपयति—**यस्य** वाक्यस्येति। **संसर्गः** पदार्थानां परस्परं सम्बन्धः, अन्वय इति यावत्। **मानान्तरेण** वेदान्तेतर-प्रमाणेन। **प्रमाणं** प्रमितिकरणम्। प्रमितिश्चात्र वेदान्तेतर-प्रमाणाबाधितानां तात्पर्यविषयीभूतानामर्थानां परस्परं सम्बन्धबोधः। स एव शाब्दबोध इत्यन्वयबोध इति चाख्यायते। एतेन—वेदान्तेतर-प्रमाणाबाधित-तात्पर्यविषयीभूत-संसर्गानुभावक-वाक्यत्वमित्यागमलक्षणं सूचितम्। तत्र वाक्यत्वमित्युक्तौ जरद्गवादिवाक्येऽप्रमाणभूतेऽतिव्याप्तिः, तद्वारणाय—संसर्गानुभावकेति वाक्यविशेषणम्। स्वार्थप्रामाण्यरहितेऽर्थवादवाक्ये संसर्गानुभावकेऽतिव्याप्तिवारणाय—तात्पर्यविषयीभूतेति संसर्गविशेषणम्। भ्रमात्मकतात्पर्य-विषयीभूत-संसर्गानुभावके शाक्यादिवाक्येऽतिव्याप्तिवारणाय—मानान्तराबाधितेति संसर्गविशेषणम्। न च घटमानय, स्वर्गकामो यजेतेत्यादीनां लौकिक-वैदिक-वाक्यानामप्रामाण्यापत्तिः, तत्तद्-वाक्य-तात्पर्यविषयीभूतानां तत्तत्संसर्गाणामतोऽन्यदार्त्तमित्यादिश्रुत्या बाधितत्वादिति वाच्यम्, तत्तद्वाक्य-तात्पर्यविषयीभूतानां संसर्गाणां वेदान्तेतर-प्रमाणाबाध्यत्वात् प्रामाण्योपपत्तेः।

वस्तुतस्त्वत्र संसर्गपदं वाक्यार्थपरम्। तेन संसर्गस्यापि लाभः स्यात्, तस्यापि वाक्यार्थत्वात्। अन्यथाऽखण्डार्थपरे तत्त्वमस्यादिवाक्ये लक्षणस्याव्याप्तिर्दुर्वारा स्यात्।

एतेन—शब्दो न पृथक् प्रमाणमनुमानगतार्थत्वादिति काणादादिमतं प्रत्युक्तम्, व्याप्त्यादिज्ञानं विनापि शाब्दबोधस्यानुभविकत्वात्। अत एवोक्तं शब्दशक्तिप्रकाशिकायाम्—साकांक्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः। सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा॥ इति।

नन्वेवमपि वाक्यस्य प्रमितिकरणत्वं नैवोपपन्नम्, बहूनां लौकिकवैदिकवाक्यश्रवणेऽपि

**वाक्यजन्य-ज्ञाने आकांक्षा-योग्यताऽऽसत्तयस्तात्पर्यज्ञानं चेति चत्वारि कारणानि ।**

ततोऽन्वयबोधानुदयादित्यत आह—**वाक्यजन्य**ज्ञाने चेति। नैयायिकास्त्वाकांक्षायोग्यतासत्तीनां ज्ञानं शाब्दबोधकारणमाहुस्तन्मतमपाकर्त्तुमाह—**आकांक्षे**ति। अनेनाकांक्षायोग्यतासत्तीनां पदार्थधर्माणां स्वरूपसत्त्यैव शाब्दबोधहेतुत्वम्, अनुपपत्त्यभावात्, न तु ज्ञाततया, गौरवादिति सूचितम्। तथा चोक्तं मानमेयोदये—अत्राकांक्षा च योग्यत्वं सन्निधिश्चेति तत् त्रयम्। वाक्यार्थावगमे सर्वैः कारणत्वेन कल्प्यते॥ इति। नन्वस्त्वाकांक्षासत्त्योः स्वरूपसत्त्वेन कारणत्वम्। योग्यतायास्तु स्वरूपसत्त्वेन कारणत्वं नैव युक्तम्, शाब्दभ्रमाभावप्रसङ्गात्। तस्माद् योग्यताया ज्ञानं शाब्दबोधे कारणमिति चेन्न, तात्पर्यभ्रमादेव शाब्दभ्रमोपपत्तेः, सैन्धवमानयेत्यादौ योग्यताभ्रमाच्छाब्दभ्रमासम्भवेऽपि तात्पर्यभ्रमाच्छाब्दभ्रम-सम्भवात्। नन्वेवं तात्पर्यमपि स्वरूपसत्त्यैव कारणं स्यात्, नेत्याह—**तात्पर्य**ज्ञानञ्चेति। तात्पर्यस्य शब्दधर्मस्य स्वरूपसत्त्वेन कारणत्वे भोजनप्रकरणे श्रूयमाणात् सैन्धवमानयेति वाक्यादश्वसंसर्गस्यापि बोधः स्यात्, तत्र तत्तात्पर्यस्य विद्यमानत्वात्। तात्पर्यज्ञानस्य कारणत्वे तु नाश्वसंसर्गबोधः, तत्र तत्तात्पर्यसत्त्वेऽपि श्रोतुस्तत्तात्पर्यज्ञानाभावात्, लवणतात्पर्यज्ञानस्यैव तस्योत्पन्नत्वादिति भावः। केचित् क्वचिदेव नानार्थादौ तात्पर्यज्ञानस्य कारणत्वमिच्छन्ति न सर्वत्र, तन्मतमपाकर्त्तुमाह—**चत्वारी**ति। तथा चानेन शाब्दबोधमात्रं प्रति तात्पर्यज्ञानस्य कारणत्वमिति सूचितम्। अन्यथा गणनयैव चतुष्ट्वसंख्यालाभे चत्वारीत्यस्योपादानं निरर्थकं स्यादिति भावः। **कारणाणि** सहकारि-कारणानि। तत्राकांक्षा यदि कारणं न स्यात्, गौरश्वः पुरुषो हस्तीत्यादितोऽपि शाब्दबोधः स्यात्। आकांक्षायाः कारणत्वे तु न तथा, तदुपस्थाप्यार्थानामाकांक्षारहितत्वात्। अत एव तद्वाक्यमपि न प्रमाणम्, प्रमित्यकरणत्वात्। एवं योग्यता यदि कारणं न स्यात्, अग्निना सिञ्चेदित्यादितोऽप्यन्वयबोधः स्यात्, तदुपस्थाप्यार्थेष्वाकांक्षासत्त्योर्विद्यमानत्वात्। योग्यतायाः कारणत्वे तु न तथा, तदुपस्थाप्यार्थेषु योग्यताभावात्। एवमासत्तिर्यदि कारणं न स्यात्, दिनान्तरान्तरितादपि घटोऽस्तीत्यादिवाक्यघटकाच्छब्दकलापाद् वाक्यार्थबोधः स्यात्, तदर्थानां साकांक्षत्वाद् योग्यतावत्त्वाच्च। आसत्तेर्हेतुत्वे तु न तथा, तदर्थानामासत्तिरहितत्वात्। एवं तात्पर्यज्ञानं यदि कारणं न स्यात्, सैन्धवमानयेत्यादितः कदाचिदश्वादेः कदाचिल्लवणादेर्वा बोध-

**तत्र पदार्थानां परस्पर-जिज्ञासा-विषयत्व-योग्यत्वमाकांक्षा, क्रिया-श्रवणे कारकस्य कारक-श्रवणे क्रियायाः करण-श्रवणे इतिकर्तव्यतायाश्च जिज्ञासा-**

नियमो न स्यात्। तात्पर्यज्ञानस्य कारणत्वे तु यदाऽश्वे तात्पर्यज्ञानं, तदाऽश्वस्यैव बोधो न लवणस्य। यदा लवणे तात्पर्यज्ञानं, तदा लवणस्यैव बोधो नाश्वस्येति नियमोपपत्तिः स्यात्। न च नानार्थकपदघटित-वाक्याद् वाक्यार्थबोधे तात्पर्यज्ञानं कारणं स्यान्नान्यत्रेति वाच्यम्, नानार्थकपदाघटितेऽपि वाक्येऽयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्, हस्तेन दीर्घेण कुठारेण वृक्षं छिनत्तीत्यादौ पुत्र-पुरुषाभ्यां राज्ञो हस्तकुठाराभ्यां दीर्घस्य कदाचित्कान्वयान्यथाऽनुपपत्त्या तात्पर्यज्ञानहेतुताया अकामेनापि स्वीकरणीयत्वात्। तस्मादाकांक्षादीनां कारणत्वमभ्युपगन्तव्यमिति भावः। तत्राकांक्षां निरूपयति—**तत्रे**ति। आकांक्षादिषु मध्ये इत्यर्थः। **पदार्थानामि**ति। वाक्यार्थानामप्युपलक्षण-मेतत्। तेन—वायुर्वै क्षेपिष्ठा देवता, वायव्यं श्वेतमालभेत, समिधो यजति, दर्शपौर्ण-मासाभ्यां स्वर्गकामो यजेतेत्याद्यङ्ग-प्रधान-वाक्यार्थेष्वाकांक्षालक्षणस्य नाव्याप्तिः। अत एव ग्रन्थकृतां—यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकांक्षावशेनेत्याद्युत्तर ग्रन्थोऽप्युपपद्यत इति। न चात्राकांक्षायाः शब्दधर्मत्वोपपदेशात् पूर्वापरविरोध इति वाच्यम्, तत्रापि वाक्ययोरित्यत्र वाक्यार्थयोरिति विवक्षितत्वात्। **परस्परजिज्ञासे**ति। एकपदार्थज्ञानजन्यापरपदार्थज्ञानेच्छाविषयत्व-योग्यत्वमित्यर्थः। योग्यत्वमह-त्वम्। लक्ष्ये लक्षणं सङ्गमयन् तादृशयोग्यत्वस्याकांक्षात्वे हेतुं दर्शयति—**क्रियाश्रवण** इति। ददातीत्यादिक्रियावाचकपद-श्रवणे इत्यर्थः। तदर्थोपस्थिताविति शेषः। **कारकस्ये**ति। क इति देवदत्तादि-कर्तृकारकस्य किमिति धनादिकर्मकारकस्य केनेति हस्तादि-करणकारकस्य कस्मै इति ब्राह्मणादि-सम्प्रदानकारकस्य कुत्रेति गङ्गातीराद्यधिकरण-कारकस्य कस्मादिति मञ्जुषाद्यपादान-कारकस्येत्यर्थः। अस्य च जिज्ञासाविषयत्वादि-त्यग्रेतनेनान्वयः। क्रियाया जिज्ञासाविषयत्वं दर्शयति—**कारके**ति। **क्रियाया** इति। देवदत्त इति कर्तृवाचकपद-श्रवणे धनमित्यादि-कर्मवाचक-शब्द-श्रवणे वा तत्तदर्थोपस्थितौ दानादिक्रियाया जिज्ञासाविषयत्वं ददातीति। एवं क्रियाकारकयोः परस्परजिज्ञासाविषयत्वमिति भावः। **इति**कर्तव्यतायाः व्यापारस्य, उपकारककर्मण इति यावत्। कुठारेण छिनत्तीति श्रवणे कथमित्युपकारक-कर्मण्युद्यमन-निपातनादौ जिज्ञासाविषयत्वमुद्यम्य निपात्येति। **जिज्ञासा**विषयत्वादिति। यस्मादेतेषां जिज्ञासा-

**विषयत्वात्। अजिज्ञासोरपि वाक्यार्थ-बोधाद् योग्यत्वमुपात्तम्। तदव-च्छेदकं च क्रियात्व-कारकत्वादिकमिति नातिव्याप्तिर्गौरश्वः पुरुषो हस्ती-त्यादौ। अभेदान्वये च समान-विभक्तिक-पद-प्रतिपाद्यत्वं तदवच्छेदकमिति**

विषयत्वम्, तस्मात् तद्विषयत्वयोग्यतापि। अन्यथा तेषु जिज्ञासा-विषयत्वमेव न सिध्येदिति सिद्धं तेषां साकांक्षत्वमिति भावः। ननु परस्पर-जिज्ञासाविषयत्वमेव लक्षणमस्तु, लाघवात्, किं योग्यत्वपदनिवेशेनेत्याशङ्क्य तन्निवेश-सार्थक्यं दर्शयति— **अजिज्ञासोरपी**ति। तादृशजिज्ञासा-रहितस्यापीत्यर्थः। **वाक्यार्थ**बोधादिति। यदि जिज्ञासाविषयत्वमाकांक्षालक्षणं स्यात्, तर्हि यादृशस्य पुरुषस्य क्रियावाचकपद-श्रवणेऽपि कर्त्रादिकारक-विषयक-जिज्ञासा नोत्पन्ना, तादृशस्य जिज्ञासारहितस्यापि पुरुष-स्यानुभूयमानार्थेष्वाकांक्षालक्षणस्याव्याप्तिः स्यात्, क्रियादिवाचकपदश्रवणेऽपि तत्तदर्थेषु तस्य जिज्ञासाऽनुदयेन जिज्ञासाविषयत्वाभावात्। योग्यत्वनिवेशे तु नाव्याप्तिः, तत्पुरुषस्य क्रियाकर्त्राद्यर्थेषु जिज्ञासाविषयत्वाभावेऽपि तद्योग्यत्व-सत्त्वात्। अतस्तल्लक्षणवाक्ये योग्यत्वपर्यन्तानुधावनमिति भावः। ननु कुत्र जिज्ञासाविषयत्वयोग्यत्वं कुत्र वा नेति ज्ञानं दुर्घटं, तज्ज्ञानोपायाभावादित्याशङ्क्य तज्ज्ञानोपायं तदवच्छेदकं दर्शयति—**तद-वच्छेदकञ्चे**ति। परस्परजिज्ञासाविषयत्वयोग्यताया अवच्छेदकञ्चेत्यर्थः। **कारकत्वा-दिक**मिति। आदिपदेनेतिकर्त्तव्यतात्वादिपरिग्रहः। **इति**र्हेतौ। नन्वस्तु क्रियात्वादिकं तदवच्छेदकं, प्रकृते तु किमायातमित्याशंक्य योग्यतावच्छेदकनिर्णयफलं दर्शयति —**नातिव्याप्ति**रिति। अतिव्याप्तिस्थानं दर्शयति—**गौरश्व** इति। आदिपदेन निराकांक्ष-पदार्थव्यूह-परिग्रहः। तथा च यस्मात् क्रियात्वादिकं योग्यतावच्छेदकम्, तस्माद् गौरश्वः पुरुषो हस्तीत्यादिषु निराकांक्ष-पदार्थेषु नातिव्याप्तिरन्यथा योग्यता-वच्छेदकानिर्णये तत्रापि जिज्ञासाविषयत्वयोग्यत्व-सम्भवादाकांक्षालक्षणस्यातिव्याप्तिः स्यात्। तन्निर्णये तु क्रियात्वादेर्योग्यतावच्छेदकस्य तत्राभावादवच्छेद्यस्य योग्यत्वस्याप्य-भावेन नातिव्याप्तिरिति भावः। नन्वेवमपि नीलो घटस्तत्त्वमसीत्यादौ नीलघटादिष्व-र्थेषु योग्यतावच्छेदकानां क्रियात्वादीनामभावेन जिज्ञासाविषयत्व-योग्यत्वस्याप्यभावः स्यात्। तथा च तेषु तेष्वर्थेष्वाकांक्षालक्षणाभावादव्याप्तिरित्यत आह—**अभेदान्वये चे**ति। **समान**विभक्तिकेति। समाना प्रथमात्वादिनैकजातीया विभक्तिर्येषां पदानां तानि समानविभक्तिक-पदानि, तत्प्रतिपाद्यत्वमित्यर्थः। **तदवच्छेदकम्** परस्पर-

**तत्त्वमस्यादिवाक्येषु नाव्याप्तिः। एतादृशाकांक्षाभिप्रायेणैव बलाबलाधिकरणे "सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिन"मित्यत्र वैश्वदेव-यागस्यामिक्षान्वितत्वेन**

जिज्ञासाविषयत्व-योग्यतावच्छेदकम्। **इति**र्हेतौ। यस्मात् समानविभक्तिक-पदप्रतिपाद्यत्वं योग्यतावच्छेदकम्, तस्मान्नाव्याप्तिरिति भावः। कुत्र नाव्याप्तिरित्यत्राह—**तत्त्वमसी**त्यादीति। आदिपदेनाभेदान्वयानुभावकवाक्यपरिग्रहः। **वाक्येषु** वाक्यार्थेषु। **नाव्याप्ति**रिति। तथा च क्रियात्वादिवत् समानविभक्तिक-पदप्रतिपाद्यत्वस्यापि योग्यतावच्छेदकत्वान्नीलो घट इत्यादिवाक्यस्यार्थेषु तस्य विद्यमानतया जिज्ञासाविषयत्व-योग्यतासत्त्वान्नाकांक्षालक्षणस्याव्याप्तिरिति भावः। न च योग्यतावच्छेदकानां बहुत्वेऽननुगमाद् गौरवमिति वाच्यम्, फलमुख-गौरवस्यादोषत्वात्। नैयायिकाभिमतमाकांक्षालक्षणं परित्यज्य लक्षणान्तरोपादानप्रयोजनं वैदिकव्यवहाराविरोधं मीमांसकोक्त्या समर्थयति—**एतादृशे**ति। **एवे**ति। एवकारेण स्वाव्यवहितपूर्ववर्त्तित्व-स्वाव्यवहितोत्तरत्वान्यतरसम्बन्धेन तत्पदविशिष्ट-तत्पदत्वरूपानुपूर्वीविशेषात्मिकायामन्वयबोधाभावरूपायां वाकांक्षायामस्वारस्यं दर्शितम्, वैश्वदेवयागस्यामिक्षान्वितत्वेन न वाजिनाकांक्षेत्याकांक्षायाः पदार्थधर्मत्वोपदेशात्। अत एव वेदान्तिभिः पदार्थधर्मरूपाया आकांक्षाया ग्रहणं कृतं न शब्दधर्मरूपायाः, व्यवहारे भाट्टनय इत्यङ्गीकारादिति भावः। कुत्राकांक्षायाः पदार्थधर्मत्वं मीमांसकैरङ्गीकृतम्, तत्राह—**बलाबले**ति। अत्र बलाबलाधिकरणपदं मीमांसादर्शनद्वितीयाध्यायोक्त-देवताभेदकृत-कर्मभेदाधिकरणपरम्, तत्रैव भाष्यकृता तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनमिति वाक्यं विषयीकृत्य श्रुतिवाक्ययोर्विरोधं प्रदर्श्य तयोर्बलाबलभावस्य दर्शितत्वात्। अत एव मूलकृतां देवताभेदकृत-कर्मभेदाधिकरणस्य बलाबलाधिकरणत्वेन व्यवहार इति भावः। **अधिकरणं** नाम विषय-सन्देह-पूर्वपक्षोत्तरपक्ष-निर्णयात्मक-वाक्यपञ्चकसमुदायः। तथा चोक्तं—विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतमिति। आकांक्षायाः पदार्थधर्मत्वं दर्शयितुमधिकरणावयवं विषयवाक्यं संक्षेपतो दर्शयति—**से**ति। चातुर्मास्येषु वैश्वदेवे आम्नायते—तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनमिति। आनयति आनयेत्, प्रक्षिपेदिति यावत्। सेत्यनेन तप्ते पयसि दध्यानयतीति पूर्ववाक्यस्थं दधियुक्तं तप्तं पयः परामृश्यते। विधेयप्राधान्यात् स्त्रीत्वम्। **वैश्वदेवी** विश्वदेव-देवताका। अनेन हि पदेन विश्वदेव-देवता-

सम्बन्धिन्यामिक्षा प्रतीयते, साऽस्य देवतेत्यण्-प्रत्ययात्, अणप्रत्ययस्यास्येति सर्वनामार्थे स्मरणात्, सर्वनाम्नां चोपस्थितविशेषवाचित्वात्, उपस्थितविशेषस्यात्रामिक्षारूपत्वात्। न चैवं वैश्वदेवीपदेनैव विश्वदेव-देवतासम्बन्धितयाऽऽमिक्षाबोधने आमिक्षापदवैयर्थ्यमिति वाच्यम्, विशेष समर्पकतया तस्य सार्थक्यात्। तथा चोक्तं तन्त्रवार्त्तिके—आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः। आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणमितीति भावः। **आमिक्षे**ति। तप्ते पयसि दधिप्रक्षेपेण यो घनीभूतो भागः सम्पद्यते, स आमिक्षा, छाना इति वङ्गभाषा, पय एव घनीभूतमामिक्षेत्यभिधीयत इति वचनात्। तदवशिष्टं जलं **वाजिनम्**। तथा चामिक्षा विश्वदेवेभ्यो देया। वाजिनन्तु वाजिभ्यो देयमिति वाक्यार्थः सम्पद्यते। तत्र सन्देहः—किं वाजिनस्य वैश्वदेवयागाङ्गत्वम्, किंवा वाजिदेवताक-यागाङ्गत्वम्? किं तावद् युक्तम्? वैश्वदेवयागाङ्गत्वमिति। कुत? वाजिभ्य इत्यनेन पूर्ववाक्यावगतान् विश्वदेवाननूद्य तत्र वाजिनगुणविधानात्। तेनोभयं वैश्वदेव-मामिक्षा च वाजिनञ्च। ननु वाजिपदेन कथं विश्वदेवदेवतानुवादः? वाजमन्नमामिक्षा-रूपं द्रव्यमेषामस्तीति व्युत्पत्त्या वाजिशब्दस्य विश्वदेव-देवतार्थकत्वात्। एवं पूर्वपक्षे प्राप्ते राद्धान्तः—वाजिनस्य वाजिदेवताक-यागाङ्गत्वं न वैश्वदेव-यागाङ्गत्वमिति। कुतः? आमिक्षान्वयेन वैश्वदेवयागस्य द्रव्यान्तराकांक्षा-रहितत्वात्। तथा हि—अस्ति वैश्वदेवयागस्य द्रव्याकांक्षा, यागस्य द्रव्यदेवतासाध्यत्वात् केन द्रव्येण वैश्वदेवं भावये-दिति। एवं द्रव्यस्याप्युपकार्याकांक्षा—द्रव्येण किं भावयेदिति। तेनोभयं साकांक्षं यागश्च द्रव्यञ्च। तत्र शीघ्रप्रतिपत्तिकया प्रबलया वैश्वदेवीति तद्धितश्रुत्याऽऽमिक्षा-द्रव्यस्य वैश्वदेवयागाङ्गत्वे बोधिते पुनर्विलम्बप्रतिपत्तिकेन दुर्बलेन वाक्येन वाजिभ्यो वाजिनमित्यनेन वाजिनद्रव्यस्य वैश्वदेवयागाङ्गत्व-बोधनासम्भवात्, आमिक्षान्वयेन वैश्वदेवयागस्य द्रव्यान्तराकांक्षारहितत्वात्, गुणान्तरावरुद्धे गुणान्तरान्वयायोगाच्च। तथा चोक्तं तन्त्रवार्त्तिके—श्रुत्यामिक्षैव शेषो हि नैषां वाक्येन वाजिनम्। तद् दुर्बल-प्रमाणत्वात् तया श्रुत्या निराकृतम्॥ इति। गुणान्तरावरुद्धत्वान्नावकाश्यो गुणोऽपर इति च। न च दध्ना जुहोति, पयसा जुहोतीत्यादिवत् खलेकपोतन्यायेन द्वयो-र्द्रव्ययोरामिक्षावाजिनयोर्युगपदेव वैश्वदेवसम्बन्धः स्यादिति वाच्यम्, श्रौताङ्गत्व-निर्णयस्य प्राथम्यात्, वाजिभ्य इत्यनेनाऽप्रकृतदेवतायाः सम्प्रदानत्वाभिधानवैयर्थ्य-प्रसङ्गाच्च। तस्माद् वाजिभ्यो वाजिनमित्यनेन वाजिनस्य न वैश्वदेवयागाङ्गत्वं

**न वाजिनाकांक्षेत्यादि-व्यवहारः। ननु तत्रापि वाजिनस्य जिज्ञासाऽविषयत्वेऽपि तद्योग्यत्वमस्त्येव, प्रदेय-द्रव्यत्वस्य यागनिरूपित-जिज्ञासा-विषयता-योग्यतावच्छेदकत्वादिति चेन्न, स्व-समानजातीय-पदार्थान्वय-बोधविरह-सहकृतप्रदेय-द्रव्यत्वस्य तदवच्छेदकत्वेन वाजिनद्रव्यत्वस्य स्वसमानजातीया-**

बोध्यते, किन्तु वाजिदेवताक-यागाङ्गत्वम्, अप्रकृतदेवतासम्बन्धात्। एतदेवाह—**वैश्वदेव**यागस्यामिक्षान्वितत्वेनेति। वैश्वदेवयागस्यामिक्षारूप-द्रव्यान्वयवत्त्वेनेत्यर्थः। कल्पितविनियोजकेन विलम्बप्रतिपत्तिकेन दुर्बलेन वाक्येनामिक्षाद्रव्यस्य वैश्वदेवाङ्गत्व-बोधनात् प्रागेव शीघ्रप्रतिपत्तिकया श्रुत्या तस्य तदङ्गत्वबोधनादिति भावः। **न वाजिना**कांक्षेति। नाङ्गाकांक्षेत्यर्थः। अङ्गाकांक्षाया आमिक्षान्वयेन शान्तत्वादिति भावः। **इत्यादि**व्यवहार इति। वैश्वदेवयागस्य न वाजिनाकांक्षेति यो व्यवहारः, स परस्परजिज्ञासाविषयत्वयोग्यत्वरूपाकांक्षापक्षे एवोपपद्यते नान्यथेति परस्परजिज्ञासा-विषयत्व-योग्यत्वरूपाया एवाकांक्षाया ग्रहणं ग्रन्थकृता कृतमिति भावः। ननु वाजिन-द्रव्ये जिज्ञासाविषयत्वाभावेऽपि तद्विषयत्वयोग्यतावच्छेदकसत्त्वेन तद्विषयत्वयोग्यता-सत्त्वादाकांक्षावत्त्वमेव न नैराकांक्ष्यम्। तत् कथमुच्यते आकांक्षाभावाद् वाजिनस्य न वैश्वदेवयागान्वय इति चोदयति—**नन्वि**ति। **तत्रापि** वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्रापि। **जिज्ञासाऽविषयत्वे**ऽपि जिज्ञासाविषयत्वाभावेऽपि। **तद्-योग्यत्वम्** परस्परजिज्ञासाविषयत्वयोग्यत्वम्। तत्सत्त्वे हेतुमाह—**प्रदेय**द्रव्यत्वस्येति। **यागनिरूपित**जिज्ञासा केन द्रव्येण यागः कार्य इति जिज्ञासा। **अवच्छेदक**त्वादिति। तथा च प्रदेयद्रव्यत्वस्य जिज्ञासाविषयत्व-योग्यतावच्छेदकस्य वाजिने सत्त्वाद् जिज्ञासा-विषयत्व-योग्यतासत्त्वेनाकांक्षावत्त्वमेव न नैराकांक्ष्यमिति पूर्वपक्षाशयः। न हि प्रदेयद्रव्यत्वं तदवच्छेदकं किन्तु स्वसमानजातीय-पदार्थान्वयबोधविरह-सहकृत-प्रदेयद्रव्य-त्वम्। तच्चामिक्षायामेव न वाजिन इति तस्य नाकांक्षावत्त्वमिति परिहरति—**ने**ति। **स्वसमान**जातीयेति। स्वपदं यस्मिन् जिज्ञासाविषयत्वयोग्यत्वमभिमतं, तत्परम्। तस्य समानजातीयः प्रदेयद्रव्यत्वेन समभिव्याहृतत्वेन वा सदृशो यः पदार्थस्तस्य योऽन्वयबोध-विरहोऽन्वयबोधाभावस्तेन सहकृतं विशिष्टं यत् प्रदेयद्रव्यत्वं तस्यैवेत्यर्थः। एवकारेणा-विशिष्टप्रदेयद्रव्यत्वस्य योग्यतावच्छेदकत्वनिरासः। **तदवच्छेदकत्वेन** जिज्ञासाविषयत्व-योग्यताया अवच्छेदकत्वेन। नन्वेवमपि वाजिनद्रव्ये निरुक्तयोग्यतावच्छेदकत्वाभावः कुत

**मिक्षाद्रव्यान्वयबोध-सहकृतत्वेन तादृशावच्छेदकत्वाभावात्। आमिक्षायां तु नैवम्, वाजिनान्वयस्य तदानुपस्थितत्वात्। उदाहरणान्तरेष्वपि दुर्बलत्व-प्रयोजक आकांक्षा-विरह एवमेव द्रष्टव्यः।**

इत्याशङ्कायामाह—**वाजिन**द्रव्यत्वस्येति। **स्वसमान**जातीयेति। स्वं वाजिनं, तस्य समानजातीयं प्रदेय-द्रव्यत्वेन सदृशं यदामिक्षाद्रव्यं, तस्य यो वैश्वदेवयागेऽन्वयबोधस्तेन सहकृतत्वेन विशिष्टत्वेनेत्यर्थः। एतेन वाजिननिष्ठ-प्रदेयद्रव्यत्वे विशेषणाभावो दर्शितः। **तादृशाव**च्छेदकत्वाभावात् परस्परजिज्ञासाविषयत्वयोग्यतावच्छेदकत्वाभावात्। तथा च यस्माद् वाजिनद्रव्यनिष्ठं प्रदेयद्रव्यत्वं स्वसमानजातीय-पदार्थान्वयबोध-सहकृतं, तस्मात् तत्र स्वसमानजातीय-पदार्थान्वयबोधविरह-सहकृतम्। तेन तत्र तादृशान्वयबोधविरह-सहकृत-प्रदेयद्रव्यत्वाभावे सिद्धे सिद्धो जिज्ञासाविषयत्वयोग्यतावच्छेदकत्वाभावः, तादृशप्रदेय-द्रव्यत्वस्यैव योग्यतावच्छेदकत्वात्, तस्य चाभावादिति भावः। नन्वेवमप्यामिक्षायां स्वसमानजातीय-पदार्थान्वयबोधविरहसहकृत-प्रदेयद्रव्यत्वं न स्यात्, तस्यापि स्व-समानजातीय-पदार्थान्वयबोधसहकृतत्वसम्भवादित्याशङ्कायामाह—**आमिक्षायान्तिव**ति। **नैवम्** न स्वसमानजातीय-पदार्थान्वयबोधसहकृत-प्रदेयद्रव्यत्वम्। अस्तीति शेषः। यदि तत्र स्वसमानजातीय-पदार्थान्वयबोधसहकृत-प्रदेयद्रव्यत्वं स्यात्, तदा तत्र स्वसमान-जातीय-पदार्थान्वयबोधविरहसहकृत-प्रदेयद्रव्यत्वं न स्यात्, तादृशयोग्यतावच्छेदकस्य तादृशप्रदेयद्रव्यत्वस्याभावेन तादृश-योग्यत्वरूपाऽऽकांक्षाऽपि न स्यात्। न च तथेति भावः। कस्मान्न तथेत्यत्राह—**वाजिनान्वयस्ये**ति। **तदा** आमिक्षान्वयबोधकाले। **अनुपस्थितत्वादि**ति। तथा च विलम्बप्रतिपत्तिकेन दुर्बलेन वाक्येन वैश्वदेवयागे वाजि-नान्वयात् प्रागेव शीघ्रप्रवृत्तिकया बलवत्या श्रुत्या प्रथममामिक्षान्वयात् तत्र स्वसमान-जातीय-पदार्थान्वयबोधविरह-सहकृत-प्रदेयद्रव्यत्वस्य निरुक्तयोग्यतावच्छेदकस्य तदा सत्त्वादामिक्षाया आकांक्षावत्त्वं सिद्धमिति भावः। यथात्र श्रुतिवाक्ययोर्बलाबलभावे आकांक्षाविरह एव दौर्बल्यप्रयोजकस्तथान्यत्रापि स एव बलाबलभाव-प्रयोजक इत्यति-दिशति—**उदाहरणा**न्तरेष्वपीति। श्रुतिलिङ्गविरोधाद्युदाहरणेष्वपीत्यर्थः। इदं हि श्रूयते—ऐन्द्रया गार्हपत्यमुपतिष्ठत इति। **ऐन्द्रया** इन्द्रस्तुतिप्रकाशिकया कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे इत्याद्यृचा। **गार्हपत्यं** गार्हपत्यनामानमग्निम्। **उप-तिष्ठते** प्रीणयति। तत्र गार्हपत्योपस्थानस्यास्त्युपकारकाकांक्षा कथमिष्टं भावयेदिति।

**योग्यता च तात्पर्य-विषयीभूत-संसर्गाबाधः। वह्निना सिञ्चेदित्यादौ**

एवमैन्द्रया अप्यस्त्युपकार्याकांक्षा किं भावयेदिति। तत्रैन्द्रेयति तृतीयाश्रुतिरैन्द्रमन्त्रस्य गार्हपत्योपस्थानाङ्गत्वं बोधयति, अर्थप्रकाशन-सामर्थ्यरूपन्तु लिङ्गमिन्द्रोपस्थानाङ्गत्वम्। तदयं श्रुतिलिङ्गयोर्विरोधः। तत्र शीघ्रप्रवृत्तिकया तृतीया-श्रुत्यैन्द्रमन्त्रस्य गार्हपत्योपस्थानाङ्गत्वे प्रथमं बोधिते गार्हपत्योपस्थानस्योपकारकाकांक्षा निवर्त्तते, उपकारकभावेनैवैन्द्रयमन्त्रस्य तत्रान्वयात्। एवमैन्द्रयमन्त्रस्याप्युपकार्यलाभादुपकार्याकांक्षा निवर्त्तते। तेन कल्पितविनियोजकेन विलम्बप्रतिपत्तिकेन लिङ्गेनास्य मन्त्रस्येन्द्रोपस्थानाङ्गत्वं बोधयितुं न शक्यते, श्रुत्या गार्हपत्योपस्थाने विनियुक्तस्यैन्द्रयमन्त्रस्य पुनर्विनियोजकाकांक्षानुदयात्। तस्मात् श्रुत्यपेक्षया लिङ्गस्य दुर्बलत्वे आकांक्षाया अभाव एव प्रयोजक इति भावः। **एवमेव** प्रागुक्तश्रुतिवाक्यविरोधवदेव। **द्रष्टव्य** इति। तथा च यद्याकांक्षा परस्पर-जिज्ञासाविषयत्वयोग्यतारूपा न स्यात्, तदा नैराकांक्ष्याल्लिङ्गस्याप्रामाण्यमित्यादि-व्यवहारो नोपपन्नः स्यात्। तस्मात् परस्परजिज्ञासाविषयत्वयोग्यत्वमेवाकांक्षेति मूलकृतां सिद्धान्तः।

वस्तुतस्त्वाकांक्षायाः शब्दधर्मत्वे वाऽन्यादृश-लक्षणलक्षितत्वे वा न कोऽपि विरोधः, मीमांसकैराकांक्षायाः शब्दधर्मत्वस्याप्यभ्युपगमात्। तथा चाह सूत्रकारः—"अर्थैकत्वादेकं वाक्यं साकांक्षं चेद् विभागे स्यादि"ति। शवरस्वामिपादा अप्याहुः—"पदानां साकांक्षत्वाद् विधेः स्तुतेश्चैकवाक्यत्वं भवती"ति "स्तुतिपदानि ह्यनर्थकान्यभविष्यन् साकांक्षाणी"-ति च। अत एवाचार्याः सत्यादिवाक्यानामखण्डार्थत्वोपपत्तावाहुः—"निराकांक्षयोरपि यत्किञ्चिदन्वयानुभावकतया तात्पर्यविषयान्वयाननुभावकत्वमेवाकांक्षा वाच्या। तथा चान्वयांशो व्यर्थः। येन विना यस्य तात्पर्यविषयाननुभावकत्वमित्येतावन्मात्रस्यैव सामञ्जस्यादि"ति। अत एव मूलकृतां यत्र प्रत्येकं भिन्नभिन्नसंसर्ग-प्रतिपादकयोर्वाक्ययोराकांक्षावशेनेत्युत्तरग्रन्थोऽप्युपपद्यत एवेति। यस्तु वैश्वदेवयागस्य न वाजिनाकांक्षेत्यादि-व्यवहारः, स वाजिनस्य वैश्वदेवयागाङ्गत्वबोधिका का श्रुतिरित्यादि-श्रुतिकल्पनानुकूल-जिज्ञासालक्षणाकांक्षाभावमूलको न तु शाब्दज्ञानानुकूलाकांक्षाभावमूलकस्तेन न बलाबलाधिकरणविरोधः। तस्मात् परस्परजिज्ञासाविषयत्वयोग्यत्वं वा येन विना यस्य तात्पर्यविषयाननुभावकत्वं वाऽऽकांक्षालक्षणमस्तु। नास्माकं तु तत्रादरस्तेषां प्रक्रियामात्रत्वात्।

क्रमप्राप्तां योग्यतां निरूपयति—**योग्यता** चेति। **तात्पर्य**विषयीभूतेति। तात्-

**तादृश-संसर्ग-बाधान्न योग्यता। "स प्रजापतिरात्मनो वपामुदखिददित्यादावपि तात्पर्य-विषयीभूत-तूपर-पशु-प्राशस्त्याबाधाद् योग्यता। तत्त्वमस्यादि-**
पर्यविषयीभूतो वक्तुरिच्छाविषयीभूतो यः संसर्गः एकपदार्थेऽपरपदार्थान्वयस्तस्याबाधो बाधाभाव इत्यर्थः।

वस्तुतस्त्वत्रापि संसर्गपदं न लक्षणघटकम्, तात्पर्यविषयाबाधस्यैव लक्षणत्वात्। तदुक्तमद्वैतसिद्धौ—योग्यतापि तात्पर्यविषयाबाध एवेति। अन्यथाऽखण्डार्थपरे वाक्ये लक्षणमव्यापकं स्यात्।

योग्यताङ्गीकारस्य प्रयोजनमाह—**वह्निने**ति। यदि योग्यता कारणं न स्यात्, वह्निना सिञ्चेदित्यादितोऽपि शाब्दबोधः स्यात्। न च तथा। तस्माच्छाब्दबोधाभावान्यथानुपपत्त्या योग्यतायाः कारणत्वं कल्पनीयमिति भावः। तत्रापि तात्पर्यविषयीभूतसंसर्गस्य योग्यतात्वे यदाऽनभिज्ञस्य वक्तुः सेचनक्रियायां वह्नेः करणत्वसंसर्गस्तात्पर्यविषयीभूतो भवति, तदा वह्निना सिञ्चेदिति वाक्ये योग्यतालक्षणस्यातिव्याप्तिस्तद्वारणार्थमुक्तं—**संसर्गाबाध** इति। तथा च नातिव्याप्तिस्तथाविधसंसर्गस्य बाधादिति भावः। **इत्यादा**वित्यादिपदेन वारिणा दहेदित्यादि-वाक्यपरिग्रहः। **तादृश**संसर्गेति। तात्पर्यविषयीभूत-संसर्गेत्यर्थः। अस्तु तर्हि संसर्गाबाधो योग्यता, किं तात्पर्यविषयीभूतेति विशेषणेन ? तत्राह—**स प्रजा**पतिरिति। **वपां** मेदोभागम्। **उदखिदत्** अग्नौ प्राक्षिपत्। यः प्रजाकामः पशुकामो वा स्यात्, स एतं प्राजापत्यं तूपरमालभेतेति विधेरयमर्थवादः। स च स्वार्थेऽप्रमाणमपि प्राशस्त्ये प्रमाणम्। परन्तु संसर्गाबाधो यदि योग्यता स्यात्, तदाऽयमबोधकतयाऽप्रमाणं स्यात्, संसर्गाबाधरूपाया योग्यताया अभावात्, उत्खेदने प्रतीयमानस्यात्मवपायाः कर्मत्वसंसर्गस्य बाधात्, स्वेन स्ववपोत्खेदनासम्भवात्। अतस्तात्पर्यविषयीभूतान्तं संसर्गविशेषणम्। **इत्यादा**विति। आदिपदेन धूम एवाग्नेर्दिवा ददृशे नार्चिरित्याद्यर्थवादवाक्य-परिग्रहः। नन्वेतादृशविशेषणदानेऽपि कथमुदाहृतेष्वर्थवादवाक्येषु योग्यता, तात्पर्यविषयीभूतस्यात्मवपायाः कर्मत्वसंसर्गस्योत्खेदने बाधादित्यत आह—**तात्पर्य**विषयीभूतेति। न ह्यात्मवपायाः कर्मत्वसंसर्गस्तात्पर्यविषयीभूतः, अपि तु तूपरपश्वालम्भनप्राशस्त्यसंसर्गः। तथा च प्रतीयमानसंसर्गस्य बाधेऽपि तात्पर्यविषयीभूतस्य तूपरपश्वालम्भन-प्राशस्त्य-संसर्गस्याबाधाद् योग्यता। योग्यतावत्त्वाच्च बोधकतया प्रामाण्यमिति भावः। नन्वेवमपि तत्त्वमसीत्यादिष्वखण्डार्थपरेषु वाक्येषु

**वाक्येष्वपि वाच्याभेद-बाधेऽपि लक्ष्यस्वरूपाभेदे बाधाभावाद् योग्यता।**

**आसत्तिश्चाव्यवधानेन पदजन्य-पदार्थोपस्थितिः। मानान्तरोपस्थापित-**

योग्यतालक्षणस्याव्याप्तिः, तत्रापि तात्पर्यविषयीभूताभेदसंसर्गस्य बाधात्, तत्पद-वाच्येन सर्वज्ञत्वादिविशिष्टचैतन्येन त्वंपदवाच्यस्यासर्वज्ञत्वादिविशिष्टचैतन्यस्याभेदा-योगात्, द्वयोर्विरुद्धत्वादित्यत्राह—**तत्त्वमस्यादि**वाक्येष्वपीति। आदिपदेनाहं ब्रह्मा-स्मीत्यादि-महावाक्य-परिग्रहः। **वाच्याभेद**बाधेऽपि तत्त्वंपदवाच्ययोरभेदस्य बाधेऽपि, द्वयोर्विरुद्धत्वादिति भावः। **लक्ष्यस्वरूपाभेदे** लक्ष्यो यः स्वरूपाभेदः स्वरूपैक्यं तत्र। इदन्तु प्राचीनमतेनोक्तम्। स्वमते तत्त्वमसीत्यादौ लक्षणाभावस्य वक्ष्यमाणत्वादिति भावः। **योग्यते**ति। तथा च न तात्पर्यविषयीभूत-संसर्गाबाधो योग्यता, किन्तु तात्पर्यविषया-बाधः। तत्र च तात्पर्यविषयस्य स्वरूपैक्यस्याबाधादस्त्येव योग्यता। यत् तु तात्पर्य-विषयीभूत-संसर्गाबाधो योग्यतेति पूर्वमुक्तम्, तल्लौकिकसंसर्गपरवाक्याभिप्रायेणेति बोध्यम्।

क्रमप्राप्तामासत्तिं निरूपयति—**आसत्तिश्चे**ति। ननु भिन्नकालोच्चरितादपि पद-कलापाद् गामानयेत्यादिकादन्वयाननुकूल-पदव्यवहितादपि पदकदम्बकाद् गिरिर्भुक्त-मग्निमान् देवदत्तेनेत्यादिकाच्छाब्दबोधः स्यात्, तत्र तत्र पदजन्य-पदार्थोपस्थितिरूपाया आसत्तेः सत्त्वादित्यत आह—**अव्यवधानेने**ति। व्यवधानशून्येनेत्यर्थः। तथा च न पदजन्य-पदार्थोपस्थितिमात्रमासत्तिर्येनोक्तस्थलेष्वासत्तियोगः स्यात्, अपि त्वव्यवधानेन पदजन्यपदार्थोपस्थितिः। तेनोक्तस्थलेषु नासत्तिर्व्यवधानेनैव तत्तदर्थानामुपस्थितत्वात्, न वा शाब्दबोधः, आसत्त्यभावादिति भावः। न च यत्र श्लोकादावन्वययोग्यपदान्य-न्वयायोग्य-पदान्तरेण व्यवहितानि, तत्रासत्तिर्न स्यात्, अव्यवधानाभावादिति वाच्यम्, तत्रान्वयादव्यवधान-सम्भवात्। **पदजन्ये**ति। पदजन्या या पदार्थोपस्थितिरिति विग्रहः। तत्रो**पस्थितिः** स्मृतिरिति नैयायिकाः। स्मृत्यनुभवातिरिक्तमभिधानापरपर्यायं ज्ञानमिति भाट्टाः। तथा चोक्तमद्वैतसिद्धावखण्डार्थत्वोपपत्तौ—स्मृत्यनुभवातिरिक्तञ्च ज्ञानं प्रमाणबलादायातमङ्गीकार्यमेवेति। तत्र पदजन्योपस्थितिरासत्तिरित्युक्ते पदजन्य-संस्कारोपस्थितेरप्यासत्तित्वं स्यात्, तस्या अप्यव्यवधानेन पदजन्योपस्थितत्वादत आह—**पदार्थोप**स्थितिरिति। तथा च नातिव्याप्तिः, पदश्रवणेन संस्कारोपस्थितावपि तदुप-स्थितेः पदार्थोपस्थितित्वाभावात्, तस्यापदार्थत्वात्, वृत्त्या पदप्रतिपाद्यस्यैव पदार्थत्वात, संस्कारस्य संस्काररूप-पदवृत्त्या प्रतिपाद्यत्वेऽपि यत्किञ्चित्-पदवृत्त्याऽप्रतिपाद्यत्वादिति

**पदार्थस्यान्वय-बोधाभावात् पदजन्येति। अत एवाश्रुत-पदार्थ-स्थले तत्तत्पदाध्याहारो द्वारमित्यादौ पिधेहीति। अत एवेषे त्वेत्यादौ छिनद्मीत्यादि-**

भावः। पदजन्येति विशेषणस्य सार्थक्यं दर्शयितुमाह—**मानान्तरे**ति। मानान्तरेण शब्दप्रमाणातिरिक्त-प्रमाणेनोपस्थितस्य पदार्थस्येत्यर्थः। **अन्वय**बोधाभावात् शाब्दबोधाभावात्। **पदजन्येती**ति। यद्यव्यवधानेन पदार्थोपस्थितिरासत्तिः स्यात्, घटोऽस्तीति वाक्यश्रवणदशायां प्रत्यक्षोपस्थापितस्य पटस्य शाब्दबोधे भानं स्यात् अस्तितावान् घटः पटश्चेति। न च शब्दानुपस्थाप्यस्य शाब्दबोध-विषयता, तस्मात् पदजन्यपदार्थोपस्थितेः शाब्दबोध-कारणत्वं वक्तव्यम्। तथा च पटस्य न शाब्दबोधविषयता, तस्य प्रत्यक्षोपस्थाप्यत्वेऽपि शब्दानुपस्थाप्यत्वात्, तदा तद्वाचकशब्दानुच्चारणादिति भावः।

एतेन—पश्यतः श्वेतिमारूपं ह्रेषाशब्दञ्च शृण्वतः। खुरनिक्षेपशब्दञ्च श्वेतोऽश्वो धावतीति धीरित्युदाहरतां पदानुपस्थाप्यानामपि पदार्थानामन्वयबोधमभ्युपगच्छतां भाट्टानां मतं प्रत्युक्तं वेदितव्यम्, पदानुपस्थाप्यानामप्याकाशादीनां शाब्दबोधविषयत्वापातात्।

पदजन्यत्वविशेषणस्य कृत्यान्तरमाह—**अत एवे**ति। मानान्तरोपस्थापित-पदार्थस्य शाब्दबोधाभावादेवेत्यर्थः। **अश्रुत**पदार्थस्थले इति। यत्रैकः पदार्थः शब्दादुपस्थाप्यते, पदार्थान्तरञ्चान्वययोग्यं नोपस्थाप्यते, तादृशस्थले इत्यर्थः। **तत्तत्**पदाध्याहारः अन्वययोग्य-तत्तत्पदार्थोपस्थापक-पदस्याध्याहारः। सङ्गच्छत इति शेषः। तथा च मानान्तरेण पदार्थोपस्थितेरासत्तित्वे तत्तत्स्थले तत्तत्पदाध्याहारो न स्यात्। भवति च तत्तत्पदाध्याहारस्तस्मात् पदजन्यपदार्थोपस्थितेरासत्तित्वं स्वीकरणीयमिति भावः। ननु द्वारमित्यादौ पिधेहीति पदाध्याहारे किं प्रमाणम्? प्रयोज्य-वृद्ध-प्रवृत्तिरिति वदामः। अन्यथा तस्य द्वारमित्यतो द्वारकर्मक-पिधानबोधानुदयात् पिधाने प्रवृत्तिर्न स्यात्। न चानुमानात् पिधानावगमः, व्याप्तिबोधादेरनुदयात्, पिधानावगमेऽपि वा द्वारकर्मत्वस्य तत्रान्वयायोगात्, शाब्दस्य शाब्देनैवान्वयनियमात्। तथा चोक्तं न्यायप्रकाशे—न हि शाब्दमशाब्देनान्वेतीति। तथा पुष्पेभ्य इत्यादौ स्पृहयतीत्यादिपदाध्याहारं विना चतुर्थी न स्यात्, स्पृहार्थक-धातुयोगे एव चतुर्थ्या विधानात्। तस्मात् पिधानाद्युपस्थापक-तत्तत्पदाध्याहार आवश्यक इति भावः। न केवलं लौकिके एवावश्यकः, वैदिकेऽपि वाक्ये तत्तत्पदाध्याहार आवश्यक इत्याह—**अत एवे**ति। पदाध्याहारं विनाऽन्वयबोधोपपत्त्यभावादेवेत्यर्थः। कस्मिन् वैदिके प्रयोगे पदाध्याहारः? पदाध्याहारं विना कथं

**पदाध्याहारः । अत एव विकृतिषु सूर्याय त्वा जुष्टं निर्वपामीति पद-प्रयोगः ।**

**पदार्थश्च द्विविधः—शक्यो लक्ष्यश्चेति । तत्र शक्तिर्नाम पदानामर्थेषु**

वा नान्वयबोध इत्यत्राह--**इषे** त्वेत्यादाविति । यजुःसंहितोक्तोऽयं मन्त्रः । आदिपदेनोर्जे त्वेत्यादि-मन्त्रपरिग्रहः । सर्वेषां किल मन्त्राणां प्रायशः प्रयोगविनियुक्तत्वेनैवार्थवत्त्वम् , मन्त्रैरेव मन्त्रार्थः स्मर्त्तव्य इति नियमात् । न चैषां स्वतः प्रयोगविनियोगः, विनियोजक-पदाभावात् । अविनियुक्तानाञ्च ध्रुवमानर्थक्यम् । तन्मा भूदिति शतपथब्राह्मणोक्तं विनियोजकमनूद्य दर्शयति—**छिनद्मीत्या**दीति । आदिपदेनानुमार्ज्मीत्यादिपद-परिग्रहः । यदि छिनद्मीत्यादि-पदानामध्याहारो न स्यात् , तदैषामिषे त्वेत्यादीनां मन्त्राणां प्रयोग-विनियोगो न स्यात् । तस्मादेषां विनियोगायाऽर्थवत्त्वाय च विनियोजकपदमध्या-हर्त्तव्यमिति भावः । अन्यत्रापि वेदवाक्ये पदाध्याहारं दर्शयति—**अत एवे**ति । पदा-ध्याहारस्यावश्यकत्वादेवेत्यर्थः । **विकृतिष्वि**ति । विकृतिपठनीयेषु मन्त्रेष्वित्यर्थः । यत्रातिदेशादङ्गानि गृह्यन्ते, सा विकृतिः । **सूर्याय त्वे**ति । प्रकृतावयं मन्त्रः श्रूयते—अग्नये त्वा जुष्टं निर्वपामीति । हे पुरोडाश ! अग्नये त्वा त्वां जुष्टं प्रीतिपूर्वकं यथा स्यात् तथा निर्वपामि सम्पादयामीत्ययं मन्त्रार्थः । स चायं मन्त्रः प्रकृतिवद् विकृतिः कर्त्तव्येत्यतिदेशेन विकृतौ सौर्ययागे सौर्यचरौ प्राप्तः । तत्र यद्ययं मन्त्रोऽविकृत एव पठ्यते, तदास्य मन्त्रस्य नैष्फल्यम् । द्रव्यदेवताप्रकाशनस्य दृष्टफलस्य ततोऽनुत्पादात् । न ह्यग्नि-पदवान् मन्त्रो विकृतिदेवतां सूर्यं प्रकाशयितुं समर्थः, तद्वाचकस्य तत्रासत्त्वात् । न ह्यग्नि-पदं सूर्यवाचकम् । तस्माद् यावत्पदेन विना मन्त्रस्यार्थप्रकाशनसामर्थ्यं न घटते, तावत्-पदमनाम्नातमप्यूहनीयम् । अत एव विकृतावग्निपदस्थाने सूर्यपदप्रयोगः । अन्यथाऽयं प्रयोगासमवेतो निरर्थकः स्यात् । अतो मन्त्रेषु द्रव्यदेवताप्रकाशनरूप-दृष्टप्रयोजनसिद्धये पदाध्याहार आवश्यक इति भावः । न च विकृतौ सूर्यायेति पदं मन्त्रघटकमेव, न त्वभ्याहृतमिति वाच्यम् , अनाम्नातत्वात् , मीमांसकैः सूर्यपदप्रयोगस्योहत्वेनाभिधानात् । तथा च सूत्रम्—"अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यादि"ति । तस्मात् सिद्धं पदजन्यपदार्थोपस्थितिरेवासत्तिरिति ।

पदजन्योपस्थितं पदार्थं केचित् त्रिविधं मन्यन्ते शक्यो लक्ष्यो गौणश्चेति । तन्मत-मपाकर्त्तुमाह--**पदार्थश्चे**ति । वृत्त्या पदप्रतिपाद्योऽर्थश्चेत्यर्थः । **द्विविध** इति । गौणस्य लक्ष्यान्तर्भूतत्वादिति भावः । **शक्यः** शक्त्या बोध्यः । **लक्ष्यः** लक्षणया बोध्यः

**मुख्या वृत्तिः। यथा घटपदस्य पृथुबुध्नोदराद्याकृति-विशिष्टे वस्तुविशेषे वृत्तिः। सा च शक्तिः पदार्थान्तरम्, सिद्धान्ते कारणेषु कार्यानुकूल-शक्तिमात्रस्य पदार्थान्तरत्वात्। सा च तत्तत्पदजन्य-पदार्थज्ञानरूप-कार्यानु-**

शक्यनिरूपणस्य शक्तिनिरूपणाधीनत्वात् प्रथमं शक्तिं निरूपयति—**तत्रे**ति। शक्यलक्ष्य-घटक-शक्तिलक्षणयोर्मध्ये इत्यर्थः। **अर्थेषु** केवलार्थविषयिणी। एतेन कार्यान्वित-स्वार्थे इतरान्वितस्वार्थे वा शक्तिमभ्युपगच्छतां प्राभाकराणां मतं प्रत्युक्तम्, कार्यानन्वितेऽप्यर्थे हर्षशोक-संकेतादिभिः शक्तिग्रहसम्भवात्। तथा चोक्तं भामत्यां—कार्यबोधे यथा चेष्टा लिङ्गं हर्षादयस्तथा। सिद्धबोधेऽर्थवत्तैवं शास्त्रत्वं हितशासनादिति। **मुख्या** वृत्त्यन्तरो-पस्थितिनिरपेक्षा, प्रथमेति यावत्। यथा लक्षणा शक्तिवृत्तेरुपस्थित्यनन्तरमुदेति। नैवं शक्तिः, तस्या वृत्त्यन्तरोपस्थितिं विनैव शब्दादेवाविर्भावात्। अतः सा मुख्या प्रथमा। लक्षणा त्वमुख्या जघन्या। अत एवोक्तं—गौणे सदपि सामर्थ्यं न प्रमाणान्तरं विना। आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तदिति। मीमांसासूत्रभाष्यकारा अप्याहुः—"यः शब्दादेवावगम्यते, स प्रथमोऽर्थो मुख्यः। यस्तु खल प्रतीतादर्थात् केनचित् सम्बन्धेन गम्यते, स पश्चाद्-भावाद् जघनमिव भवतीति जघन्य" इति, "न ह्यनभिधाय मुख्यं गौणमभिवदति शब्द" इति चेति। **वृत्तिः** अर्थप्रतीत्यनुकूलः पदनिष्ठो धर्मविशेषः। तत्रोदाहरणमाह—**यथे**ति। **पृथुबु**ध्नोदरेति। **बुध्नः** मूलभागः। **उदरं** मध्यभागः। **आकृति**रवयवसंस्थानम्। बुध्नश्चोदरञ्च बुध्नोदरे, पृथुनी च ते बुध्नोदरे चेति पृथुबुध्नोदरे, पृथुबुध्नोदरे आदी यस्याः सा पृथुबुध्नोदरादिस्तद्रूपा या आकृतिस्तया विशिष्टे विशेषेण शिष्टे उपदिष्टे व्यङ्ग्ये इति यावत्, न तु युक्ते इत्यर्थः। विशिष्टस्य युक्तार्थकत्वे सिद्धान्त-विरोधः, तच्च जातेरेव न व्यक्तेरिति व्यक्तौ शक्तिनिषेधात्, अत्र च व्यक्तौ शक्त्यङ्गीकारा-दिति भावः। **वस्तुविशेषे** जातिविशेषे घटत्वे। **वृत्तिः** शक्तिः। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा-रूपः संकेतः शक्तिरिति नैयायिकास्तान् प्रत्याह—**सा चे**ति। पदनिष्ठा पदार्थोपस्थित्यनुकूला शक्तिश्चेत्यर्थः। **पदार्थान्तर**म् क्लृप्तद्रव्याद्यतिरिक्ता। पद-निष्ठशक्तेःपदार्थान्तरत्वे हेतुं दर्शयति—**सिद्धान्ते** इति। मीमांसकसिद्धान्तेऽद्वैतसिद्धान्ते चेत्यर्थः। **पदार्थान्तरत्वा**दिति। यदा कारणनिष्ठा कार्यानुकूला शक्तिः पदार्थान्तरम्, तदा पदनिष्ठा पदार्थोपस्थित्यनुकूला शक्तिरपि पदार्थान्तरं भवेत्, तस्या अपि कारण-निष्ठ-कार्यानुकूलशक्तित्वात्, पदस्य कारणत्वात् पदार्थोपस्थितेश्च कार्यत्वादिति भावः।

**मेया। तादृश-शक्ति-विषयत्वं शक्यत्वम्। तच्च जातेरेव न व्यक्तेः, व्यक्तीना-**

ननु कारणनिष्ठ-कार्यानुकूलशक्तेः सिद्धौ तस्याः पदार्थान्तरत्वविचारणा लब्धावसरा भवेत्। सा तु नैव सिद्धा, सहकारिसमवहितादेव कारणात् कार्यसम्भवेऽतिरिक्तशक्ति-कल्पनाया अन्याय्यत्वादिति चेन्न, तस्याः प्रमाणसिद्धत्वात्, कार्यान्यथानुपपत्तेः श्रुतेश्च तत्र प्रमाणत्वात्। तथा हि—सहकारिसमवहिताद् यथाभूतादेव वह्नेर्दाहो दृष्टः, मणिमन्त्रौ-षधिप्रयोगे सति तथाभूतादेव वह्नेर्दाहो न दृश्यते। ततो मणिमन्त्रादि-प्रतिबन्धनीयं तद्विनाश्यं वा किञ्चिदतीन्द्रियं वह्निनिष्ठं कल्पनीयम्। सैव शक्तिः। तस्याश्च स्वाश्रय-कारणादुत्पत्तिः, नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजेति तत्सिद्धान्तात्। न च मणिमन्त्रादि-सन्निधानादेव दाहानुदय इति वाच्यम्, कारणावैगुण्ये कार्योदयविघाता-सम्भवात्। तर्हि तदसन्निधानं तदुत्पत्तिनिमित्तं चेत्, न, सन्निधानस्य प्रतिबन्धकतया तदभावस्य केवलं तन्निवृत्तिरूपत्वेनाऽहेतुत्वात्, अभावस्य ज्ञापकत्वेऽप्यकारकत्वात्। न च नित्यकर्माकरणात् प्रत्यवायोत्पत्तेरभावस्यापि कारकत्वमिति वाच्यम्, तत्रापि नित्य-कर्मभिरविनष्टानामहरहःसमुत्पद्यमानानामेवेतरकर्मणां प्रत्यवायहेतुत्वाभ्युपगमात्। तदुक्तं —"स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः। प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यत"॥ इति। श्रुतिश्चात्र भवति—"परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे"ति। न च गौरवम्, प्रामाणिकगौरवस्यादोषत्वात्। नन्वेवमपि कथं तस्या अतिरिक्तत्वम्, क्लृप्तपदार्थेष्वन्तर्भावसम्भवादिति चेन्न, विकल्पासहत्वात्। तथा हि न तावद् द्रव्यगुणकर्मात्मिका शक्तिर्गुणादिवृत्तित्वात्। न च सामान्याद्यन्यतमरूपा, उत्-पत्तिमत्त्वे सति विनाशित्वात्। तथा चोक्तं—"न द्रव्यं गुणवृत्तित्वाद् गुणकर्मबहिष्कृता। सामान्यादिषु सत्त्वेन सिद्धा भावान्तरं हि से"ति। तस्मात् प्रमाणसिद्धायाः शक्तेः क्लृप्तेष्वनन्तर्भावादतिरिक्तत्वमकामेनाप्यभ्युपगन्तव्यम्।

नन्वेवं कारणनिष्ठ-शक्तिसिद्धावपि पदनिष्ठा शक्तिर्नैव सिद्धा, प्रमाणाभावात्, कैव कथा तदतिरिक्तत्वस्येत्यत आह—**सा चे**ति। पदनिष्ठा शक्तिश्चेत्यर्थः। **तत्तत्पद**जन्येति। तत्तत्पदजन्यं यत् पदार्थज्ञानं तद्रूपं यत् कार्यं तेनानुमेयेति विग्रहः। अनुमानप्रयोगश्च—पदार्थज्ञानं स्वकारणनिष्ठ-स्वानुकूलातीन्द्रिय-धर्मपूर्वकं कार्यत्वात् दाहवदिति। न च दृष्टान्तासिद्धिः, तस्य साधितत्वात्। शक्तिं निरूप्य शक्यं निरूपयति—**तादृशे**ति। पूर्वोक्तप्रकारेत्यर्थः। **शक्तिविषयत्वं** शक्तिजन्य-बोधविषयत्वम्।

**मानन्त्येन गुरुत्वात्। कथं तर्हि गवादि-पदाद् व्यक्तिभानमिति चेत्, जातेर्व्यक्तिसमान-संवित्संवेद्यतयेति ब्रूमः। यद्वा गवादिपदानां व्यक्तौ शक्तिः**

जात्याकृतिव्यक्तीनां पदशक्यत्वं गौतमीया वदन्ति, दीधित्यनुयायिनस्तु व्यक्तेरेवेति। तान् प्रत्याह—**तच्चे**ति। शक्यत्वमित्यर्थः। **जातेरेवे**ति। गोत्वादिसामान्यस्यैवेत्यर्थः। जातिविशिष्टे शक्तिस्वीकारे जातावपि तत्स्वीकार आवश्यकः, विशिष्टबुद्धेर्विशेषणविषयत्वनियमात्, नागृहीतविशेषणा बुद्धिर्विशिष्टेषूपजायते इति न्यायात्। तथा चोभयत्र शक्तिकल्पनापेक्षया जातावेव शक्तिः कल्पनीया, लाघवात्। तथा चोक्तं —"विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इतीति भावः। एवकारव्यावर्त्त्यमाह —**न व्यक्ते**रिति। आकृतेरप्युपलक्षणम्। तथा च जातिरेव शक्या न व्यक्तिर्न वाकृतिरिति भावः। व्यक्तेरशक्यत्वे हेतुमाह—**व्यक्तीनामि**ति। व्यक्तिशक्तिपक्षे यस्यां कस्याञ्चिदेकस्यां व्यक्तौ शक्तिः सर्वासु वेति। नाद्यः, यत्किञ्चिदेकव्यक्तौ शक्तिस्वीकारे व्यक्त्यन्तरधर्मिकशक्तिज्ञानाभावेऽपि व्यक्तिवाचकपदात् व्यक्त्यन्तरविषयक-शाब्दबोधोदयदर्शनेन शक्तिज्ञानस्याहेतुत्वापातात्, व्यभिचारात्। सकलव्यक्तिषु शक्ति-स्वीकारे व्यक्तीनामानन्त्याच्छक्तीनामानन्त्यम्। तथा चानन्तशक्तिकल्पनायामतीतानागत-सकलव्यक्तिषु शक्तिज्ञानासम्भवेन शाब्दबोधाभावप्रसङ्गाद् व्यक्तौ शक्तिर्न स्वीकरणीयेतिभावः। तथा चावोचन् आचार्याः—आकृतिभिश्च शब्दानां सम्बन्धो न व्यक्तिभिः, व्यक्तीनामानन्त्यात् सम्बन्धग्रहणानुपपत्तेरिति। ननु व्यक्तेरशक्यत्वे गवादिपदाद् गवादिव्यक्तेरुपस्थितिर्न स्यात्, शक्यस्यैव शब्दोपस्थाप्यत्वनियमादित्याशङ्कते—**कथमि**ति। कस्मात् कारणादित्यर्थः। **तर्हि** व्यक्तेरशक्यत्वे। व्यक्तेरशक्यत्वेऽपि तद्भानोपायं दर्शयति—**जातेरि**ति। **व्यक्तिसमाने**ति। व्यक्तिसमाना व्यक्तिसंवित्समाना संवित् जातिसंवित् जातिज्ञानं, तत्संवेद्यतया तद्विषयतयेत्यर्थः। अयं भावः—यदा जातेर्ज्ञानम्, तदा व्यक्तेरपि। न हि व्यक्तिं विहाय केवलाया जातेर्ज्ञानं दृष्टचरमनुभवचरं वा। तच्च जातिज्ञानं व्यक्तिज्ञानान्न भिद्यते। न हि जातिविषयकं ज्ञानमन्यदुदेत्यन्यच्च व्यक्तिविषयकं ज्ञानम्, जातिविषयकज्ञानेनैव व्यक्तेर्विषयभावात्। प्रत्यक्षदृष्टोऽप्ययं न्यायः शब्देऽप्यनुवर्त्तते। तथा च जातिभासकसामग्र्यैव व्यक्तिभानसम्भवे नान्या व्यक्तिभासकसामग्री कल्पनीया। अतो व्यक्तौ शक्त्यभावेऽपि जातिशक्तिज्ञानजन्येन जातिज्ञानेन यदा जातेर्विषयभावस्तदा व्यक्तेरपीति व्यक्तौ शक्तिकल्पना व्यर्थेति। ननु व्यक्तेरुपस्थितौ

**स्वरूपसती न तु ज्ञाता हेतुः। जातौ तु सा ज्ञाता। न च व्यक्त्यंशे शक्तिज्ञानमपि कारणम्; गौरवात्, जातिशक्तिमत्त्व-ज्ञाने सति व्यक्तिशक्ति-ज्ञानं** विषयभावो भवेत्। तदुपस्थितिस्तु नैव सम्भाव्यते, सामग्र्यभावात्, तुल्यवित्तिवेद्यताया रूपालोकादौ व्यभिचारात्। न हि रूप-रूपवतोर्ज्ञानं युगपद् भवदप्येकसामग्रीप्रयोज्यम्, तज्ज्ञानस्य भिन्न-सामग्री-प्रयोज्यत्वात्, तस्याश्च तत्र वर्त्तमानत्वात्। नैवं सामग्रीसत्त्वं शब्देऽनुभूयते, तदुपस्थितिं प्रत्येकस्यैव तच्छक्तिज्ञानस्य हेतुत्वात्, तस्य च तत्राभावात्, तत्र च शक्तेरनभ्युपगमात्, अन्योपस्थितिसामग्र्याऽन्योपस्थित्ययोगात्, तद्विषयक-शक्तिज्ञानं विनापि तदुपस्थिति-सम्भवे जातेरपि तथैव भानसम्भवेन तत्र शक्तिकल्पनाया वैयर्थ्यप्रसङ्गादित्यरुचेर्गुरुमतमनुस्मरन्नाह—**यद्** वेति। **स्वरूपसती**ति। स्वरूपेण विद्यमानेत्यर्थः। अस्य च **हेतु**रित्यग्रेतनेनान्वयः। तथा च व्यक्तौ स्वरूपेण विद्यमानैव शक्तिस्तदुपस्थितौ हेतुः, तेन व्यक्तेरपि शक्यत्वं शाब्दबोध्यत्वञ्चोपपन्नमिति भावः। तथा चोक्तं तत्त्वप्रदीपिकायाम्—"आकृतेः शब्दार्थत्वेऽपि तस्या एव शब्दार्थत्वमिति नियमानङ्गीकारादि"ति। ननु व्यक्तौ यदि शक्तिस्तदा तज्ज्ञानमेव कारणं वाच्यम्, तत् कथमुच्यते स्वरूपसती हेतुरिति? तत्राह—**न तु ज्ञाते**ति। हेतुरित्यनेनान्वयः। जात्युपस्थिति-दशायां स्वरूपसच्छक्त्या व्यक्त्युपस्थितेरुपपत्तौ व्यक्तिशक्तिज्ञानं तदुपस्थितौ नापेक्षणीयमिति भावः। नन्वेवं जात्युपस्थितावपि जातिशक्तिज्ञानं कारणं न स्यात्, तत्रापि स्वरूपसच्छक्त्या तदुपस्थितिसम्भवादित्यत आह—**जातौ त्वि**ति। **सा** शक्तिः। **ज्ञाते**ति। हेतुरिति शेषः। जातौ यदि शक्तिः स्वरूपसती हेतुः स्यात्, तदाऽगृहीतशक्तिकानामपि पुंसां तत्तच्छब्दात् तत्तदर्थोपस्थितिः स्यात्, तत्र तत्रापि तत्तच्छक्तेः स्वरूपेण विद्यमानत्वात्। न च तथा दृश्यते। तस्माज् जातौ सा ज्ञाता हेतुरिति भावः। नन्वेवं द्वयोर्जातिव्यक्त्योः शक्तिमत्त्वे तुल्येऽपि कथं जातिशक्तेर्ज्ञानं कारणं न व्यक्तिशक्तेरित्यत आह—**न च व्यक्त्यंश** इति। उभयशक्तिज्ञानस्य कारणत्वकल्पनायां गौरवादिति भावः। ननु पदार्थोपस्थितिं प्रति शक्तिज्ञानस्य कारणत्वात् व्यक्त्युपस्थितिं प्रत्यपि तस्यैव कारणत्वं वाच्यम्। कारणद्वयकल्पनागौरवञ्च प्रमाणबलादायातमङ्गीकरणीयमित्यत आह—**जाति**शक्तिमत्त्वेति। व्यक्तिशक्तिज्ञानं विना यदि व्यक्त्युपस्थितिर्न स्यात्, तदा व्यक्तिशक्तिज्ञानं नूनं कारणं भवेत्। न च तथा, जातिशक्तिज्ञाने सत्येव व्यक्त्युपस्थितिदर्शनात्। तस्मादन्वयव्यतिरेकाभ्यां जातिशक्तिज्ञानमेव व्यक्त्युपस्थितौ कारणम्। न च व्यक्ति-

**विना व्यक्तिधी-विलम्बाभावाच्च। अत एव न्यायमतेऽप्यन्वये शक्तिः स्वरूप-सतीति सिद्धान्तः। ज्ञायमान-शक्ति-विषयत्वमेव वाच्यत्वमिति जातिरेव**

शक्तिकल्पना व्यर्था, जातिशक्तिज्ञानेनैव व्यक्त्युपस्थितेरिति वाच्यम्, अशक्यस्य शाब्द-बोधाविषयत्वाच्छाब्दबोधविषयत्वोपपत्तये तच्छक्तिकल्पनाया आवश्यकत्वात्, व्यक्ति-शक्तेः सहकारित्वाच्च। तथा च तत्तद्व्यक्तिविषयक-स्वरूपसच्छक्तिसहकृत-जातिशक्ति-ज्ञानमेव जातिव्यक्त्योरुपस्थितौ कारणमिति स्थितम्। न च तत्तज्जातिविषयक-स्वरूप-सच्छक्ति-सहकृत-व्यक्तिशक्तिज्ञानमेव कारणं स्यात् विनिगमनाभावादिति वाच्यम्, व्यक्तीनामानन्त्यादनन्तशक्तिज्ञानस्य कारणत्वकल्पनायां गौरवात्, जातेरेकत्वाद् जाति-शक्तिज्ञानस्य कारणतायां लाघवात् तस्यैवात्र विनिगमकत्वात्। न केवलमस्माकमेव स्वरूपसच्छक्त्यङ्गीकारो नैयायिकानामपीत्याह—**अत** एवेति। स्वरूपसच्छक्तेरावश्यकत्वा-देवेत्यर्थः। **न्यायमतेऽपि** न्यायैकदेशिनां न्यायरहस्यकृतां मतेऽपि, भाष्यकारादिभि-स्तदनङ्गीकारादिति भावः। **अन्वये** जातिव्यक्त्योर्वैशिष्ट्ये, समवायसम्बन्धे इति यावत्। गोशब्दजन्ये गोत्वप्रकारकगोविशेष्यक-शाब्दज्ञाने गोत्वसमवायस्याप्यवच्छेदकतया विषय-भावात् तत्रापि शक्तिरङ्गीकरणीया। कथमन्यथाऽशक्यस्य तस्य शाब्दबोधविषयता, अशक्यस्य शाब्दबोधाविषयत्वादिति तेषामाशयः। **शक्तिः** पदानां शक्तिः। **स्वरूप-सती**ति। तथा चान्वयविषयिणी स्वरूपसत्येव शक्तिरन्वयबोधानुकूला, न तु ज्ञातेति भावः।

वस्तुतस्त्वन्वयो नाम शब्दोपस्थाप्यानां पदार्थानामन्योन्यसम्बन्धः। स चाकांक्षादि-लभ्योऽपि न शक्तिविषय इति नैयायिकानां समयः। तद् यदत्र मूलकृतोक्तं न्यायमते-ऽप्यन्वये शक्तिः स्वरूपसतीति। तत् कृतबुद्धय एव विदांकुर्वन्तु।

नन्वेवं व्यक्तेरपि वाच्यत्वं स्यात्, शक्तिविषयस्यैव वाच्यत्वात्, तत्र च शक्तेरङ्गी-कारात्। इष्टापत्तौ स्वाभ्युपगमविरोधः, "तच्च जातेरेव न व्यक्ते"रित्यादिना व्यक्तौ शक्ते-र्निषेधादित्यत आह—**ज्ञायमाने**ति। **जातिरेवे**ति। एवकारेण व्यक्तिव्यवच्छेदः। तथा च न हि शक्तिविषयत्वं वाच्यत्वम्, किन्तु ज्ञायमान-शक्तिविषयत्वम्। तच्च जातावेव न व्यक्तौ, तस्याः शक्तिज्ञानोपस्थाप्यत्वेऽपि ज्ञायमानशक्तिविषयत्वाभावात्, स्वरूपसच्छक्ति-विषयत्वस्यैव तत्राभ्युपगमात्। एवञ्च जातिरेव वाच्या, न व्यक्तिरिति भावः। न च पूर्वापर-ग्रन्थविरोधस्तन्निषेधस्य ज्ञायमानशक्तिविषयत्वरूप-शक्यत्व-निषेधपरत्वात्। ननु जातिशक्तिज्ञानस्य व्यक्त्युपस्थापकत्वेऽतिप्रसङ्गाद् व्यक्तिशक्तिसहकृत-जातिशक्तिज्ञानस्य

**वाच्या। अथवा व्यक्तेर्लक्षणयाऽवगमः। यथा नीलो घट इत्यत्र नील-शब्दस्य नीलगुण-विशिष्टे लक्षणा। तथा जातिवाचक-शब्दस्य तद्विशिष्टे लक्षणा। तदुक्तम्—"अनन्यलभ्यः शब्दार्थ" इति। एवं शक्यार्थो निरूपितः।**

**अथ लक्ष्य-पदार्थो निरूप्यते। तत्र लक्षणा-विषयो लक्ष्यः। लक्षणा**

व्यक्त्युपस्थापकत्वमङ्गीकृतम्। तच्च न युक्तम्, अनन्तव्यक्तिशक्तेः सहकारित्वकल्पनाया-मतिगौरवात्, स्वरूपसच्छक्तेः सहकारित्वस्यादृष्टचरत्वात्, वाच्यलक्षणस्य गौरवग्रस्तत्वा-पाताच्च। तद् वरं व्यक्तिशक्तेर्ज्ञानं कारणं स्याल्लाघवादित्यपरितोषादाह—**अथवे**ति। **लक्षणया** पदलक्षणया। **अवगमः** उपस्थितिः। ननु विशेषण-वाचकशब्दस्य विशेष्य-लक्षकत्वं क्व दृष्टमित्यपेक्षायामाह—**यथे**ति। **नील**शब्दस्य नीलगुण-वाचक-शब्दस्य। **तद्**-विशिष्टे जातिविशिष्टे। **लक्षणे**ति। यथा भवन्मते नीलगुणवाचकं नीलपदं लक्षणया नीलगुण-विशिष्टस्य द्रव्यस्योपस्थापकम्। तथाऽस्मन्मतेऽपि जातिवाचकं गवादिपदं लक्षणया जातिविशिष्टाया व्यक्तेरुपस्थापकम्। अतो न कोऽपि विरोध इति भावः। न च युगपद् वृत्तिद्वय-विरोधः, एकस्यैव पदस्य शक्त्या जातेर्लक्षणया च व्यक्तेरुपस्थापक-त्वादिति वाच्यम्, गङ्गायां घोष-मत्स्यौ स्त इत्यादौ युगपद् वृत्तिद्वयाङ्गीकारात्।

एतेन—स्वातन्त्र्येण जातेश्च शक्यत्वेऽपि व्यक्तिविशेषणत्वेन व्यक्तिलक्षणाविषयत्व-मविरुद्धमिति शिखामणिकृतां व्याख्यानं प्रत्युक्तम्, जातिविशिष्टस्य लक्ष्यत्वे जातेर्लक्ष्य-तावच्छेदकत्वात् तत्र कैरपि लक्षणाविषयत्वानभ्युपगमात्।

शाब्दबोधविषयीभूतस्य शक्तिलक्षणान्यतरलभ्यत्वे मीमांसकसम्मतिं दर्शयति—**तदुक्त**मिति। मीमांसकैरिति शेषः। **अनन्ये**ति। नान्येन शक्तिलक्षणान्येन लभ्यः, शक्त्या लक्षणया च वृत्त्या लभ्य इति यावत्। **शब्दार्थः** पदार्थः। शंक्यनिरूपणमुप-संहरति—**एव**मिति। जातिशक्तिनिरूपणेन व्यक्तिभानोपपादनेन चेत्यर्थः।

क्रमप्राप्तं लक्ष्यपदार्थं निरूपयितुं प्रतिजानीते—**अथे**ति। शक्यनिरूपणानन्तर-मित्यर्थः, स्वज्ञाप्यसम्बन्धरूपाया लक्षणाया शक्यनिरूपणाधीनत्वादिति भावः। लक्ष्य-स्वरूपं दर्शयति—**तत्रे**ति। स्वरूपलक्षणादीनां मध्ये इत्यर्थः। **लक्षणा**विषयः लक्षणा-विशेष्यः, लक्षणया विशेष्यतया बोध्य इति यावत्। लक्ष्यज्ञानस्य लक्षणाज्ञानाधीनत्वात् प्रथमं लक्षणां विभजते—**लक्षणे**ति। यद्यपि लक्षणालक्षणमेव प्रथमं वक्तव्यम्, लक्षण-पूर्वकत्वाद् विभागस्य। तथापि लक्ष्यस्वरूपनिरूपणानन्तरं लक्ष्यविभागस्योपस्थितत्वात्

**द्विविधा—केवल-लक्षणा लक्षित-लक्षणा चेति। तत्र शक्यसाक्षात्सम्बन्धः केवल-लक्षणा। यथा गङ्गायां घोष इति। अत्र प्रवाह-साक्षात्-सम्बन्धिनि तीरे गङ्गापदस्य केवल-लक्षणा। यत्र शक्यपरम्परा-सम्बन्धेनाऽर्थान्तर-प्रतीतिस्तत्र लक्षित-लक्षणा। यथा द्विरेफ-पदस्य रेफद्वय-शक्तस्य भ्रमरपद-घटित-परम्परा-सबन्धेन मधुकरे वृत्तिः। गौण्यपि लक्षित-लक्षणैव।**

तदुपयोगितयादौ विभागो दर्शित इति मन्तव्यम्। **द्विविधे**ति। गौण्या लक्षितलक्षणा-न्तर्भावादिति भावः। **तत्र** केवललक्षणा-लक्षितलक्षणयोर्मध्ये। **शक्य**साक्षात्सम्बन्धः शक्यस्य स्वबोध्यस्य साक्षात्सम्बन्धः सम्बन्धान्तराव्यवहितः सम्बन्धः। यथाश्रुतार्थकत्वे शक्याया जातेस्तीरादौ साक्षात्सम्बन्धाभावेन दर्शितोदाहरणस्यासाङ्गत्यापत्तेः। अनेन स्वबोध्यसम्बन्धत्वं लक्षणात्वमिति लक्षणाया लक्षणमपि दर्शितं बोद्धव्यम्। केवल-लक्षणाया उदाहरणमाह—**यथे**ति। **प्रवाहे**ति। प्रवाहस्य गङ्गापदबोध्यस्य भगीरथ-रथखातावच्छिन्न-जलप्रवाहस्य साक्षात्सम्बन्धिनि संयोगरूप-साक्षात्-सम्बन्धवतीत्यर्थः। लक्षितलक्षणास्वरूपं सूचयन् तत्स्थलं दर्शयति—**यत्रे**ति। **शक्यपरम्परे**ति। शक्यस्य स्वबोध्यस्य परम्परासम्बन्धेन सम्बन्धान्तरघटित-सम्बन्धेनेत्यर्थः। एतेन स्वबोध्यपरम्परा-सम्बन्धो लक्षितलक्षणेति लक्षितलक्षणायाः स्वरूपं सूचितम्। लक्षितलक्षणाया उदाहरण-माह—**यथे**ति। **भ्रमर**पदेति। स्वबोध्यरेफद्वयघटित-भ्रमरपदवाच्यत्व-सम्बन्धेनेत्यर्थः। **मधुकरे** भ्रमरे। **वृत्तिः** लक्षणा। अयं भावः—यथा द्विरेफपदाद् रेफद्वयस्य बोधस्तथा भ्रमरस्यापीति सर्वजनीनम्। तत्र द्विरेफपदं शक्त्या रेफद्वयं बोधयति, द्विशब्देन द्वित्वस्य रेफशब्देन रेफस्योपस्थितत्वात्। भ्रमरस्य बोधस्तु न शक्त्या, तत्र तत्पदशक्तेरभावात्, किन्तु लक्षितलक्षणया, तस्याः स्वबोध्यपरम्परासम्बन्धरूपत्वात्, तस्य च भ्रमरे सत्त्वात्। स च परम्परासम्बन्धः स्वबोध्य-रेफद्वय-घटित-पदवाच्यत्वरूपः। तथा हि—द्वौ रेफौ यत्रेति बहुव्रीहिसमासनिष्पन्नेन द्विरेफपदेन रेफद्वययुक्तत्वरूप-स्वबोध्यसम्बन्धस्वरूपया लक्षणया भ्रमरपदे प्रथमं लक्षिते ततस्तद्बोध्यो भ्रमरोऽपि तेनैव पदेन लक्षितो भवति, तत्र स्वबोध्य-रेफद्वय-घटित-भ्रमरपदवाच्यत्वरूपस्य स्वबोध्यपरम्परासम्बन्धस्य विद्यमानत्वात्। न च द्विरेफलक्षितेन भ्रमरपदेन शक्त्या भ्रमरबोधोऽस्तु किं लक्षितलक्षणयेति वाच्यम्, द्विरेफ-मानय, द्विरेफं पश्येत्यादौ वाक्यार्थबोधानुपपत्तेः, प्रत्ययानां प्रकृत्यर्थान्वित-स्वार्थबोधकत्व-नियमात् प्रत्ययार्थे कर्मत्वे प्रकृत्यर्थस्य द्विरेफपदलक्षित-भ्रमरपदस्यान्वयायोगात्, तस्य

**यथा सिंहो माणवक इति। अत्र सिंहशब्द-वाच्य-सम्बन्धि-क्रौर्यादि-सम्बन्धेन माणवकस्य प्रतीतेः। प्रकारान्तरेण लक्षणा त्रिविधा—जहल्लक्षणाऽजहल्लक्षणा जहदजहल्लक्षणा चेति। शक्यमनन्तर्भाव्य यत्रार्थान्तरस्य प्रतीतिस्तत्र जहल्लक्षणा। यथा विषं भुङ्क्ष्वेति। अत्र हि स्वार्थं विहाय शत्रुगृहे भोजन-**

दर्शनानयनायोग्यत्वादिति भावः। नन्विदं लक्षणं गौणीलक्षणायामतिव्याप्तम्, तत्रापि लक्षितलक्षणा-लक्षणस्य स्वबोध्यपरम्परासम्बन्धत्वस्य विद्यमानत्वादित्याशङ्क्य तस्या लक्ष्यत्वान्नातिव्याप्तिरिति परिहरति—**गोण्यपी**ति। **लक्षित**लक्षणैवेति। तल्लक्षणयोगादिति भावः। एवकारेण लक्षणान्तरत्व-व्यवच्छेदः। लक्षणसमन्वयपूर्वकं गौण्या लक्षितलक्षणान्तर्भावं दर्शयति—**यथे**ति। **सिंह**शब्दवाच्येति। सिंहशब्दात् कदाचित् सिंहत्व-जातिबोधः, कदाचिच्च सिंहसदृश-माणवकादिबोधः। तत्र माणवकबोधस्तु न शक्त्या, माणवके सिंहशब्दस्य शक्त्यभावात्; किन्तु लक्षितलक्षणया, स्वबोध्यपरम्परासम्बन्धस्य सिंहत्व-समानाधिकरण-क्रौर्याद्याश्रयत्वस्य तस्मिन् माणवके विद्यमानत्वात्, तस्यैव लक्षितलक्षणात्वात्। तथा च गोण्यपि लक्षितलक्षणैव, गौणीलक्षणामूलस्य स्वबोध्य-सादृश्याद्यात्मक-गुणयोगस्य स्वबोध्यपरम्परासम्बन्धतोऽनतिरेकादिति भावः।

प्रकारान्तरेण लक्षणां विभजते—**प्रकारान्**तरेणेति। **जहल्लक्षणे**ति। जह्यते त्यज्यते स्वार्थः स्वशक्यार्थो यया लक्षणयेति व्युत्पत्त्या जहत्स्वार्थलक्षणैव जहल्लक्षणेत्युच्यते। यया लक्षणया शब्दः स्वार्थं परित्यज्याऽर्थान्तरमुपस्थापयति, तथाविधलक्षणेत्यर्थः। **अजहदि**ति। न जह्यते स्वार्थो ययेति व्युत्पत्त्या शक्यसाधारण-लक्षणैवाजहत्-स्वार्थलक्षणेत्यभिधीयते। यया लक्षणया शब्दः स्वार्थमर्थान्तरञ्चोपस्थापयति, तथाविधलक्षणेत्यर्थः। **जहद**जहदिति। यया पुनर्लक्षणया शब्दः स्वार्थैकदेशं परित्यज्य स्वार्थैकदेशमुपस्थापयति, तथाविधलक्षणेत्यर्थः। एषैव भागत्यागलक्षणा। तत्र जहल्लक्षणास्थानमाह—**यत्रे**ति। त्रिविधलक्षणामध्ये इत्यर्थः। **शक्यं** स्वबोध्यम्। **अनन्तर्भाव्य** अनुपस्थाप्य। **अर्थान्तरस्य** अशक्यार्थस्य। **प्रतीतिः** उपस्थितिः। जहल्लक्षणोदाहरणमाह—**यथे**ति। **स्वार्थं** विषभक्षणानुकूल-कृतिमत्त्वम्, **विहाय** अनुपस्थाप्य। **भोजन**निवृत्तिरिति। अयं भावः—शत्रुगृहान्नभोजने प्रवर्तमानं पुरुषमुपलभ्य तन्निवृत्तिमुत्पादयितुं केनचिद्धितकामेनोक्तं—विषं भुङ्क्ष्वेति। तद्वाक्यश्रवणाच्छ्रोता शत्रुगृहान्नभोजनं न कर्त्तव्यमिति बुद्ध्वा शत्रुगृहान्नभोजनान्निवर्त्तते। न चैषस्तस्य बोधः शक्त्या, वाक्यस्य तद्घटकपदस्य वा

**निवृत्तिर्लक्षिता। यत्र शक्यार्थमन्तर्भाव्यैवाऽर्थान्तर-प्रतीतिस्तत्राजहल्लक्षणा। यथा शुक्लो घट इति। अत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्त्तते। यत्र हि विशिष्ट-वाचकः शब्दः स्वार्थैकदेशं विहायैक-देशे वर्त्तते, तत्र जहदजहल्लक्षणा। यथा सोऽयं देवदत्त इति। अत्र हि पदद्वय वाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्वयस्य विशेष्यमात्रपरत्वम्। यथा**

तस्मिन्नर्थे शक्त्यभावात्, किन्तु वाक्यलक्षणया, स्वबोध्यसम्बन्धस्य विषभक्षणानुकूल-कृतिमत्त्वसामानाधिकरण्यस्य शत्रुगृहान्नभोजननिवृत्तौ सत्त्वादिति भावः। न चैष पद-लक्षणयैवास्तु, किं वाक्यलक्षणयेति वाच्यम्, एकेनैव पदेन तदर्थप्रतीत्युपपत्तौ पदान्तरो-च्चारण-वैयर्थ्य-प्रसङ्गात्, प्रत्येकपदात् तात्पर्यबोधानुपपत्तेश्च। न हि विषभोजनं यथाऽ-निष्टसाधनतयाऽकर्त्तव्यम्, तथैव शत्रुगृहान्न-भोजनमपीति तात्पर्यं प्रत्येकपदं ज्ञापयितु-मलम्, किन्तु वाक्यमेवेति वाक्यलक्षणैव युक्तेति भावः। न च वाक्यस्य शक्त्यभावात कथं शक्यसम्बन्धरूपा लक्षणेति वाच्यम्, स्वबोध्य-सम्बन्धस्यैव लक्षणात्वात्।

एतेन—"अतः शत्रुगृहान्नं विषसदृशत्वाद् विषपदेनोच्यते, भुङ्क्ष्वेत्यनेन च तद्-भोजनाकर्त्तव्यत्वं प्रतिपाद्यत" इति परिभाषाप्रकाशिकाकृतां पदलक्षणापरं व्याख्यानं प्रत्युक्तम्, लक्षणावीजभूतायास्तात्पर्यानुपपत्तेर्घटकस्योक्ततात्पर्यस्य प्रत्येकपदाज्ञाप्य-त्वात्। तथा चोक्तमाचार्यैरद्वैतसिद्धेरखण्डार्थत्वोपपत्तौ—"तथा च समुदाय एव लक्षणा, न प्रत्येकपदे, प्रत्येकं तात्पर्यज्ञापकत्वाभावादि"ति।

अजहल्लक्षणास्थानं दर्शयति—**यत्रे**ति। **अन्तर्भाव्य** उपस्थाप्य, लक्ष्यकोटौ निवेश्येति यावत्। **स्वार्थं** स्वशक्यार्थम्। **शुक्लगुणं** शुक्लस्य गुणं शुक्लत्वम्, जातिशक्तिवादित्वा-दिति भावः। यद्वा **शुक्लगुणं** शुक्लगुणव्यक्तिं, गुणगत-जात्यनङ्गीकारपक्षे आकाशादिवद् व्यक्तेरेव शक्यार्थत्वादिति भावः। **तद्वति** शुक्लत्वविशिष्ट-शुक्लगुणवति शुक्लगुणवति वा द्रव्ये। जहदजहल्लक्षणास्थानमाह—**यत्र ही**ति। **विशिष्ट**वाचक इति। विशेषणयुक्त-विशेष्य-वाचक इत्यर्थः। इदन्तु बोधसौकर्याय परमतमभ्युपगम्योक्तम्, जातिशक्ति-वादिनां विशिष्टवाचक-शब्दाभावात्, स्वमतस्याग्रे वक्ष्यमाणत्वादिति भावः। **स्वार्थैक-देशं** विशेषणांशम्। **एकदेशे** विशेष्यांशे। तदुदाहरणमाह—**यथा** सोऽयमिति। **सः** तद्देशकालविशिष्टदेवदत्तः। **अयम्** एतद्देशकालविशिष्टदेवदत्तः। लक्षणं सङ्गमयति—**अत्र ही**ति। **पदद्वय**वाच्ययोः तदिदंपदवाच्ययोः। **विशिष्टयोः** तद्देशकालविशिष्टै-

**वा तत्त्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादि-विशिष्टस्य त्वंपद-वाच्येनान्तःकरण-विशिष्टेनैक्यायोगादैक्यसिद्ध्यर्थं स्वरूपे लक्षणेति साम्प्रदायिकाः।**

**वयन्तु ब्रूमः—सोऽयं देवदत्तस्तत्त्वमसीत्यादौ विशिष्ट-वाचकानां पदाना-**

तद्देशकालविशिष्ट-देवदत्तयोः। **ऐक्यानु**पपत्त्येति। तच्छब्देन हि तद्देशकालविशिष्ट-देवदत्त उपस्थाप्यते, इदंशब्देन चैतद्देशकालविशिष्टः। तत्र विशेषणयोस्तद्देशकालैतद्देशकालयोर्विरोधेन विशिष्टयोरपि देवदत्तयोर्विरोधान्नैक्योपपत्तिरिति भावः। **पदद्वयस्य** तदिदंपदयोः। **विशेष्य**मात्र-परत्वम् विशेषणांशपरित्यागाद् देवदत्तस्वरूपमात्र-परत्वम्। तथा च नैक्यानुपपत्तिरिति भावः। लौकिकोदाहरणमुक्त्वा वैदिकोदाहरणमाह—**यथा**-वेति। **सर्वज्ञत्वादी**त्यादिपदेन मायोपहितत्वादिपरिग्रहः। **अन्तःकरण**विशिष्टेनेति। एतदसर्वज्ञत्वादिविशिष्टस्याप्युपलक्षणम्। **ऐक्या**योगादिति। विशेषणयोः सर्वज्ञत्वासर्वज्ञत्वयोर्विरोधेन विशिष्टचैतन्ययोर्विरुद्धत्वादिति भावः। **ऐक्यसिद्ध्यर्थम्** सामानाधिकरण्येन प्रतीयमानस्यैक्यस्योपपत्त्यर्थम्। **स्वरूपे** शुद्धचैतन्यस्वरूपे। **साम्प्रदा**यिकाः सर्वज्ञात्मपादादयः। तैर्भागत्यागलक्षणाङ्गीकारादिति भावः।

स्वमतमत्र दर्शयितुमाह **वयन्त्वि**ति। एतेन पूर्वमतस्यास्वारस्यं सूचितम्। तद्बीजन्तु शक्त्यैव तात्पर्यविषयप्रतीत्युपपत्तौ लक्षणाश्रयणमन्याय्यमिति। तथा चोक्तमाचार्यैरद्वैतसिद्धौ प्रत्यक्षस्यागमबाध्यत्वप्रकरणे—सोऽयं देवदत्त इत्यादिवाक्य इव शक्यैकदेशस्यान्वयाभ्युपगमात्, विशेषणबाधेन विशेष्यमात्रान्वयस्यैवात्र लक्षणाशब्देन व्यपदेशादिति।

यदत्र परिभाषाप्रकाशिकाकृतां व्याखानम्—एवमपि लाक्षणिकं पदं नानुभावकमिति सिद्धान्तात् सर्वपदलाक्षणिकत्वेऽनुभावकत्वं तत्त्वमसीति वाक्यस्य न स्यात्। एवञ्च तत्त्वमसीति वाक्यस्य प्रामाण्यं तल्लाक्षणिकत्वपक्षे न स्यादित्यस्वरसात् साम्प्रदायिकमतं परित्यजन् स्वाभिप्रायमाहेति। तदयुक्तम्. लाक्षणिकानामननुभावकत्वस्य प्राभाकरसिद्धान्तत्वेऽप्यद्वैतिनामपसिद्धान्तत्वात्, सर्वपदलाक्षणिकत्वेऽप्यनुभावकत्वोपपत्तेराचार्यैरुपपादनात्। तथा चोक्तमाचार्यैरखण्डार्थत्वोपपत्तौ—लाक्षणिकत्वेऽप्यनुभावकत्वोपपत्तेः। शक्तत्वेन ह्यनुभावकत्वम्, न तु तच्छक्तत्वेन, गौरवात्, लाक्षणिकमपि क्वचिच्छक्तमेवेति। सर्वपदलाक्षणिकस्याननुभावकत्वाङ्गीकारे कुमतिः पशुरित्यादीनां शक्त्या वाक्यार्थाननुभावकानां सर्वपदलाक्षणिकतयाऽननुभावकानामबोधकत्व-प्रसङ्गात्।

**तत्त्वमसीत्या**दाविति। आदिपदेन सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि-लक्षण-वाक्य-

**मेकदेश-परत्वेऽपि न लक्षणा, शक्त्युपस्थितयोर्विशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवान्वयाविरोधात्। यथा घटोऽनित्य इत्यत्र घटपद-वाच्यैकदेश-घटत्वस्यायोग्यत्वेऽपि योग्य-घटव्यक्त्या सहानित्यत्वा-**

परिग्रहः। **विशिष्ट**वाचकानां विशेषणविशिष्ट-विशेष्य-वाचकानां **पदानां** तदादिपदानाम्। **एकदेश**परत्वेऽपि विशेष्यस्वरूपमात्र-तात्पर्यकत्वेऽपि। ननु विशिष्टवाचकपदेभ्यो विरुद्धानां विशिष्टानामर्थानामुपस्थितौ तेषामभेदान्वयासम्भवात् तात्पर्यविषयीभूतार्थस्य स्वरूपमात्रस्य प्रतीतिर्नोपपद्यते। अतस्तत्प्रतीत्युपपत्तये लक्षणाङ्गीक्रियते, लक्षणयैव स्वरूपमात्रोपस्थिति-सम्भवात्। न हि लक्षणां विना स्वरूपमात्रस्योपस्थितिः शक्त्या सम्भवति, तस्या विशिष्टोपस्थापकत्वात्। तत् कथमुच्यते न लक्षणेत्यत आह—**शक्त्युप**स्थितयोरिति। यथा नानार्थक-शब्दानां नानार्थशक्तत्वेऽप्येकार्थे तात्पर्य-निश्चयेनैकार्थोपस्थापकत्वम्, तद्वद् विशिष्टवाचकानामपि तदादिपदानां विशेष्यस्वरूपमात्रे तात्पर्यनिश्चयेन तत्रैव विशेष्यस्वरूपमात्रे तत्तत्पदानां संस्कारोद्बोधात् स्मृतिरूपकार्यजनने संस्कारस्य सहकारित्वात् तदादिपदज्ञान-सहकृतात् तत्संस्काराद् विशेष्यमात्रोपस्थितिः शक्त्यैव भवतीति लक्षणा नाश्रयणीयेति भावः। तथा चोक्तं सिद्धान्तबिन्दौ—"अद्वितीयब्रह्मविजिज्ञापयिषया प्रवृत्तानां सत्यज्ञानादिपदानामुपाधिविशिष्टचैतन्ये शक्तत्वेऽपि चैतन्यमात्रे तात्पर्येण तत्रैव तदंशे एव संस्कारोद्बोधादि"ति। अत एव बलवदनिष्टाजनकत्वसमानाधिकरणेष्टसाधनत्व-शक्तस्यापि विधिप्रत्ययस्य श्येनेनाभिचरन् यजेतेत्यादौ केवलेष्टसाधनत्वबोधकत्वं लक्षणां विनैवेति मणिकारादिभिरप्युक्तमुपपद्यते। अत्र दृष्टान्तमाह—**यथे**ति। **घटपद**वाच्येति। जातिविशिष्टव्यक्ति-शक्तिवादे घटपदवाच्यस्य द्वावंशौ घटत्वं घटश्चेति। अत एव घटत्वस्य घटपदवाच्यैकदेशत्वमिति भावः। **अयोग्यत्वे**ऽपीति। अनित्यत्वान्वयायोग्यत्वेऽपीत्यर्थः, घटत्वस्य नित्यत्वादिति भावः। **योग्य**घटव्यक्त्या अनित्यत्वान्वययोग्य-घटव्यक्त्या। **अनि**त्यत्वान्वय इति। यथा घटादिपदस्य जातिविशिष्ट-शक्तत्वेऽपि घटोऽनित्य इति वाक्यश्रवणाच्छ्रोतुरनित्यत्वविशिष्ट-घटे एव तात्पर्यनिश्चयेन तत्र घटांशे एव संस्कारोद्बोधे तादृशसंस्कार-सहकृताद् घटपदज्ञानाद् घटव्यक्तिमात्रोपस्थितावनित्यत्वान्वयः, तद्वत् सोऽयमित्यादावपि बोद्धव्यम्। अन्यथा घटोऽनित्य इत्यत्रापि लक्षणाप्रसङ्गादिति भावः।

एतेन—विशिष्टशक्तिज्ञानेनोपस्थापितयोर्विशेषणविशेष्ययोस्तात्पर्याद्यनुसारेण विशेष्य-

**न्वयः। यत्र पदार्थैकदेशस्य विशेषणतयोपस्थितिस्तत्रैव स्वातन्त्र्येणोपस्थितये लक्षणाभ्युपगमः। यथा नित्यो घट इति। अत्र घटपदाद् घटत्वस्य शक्त्या स्वातन्त्र्येणानुपस्थित्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा। एवमेव**

मात्रान्वयबोधोऽपि सम्भवति। न हि शक्तिज्ञानेनोपस्थितस्य सर्वस्यापि शाब्दबोधे भानमिति नियम इति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, द्वयोः शक्तिज्ञानोपस्थाप्यत्वे द्वयोरेव शाब्दबोधविषयत्वौचित्यात्, वृत्त्युपस्थाप्यस्य शाब्दबोधे भाननियमात्, अन्यथा तदुपस्थितेर्वैयर्थ्यप्रसङ्गात्, पदार्थैकदेशे पदार्थान्वयस्याव्युत्पन्नत्वाच्च। योऽपि तेषां तद्दृष्टान्त-प्रदर्शनपरो ग्रन्थः—"अत एव हि शब्दाश्रयत्वविशिष्टशक्तेनाकाशपदेनोपस्थितस्यापि शब्दाश्रयत्वस्य तात्पर्याभावे शुद्धाकाशस्याकाशोऽस्तीत्यादौ बोध इति मणिकाराद्युक्तमुपपद्यत" इति। सोऽप्यसमीचीनः, मणौ तादृशग्रन्थानुपलम्भात्, आकाशादिपदानां शब्दाश्रयत्वादिविशिष्टे मणिकारादिभिः शक्त्यनभ्युपगमादिति न्यायरत्नावलीकृद्भिरुक्तत्वात्। तथा च सिद्धान्तबिन्दुटीकायां न्यायरत्नावल्याम्—"शक्तिवादे हि मणावुक्तमाकाशादिपदस्य शब्दाश्रयत्वादिविशिष्टे न शक्तिः, कदाचिदष्टद्रव्यान्यद्रव्यत्वरूपेणाप्याकाशादिपदाच्छाब्दबोधोत्पत्तेस्तद्विशिष्टेऽपि शक्त्यापत्तेः, एकस्यामाकाशव्यक्तौ केवलायामेव शक्तिसम्भवाच्चे"ति।

नन्वेवं घटो नित्य इत्यादौ विशेषणपरेऽपि पदे लक्षणा न स्यात्, एकदेशपरत्वस्योभयत्र तुल्यत्वात्, शक्त्यैव घटत्वमात्रोपस्थितौ तत्र नित्यत्वान्वय-सम्भवादित्यत आह—**यत्रे**ति। **स्वातन्त्र्येण** विशेष्यतया। **लक्षणा**भ्युपगम इति। घटपदाद् वाच्यैकदेशयोर्घट-घटत्वयोरुपस्थिति-साम्येऽपि स्वातन्त्र्येण विशेष्यतयोपस्थितिर्विशेषणान्वयानुकूलाया आकांक्षायाः सम्पादिका, विशेषणस्य विशेष्यसाकांक्षत्वाद् विशेष्यस्य च विशेषणसाकांक्षत्वात्। विशेषणतयोपस्थितिस्तु न तादृशाकांक्षायाः सम्पादिका, विशेषणस्य विशेषणान्तरान्वये निराकांक्षत्वात्। न च वाच्यैकदेशस्य घटत्वस्य विशेष्यतयोपस्थितिरिति वाच्यम्, शक्तिज्ञाने तस्य विशेषणत्वात्, शक्तिज्ञान-विशेषणस्योपस्थितावपि विशेषणत्वनियमात्, समानप्रकारकत्वेनैव शक्तिज्ञानस्य पदार्थोपस्थितिं शाब्दबोधञ्च प्रति हेतुत्वात्। अतः स्वातन्त्र्येणोपस्थितये लक्षणा स्वीकर्त्तव्येति भावः। तत्रोदाहरणमाह—**यथे**ति। **घटत्वे** लक्षणेति। यद्यपि घटपदशक्तिज्ञानाद् घटत्वमुपस्थितम्, तथापि न तद् विशेष्यतया, किन्तु विशेषणतया, घटपदं घटत्वविशिष्टशक्तमित्याकारकशक्तिज्ञाने

**तत्त्वमसीति वाक्येऽपि न लक्षणा, शक्त्या स्वातन्त्र्येणोपस्थितयोस्तत्-त्वम्-पदार्थयोरभेदान्वये बाधकाभावात्। अन्यथा गेहे घटः, घटे रूपं, घटमानये-त्यादौ घटत्व-गेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां**

घटत्वस्य विशेषणत्वात्, शक्तिज्ञाने विशेषणीभूत-विषयस्य पदार्थोपस्थितौ शाब्दबोधे च विशेषणत्वनियमात्। अतो घटो नित्य इत्यत्र नित्यत्वान्वयस्य विशेष्यसाकांक्षत्वादन्यस्य च योग्यस्य विशेष्यस्यात्राभावाद् घटपदेन विशेष्यतया घटत्वस्योपस्थित्यर्थं घटत्व-लक्षणाऽऽश्रितेति भावः। दृष्टान्तदृष्टन्यायं दार्ष्टान्तिकेऽतिदिशति—**एवमेवे**ति। शक्त्यैव विशेष्यमात्रोपस्थितावन्वयनिर्वाहादेवेत्यर्थः। कथं तदन्वयनिर्वाह इत्यत आह—**शक्त्ये**ति। **बाधका**भावादिति। विरुद्धयोर्विशिष्टयोरभेदान्वय-बाधेऽपि तत्त्वम्पदोप-स्थाप्ययोः स्वरूपचैतन्ययोरैक्यान्वये बाधकाभावात्, आकांक्षादीनां सत्त्वादिति भावः। ननु लक्षणाप्रयोजकस्य शक्यैकदेशपरत्वस्योभयत्र तुल्यत्वादुभयत्रैव लक्षणा युक्ता; नैकत्र, विनिगमकाभावादित्यत आह—**अन्यथे**ति। विशेष्यपरेऽपि लक्षणा-स्वीकारे इत्यर्थः। **आनयेत्यादा**वित्यादिपदेन मृदङ्गं वादयेत्यादिवाक्यपरिग्रहः। **घटत्व**गेहत्वादेरित्यादि-पदेन घटत्व-रूपत्वादेर्घटत्वानयनादेश्च परिग्रहः। **अभिमता**न्वयबोधायोग्यतयेति। तात्पर्यविषयान्वयबोधायोग्यतयेत्यर्थः। गेहे घट इति वाक्यं गेहवृत्तिघटतात्पर्यकम्, प्रकृत्यर्थगेहस्य सप्तम्यर्थवृत्तित्वे तस्य च प्रथमान्त-घटपदोपस्थाप्ये घटेऽन्वयस्य वक्तुरभि-प्रेतत्वात्। एवं घटे रूपमिति वाक्यं घटवृत्तिरूप-तात्पर्यकम्। एवं घटमानयेति वाक्यमपि घटकर्मकानयनतात्पर्यकम्। तत्र तद्वाक्यघटकेन घटपदेन घटमात्रोपस्थितावेव तात्पर्य-विषयीभूतस्य गृहवृत्तित्वस्य तत्रान्वयो घटते, तस्य तत्साकांक्षत्वात्, न तु घटत्वे, तस्य घटवृत्तित्वेन गृहावृत्तितया तन्निराकांक्षत्वात्। तन्मात्रोपस्थितौ च तत्पदमपि विशेष्य-मात्रपरं भवेत्। तस्य च तत्परत्वं लक्षणयैवोपपन्नं स्यात्, न शक्त्येति तत्रापि लक्षणाऽ-ङ्गीकार्या, विशेष्यमात्रपरेऽपि पदे भवद्भिर्लक्षणाया अङ्गीक्रियमाणत्वात्। न च कैश्चित् तत्र लक्षणाङ्गीक्रियते। तत् कस्मात्? विशेष्यतया शक्त्युपस्थितेनैव घटादिना गृहवृत्ति-त्वादेरन्वयसम्भवात्। एवं सोऽयमित्यादिवाक्येऽप्यन्वयसम्भवान्न तत्र लक्षणा स्वीकार्या, अभेदान्वययोग्यस्य देवदत्तस्वरूपस्य विशेष्यतयैव शक्त्योपस्थितत्वात्। घटो नित्य इत्यादिवाक्यन्तु नित्याभिन्नघटत्वतात्पर्यकम्, घटत्वे नित्याभेदस्य वक्तुरभिप्रेतत्वात्, घटस्यानित्यतया नित्यत्वान्वयायोग्यत्वात्। तस्य च तत्परत्वं तद्वाक्यघटकेन घटपदेन

**विशेष्यमात्रपरत्वे लक्षणैव स्यात्। तस्मात् तत्-त्वमसीति वाक्ये आचार्याणां लक्षणोक्तिरभ्युपगमवादेन बोध्या। जहदजहल्लक्षणोदाहरणन्तु काकेभ्यो दधि रक्ष्यतामित्यादिकमेव। तत्र शक्य-काकत्व-परित्यागेनाऽशक्य-दध्युपघातकत्व-पुरस्कारेण काकेऽकाके च काकशब्दस्य प्रवृत्तेः।**

**लक्षणाबीजन्तु तात्पर्यानुपपत्तिरेव, न त्वन्वयानुपपत्तिः, काकेभ्यो दधि रक्ष्यतामित्यत्रान्वयानुपपत्त्यभावात्, गङ्गायां घोष इत्यादौ तात्पर्यानुपपत्तेरपि**

शक्त्या घटत्वस्य विशेष्यतयैवोपस्थितावुपपद्यते, नान्यथा। न च शक्त्या घटत्वस्य विशेष्यतयोपस्थितिः, शक्तिज्ञाने तस्य प्रकारत्वात्। न वा विशेष्यतयोपस्थिते घटेऽभेदान्वयः, अनित्यतया तस्य तदन्वयायोग्यत्वात्। तस्माद् घटपदलक्षणयैव घटत्वं विशेष्यतयोपस्थापनीयमिति तत्र लक्षणा स्वीक्रियते, एकदेशपरत्वसाम्येऽपि विशेष्यतयाऽनुपस्थितेर्विनिगमनाया अत्रैव विद्यमानत्वादिति भावः। नन्वेवं तत्त्वमसीत्यादौ लक्षणानङ्गीकारे आचार्याणां लक्षणोक्तेः का गतिरित्यत आह—**तस्मा**दिति। तत्त्वमसीत्यादौ लक्षणाया अनावश्यकत्वादित्यर्थः। **अभ्युप**गमवादेनेति। विशेषपरीक्षार्थोऽपरीक्षिताभ्युपगमोऽभ्युपगमवादस्तेनेत्यर्थः। स्वमतेन जहदजहल्लक्षणोदाहरणमाह—**जहद**जहदिति।

नन्वेवं लक्ष्योपस्थितिः कादाचित्की न स्यात्, स्वबोध्यसम्बन्धस्य यत्र कुत्रचित् सर्वदैव सत्त्वादित्यत आह—**लक्षणा**बीजन्त्विति। लक्षणाज्ञानबीजन्त्वित्यर्थः। **तात्पर्या**नुपपत्तिरेवेति। तात्पर्यानुपपत्तिप्रतिसन्धानमित्यर्थः। तथा च तात्पर्यानुपपत्तिप्रतिसन्धानस्य कादाचित्कत्वात् तज्जन्यस्य लक्षणाज्ञानस्य कादाचित्कत्वम्। लक्षणाज्ञानस्य कादाचित्कत्वात् तज्जन्याया लक्ष्योपस्थितेः कादाचित्कत्वम्। तेन स्वबोध्यसम्बन्धरूपाया लक्षणाया यत्र कुत्रचित् सर्वदा सत्त्वेऽपि न तस्य सर्वदोपस्थितिरिति भावः। अन्वयानुपपत्तिर्लक्षणाबीजमित्यालङ्कारिकमतं निराकुर्वन्नेवकार-व्यावर्त्यमाह—**न त्वि**ति। तत्र हेतुमाह—**काकेभ्य** इति। **अनुप**पत्त्यभावादिति। यद्यन्वयानुपपत्तिर्लक्षणाबीजं स्यात्, काकेभ्यो दधि रक्ष्यतामित्यत्र काकपदस्य दध्युपघातके लक्षणा न स्यात्, तत्कारणस्यान्वयानुपपत्तेस्तत्राभावात्, पदार्थानामन्योन्यान्वये बाधकाभावात्। अस्ति च तत्र लक्षणा। तस्मादन्वयानुपपत्तिर्न लक्षणाबीजम्, किन्तु तात्पर्यानुपपत्तिरेव। काकपदस्य मुख्यार्थपरिग्रहे तु तात्पर्यं नोपपद्यते, दध्युपघातकेभ्यः सर्वेभ्यो दधिरक्षायास्तात्पर्य-विषयत्वादिति भावः। नन्वेवं सति गङ्गायां घोष इत्यत्र लक्षणा न स्यात्,

**सम्भवात्। लक्षणा च न पदमात्रवृत्तिः, किन्तु वाक्यवृत्तिरपि। गभीरायां नद्यां घोष इत्यत्र गभीरायां नद्यामिति पदद्वयसमुदायस्य तीरे लक्षणा।**

तात्पर्यानुपपत्तेस्तत्राभावात्। अस्ति तु तत्रान्वयानुपपत्तिः। सैव तद्बीजमस्तु, अन्यथैकत्र तात्पर्यानुपपत्तेरन्यत्र चान्वयानुपपत्तेर्लक्षणाबीजत्वकल्पनायां गौरवं स्यादित्यत आह— **गङ्गायामि**ति। **इत्यादा**वित्यादिपदेन नद्यां घोष इत्यादिवाक्यपरिग्रहः। **तात्पर्या**नुपपत्तेरपीति। गङ्गायां घोष इति वाक्यं हि गङ्गातीरवृत्ति-घोषतात्पर्यकम्, तद्बोधस्यैव तत्र वक्तुरभिप्रेतत्वात्। तत्तात्पर्यञ्च मुख्यार्थपरिग्रहे नोपपद्यते, आभीरपल्लीरूपे घोषपदशक्ये घोषे गङ्गापदशक्यस्य प्रवाहविशेषस्यान्वयायोगात्। तस्मात् तत्राप्यस्ति तात्पर्यानुपपत्तिः, सैव लक्षणाबीजम्, लाघवादिति भावः। तात्पर्यज्ञानोपायश्चाग्रे दर्शयिष्यते।

इयं लक्षणा पदमात्रवृत्तिर्न तु वाक्यवृत्तिः, शक्तिशून्यस्य वाक्यस्य शक्याभावेन शक्यसम्बन्धानुपपत्तेरिति नैयायिका मन्यन्ते, तान् प्रत्याह—**लक्षणा** चेति। वाक्यलक्षणामुदाहरति—**गभीरा**यामिति। नन्वत्र पदलक्षणैव, न वाक्यलक्षणेति चेन्न, पदलक्षणया वाक्यार्थबोधानुपपत्तेः। तथा हि—गभीरायां नद्यां घोष इति वाक्यं हि गभीराभिन्ननदीतीरवृत्ति-घोषतात्पर्यकम्। तच्च तात्पर्यं लक्षणयैवोपपद्यते, न शक्त्या, घोषस्य नद्याधेयत्वायोग्यत्वात्। तत्र यदि नदीपदस्य नदीतीरे लक्षणा स्यात्, गभीरपदार्थस्य तत्रान्वयो न स्यात्, तीरस्यागभीरत्वात्। न च तदेकदेशे नद्यां तस्यान्वयः, तस्या पदार्थैकदेशत्वात्, पदार्थैकदेशे पदार्थान्वयस्याव्युत्पन्नत्वात्, पदार्थः पदार्थेनान्वेति न तु तदेकदेशेनेति नियमात्, ससम्बन्धिकस्थले तादृशव्युत्पत्त्यनङ्गीकारेऽप्यसम्बन्धिकस्थले तादृशव्युत्पत्तेरावश्यकत्वात्, अन्यथा 'ऋद्धस्य राजमातङ्गा' इत्यादीनां प्रामाण्यप्रसङ्गात्, राजपदलक्ष्यैकदेशे राज्ञि ऋद्धस्याभेदान्वयसम्भवात्। न च गभीरपदस्य गभीरनदीतीरे लक्षणा, नद्यामित्यस्य वैयर्थ्यप्रसङ्गात्, सप्तम्याश्चाबोधकत्वप्रसङ्गात्, प्रत्ययानां स्वप्रकृत्यर्थान्वित-संख्याद्यतिरिक्त-स्वार्थबोधकत्व-नियमात्, गभीरायाः सप्तमीप्रकृतिकत्वाभावात्, तस्या नदीप्रकृतिकत्वात्। नापि नदीपदस्य गभीरनदीतीरे लक्षणा, गभीरायामित्यस्य वैयर्थ्यप्रसङ्गात्, नद्यां घोष इत्यादावपि तथाविधलक्षणाप्रसङ्गात्, अविशेषात्। न च तात्पर्यग्राहकतया तस्य सार्थक्यमिति वाच्यम्, पदस्य तात्पर्यग्राहकत्वे प्रमाणाभावात्। तस्मात् पदलक्षणया वाक्यार्थबोधानुदयात् वाक्यलक्षणैवाङ्गीकार्येत्याह—**पदद्वयसमु**दायस्येति। वाक्यस्येत्यर्थः। साकांक्षपदसमूहस्यैव वाक्यत्वा-

**ननु वाक्यस्याशक्ततया कथं शक्यसम्बन्धरूपा लक्षणा ? उच्यते। शक्त्या यत् पदसम्बन्धेन ज्ञाप्यते, तत्सम्बन्धो लक्षणा। शक्तिज्ञाप्यश्च यथा पदार्थस्तथा वाक्यार्थोऽपीति न काचिदनुपपत्तिः। एवमर्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये लक्षणा। सोऽरोदित्यादि-निन्दार्थवादानां निन्दितत्वे लक्षणा। अर्थवादगत-पदानां प्राशस्त्ये लक्षणाभ्युपगमे एकेन पदेन लक्षणया**

दिति भावः। **तीरे** गभीरनदीतीरवृत्तित्वे। न च घोषादौ तादृशतीरवृत्तेरभेदान्वयो न स्यात्, नामार्थयोरभेदान्वये नाम्नः समानविभक्तिकत्वस्य तन्त्रत्वादिति वाच्यम्, भेदान्वयाङ्गीकारात्, घोषादौ तादृशवृत्तित्वस्याश्रयत्वेनान्वयाभ्युपगमात्।

नन्वेवमपि वाक्यलक्षणा न स्यात्, वाक्यस्य शक्त्यभावेन शक्याभावादित्याशङ्कते—**नन्विति**। आशङ्कां निराकरोति—**उच्यत** इति। **शक्त्येति**। पदसम्बन्धेन शक्त्या यद् ज्ञाप्यते बोध्यते, तत्सम्बन्धो लक्षणेत्यर्थः। तथा च स्वबोध्यसम्बन्धत्वं लक्षणाया लक्षणं पर्यवसितम्। तच्च पदवाक्योभयसाधारणम्, वाक्यलक्षणायाः प्रामाणिकत्वात् तत्साधारणलक्षणस्यैव वक्तव्यत्वात्। न तु शक्यसम्बन्धत्वं, वाक्यलक्षणायामव्याप्तेः। तथाचोक्तमाचार्यैरद्वैतसिद्धेरखण्डार्थत्वोपपत्तौ—"स्वज्ञाप्यसम्बन्धरूपा तु लक्षणा यौगिकपदसमुदायेऽपि वाक्यस्थानीये नानुपपन्ने"तीति भावः। ननु पदार्थस्य स्वज्ञाप्यत्वेऽपि वाक्यार्थस्य स्वज्ञाप्यत्वाभावात् कथं तत्सम्बन्धरूपा लक्षणा वाक्ये स्यादित्यत आह—**वाक्यार्थोऽपीति**। शक्त्या साक्षाज् ज्ञाप्यः पदार्थः, वाक्यार्थस्तु परम्परया पदार्थप्रतिपादनद्वारा। तथा चोक्तं वार्त्तिककारमिश्रैः—न विमुञ्चति सामर्थ्यं वाक्यार्थेऽपि पदानि नः। वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थितिः। साक्षाद् यद्यपि कुर्वन्ति पदार्थप्रतिपादनम्। वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले॥ वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम्। पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम्॥ इति। वाक्यलक्षणाया वैदिकोदाहरणमाह—**एवमिति**। वाक्यलक्षणासिद्धावित्यर्थः। **अर्थवाद**वाक्यानां विध्यपेक्षितस्तुतिनिन्दान्यतर-प्रतिपादकानां सा जीववत्सा बहुक्षीरेत्यादिकानां लौकिकानां वायुर्वै क्षेपिष्ठा देवतेत्यादिकानां वैदिकानां वाक्यानाम्। **प्रशंसा**रूपाणाम् प्रशंसार्थप्रतिपादकानाम्। **प्राशस्त्ये** विध्यपेक्षित-कर्मप्राशस्त्ये। **निन्दितत्वे** निषेधापेक्षित-निषेध्यनिन्दितत्वे। नन्वर्थवादवाक्यघटकपदविशेषे एव लक्षणा स्यान्न पुनर्वाक्ये इत्यत आह—**अर्थवादेति**। **प्राशस्त्ये** इति। विधेयप्राशस्त्ये इत्यर्थः, निन्दितत्वस्याप्युपलक्षणमेतत्।

**तदुपस्थिति-सम्भवे पदान्तर-वैयर्थ्यं स्यात्। एवञ्च विध्यपेक्षित-प्राशस्त्यरूप-पदार्थ-प्रत्यायकतयाऽर्थवाद-पदसमुदायस्य पदस्थानीयतया विधिपदेनैक-वाक्यत्वं भवतीत्यर्थवाद-वाक्यानां पदैकवाक्यता। क तर्हि वाक्यैकवाक्यता?**

**पदान्तर**वैयर्थ्यमिति। एकेनैव पदेन लक्ष्यार्थप्रतीत्युपपत्तौ पदान्तराणामबोधकतयाऽप्रामाण्यप्रसङ्ग इति भावः। वाक्यलक्षणायां पदैकवाक्यतां प्रमाणयति—**एवञ्चे**ति। वाक्यलक्षणासिद्धौ चेत्यर्थः। **विध्य**पेक्षितेति। प्रवर्त्तनारूपो हि विधिः स्वविधेये पुरुषं प्रवर्त्तयितुं प्रवृत्तोऽपि प्रवर्त्तयितुं न शक्नोति, विधेयस्य दुःखरूपत्वात्, निष्फले दुःखैकफले वा प्रेक्षावतां प्रवृत्त्यदर्शनात्। अत एव हि विधिः स्वविधेयस्य बलवदनिष्टाननुबन्धित्वरूपं प्राशस्त्यमपेक्षमाणः साकांक्ष एवास्ते। अर्थवादोऽपि स्वार्थं प्रतिपादयन्नप्यक्रियार्थतयाऽपुरुषार्थोऽप्रामाण्यमापद्यमानः पुरुषार्थसाधकं कञ्चिदर्थमुदीक्षमाणः साकांक्ष एवावतिष्ठते। तथा चाह—"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि"ति। तदनयोः साकांक्षयोर्विध्यर्थवादयोर्विधेयप्राशस्त्यद्वारेण नष्टाश्वदग्धरथवत् परस्परमन्वये भवत्येकवाक्यता। सा च प्रसिद्धा। एवं निषेधस्थलेऽपि बोध्यम्। तद् यदि प्राशस्त्यमर्थवादो नावबोधयेत्, विधिना त्वेकवाक्यता न स्यात्, अप्रामाण्यञ्चापद्येत। तस्मात् स्वप्रामाण्यनिर्वाहाय तेनापि प्राशस्त्यप्रतिपादकेन भवितव्यम्। तस्य च तत्प्रतिपादकत्वं न शक्त्या, तत्र तच्छक्त-पदाभावात्, किन्तु लक्षणयैवेति सिद्धा वाक्यलक्षणेति भावः। नन्वस्तु वाक्यलक्षणा, तथाप्यर्थवादानां कथं विध्येकवाक्यतेत्यत आह—**पदार्थ**प्रत्यायकतयेति। नन्वस्त्वेकवाक्यता, तथापि कथं पदैकवाक्यता, अर्थवादस्य वाक्यत्वादित्यत आह—**पदस्थानीय**तयेति। यथा हि प्राशस्त्यपदं प्राशस्त्यरूपं पदार्थं बोधयति, तद्वदर्थवादोऽपीति तस्य वाक्यस्यापि सतो पदकार्यकारित्वेन पदस्थानीयता, अतस्तदेकवाक्यता पदैकवाक्यतेति भावः। **विधिपदेन** विधिवाक्येन। **एकवाक्यत्वम्** एकार्थबोधकत्वं, द्वयोः साकांक्षयोः परस्पर-सम्बन्धादिति भावः। तथा च शावरभाष्यं—"पदानां साकांक्षत्वाद् विधेस्तुतेश्चैकवाक्यत्वं भवती"ति। **पदैकवाक्यते**ति। विधिनेत्यादिः। साकांक्षस्यैव वाक्यार्थबोधकस्य वाक्येनैकवाक्यतायां वाक्यैकवाक्यता, पदार्थबोधकस्य तु पदैकवाक्यतेति नियमादिति भावः। नन्वेकवाक्यत्वं द्विविधं पदैकवाक्यत्वं वाक्यैकवाक्यत्वञ्च। अर्थवादानाञ्चेद् वाक्यानां सतां पदैकवाक्यता, क्वापि वाक्यैकवाक्यता न स्याद्, विषयाभावादित्याशङ्क्य प्रसङ्गाद् वाक्यैकवाक्यतां निरूपयितुं पृच्छति—**क तर्ही**ति।

**यत्र प्रत्येकं भिन्न-भिन्न-संसर्ग-प्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महा-वाक्यार्थ-बोधकत्वम्, तत्र वाक्यैकवाक्यता। यथा दर्शपौर्णमासाभ्यां स्वर्ग-कामो यजेतेत्यादि-वाक्यानां समिधो यजतीत्यादिवाक्यानां च परस्परा-पेक्षिताङ्गाङ्गिभाव-बोधकतयैकवाक्यत्वम्। तदुक्तं भट्टपादैः—**

वाक्यानां सतामर्थवादानां पदैकवाक्यत्वे वाक्यैकवाक्यता न स्याद्, विषयाभावात्, तथा चैकवाक्यता-द्वैविध्यस्य विलोपप्रसङ्ग इति जिज्ञासाभिप्रायः। वाक्यैकवाक्यताया विषयं दर्शयति—**यत्रे**ति। **प्रत्येक**मिति। परस्परनैरपेक्ष्येणेति शेषः। **संसर्ग**प्रति-पादकयोः खण्डवाक्यार्थ-बोधकयोः। **आकाङ्क्षावशेन** परस्परार्थापेक्षया। **महावाक्यार्थ-**बोधकत्वम् अखण्डैकवाक्यार्थ बोधकत्वम्। नन्वेवमपि वाक्यैकवाक्यता निर्विषया स्यात्, महावाक्यार्थबोधस्य खण्डवाक्यार्थ-बोधपूर्वकत्वानियमात्, खलेकपोत-न्यायेन युगपत् सर्वपदार्थानामन्योन्यसंसर्ग-सम्भवात्, लौकिकेषु तथा दर्शनादिति ये मन्यन्ते, तान् प्रति वाक्यैकवाक्यताया असन्दिग्धं वैदिकं वाक्यमुदाहरति—**यथे**ति। **यजेते**त्या-दीति। आदिपदेनाग्निहोत्रं जुहोतीत्यादिवाक्यपरिग्रहः। **यजती**त्यादिपदेन दध्ना जहोति, पयसा जुहोतीत्यादिवाक्य-परिग्रहः। उदाहृतवाक्यानामेकवाक्यत्वे हेतुमाह—**परस्परापे-**क्षितेति। यस्माद् दर्शपौर्णमासवाक्यं प्रयाजाद्यपेक्षिताङ्गिबोधकम्, यस्माच्च प्रयाजवाक्यं दर्शपौर्णमासापेक्षिताङ्गबोधकम्, तस्मात् तयोरेकवाक्यत्वमित्यर्थः। **एकवाक्यत्व**मिति। यजेतेत्यत्राख्यातेन यागविषयक-पुरुषप्रयत्नरूपार्थीभावनोपस्थाप्यते, यजेतेत्याख्यात-श्रवणे एव यागविषये यत्नं कुर्वीतेति प्रतीतेर्जायमानत्वात्। सा चार्थीभावनाऽंश-त्रयमपेक्षते साध्यं साधनमितिकर्त्तव्यताञ्च। तत्राधिकारिविशेषण-स्वर्गान्वयेन स्वर्गं भावयेदित्यनेन साध्याकांक्षा निवर्त्तते। साधनाकांक्षा तु धातूपस्थाप्य-यागदानादिकर्मान्वयेन निवर्त्तते, कर्मस्वरूपमात्रबोधके उत्पत्तिविधौ कर्मणां करणत्वेनान्वयात् योगेन भावयेदिति। कथं भावयेदित्याकारा प्रकाररूपेतिकर्त्तव्यताकांक्षा तु नैव निवर्त्तते, इतिकर्त्तव्यताभूतस्य कस्यचिदर्थस्य तदा तत्रानन्वयात्, तदानीं तस्यानुपस्थितत्वात्। तेन सोपकारमुदीक्षमाणा साकांक्षैवास्ते उपकारान्वयमलभमाना। तस्याश्चेतिकर्त्तव्यताकांक्षायां यत् सन्निधौ पठितमश्रूयमाणफलकं कर्मजातं, तदेवेतिकर्त्तव्यतात्वेनान्वययोग्यं, तेषां विहितोपकारक-तयाऽङ्गत्वात्, फलवत्सन्निधावफलं तदङ्गमिति न्यायात्। एवं समिधो यजतीत्यत्र यागेन भावयेदित्याकारकेण यागान्वयेन करणाकांक्षायां निवर्त्तितायामपि किं भावयेदिति

**स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया।**
**वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥**

**इति। एवं द्विविधोऽपि पदार्थो निरूपितः। तदुपस्थितिश्चासत्तिः। सा च शाब्दबोधे हेतुः, तथैवान्वय-व्यतिरेक-दर्शनात्। एवं महावाक्यार्थ-बोधेऽवान्तरवाक्यार्थ-बोधो हेतुः, तथैवान्वयाद्यवधारणात्।**

साध्याकांक्षा नैव निवर्त्तते, तत्र तस्याश्रूयमाणत्वात्। तेन साप्युपकार्यमङ्गिनमपेक्षमाणा साकांक्षैवास्ते। तस्याश्च साध्याकांक्षायां यत् सन्निधौ पठितं श्रूयमाणफलकं कर्म, तदेव साध्याकांक्षयोपकार्यत्वेनान्वयं भजते। सोऽयमुपकार्योपकारकभावान्वय एवाङ्गाङ्गिभावान्वयः। न चैष खलेकपोतन्यायाधीनः, खण्डवाक्यार्थबोधानन्तरं जायमानयाऽऽकांक्षयाऽङ्गाङ्गिभावावगमात्, किन्तु तदुभयवाक्यार्थबोधाधीनः। तथा च वाक्यद्वयमन्योन्यापेक्षितमर्थं प्रतिपाद्य परस्पराकांक्षया मिलित्वैकवाक्यतां प्रतिपद्यते। तदेव वाक्यानामेकवाक्यत्वं वाक्यैकवाक्यत्वमिति भावः। तत्र भट्टोक्तिं प्रमाणयति—**तदुक्त**मिति। **भट्टपादैः** कुमारिलभट्टपादैः। **स्वार्थे**ति। **स्वार्थबोधे** स्वस्वार्थबोधे **समाप्तानां** पर्यवसितानां, कृतस्वार्थबोधानामिति यावत्। **वाक्यानां** खण्डवाक्याना**मङ्गाङ्गित्वाद्यपेक्षया**ऽङ्गाङ्गिभावाद्याकांक्षयाऽर्थवादादौ स्तव्यस्तावकभावाद्यपेक्षया **पुनः संहत्य** मिलित्वै**कवाक्यत्वं जायत** इति श्लोकार्थः। तथा च यथा वाक्यघटकपदानि स्वस्वार्थप्रतिपादनानन्तरं परस्पराकांक्षया मिलित्वा वाक्यभावं प्रपद्यते। तद्वद् महावाक्यघटकानि खण्डवाक्यानि स्वस्वार्थबोधानन्तरं परस्पराकांक्षया पुनः सम्भूय महावाक्यत्वं प्रतिपद्यते। तदेव वाक्यानां वाक्यैकवाक्यत्वमिति भावः। पदार्थनिरूपणमुपसंहरति—**एव**मिति।

पदार्थनिरूपणस्योपयोगं दर्शयन्नासत्तेः शाब्दबोधहेतुत्वं प्रमाणयितुं स्मारयति—**तदुपस्थितिरि**ति। वृत्त्या पदजन्य-पदार्थोपस्थितिरित्यर्थः। तथा चासत्तिसम्पादनाय पदार्थनिरूपणम्, तद्घटितत्वादासत्तेरिति भावः। आसत्तेः शाब्दबोधहेतुत्वे प्रमाणमाह—**तथैवे**ति। आकांक्षाद्यन्वयव्यतिरेकवदित्यर्थः। **अन्वय**व्यतिरेकेति। आसत्तिसत्त्वे शाब्दबोधसत्त्वमासत्त्यसत्त्वे शाब्दबोधासत्त्वमित्येवमासत्त्यन्वयव्यतिरेकनिश्चयादित्यर्थः। तत्र तदितरयावत्कारणसत्त्वे तत्सत्त्वे तत्सत्त्वमन्वयः। तदितरयावत्कारणसत्त्वे तदसत्त्वे तदसत्त्वं व्यतिरेकः। प्रथमद्वितीयतत्पदं कारणत्वाभिमतपरम्। तृतीयन्तु कार्यपरम्। नन्वेवमपि शाब्दबोध-सामान्ये नासत्तिर्हेतुः, खण्डवाक्यार्थबोधे तस्या हेतुत्वेऽपि खण्ड-

**क्रमप्राप्तं तात्पर्यं निरूप्यते। तत्र तत्प्रतीतीच्छयोच्चरितत्वं न तात्पर्यम्, अर्थज्ञान-शून्येन पुरुषेणोच्चरिताद् वेदादर्थाभान-प्रसङ्गात्, अयमध्यापकोऽव्युत्पन्न इति विशेषदर्शनेन तात्पर्य-भ्रमस्याप्यभावात्। न चेश्वर-तात्पर्य-ज्ञानात्**

वाक्यार्थबोधजन्ये महावाक्यार्थबोधे जनकजनकत्वेन तस्या अन्यथासिद्धत्वादित्याशंकामिष्टापत्त्या परिहरन् महावाक्यार्थबोधकारणं दर्शयति—**एवमि**ति। यथा शाब्दबोधे आकाङ्क्षादिकं कारणम्, तथेत्यर्थः। **अवान्तर**वाक्यार्थेति। खण्डवाक्यार्थेत्यर्थः। तथा च महावाक्यार्थबोधं प्रति नासत्तिर्हेतुः, तद्धेतुभूत-खण्डवाक्यार्थबोधं प्रति हेतुभूतायास्तस्या जनक-जनकत्वेनान्यथासिद्धत्वादिति भावः।

एतेन यदत्र परिभाषाप्रकाशिकाकृताम्—आसत्तिर्द्विविधा, पदजन्यपदार्थोपस्थितिरित्यादि व्याख्यानम्, तन्मूलविरोधाद् गौरवादासत्तेरन्यथासिद्धत्वाच्चोपेक्षणीयम्।

खण्डवाक्यार्थबोधस्य महावाक्यार्थबोधहेतुत्वे हेतुमाह—**तथैवे**ति। आसत्त्यन्वयव्यतिरेकवदित्यर्थः। **अन्वयादी**ति। अवान्तरवाक्यार्थबोधसत्त्वे महावाक्यार्थबोधसत्त्वमित्येवंरूपेणान्वयव्यतिरेक-निश्चयादित्यर्थः। आदिपदेन व्यतिरेकपरिग्रहः।

तात्पर्यं निरूपयितुं प्रतिजानीते—**क्रमप्राप्त**मिति। आकाङ्क्षायोग्यतासत्तयस्तात्पर्यज्ञानञ्चेति पाठक्रम-प्राप्तमित्यर्थः। नैयायिकास्तावत् तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यमाहुः, तन्मतमपाकर्तुमुपक्रमते—**तत्रे**ति। नैयायिकाद्युक्तेषु तात्पर्यलक्षणेषु इत्यर्थः। **तत्**प्रतीतीच्छयेति। वक्ता हि परत्र स्वबोध-सदृश-बोधोत्पत्तयेऽस्माद् वाक्यादयमर्थो बोद्धव्य इत्याकारिकेच्छया वाक्यमुच्चारयति। तत्र वाक्यस्यैतदर्थप्रतीतीच्छयोच्चारणाद् यच्छ्रोतुस्तत्प्रतीतीच्छयोच्चरितत्वावधारणम्, तादृशं तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यमिति भावः। तस्यातात्पर्यत्वे हेतुमाह—**अर्थज्ञान**शून्येनेति। **वेदात्** वाक्यात्। एतल्लिखितश्लोकादेरप्युपलक्षणम्, तेषामनुच्चारणात् तत्र तत्प्रतीतीच्छयोच्चरितत्वाभावादिति भावः। **अर्थाभाने**ति। यस्य हि वाक्यार्थबोधस्तस्य तत्प्रतीतीच्छया तद्वाक्योच्चारणम्। यस्य तु वाक्यार्थज्ञानमेव नास्ति, तस्य तत्प्रतीतीच्छयोच्चारणं नैव सम्भाव्यते। तेन तत्र तत्प्रतीतीच्छयोच्चरितत्वरूप-तात्पर्याभावेन श्रोतुस्तद्वाक्यादर्थबोधो न स्यात्। भवति च तस्मात् तदर्थबोधस्तस्मात् तत्प्रतीतीच्छयोच्चरितत्वं न तात्पर्यमिति भावः। ननु तत्र तत्प्रतीतीच्छयोच्चरितत्वरूप-तात्पर्याभावेऽपि श्रोतुस्तद्भ्रमादर्थबोधः, तात्पर्यज्ञानस्यैव शाब्दबोधहेतुत्वात्, श्रोतुश्च तत्सम्भवादित्यत आह—**अयमि**ति। **अव्युत्पन्नः** तद्वाक्या-

**तत्र शाब्दबोध इति वाच्यम्, ईश्वरानङ्गीकर्त्तुरपि तद्वाक्यार्थ-प्रतिपत्ति-दर्शनात्। उच्यते। तत्प्रतीति-जनन-योग्यत्वं तात्पर्यम्। गेहे घट इति वाक्यं गेहे घटसंसर्ग-प्रतीति-जनन-योग्यम्, न तु पटसंसर्ग-प्रतीति-जनन-योग्यमिति तद्वाक्यं घटसंसर्गपरम्, न तु पट-संसर्गपरमिति व्यपदिश्यते।**

**ननु सैन्धवमानयेत्यादि-वाक्यं यदा लवणानयन-प्रतीतीच्छया प्रयुक्तम्, तदाप्यश्वसंसर्ग-प्रतीति-जनने स्वरूपयोग्यतासत्त्वाल्लवण-परत्वदशायामप्य-**

र्थज्ञानशून्यः। **विशेष**दर्शनेन विशेषनिश्चयेन, भ्रमविरोध्यव्युत्पत्ति-निश्चयेनेति यावत्। **तात्पर्य**भ्रमस्यापीति। यत्र वक्तुरर्थज्ञान-शून्यत्वं नैवावधारितम्, तत्र तात्पर्यभ्रम-सम्भवेऽपि यत्र वक्तुरर्थज्ञानशून्यत्वमवधारितम्, तत्र तादृशभ्रमज्ञानमपि नैव भवेत्, भ्रमविरोधिनोऽर्थज्ञानशून्यत्व-निश्चयस्य तत्र सत्त्वादिति भावः। ननु तत्र वक्तुस्तात्पर्या-भावेऽपीश्वरस्य तात्पर्यसत्त्वात् तज्ज्ञानाच्छ्रोतुः शाब्दबोधः स्यादित्याशङ्कते—**न चे**ति। **तत्र** अव्युत्पन्नोच्चरित-वेदादिवाक्यस्थले। शङ्कां परिहरति—**ईश्वरा**नङ्गीकर्त्तुरपीति। मीमांसकादेरपीत्यर्थः, तैर्नित्यसर्वज्ञेश्वरानभ्युपगमादिति भावः। किं-लक्षणं तर्हि तात्पर्य-मित्यत आह—**तत्**प्रतीतीति। यदर्थपरत्वं वाक्यस्य साधनीयम्, तत्पदेनात्र तस्यार्थस्य परिग्रहः। तदर्थानुभवजनन-स्वरूपयोग्यत्वमित्यर्थः। लक्ष्ये तल्लक्षणं योजयति—**गेहे** घट इति। **गेहे घट**संसर्गेति। अत्र गेहशब्दाद् गेहस्य सप्तम्या वृत्तित्वस्य घटशब्दाद् घटस्य चोपस्थितौ गेहघटयोः संसर्गस्याधाराधेयभावस्य गेहवृत्ति-घट इत्याकारकस्य बोधो जायते, न तु गेहपटयोः संसर्गस्य। तत् कस्मात्? तद्वाक्यस्य गेहपट-संसर्गानुभव-जननायोग्यत्वादिति भावः। **न तु** पटेति। यदीदं गेहपट-संसर्ग-प्रतीतिजनन-योग्यं स्यात्, तदा गेहवृत्तिपट इत्याकारकोऽपि बोधस्तस्मादुदीयात्। न च तथा। तस्माद् तद्वाक्यं न गेहपटसंसर्गप्रतीति-जननयोग्यमिति भावः। **इति**हेतौ। यस्मात् तद् वाक्यं गेहघटसंसर्गमात्र-प्रतीतिजनन-योग्यम्, तस्मादित्यर्थः। **तद्वाक्यं** गेहे घट इति वाक्यम्। **व्यपदिश्यते** व्यवह्रियते। नन्विदं लक्षणं नैव युक्तम्, नानार्थक-पदघटित-वाक्यानामेकार्थपरत्व-दशायामन्यार्थपरत्वापातात्, अन्यार्थप्रतीति-जननयोग्यताया-स्तदापि तत्र सत्त्वात्, तद्व्यवहारापाताच्चेत्याशङ्कते—**नन्वि**ति। **इत्यादी**त्यादिपदेन श्वेतो धावतीत्यादि-वाक्यपरिग्रहः। **यदा** भोजनकाले। **लवणा**नयन प्रतीतीच्छया लवणानयनमात्र-प्रतीतीच्छया। **प्रयुक्तम्** उच्चारितम्। **तदाऽपि** लवणानयनमात्र-

**श्वादि-संसर्गज्ञानापत्तिरिति चेन्न, तदीतर-प्रतीतीच्छयाऽनुच्चरितत्वस्यापि तात्पर्यं प्रति विशेषणत्वात्। तथा च यद् वाक्यं यत्प्रतीति-जनन-योग्यत्वे सति तदन्यप्रतीतीच्छयाऽनुच्चरितम्, तद् वाक्यं तत्संसर्गपरमित्युच्यते। शुकादिवाक्येऽव्युत्पन्नोच्चरित-वेदवाक्यादौ च तत्प्रतीतीच्छाया एवाभावात् तदन्यप्रतीतीच्छयोच्चरितत्वाभावेन लक्षण-सत्त्वान्नाव्याप्तिः। न चोभय-**

परत्व-समयेऽपि। **योग्यता**सत्त्वादिति। सैन्धवशब्दस्याश्ववाचित्वादिति भावः। शङ्का-परिहाराय लक्षणे विशेषणान्तरमाह—**तदितरे**ति। अत्र तत्पदेन लक्षणघटक-तत्पदो-पस्थाप्यस्य परामर्शः। **तात्पर्यं** प्रति तात्पर्यलक्षणे। **विशेषणत्वादि**ति। तथा च यदि सैन्धवमानयेति वाक्यमश्वानयनसंसर्गपरं स्यात्, तदाश्वान्य लवण-प्रतीतीच्छयोच्चरितं न स्यात्, भवति चाश्वान्य-लवणप्रतीतीच्छयोच्चरितम्। तेन तन्नाश्वानयनसंसर्गपरमिति भावः। एवञ्च—तत्प्रतीतिजननयोग्यत्वे सति तदन्यप्रतीतीच्छयानुच्चरितत्वमिति तात्-पर्यलक्षणं फलितम्। तत्र यदि तदन्यप्रतीतीच्छयानुच्चरितत्वमात्रं लक्षणं स्यात्, तदा-निरर्थके उन्मत्तोच्चरित-वाक्ये जरद्गवादिवाक्य वाऽतिव्याप्तिः स्यात्, तस्य तस्य वाक्यस्य कस्यचिदप्यर्थस्य प्रतीतीच्छयानुच्चारणात् तदन्यप्रतीतीच्छयानुच्चरितत्वस्य तत्र सत्त्वात्। अतस्तदतिव्याप्तिवारणाय—विशेषणदलम्। तथा च नातिव्याप्तिः, तत्र तदन्य-प्रतीतीच्छयाऽनुच्चरितत्व-सत्त्वेऽपि तत्प्रतीतिजननयोग्यत्वाभावात्। पर्यवसितलक्षणं दर्शयन्नतिव्याप्तिं परिहरति—**तथा चे**ति। एवं विशेषण-विवक्षायाञ्चेत्यर्थः। **यत्-प्रतीती**ति। वाक्यस्य यदर्थपरत्वं साधनीयम्, यत्पदेन तदर्थस्य परामर्शः। **तदन्ये**ति। अत्र तत्पदेन लक्षणघटक-यदर्थस्य परामर्शः। एवञ्च भोजनदशायां लवणानयन-मात्र-तात्पर्यके सैन्धवमानयेति वाक्ये नातिव्याप्तिः, तत्र लवणानयनप्रतीति-जननयोग्यत्वस्य लवणेतराश्वानयन-प्रतीतीच्छयानुच्चरितत्वस्य च सत्त्वात्, तद्वाक्यस्य लवणानयनमात्र-प्रतीतीच्छयोच्चरितत्वादिति भावः। ननु भोजनदशायां सैन्धवमानयेति वाक्यमश्वानयन-प्रतीतीच्छया नोच्चरितमिति कथमवगम्यते? प्रकरणादित्यवेहि, भोजनवेलायामश्वा-नयनस्य निष्प्रयोजनत्वादिति भावः। शुकादिवाक्ये लक्षणं योजयन्नव्याप्तिं परिहरति—**शुकादि**वाक्ये इति। नाव्याप्तिरित्यग्रेतनेनान्वयः। अव्याप्त्यभावे हेतुमाह—**प्रतीतीच्छाया** इति। **तदन्य**प्रतीतीति। यद्धि वाक्यं कस्यचिदर्थस्य प्रतीती-च्छयोच्चरितम्, तद्धि तदन्यार्थप्रतीतीच्छयापि कदाप्युच्चरितं भवेत्। यस्य तूच्चारणे

**प्रतीतीच्छयोच्चरितेऽव्याप्तिः, तदन्यमात्र-प्रतीतीच्छयाऽनुच्चरितत्वस्य विवक्षितत्वात्। उक्त-प्रतीति-जनन-योग्यतायाश्चावच्छेदिका शक्तिः। अस्माकं तु मते सर्वत्र कारणतायाः शक्तेरेवाऽवच्छेदकत्वादिति न कोऽपि दोषः।**

कस्यचिदेकस्याप्यर्थस्य प्रतीतीच्छैव नास्ति, तस्य तदन्यार्थ-प्रतीतीच्छयोच्चरितत्वं नैव सम्भवेत्, तदन्यार्थस्याप्यर्थान्तर्भूतत्वादिति भावः। **लक्षण**सत्त्वादिति। तत्प्रतीति-जननयोग्यत्व-समानाधिकरणस्य तदन्यार्थप्रतीतीच्छाप्रयोज्योच्चरितत्वाभावस्य तात्पर्य-लक्षणस्य तत्र विद्यमानत्वादित्यर्थः। नन्वेवमप्युभयार्थ-प्रतीतीच्छयोच्चरिते श्लिष्ट-वाक्ये तात्पर्यलक्षणस्याव्याप्तिः, तद्वाक्यस्य तदितरार्थप्रतीतीच्छयोच्चारणात् तत्र तदितरप्रतीतीच्छयोच्चरितत्व-सत्त्वेन तदितरप्रतीतीच्छयानुच्चरितत्वाभावादित्याशङ्कते—**न चोभये**ति। अव्याप्तिं परिहरति—**तदन्यमात्रे**ति। **मात्र**शब्देन तदर्थस्य व्यवच्छेदः। **विवक्षित**त्वादिति। लक्षणघटक-तदितरपदेनेति भावः। तथा च तदितरपदस्य तदितरमात्रार्थकत्वे एकार्थतात्पर्यके उभयार्थतात्पर्यके च वाक्ये तात्पर्यलक्षणस्य नाव्याप्तिः, तेषां तत्प्रतीतीच्छयोच्चारणात् तत्र तदन्यमात्र-प्रतीतीच्छयोच्चरितत्वाभावादिति भावः। एवञ्च—तत्-प्रतीतिजननयोग्यत्वे सति तदितरमात्रप्रतीतीच्छयाऽनुच्चरितत्वमिति लक्षणं पर्यवसितम्।

वस्तुतस्तु यत्र वाक्यस्योभयार्थपरत्वम्, तत्र तत्पदेनोभयार्थस्य परामर्शः, सर्वनाम्नो बुद्धिस्थ-वाचकत्व-नियमात्, तदितरपदेन चोभयार्थातिरिक्तस्यार्थस्य परामर्शः। तथा च नाव्याप्तिः, तद्वाक्यस्य तदितरार्थस्य तदुभयार्थातिरिक्तस्यार्थस्य प्रतीतीच्छयाऽनुच्चारणात् तत्र तत्प्रतीतिजननयोग्यत्वस्य तदितरप्रतीतीच्छयानुच्चरितत्वस्य तात्पर्यलक्षणस्य सत्त्वात्। तस्मान्मात्रपदनिवेशबीजं सुधीभिर्विभावनीयम्।

ननु योग्यतावच्छेदकज्ञानं हि योग्यतावधारण-कारणम्। न चात्र योग्यतावच्छेदक-ज्ञानम्, तद्विषयस्य योग्यतावच्छेदकस्य दुर्निरूप्यत्वात्। न च वाक्यत्वं योग्यताव-च्छेदकम्, अतिप्रसक्तेः। नापि तत्प्रतीतीच्छयोच्चरितत्वम्, शुकादिवाक्येऽव्याप्तेः। नापि तदन्यप्रतीतीच्छयानुच्चरितत्वम्, तदप्रतिसन्धानेऽपि तत्प्रतीतीच्छयोच्चरितत्वज्ञाने वाक्यार्थबोधोदयादित्यत आह—**उक्तप्रती**तीति। ननु जनकनिष्ठ-धर्मविशेषस्यैव जनन-योग्यतावच्छेदकत्वं युक्तम्, अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वात्। शक्तिस्तु नैवम्, तस्य पदवृत्तित्वात्। तत् कथमुच्यते शक्तिरवच्छेदिकेत्यत आह—**अस्माकं** त्विति। अद्वैतिनां मते त्वित्यर्थः। **कारणतायाः** इत्यस्यावच्छेदकत्वादित्यग्रेतनेनान्वयः। **शक्तेः**

**एवं तात्पर्यस्य तत्प्रतीतिजनकत्वरूपस्य शाब्दज्ञान-जनकत्वे सिद्धे चतुर्थ-वर्णके तात्पर्यस्य शाब्दज्ञान-हेतुत्व-निराकरण-वाक्यं तत्प्रतीतीच्छयोच्चरितत्वरूप-तात्पर्यनिराकरणपरम्। अन्यथा तात्पर्य-निश्चय-फलक-वेदान्त-विचार-वैयर्थ्य-प्रसङ्गात्।**

कारणगतायाः कार्यानुकूलाया अतिरिक्तायाः शक्तेः। **न दोषः** नाननुगमः, शक्तेरेकरूपत्वात्; न वा गौरवम्, प्रामाणिकत्वादिति भावः।

नन्वेवं तात्पर्यलक्षणे सत्यपि तज्ज्ञानस्य शाब्दबोधहेतुत्वं भवद्भिर्नैवाभ्युपगन्तव्यम्, विवरणविरोधात्, तत्र तात्पर्यज्ञानस्य शाब्दबोधहेतुत्व-निराकरणात्। तथा च विवरणम्—"तस्मात् पदानामेव संसर्गप्रतिपादन-सामर्थ्यात् मुख्यलक्षणाद्वारेण प्रमाणान्तराविरुद्धे संसर्गे प्रतिपन्ने दोषान्तरनिमित्त-संशयविपर्ययादि-ज्ञाननिराकरणाय तात्पर्यावगम" इति। तत् कथं तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वमङ्गीकृतमित्याशंक्य विवरणग्रन्थमन्यथा व्याचष्टे—**एवमि**ति। प्रागुक्तरीत्येत्यर्थः। **तात्पर्यस्य** तात्पर्यज्ञानस्य। **सिद्धे** अन्वयव्यतिरेकाभ्यां निश्चिते। **चतुर्थवर्णके** प्रथमसूत्रीयशाङ्करभाष्य-टीकायाः पञ्चपादिकायाः व्याख्यानभूतस्य विवरणस्य चतुर्थवर्णके। **निराकरण**वाक्यमिति। किं तात्पर्यमर्थप्रमितिहेतुः किंवा प्रतिबन्धनिरासहेतुरित्यादि-वाक्यमित्यर्थः। **तत्प्रतीती**ति। तत्प्रतीतीच्छयोच्चरितत्व-लक्षणस्य तात्पर्यस्य शाब्दबोधहेतुत्वं नास्तीत्येतत्परमित्यर्थः। तथा च विवरणे यत् तात्पर्यस्य शाब्दबोधहेतुत्व-खण्डनम्, तन्नास्मदुक्ततात्पर्यविषयम्, तच्छाब्दबोधहेतुताया प्रामाणिकत्वात्, प्रामाणिकस्य निषेधायोगात्। किन्तु पुरुषाभिप्रायरूपतात्पर्यविषयम्। तथा चोक्तं तद्व्याख्याने तत्त्वदीपने—"पुरुषाभिप्रायस्तात्पर्यम्, तदर्थप्रमितिजनकमित्यर्थः। विकल्पासहत्वान्नैतन्मतं साध्वित्याहे"ति। तस्मान्नास्माकं विवरणकृद्भिर्विरोध इति भावः। ननु तात्पर्यसामान्यस्यैव शाब्दबोधाहेतुत्वं विवरणकृद्भिरुपपादितम्, न तु तात्पर्यविशेषस्य। तत्कथमुच्यते ईदृशस्य तात्पर्यस्य शाब्दबोधहेतुत्वं निराकृतम्, नेदृशस्येत्यत आह—**अन्यथे**ति। तात्पर्यस्य शाब्दबोधहेतुत्वानङ्गीकारे इत्यर्थः। **तात्पर्य**निश्चयेति। तात्पर्यनिश्चयः फलं यस्य, स तात्पर्यनिश्चयफलकः, स चासौ वेदान्त-विचारश्चेति तात्पर्यनिश्चयफलक-वेदान्त-विचारस्तस्य वैयर्थ्यप्रसङ्गादिति विग्रहः। यदि तात्पर्यनिश्चयः सफलो भवेत्, तर्हि तात्पर्यनिश्चयार्थं वेदान्तवाक्यविचारः कर्त्तव्यः स्यात्। न च तात्पर्यनिश्चयः सफलः, फलाभावात्, क्लृप्तस्य

**केचित् तु शाब्दज्ञानत्वावच्छेदेन न तात्पर्यज्ञानं हेतुरित्येवंपरं चतुर्थवर्णकवाक्यम्। तात्पर्य-संशय-विपर्ययोत्तर-शाब्दज्ञानविशेषे च तात्पर्यज्ञानं हेतुरेव, इदं वाक्यमेतत्परमुतान्यपरमिति तात्पर्यसंशये तद्विपर्यये** शाब्दबोधस्य तात्पर्यफलत्वानभ्युपगमात्, अन्यस्य चाक्लृप्तत्वात्। निष्फले तु तात्पर्यनिश्चये वेदान्तविचारोऽपि फलतो निष्फलः स्यात्, निष्फलस्यैव तात्पर्यनिश्चयस्य तत्फलत्वात्। न च वेदान्तवाक्यविचारो निष्फलः, श्रोतव्यविधिना तद्विचारस्य विहितत्वात्, निष्फलस्य विधानायोगात्। तस्मात् तात्पर्यविशेषस्य शाब्दबोधाहेतुत्वेऽपि तात्पर्यविशेषस्य शाब्दबोधहेतुत्वमभ्युपगन्तव्यमिति भावः।

वस्तुतस्तु वाक्यार्थबोधस्य तात्पर्यज्ञानफलत्वं नैवोपपद्यते, विषयभुत-वाक्यार्थस्य तात्पर्यविशेषणस्यावगतौ तद्विशिष्ट-तात्पर्यावगतिः, तात्पर्यावगतौ वाक्यार्थावगतिरित्यन्योन्याश्रयात्, तस्य नियतपूर्ववृत्तित्वाभावात्, अस्माद् वाक्यादर्थद्वयविषयको बोधो तात्पर्यं तु क्वेति न जानीम इति सर्वजनीनानुभवदर्शनात्, पय आनीयतामित्यादावर्थबोधोत्तरं दुग्धं जलं वेति श्रोतुः प्रश्नदर्शनात्, विवरणकृद्भिस्तात्पर्य-संशयविपर्ययादि-निरासस्य स्पष्टं तात्पर्यफलत्व-प्रतिपादनाच्च। न च वेदान्तवाक्यविचार-वैयर्थ्यम्, सफल-तात्पर्यावगमाय तस्य सार्थक्यात्, तात्पर्यावगमस्य च पुरुषदोषकृत-तात्पर्यसंशय-विपर्यय-निरासफलकत्वात्। विस्तरस्तु विवरणे चतुर्थवर्णके द्रष्टव्यः।

अत्राभेदरत्नकारस्य मतमाह—**केचिदि**ति। **शाब्द**ज्ञानत्वावच्छेदेन समस्तशाब्दबोधं प्रति। **न हेतु**रिति। क्वचिच्छाब्दबोधानन्तरं तात्पर्यावगमात् तस्य नियतपूर्ववृत्तित्वाभावादिति भावः। **इत्येवं**परम् एतत्-तात्पर्यकम्। तत् किमकारणम्? तथा च वेदान्तवाक्यविचारवैयर्थ्यम्। नेत्याह—**तात्पर्ये**ति। संशयश्च विपर्ययश्च संशयविपर्ययौ, तात्पर्यस्य संशयविपर्ययौ तात्पर्य-संशयविपर्ययौ, तयोरुत्तरो यः शाब्दज्ञानविशेषस्तस्मिन्निति विग्रहः। **हेतुरे**वेति। तथा चाज्ञात-तात्पर्यक-शब्देभ्योऽर्थप्रतिपत्तौ पुंदोषात् तात्पर्यसंशये तद्विपर्यये वोत्पन्ने विचाराधीन-तात्पर्यनिश्चयेन च तन्निवृत्तेऽर्थनिश्चयो जायते नान्यथेति सिद्धं तात्पर्यावगमस्य तत्संशयादिनिवृत्तिद्वारा शाब्दज्ञान-हेतुत्वम्। एवञ्च वेदान्तवाक्यविचारस्यापि न वैयर्थ्यं, तात्पर्यावगमाय तस्यावश्यकत्वादिति भावः। शाब्दज्ञानविशेषे तात्पर्यज्ञानस्य हेतुत्वे हेतुमाह—**इदं वाक्यमि**ति। **एतत् परम्** एतदर्थ-तात्पर्यकम्। **तद्विपर्यये** एतद्वाक्यमेतत्-परमेव, नैतत्-परमित्यात्मके तात्पर्य-

**च तदुत्तर-वाक्यार्थ-निश्चयस्य तात्पर्य-निश्चयं विनाऽनुपपत्तेरित्याहुः।**

**तच्च तात्पर्यं वेदे मीमांसा-परिशोधित-न्यायादेवावधार्यते। लोके तु प्रकरणादिना। तत्र लौकिक-वाक्यानां मानान्तरावगतार्थतयाऽनुवादकत्वम्। वेदे तु वाक्यार्थस्यापूर्वतया नानुवादकत्वम्। तत्र लोके वेदे च कार्यपराणा-**

विपर्यये। **तदुत्तरे**ति। तात्पर्य-संशय-विपर्ययोत्तरेत्यर्थः। **आहुरि**ति। अनेनैतन्मतेऽस्वारस्यं सूचितम्। तद्बीजन्तु तात्पर्यज्ञानस्य शाब्दसामान्यं प्रति कारणत्वे शाब्दबोधस्तत्कार्यं, शाब्दत्वञ्च तत्कार्यताया अवच्छेदकमिति मूलकृन्मते लाघवम्। अभेदरत्नकारमते तु गौरवम्, संशयविपर्ययोत्तरशाब्दज्ञानस्य कार्यतया तादृश-शाब्दज्ञानत्वस्य शाब्दज्ञानत्वापेक्षया गुरुभूतस्य कार्यतावच्छेदकत्वादिति।

नन्वस्तु तात्पर्यावगमः शाब्दबोधकारणम्। तदवगमस्तु कुत इत्यत आह—**तच्चे**ति। **मीमांसे**ति। मीमांसया विचारेण परिशोधितो निर्दोषतयोपलब्धो यो न्यायो लिङ्गम्, तस्मादित्यर्थः। तच्च लिङ्गं पञ्चावयवात्मकमधिकरणं वोपक्रमादिकं वेत्यन्यदेतत्। लौकिकवाक्यस्य तात्पर्यग्रहोपायमाह—**लोके** त्विति। लौकिकवाक्ये त्वित्यर्थः। **प्रकरणादिने**ति। प्रस्तावादिनेत्यर्थः, आदिपदेन लिङ्गाद्युपसंग्रहः। तथा चोक्तं वाक्यपदीये—वाक्यात् प्रकरणादर्थादौचित्याद्देशकालतः। शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात्॥ इति। केचित् संसर्गादीनामपि तात्पर्यग्राहकत्वमाहुः। तथा च तत्रैव—संसर्गो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥ इति। उदाहरणन्तु तत्रैव मृग्यम्। ननु तात्पर्यज्ञानस्य शाब्दसामान्यहेतुत्वे लौकिकवैदिकवाक्ययोरविशेषः, द्वयोस्तुल्यस्वरूपत्वात् तुल्यफलकत्वात् तुल्यसहकारित्वाच्चेत्याशङ्क्य तयोर्विशेषं दर्शयति—**तत्रे**ति। लौकिकवैदिकवाक्येष्वित्यर्थः। **लौकिक**वाक्यानां पौरुषेयवाक्यानाम्। **मानान्तरे**ति। मानान्तरेण प्रत्यक्षादिनाऽवगतोऽर्थो वाक्यार्थो यस्य तत्तयेति विग्रहः। यस्मात् पौरुषेयवाक्यानामधिगतार्थबोधकत्वं, तस्मादित्यर्थः। **अनुवादकत्वं** गृहीतग्राहकत्वम्, तथा च लौकिकवाक्यानां न मुख्यं प्रामाण्यम्, अनधिगतार्थग्राहकत्वाभावात्। अबाधितार्थकत्वेन तु गौणस्तत्र प्रामाण्यव्यवहारः। एतदभिप्रायेणैव मूलकारा अप्याहुः—यस्य वाक्यस्य तात्पर्यविषयीभूतः संसर्गो मानान्तरेण न बाध्यते, तद्वाक्यं प्रमाणमिति। वेदे तद्वैलक्षण्यमाह—**वेदे** त्विति। वैदिकवाक्ये त्वित्यर्थः। **वाक्यार्थस्य** तात्पर्यविषयीभूतार्थस्य। स चार्थो महावाक्ये लक्षणवाक्ये चाखण्डार्थरूपः,

**मिव सिद्धार्थानामप्यपूर्वतया प्रामाण्यम् , पुत्रस्ते जातः, कन्या ते गर्भिणी-**

अन्यत्र तु पदार्थसंसर्गरूपः संसृष्टपदार्थरूपो वेति भावः। **अपूर्वतया** प्रमाणान्तरेण प्रागननुभूततया। न च सर्वविषयक-ज्ञानवतो भगवतस्तद्वाक्यार्थबोधवत्त्वान्नापूर्वत्वं तेषामिति वाच्यम् , वैदिकानां वाक्यानां तदर्थज्ञानपूर्वकत्वानभ्युपगमात् , युगपदेव तयोर्वाक्यवाक्यार्थबोधयोराविर्भावात्। तथा चोक्तं भामत्यां स्मृत्यधिकरणे—तत्रेश्वरस्य न शास्त्रार्थज्ञानपूर्वा शास्त्रक्रिया, येनास्य कपिलादिवत् स्वातन्त्र्यं भवेत्। शास्त्रार्थज्ञानञ्चास्य स्वयमाविर्भवदपि न शास्त्रकारणतामुपैति, द्वयोरप्यपर्यायेणाविर्भावादिति। न च सर्वज्ञस्य शब्दात् पूर्वं तदर्थाधिगमाभावेऽपि तात्पर्यग्रहदशायां वाक्यार्थस्य तद्विशेषणत्वेनावगतत्वाल्लौकिकानामिव वैदिकानामप्यनुवादकत्वं ज्ञातज्ञापकत्वान्नापूर्वत्वमिति वाच्यम् , सामान्यरूपेण ज्ञातस्य विशेषरूपेणाज्ञातत्ववत् तदर्थस्याज्ञातत्वसम्भवात् , विशेषणरूपेण तदर्थस्याधिगतत्वेऽपि स्वातन्त्र्येणानधिगमात्। **नानुवादकत्वमि**ति। तथा च तद्वाक्यानामनधिगताबाधितार्थबोधकत्वान्मुख्यं प्रामाण्यम्। एवञ्च लौकिकवैदिकयोर्नाविशेष इति भावः।

नन्वेवमपि सिद्धार्थबोधकानां वाक्यानां नैव प्रामाण्यम् , सिद्धार्थस्य स्वातन्त्र्येण प्रमाणान्तरावगतत्वेन तद्वाक्यानामनधिगतार्थबोधकत्वाभावादित्यत आह—**तत्रे**ति। तत्रेत्यस्यार्थमाह—**लोके** वेदे चेति। पौरुषेयेऽपौरुषेये च वाक्ये इत्यर्थः। तत्र लोके इति सम्पातायातम् , तदनुवादकत्वस्य प्रागेवोक्तत्वात्।

यदत्र परिभाषाप्रकाशिकाकृताम्—अपूर्वत्वं द्विविधमेकमननुवादत्वप्रयोजकं परं प्रामाण्यप्रयोजकम्। द्वितीयमनुवादकस्यापि सम्भवत्येवेति देवताधिकरणे भामत्यादावुक्तत्वान्न यथाश्रुतपाठे कोऽपि विरोध इति विरोधसमाधानपरं व्याख्यानं, तद्धेयम्, लौकिकवाक्यानां स्मृतिवत् सापेक्षाणां गृहीतग्राहित्वेन कथमपि प्रामाण्यायोगात् , भामतीभावानवबोधाच्च। अत एवोक्तं कल्पतरौ—नन्वनुवादकार्थवादानामप्रमाणत्वात् कथं विधिभिर्वाक्यैकवाक्यताऽत आह—यत्र त्विति। न स्मृतिवत् सापेक्षत्वं, किन्तु प्रत्यक्षादिभिस्तुल्यविषयत्वम्। न चैतावता भवत्यप्रमाणता, प्रत्यक्षानुमानयोरपि तुल्यविषयत्वात्। प्रमातरि चरमप्रत्ययाधायकत्वादाश्रयस्यानुवादकत्वसिद्धिरिति।

**कार्यपराणामि**ति। कार्यानुकूलकृतिप्रतिपादकानां स्वर्गकामो यजेतेत्यादीनाम्। कार्यार्थस्येवेति शेषः। **सिद्धार्थानां** भूतार्थवादानां, वज्रहस्तः पुरन्दर इत्यादीनाम्, सिद्धार्थस्येति शेषः। **अपूर्वतया** मानान्तरानधिगततया। **प्रामाण्यमि**ति। अनधिगतार्थ-

**त्यादिषु सिद्धार्थेष्वपि पदानां सामर्थ्यावधारणात्। अत एव वेदान्त-** बोधकत्वादिति भावः। नन्वेवं स्याद्, यदि शब्दानां सिद्धार्थबोधकत्वं स्यात्, तदेव तु न सम्भवति, सिद्धार्थेषु शक्तिग्रहासम्भवात्, कार्यार्थस्यैव तदुपायत्वात्। तथा हि सर्व-पुरुषाणामाद्या व्युत्पत्तिस्तावद् वृद्धव्यवहाररूपादनुमानाद् भवत्येवेत्यविवादम्। अगृहीत-शक्तिको बालो घटमानयेति प्रयोजकवृद्धवाक्यं शृण्वन् प्रयोज्यवृद्धञ्च घटमानयन्तमव-लोकयन् इदं घटानयनं घटानयनविषयक-प्रवृत्तिजन्यं चेष्टात्वात्, मदीयचेष्टावदित्यनु-मानाद् घटानयनानुकूलां प्रयत्नरूपां प्रवृत्तिमनुमाय, सा घटानयनानुकूला प्रवृत्तिर्ज्ञानजन्या प्रवृत्तित्वात्, मदीयप्रवृत्तिवदिति प्रवृत्तिकारणीभूतञ्च ज्ञानमनुमाय, तज्ज्ञानं घटमानयेति वाक्यजन्यं तद्वाक्यान्वयव्यतिरेकानुविधायित्वादिति तज्ज्ञानस्योक्तवाक्यजन्यत्वमनु-मिनोति। ततः पुनर्घटं नय पटमानयेति शब्दश्रवणानन्तरं प्रयोज्यवृद्धस्य घटनयन-पटा-नयन-गोचरां प्रवृत्तिं दृष्ट्वा पदान्तरयोगत्यागरूपावापोद्वापाभ्यां घटपदं घटे शक्तमानयपद-मानयनक्रियायां शक्तमिति शक्तिं गृह्णाति। न चैवं सिद्धार्थेषु कश्चिच्छक्तिग्रहोपायोऽस्ति, परपुरुषगतस्य सिद्धार्थबोधस्यानुमापकाभावात्। कार्यार्थप्रत्ययस्य तु प्रवृत्तिनिवृत्ती स्तो हेतू। तस्मात् सिद्धार्थेषु शक्तिग्रहासम्भवाद् वेदान्तानां तद्बोधकत्वमेव नास्ति, कुतः प्रामाण्यमित्याशङ्कायामाह—**पुत्रस्ते** इति। **इत्यादि**ष्वित्यादिपदेन चेत्रं ते पक्वशस्य-मित्यादि-वाक्यपरिग्रहः। **सामर्थ्यावधारणा**दिति। हर्षविषादादिभिः शक्त्यवधारणा-दित्यर्थः। अयमाशयः—यथा कार्यार्थपराद् वाक्यादाद्या व्युत्पत्तिस्तथैव सिद्धार्थपरादपि भवितुमर्हति, हर्षादिहेतोस्तत्रापि विद्यमानत्वात्। तथा हि—अविदितार्यजनभाषार्थो द्रविड़ः पुत्रपदाङ्कित-पटवासप्रदर्शनपुरःसरं पुत्रस्ते जात इत्यादिवार्त्ताहारव्याहारं शृण्वन् मुखप्रसादादिलिङ्गैः श्रोतुर्हर्षाद्युत्पत्तिमनुमिनोति। सा च निमित्तमन्तरेण न सम्भवति। प्रियवस्तुप्रतीतिश्च हर्षहेतुरिति स्वात्मनि प्रतीतम्। ततः पारिशेष्यात् पुत्रजन्माद्येव तद्वाक्य-प्रतिपाद्यमिति व्युत्पित्सुरवगच्छति। ततः प्रतिपदमावापोद्वापाभ्यां विशेषार्थे शक्तिं गृह्णाति। न च हर्षहेतूनां बहूनां सत्त्वादन्यस्य च हर्षहेतोर्ज्ञानसम्भवात् पारिशेष्यासिद्धि-रिति वाच्यम्, हर्षहेत्वन्तरस्य तदाऽनुपस्थितत्वात्, पुत्रपदाङ्कितपटवासप्रदर्शनकालीनाद् वार्त्ताहारव्याहारश्रवणात् पारिशेष्योपपत्तेः। किञ्च मातापित्रादिकृताच्छब्दविशेषोच्चारण-सहितादर्थविशेषाभिमुखाङ्गुलिनिर्देशादप्याद्यव्युत्पत्तिग्रहो बालानां दृश्यते। तथा चोक्तं न्यायमञ्जर्याम्—अंगुल्यग्रेण निर्दिश्य कञ्चिदर्थं पुरःस्थितम्। व्युत्पादयन्तो दृश्यन्ते बाला-

**वाक्यानां ब्रह्मणि प्रामाण्यम्। यथा चैतत्, तथा विषय-परिच्छेदे वक्ष्यते।**

**तत्र वेदानां नित्यसर्वज्ञ-परमेश्वर-प्रणीतत्वेन प्रामाण्यमिति नैयायिकाः।**

नस्मद्विधा अपि ॥ इति। अत एव प्रश्नोत्तर-रूपाण्यपि सिद्धार्थपराणि वाक्यानि लोके दृश्यन्ते कुशलं ते कुशलं ममेति। तस्मात् कार्यार्थेष्विव सिद्धार्थेष्वपि शक्तिग्रहो भवत्येव। तथा च सिद्धार्थपराणामपि वेदानामनधिगतार्थबोधकत्वात् प्रामाण्यं युक्तमिति। नन्वेवमपि ब्रह्मणि वेदान्तानां प्रामाण्यं नैव युक्तम्, तत्र शक्तिग्रहायोगात्, शक्यतावच्छेदकधर्मविशिष्टस्यैव शक्तिविषयत्वात्, ब्रह्मणश्च तद्रहितत्वादित्यत आह—**अत एवे**ति। शक्यतावच्छेदकधर्मरहितेऽपि सिद्धे शक्तिग्रहसम्भवादेवेत्यर्थः। **प्रामाण्यमि**ति। यथा शब्दाश्रयत्वं नाकाशादिपदशक्यम्, तद्विनाप्यष्टद्रव्यान्यद्रव्यत्वादिना कदाचित् तत्पदात् तद्बोधोत्पत्तेः, नानाव्यक्तिष्वनुगतधर्मं विना शक्यत्वग्रहासम्भवेन व्यक्तिनानात्वस्थले एव धर्मशक्यतायाः सार्थक्याच्च। किन्तु तदुपलक्षितव्यक्तिः। तथा त्रिकालाबाध्यत्वाद्युपलक्षितं चित्स्वरूपं सत्यादिपद-शक्यम्। तथा च सत्यादिपदानां वृद्धप्रयोगाच्छक्तिग्रहेण त्रिकालाबाध्यत्वाद्युपलक्षित-चिद्बोधोपपत्तेस्तत्र वेदान्तानां प्रामाण्यं सुस्थितमिति भावः। नन्वेवं निर्गुणब्रह्मपराणां सत्यादिवाक्यानां ब्रह्मणि प्रामाण्येऽपि तत्त्वमस्यादिवाक्यानां नैव प्रामाण्यम्, नाहं ब्रह्मेति प्रत्यक्षविरोधात्। तथा सृष्टिवाक्यानामपि, तेषां सृष्टौ तात्पर्यादित्यत आह—**यथे**ति। **एतत्** प्रामाण्यम्। भवतीति शेषः।

नन्वेवमपि वेदान्तानां नैव प्रामाण्यम्, तत्र भ्रमप्रमादादिपुंदोषाभावस्य प्रामाण्यप्रयोजकस्याभावात्, तेषां पुरुषप्रणीतत्वेन तत्र तद्दोषसम्भवादित्याशङ्क्य नैयायिकाभिमतं प्रामाण्यप्रयोजकं दर्शयति—**तत्रे**ति। वेदप्रामाण्यवादिषु मध्ये इत्यर्थः। **परमेश्वर**प्रणीतत्वेनेति। आप्तप्रणीतत्वेनेत्यर्थः, "तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद् यजुस्तस्मादजायते"त्यादिश्रुतेः, "स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा। शिवाद्या ऋषिपर्यन्ता स्मर्त्तारोऽस्य न कारकाः" ॥ इति स्मृतेश्च वेदस्य परमेश्वरप्रणीतत्वावगमात्, परमेश्वरस्यैव परमाप्तत्वात्। तथा च न्यायसूत्रम्—मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति। तत्र तत्त्वदर्शन-कारुण्य करण-पाटव-तत्त्वचिख्यापयिषात्मकेन प्रामाण्यप्रयोजक-चतुर्विधविशेषणेन विशिष्टो वक्ताप्तस्तेन य उपदेशः क्रियते, स प्रमाणम्। न हि तत्र भ्रमप्रमादादिपुंदोषावकाशः करणापाटवं वा, यथाभूतार्थदर्शित्वात्। नाप्यकारुण्यमचिख्यापयिषा वा कारुणिकत्वादिति भावः।

**वेदानां नित्यत्वेन निरस्त-समस्त-पुंदूषणतया प्रामाण्यमित्यध्वरमीमांसकाः। अस्माकं तु मते वेदो न नित्यः, उत्पत्तिमत्त्वात्। उत्पत्तिमत्त्वञ्च अस्य महतो भुतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इत्यादि-श्रुतेः।**

मतान्तरमाह—**वेदाना**मिति। प्रामाण्यहेतोः पुंदोषाभावस्य हेतुमाह—**नित्यत्वेने**ति। उत्पत्ति-विनाश-रहितत्वेनेत्यर्थः। "वाचा विरूप नित्यये"त्यादिश्रुतेः, "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवे" त्यादिस्मृतेश्च वेदनित्यत्वावगमादिति भावः। ननु क्वचिद् वेदस्य नित्यत्वं श्रूयते, क्वचिच्चानित्यत्वमिति द्वयोर्विरोधादप्रामाण्यमिति चेन्मैवं, मानान्तरोपोद्बलितया बलवत्या नित्यत्वश्रुत्या विरोधादनित्यत्वश्रुतेस्तत्सम्प्रदायप्रवर्त्तकत्वपरत्वौचित्यात्। तथा चाह भगवान् पराशरः—न कश्चिद् वेदकर्त्ता च वेदं स्मृत्वा चतुर्मुखः। तथैव धर्मान् स्मरति मनुः कल्पान्तरान्तरे॥ इति। मत्स्यपुराणे च—अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः। व्यञ्जकः केवलं विप्रा नैव कर्त्ता न संशयः॥ इति। अत एव सत्यपि सम्प्रदायाविच्छेदे कर्त्तुरस्मरणमुपपद्यते। वेदप्रामाण्ये हेतुमाह—**निरस्ते**ति। निरस्तानि अपगतानि समस्तानि पुंदूषणानि भ्रम-प्रमाद-विप्रलिप्सा-करणापाटवादीनि येषु तत्तयेत्यर्थः। न हि कश्चिच्छब्दः स्वभावतो दुष्टोऽप्रामाणं वा, यथाभूतार्थबोधकत्वस्वाभाव्यात्, दोषाणां पुरुषेन्द्रियसमवायित्वात्। यदा तु स पुरुषदोषैर्भ्रमप्रमादादिभिरन्यथान्यथागृहीतशक्तितात्पर्यको विपर्यस्तो भवति, तदा स दुष्टो भवत्यप्रमाणञ्च। न चैते दोषा नित्येषु वेदेषु सम्भवन्ति, तेषामपुरुषतन्त्रत्वात्। तथा चाहुर्वार्त्तिककाराः—"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रते"ति। तथा च नित्येषु वेदेषु प्रामाण्यहेतोः पुंदोषाभावस्य विद्यमानत्वाद् युक्तं तेषां प्रामाण्यमिति भावः। स्वमतमाह—**अस्माकं** त्विति। वेदान्तिनामित्यर्थः। **तु**कारः प्रागुक्तपक्षद्वयात् स्वमतस्य वैलक्षण्यं द्योतयति। तदेव वैलक्षण्यमाह—**न नित्य** इति। मीमांसका हि वेदप्रामाण्ये पुंदोषाभावस्य हेतुत्वं वेदस्य च नित्यत्वमभ्युपगच्छन्ति। वेदान्तिनस्त्वाद्यमङ्गीकुर्वन्तोऽपि शेषं नाङ्गीकुर्वन्तीति द्वयोर्वैलक्षण्यमिति भावः। ननु वाचा विरूप नित्ययेत्यादिश्रुत्याऽनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवेत्यादिस्मृत्या वेदसम्प्रदायाविच्छेदे सत्यस्मर्यमाणकर्त्तृकत्वादिरूपया च युक्त्या वेदस्य नित्यत्वमवगम्यते। तत् कथमुच्यते वेदोऽनित्य इतीत्यत आह—**उत्पत्ति**मत्त्वञ्चेति। **महतः** अपरिच्छिन्नस्य। **भूतस्य** सत्यस्य परमात्मनः। **निःश्वसितमि**ति। निःश्वसितमिवेत्यर्थः, अप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वास-

**नापि वेदानां त्रिक्षणावस्थायित्वम्, य एव वेदो देवदत्तेनाधीतः, स एव मयाधीत्यादि-प्रत्यभिज्ञा-विरोधात्। अत एव गकारादि-वर्णानामपि न क्षणिक-**

वदुत्पन्नत्वादिति भावः। **इत्यादी**त्यादिपदेन "ऋचः सामानि जज्ञिरे" इत्याद्याः श्रुतयो ग्राह्याः। तथा च प्रत्यक्षानुमानादि-बहुप्रमाणान्तरोपोद्वलिततयाऽनित्यत्वश्रुतेर्बलवत्वात् तद्विरोधान्नित्यत्वश्रुतेः प्रलयकालपर्यन्तस्थायित्वपरत्वौचित्यात्, वेदनित्यत्वानुमानस्य विप्रकीर्णश्लोकादौ व्यभिचाराच्च वेदानित्यत्वं युक्तम्। न चानित्येषु वेदेषु नित्यपद-प्रयोगो व्यर्थ इति वाच्यम्, दीर्घकालावस्थायित्व-सूचनार्थत्वात्, अनित्येष्वपि दीर्घ-कालावस्थायिषु नित्यपद-प्रयोगस्य बहुलमुपलम्भादिति भावः। नैयायिकमतात् स्वमतस्य वैलक्षण्यं दर्शयति—**नापी**ति। नैयायिका हि वेदस्यानित्यत्वमभ्युपगच्छन्ति पौरुषेयत्वं क्षणिकत्वञ्च। वेदान्तिनस्त्वनित्यत्वमभ्युपगच्छन्तोऽपि क्षणिकत्वं पौरुषेयत्वञ्च नानु-मन्यन्ते इत्यस्त्येव वैलक्षण्यमिति भावः! **त्रिक्षणा**वस्थायित्वमिति। क्षणिकत्वमित्यर्थः। तन्मते वर्णपदानां क्षणिकतया वाक्यानामपि क्षणिकत्वमिति भावः। तृतीयक्षणवृत्ति-ध्वंस-प्रतियोगित्वं क्षणिकत्वमिति मतेनैतदुक्तम्। तन्निराकरणे हेतुमाह—**य एवे**ति। **प्रत्य-भिज्ञे**ति। वेदस्य क्षणिकत्वेन प्रत्युच्चारणं भिन्नत्वे य एवेत्यादिप्रत्यभिज्ञा न स्यात्, प्रत्यभिज्ञाया एकार्थविषयकत्वात्। न च क्षणिकत्वं प्रत्यक्षम्, येन तद्विरोधात् प्रत्यभिज्ञा बाधिता सादृश्यपरा स्यात्। किन्त्वनुमेयम्। न चानुमानेन प्रत्यभिज्ञाबाधः, तस्योप-जीवकत्वात्, प्रत्यभिज्ञायाश्चोपजीव्य-जातीयत्वात्। न ह्युपजीव्यस्योपजीव्यजातीयस्य वोपजीवकेन बाधो युक्तः, किन्तूपजीव्येनोपजीवकस्य। तस्मादबाधितप्रत्यभिज्ञा-विरोधाद् वेदस्य स्वरूपतो न क्षणिकत्वमिति भावः। ननु मास्तु स्वरूपतो वेदस्य क्षणिकत्वम्, वर्णस्य क्षणिकतया तत्समूहात्मकस्य पदस्य क्षणिकत्वेन तत्समूहात्मकस्य तु वेदस्य क्षणि-कत्वं केन वारणीयमित्याशङ्क्य वर्णानामपि क्षणिकत्वं निराकरोति—**अत एवे**ति। वर्ण-प्रत्यभिज्ञाविरोधादेवेत्यर्थः। न चोत्पन्नः को विनष्टः क इत्याद्युत्पाद-विनाशावगाहि-प्रत्यक्ष-विरोधात् प्रत्यभिज्ञायाः सजातीय-वर्ण-विषयकत्वमस्तु, सैवेयं दीपकलिकेत्यादिवदिति वाच्यम्, वर्णोत्पाद-विनाशप्रतीतेरौपाधिकत्वेन भ्रमत्वात्, ध्वन्युत्पाद-विनाशयोर्वर्णेष्वा-रोपात् तत्प्रतीतेर्ध्वनिविषयतया वर्णविषयत्वानुपपत्तेः प्रत्युच्चारणं वर्णभेदासिद्धौ प्रत्यभि-ज्ञाया जातिविषयकत्व-कल्पनानुपपत्तेः। अन्यथा कादिव्यक्तिभेदाङ्गीकारे दश ककारानु-दचारयच्चैत्र इति प्रत्ययः स्यात्। न स्याद् दशकृत्व उदचारयत् ककारमिति। तथा

**त्वम्, सोऽयं गकार इति प्रत्यभिज्ञा-विरोधात्। तथा च वर्ण-पद-वाक्य-समुदाय-रूपस्य वेदस्य वियदादिवत् सृष्टिकालीनोत्पत्तिकत्वं प्रलयकालीन-ध्वंस-प्रतियोगित्वं च, न तु मध्ये वर्णानामुत्पत्ति-विनाशौ, अनन्त-गकार-कल्पनायां गौरवात्। अनुच्चारण-दशायां वर्णानामनभिव्यक्तिस्तदुच्चारण-रूप-व्यञ्जकाभावान्न विरुध्यते, अन्धकारस्थ-घटानुपलम्भवत्। उत्पन्नो गकार इति प्रत्यक्षं तु सोऽयं गकार इत्यादि-प्रत्यभिज्ञा-विरोधादप्रमाणम्, वर्णा-**

चोक्तं—तेन यत् प्राप्यते जातेस्तद्वर्णादेव लप्स्यते। व्यक्तिलभ्यन्तु नादेभ्य इति गत्वादि-धीर्वृथेति। न च युगपदुदात्तानुदात्तादि-विरुद्धधर्मसंसर्गित्वाद् व्यक्तिभेदसिद्धिरिति वाच्यम्, तत्प्रतीतेर्व्यञ्जकध्वनि-विषयत्वेन भ्रमत्वात्। तथा चोक्तमाचार्यैः—ध्वनि-कृतोऽयं प्रत्ययभेदो न वर्णकृत इति। प्रत्यभिज्ञास्वरूपं दर्शयति—**सोऽयमि**ति। यथोक्त-प्रत्यभिज्ञाविरोधाद् वर्णानामक्षणिकत्वे तत्समूहात्मकस्य पदस्याक्षणिकत्वेन तत्समूहात्मक-वेदस्य सुतरामक्षणिकत्वमिति भावः। ननु भवन्मते वेदो यदि न नित्यो नापि क्षणिक-स्तर्हि कीदृश इत्यत आह—**तथा चे**ति। वेदस्यानित्यत्वेऽक्षणिकत्वे चेत्यर्थः। **वर्णपदे**ति। महावाक्यस्य वर्णपदवाक्यसमुदाय-घटितत्वाद् वेदस्य महावाक्यत्वात् तत्समुदायरूपत्व-मिति भावः। **वियदादि**वदिति। यथा वियदादीनां सर्गादावुत्पत्तिमत्त्वम्, "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति श्रुतेः, यथा चाप्यये विनाशवत्त्वं, "यथाऽक्षराद् विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापि यन्ती"त्यादिश्रुतेः, "वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते" इति विष्णुपुराणोक्तेश्च, तद्वदित्यर्थः। आदिपदेन प्राणादिपरिग्रहः। **मध्ये** सृष्टिप्रलययोर्मध्ये। वर्णानामुत्पत्तिविनाशयोर्बाधकान्तरमाह—**अनन्ते**ति। **गकारे**ति। वर्णेत्यर्थः। ननु सृष्टिप्रलययोर्मध्ये यदि वर्णानां नोत्पत्ति-विनाशौ, तर्हि तेषां सर्वदैवोपलब्धिः स्याद् विद्यमानत्वादित्यत आह—**अनुच्चारणे**ति। तथा चानु-च्चारणदशायां वर्णानां विद्यमानत्वेऽप्यनभिव्यक्तत्वान्नोपलब्धिरिति भावः। तत्र दृष्टान्तमाह—**अन्धकारे**ति। तर्हि वर्णानामुत्पत्तिविनाशप्रतीतेः का गतिरित्यत्राह—**उत्पन्न** इति। **प्रत्यक्ष**न्त्वित्यस्याप्रमाणमित्यग्रेतनेनान्वयः। तदप्रामाण्ये हेतुमाह—**सोऽयमि**ति। **अप्रमाणमि**ति। आरोपितोत्पत्तिविषयत्वात्, वर्णानां ध्वन्यभेदेनावभासनाद् ध्वनि-गतोत्पत्तेर्वर्णेष्वारोपादिति भावः। ननु वर्णोत्पादविनाश-प्रतीतेरप्रामाण्यं नैव युक्तम्, तद्विषयस्य बाधितत्वाभावात्, बाधितविषयकस्यैवाप्रमाणत्वादित्यत आह—**वर्णाभि-**

**भिव्यञ्जक-ध्वनिगतोत्पत्ति-निरूपित-परम्परा-सम्बन्ध-विषयत्वेन प्रमाणं वा। तस्मान्न वेदानां क्षणिकत्वम्।**

**ननु क्षणिकत्वाभावेऽपि वियदादि-प्रपञ्चवदुत्पत्तिमत्त्वेन परमेश्वर-कर्तृकतया पौरुषेयत्वसिद्धावपौरुषेयत्वं वेदानामिति तवापि सिद्धान्तो भज्येतेति चेन्न, न हि पुरुषेणोच्चार्यमाणत्वं पौरुषेयत्वम्, गुरुमतेऽप्यध्यापक-परम्परया पौरुषेयत्वापत्तेः। नापि पुरुषाधीनोत्पत्तिकत्वम्, नैयायिकाभिमत-पौरुषेयत्वानुमानेऽस्मदादिना सिद्धसाधनापत्तेः। किन्तु**

व्यञ्जकेति। वर्णाभिव्यञ्जका ये ध्वनयस्तद्गता योत्पत्तिस्तन्निरूपितो यः परम्परासम्बन्धः स्वाश्रयध्वन्यभिव्यञ्जकत्वरूपस्तद्विषयत्वेनेत्यर्थः। यथा घटादेः समवायेन तादात्म्येन वा कपालादौ प्रतीतिः संयोगेन भूतलादौ कालिकेन च काले, तद्वदुत्पत्तेः साक्षात्सम्बन्धेन ध्वनौ प्रतीतिः स्वाश्रयध्वन्यभिव्यञ्जकत्वसम्बन्धेन तु वर्णेष्विति तत्र तादृशसम्बन्धस्याबाधिततया तदुत्पादप्रतीतेः प्रामाण्यमिति भावः। उपसंहरति—तस्मादिति।

ननु वियदादिवद् वेदस्योत्पत्तिमत्त्वे पौरुषेयत्वापत्तिः, पुरुषविशेषेणेश्वरेणोत्पद्यमानत्वात्। न च वेदः पौरुषेयः, त्वयाऽपि तस्यापौरुषेयत्वाभ्युपगमादिति मीमांसकः शङ्कते—**नन्वि**ति। वेदस्येश्वर-रचितत्वे हेतुमाह—**उत्पत्ति**मत्त्वेनेति। सर्वविषयावभासकस्य सर्वज्ञकल्पस्य वेदस्यासर्वज्ञादुत्पत्तेरसम्भवादिति भावः। वेदस्य पौरुषेयत्वे हेतुमाह—**परमेश्वरे**ति। पुरुषरचितस्यैव पौरुषेयत्वात्, ईश्वरस्य पुरुषरूपत्वादिति भावः। परिहरति—**ने**ति। आपाद्यमानं पौरुषेयत्वं निरूपयन् पराभिमतं पौरुषेयत्वं विकल्प्य परिहरति—**न ही**ति। आद्यविकल्प-निराकरणे हेतुमाह—**गुरुमते**ऽपीति। प्रभाकरमतेऽपीत्यर्थः, मीमांसकमतेऽपीति यावत्। **परम्परये**ति। उच्चार्यमाणत्वाद् वेदस्येति शेषः। द्वितीयविकल्पं निराकरोति—**नापी**ति। तत्र हेतुमाह—**नैयायिके**ति। वेदाः पौरुषेयाः वाक्यत्वात्, भारतादिवाक्यवदिति नैयायिकाभिमतेऽनुमाने इत्यर्थः। **अस्मदादिना** वेदान्तिवर्गेण। **सिद्ध**साधनापत्तेरिति। वेदान्तिनस्तावद् वेदस्योत्पत्तिमङ्गीकुर्वन्तोऽपि पौरुषेयत्वं नानुमन्यन्ते। नैयायिकास्तु तदसहन्तोऽनुमानेन पौरुषेयत्वं साधयन्ति। तत्रानुमाने साध्यं पौरुषेयत्वं यदि पुरुषाधीनोत्पत्तिकत्वरूपं स्यात्, तर्हि सिद्धसाधनं स्यात्, वेदान्तिसिद्धस्य पुरुषाधीनोत्पत्तिकत्वरूपस्य पौरुषेयत्वस्य तैः साधनात्। न च सिद्धसाधनम्। तस्मादन्यादृशं पौरुषेयत्वं वक्तव्यमिति भावः। किंरूपं तर्हि पौरुषेय-

**सजातीयोच्चारणानपेक्षोच्चारण-विषयत्वं पौरुषेयत्वम्। तथा च सर्गाद्य-काले परमेश्वरः पुर्वसिद्ध-वेदानुपूर्वी-समानानुपूर्वीकं वेदं विरचितवान्,**

त्वम्? तत्राह—**किन्त्वि**ति। **सजातीये**ति। यदुच्चारणं सजातीयोच्चारणं नापेक्षते, तत् सजातीयोच्चारणानपेक्षोच्चारणम्, तद्विषयत्वं पौरुषेयत्वमित्यर्थः। साजात्यमत्रानुपूर्व्या बोध्यम्। तथा च यस्य वाक्यस्य समानानुपूर्वीक-वाक्यान्तरोच्चारण-निरपेक्षमुच्चारणम्, तत् पौरुषेयम्। यथा महाभारतादिवाक्यम्। तद्धि समानानुपूर्वीक-वाक्यान्तरोच्चारणनिरपेक्षमुच्चार्यते, तदानुपूर्वीक-महाभारतान्तराद्यभावात्, सापेक्षोच्चारणे फलाभावाच्च। न च शुकप्रोक्त-महाभारतस्य समानानुपूर्वीक-व्यासप्रोक्त-महाभारतोच्चारण-सापेक्षत्वादपौरुषेयत्वमिति वाच्यम्, तयोर्भेदाभावात्। यत् पुनर्वाक्यं नियमेन समानानुपूर्वीक-वाक्यान्तरोच्चारण-सापेक्षमुच्चार्यते, तदपौरुषेयम्। यथा वेदवाक्यम्। तद्धि समानानुपूर्वीक-वाक्यान्तरोच्चारण-सापेक्षमेवोच्चार्यते, पूर्वसर्गसिद्धस्य समानानुपूर्वीक-वेदान्तरस्य सत्त्वात्, महासर्गसमये सर्वज्ञादीश्वरात् पूर्वक्रमसदृश-क्रमवद्-वेदराशेरुत्पन्नत्वात्। तथा चाह मन्त्रवर्णः—यथ पूर्वमकल्पयदितीति भावः। पौरुषेयत्वं निरूप्य वेदस्यापौरुषेयत्वमुपपादयति—**तथा चे**ति। **पूर्वसिद्धे**ति। पूर्वसिद्धा पूर्वसर्गसिद्धा या वेदस्यानुपूर्वी तत्समाना आनुपूर्वी यस्य वेदस्य तादृशमित्यर्थः। तथा च स खलु परमेश्वरः प्रलयसमये समस्तमेव जगत् संहरन् वियदादिवदेव वेदमपि संहरति। महासर्गसमये च तत्तद्वासना-वासितोऽचिन्त्यशक्तिमहामायासहायमापन्नः पूर्वक्रमसदृश-क्रमवद् वेदराशिं पुनः सृजति, तस्य सर्वज्ञत्वादतीतसर्गान्तरगत-वेदस्यापरोक्षसम्भवात्, सर्वशक्तिमत्त्वात् पूर्वपूर्वक्रमानुसरणमात्रेण तत्सदृशक्रमनिर्माणक्षमत्वात्। अत एवेश्वरस्य वेदकर्त्तृत्वं सम्प्रदायप्रवर्त्तकत्वञ्चाव्याहतमिति भावः। नन्वशरीरस्येश्वरस्य कण्ठताल्वादिरहितस्य वर्णोच्चारणासम्भवात् तथाविधरचना नैव युक्तेत्यत आह—**विरचितवानि**ति। तथा चाविग्रहस्यापि तस्य जीवानुग्रहार्थं लीलाविग्रह-ग्रहणेन तदुच्चारणोपपत्तेस्तथाविधरचना युक्ता। तथा चोक्तम्—चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः। उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना॥ इतीति भावः। अभ्युपगम्येदमुक्तम्। वस्तुतस्त्वीश्वरस्य शरीरादिनोपदेष्टृत्वमेव नास्ति। कल्पादिभुवां निरतिशयज्ञानसमृद्धानां हिरण्यगर्भप्रभृतीनां बुद्धावीश्वरानुग्रहाद् यो वेदानामाविर्भावः, स खलु परमेश्वरस्य वेदोपदेष्टृत्वं नाम। इदमेव च यो वै वेदांश्चेति श्रुत्याप्युच्यते। न च तत्रास्ति शरीरेण किञ्चित् कृत्यमिति। तस्मात्

**न तु तद्विजातीयमिति न सजातीयोच्चारणानपेक्षोच्चारण-विषयत्वं पौरुषेयत्वम्। भारतादीनां सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्। एवं पौरुषेयापौरुषेय-भेदेनागमो द्विविधो निरूपितः।**

**इति श्रीमन्महामहोपाध्याय-धर्मराजाध्वरीन्द्र-**
**विरचितायां वेदान्त-परिभाषायाम्**
**आगमपरिच्छेदः**

सिद्धं सर्वज्ञस्येश्वरस्य वेदकर्तृत्वम्। ननु वेदस्येश्वर-प्रणीतत्वे कदाचिदन्यादृशेच्छया-ऽन्यादृशी वेदरचना स्यात्, अपरतन्त्र-चेतनेच्छाया एकरूपत्वे मानाभावात्, लोके तथाऽदर्शनाच्चेत्यत आह—**न त्विति**। **तद्विजातीयं** पूर्वसर्गवेद-विजातीयम्। तथा चापरतन्त्रस्यापीश्वरस्य वेदरचनायां स्वातन्त्र्याभावान्नान्यादृशी रचना, अन्यथा पूर्वक्रम-विजातीय-क्रमवच्छब्दनिर्माणे तादृशशब्दस्यावेदत्वादीश्वरस्य वेदकर्तृत्वं न स्यात्। तथा चोक्तं भट्टपादैः—यत्नतः प्रतिषेध्याः नः पुरुषाणां स्वतन्त्रतेतीति भावः। नन्वेवं भारतादीनामप्यपौरुषेयत्वं स्यात्, तेषामपि पूर्वक्रमसदृश-क्रमविशिष्टतयैवोत्पन्नत्वात्, व्यासादीनां योगजशक्तिबलात् पूर्वक्रमस्य ज्ञानसम्भवात्। न हि व्यासादयो भारतादि-रचनायां पूर्वक्रममन्यथयति। तर्हि पूर्वसर्गे यादृशानुपूर्वीकं भारतादिकं रचितम्, तदुत्तर-सर्गेऽपि तथैवेत्यत आह—**भारतादीनान्त्विति**। **अनपेक्ष्यैवो**च्चारणमिति। अतीते सर्गे व्यासादिप्रणीतेदानीन्तनभारतादिवद् भारतान्तरादिसद्भावे प्रमाणाभावादिति भावः। **इतिर्हेतौ**। **न पौरुषेयत्व**मिति। वेदानां सजातीयोच्चारणानपेक्षोच्चारणाविषय-त्वादिति भावः। आगमप्रकरणमुपसंहरति—**एवमिति**। **आगमः** शब्दप्रमाणम्।

इति श्रीमन्महामहोपाध्याय-द्राविड़-लक्ष्मण-शास्त्रि-पूज्यपाद-शिष्य-
श्रीमन्महामहोपाध्याय-योगेन्द्रनाथ-तर्कसांख्यवेदान्ततीर्थ-
श्रीचरणान्तेवासि-श्रीपञ्चानन-भट्टाचार्य-विरचिते
परिभाषा-संग्रहे आगमपरिच्छेदः

## अर्थापत्तिपरिच्छेदः

**इदानीमर्थापत्तिर्निरूप्यते। तत्रोपपाद्यज्ञानेनोपपादक-कल्पनमर्थापत्तिः। तत्रोपपाद्य-ज्ञानं करणम्। उपपादक-ज्ञानं फलम्। येन विना यदनुपपन्नम्, तत् तत्रोपपाद्यम्। यस्याभावे यस्यानुपपत्तिस्तत् तत्रोपपादकम्। यथा**

क्रमप्राप्तमर्थापत्तिप्रमाणं प्रपञ्चमिथ्यात्वसिद्ध्यनुकूलं निरूपयितुं प्रतिजानीते—**इदानी**मिति। आगमप्रमाणनिरूपणानन्तरमित्यर्थः। **अर्थापत्तिः** प्रमाणरूपार्थापत्तिः। अयमर्थापत्तिशब्दः षष्ठीसमास-बहुव्रीहिसमासाभ्यां फलकरणयोर्वर्त्ततेऽर्थापत्तिः प्रमाणमर्थापत्तिः प्रमा चेति। तत्र प्रमाणनिरूपणस्य प्रमानिरूपणाधीनत्वादादावर्थापत्तिप्रमां निरूपयति—**तत्रे**ति। प्रमार्थापत्ति-प्रमाणार्थापत्त्योर्मध्ये इत्यर्थः। **उपपाद्य**ज्ञानेनेति। पीनत्वादिरूपोपपाद्यज्ञानस्योपपाद्यज्ञानत्वेनैवार्थापत्तिप्रमाजनकत्वम्, तेनोपपाद्यानुव्यवसायादौ नातिव्याप्तिरिति भावः। **उपपाद**ककल्पनं रात्रिभोजनादिरूपोपपादकज्ञानम्। **अर्थापत्तिः** प्रमारूपार्थापत्तिः। प्रमाणरूपार्थापत्तिं निरूपयितुमाह—**तत्रे**ति। उपपाद्यज्ञानोपपादक-ज्ञानयोर्मध्ये इत्यर्थः। **उपपाद्य**ज्ञानम् उपपाद्याकारान्तःकरणवृत्तिः। **करणम्** अर्थापत्तिरूप-प्रमायाः करणमर्थापत्तिप्रमाणम्, उपपाद्याकारवृत्तेर्विषयसम्बन्धरूप-व्यापारवत्त्वादिति भावः। एवञ्चोपपाद्याकारवृत्तेर्विषयसम्बन्धरूप-व्यापारवत्तासम्बन्धेनोपपादकज्ञानरूपार्थापत्ति-प्रमाजनकत्वादर्थापत्ति-प्रमाणत्वं सिद्धम्। **उपपादक**ज्ञानम् उपपाद्यसमानाधिकरणस्योपपादकस्य ज्ञानम्। **फलं** प्रमा। सामान्यतः उपपादकज्ञानसिद्धावप्युपपाद्याधिकरणव्यक्तिविशेषवृत्तितया तदसिद्धेस्तस्य फलत्वौचित्यादिति भावः। उपपाद्य-स्वरूपं दर्शयति—**येन विने**ति। यदभावादित्यर्थः। **तदि**ति। प्रथमान्त-तत्पदेन प्रथमान्त-यत्पदोपस्थाप्यस्य परामर्शः। **तत्रे**ति। तादृशस्थले इत्यर्थः, उपपादकज्ञानदशायामिति यावत्। एतेन—उपपादकाभाव-व्यापकीभूताभाव-प्रतियोगित्वमुपपाद्यत्वमिति तल्लक्षणमायातम्। यत्रोपपादकाभावस्तत्रोपपाद्याभाव इत्युपपादकाभावस्य व्याप्यत्वमुपपाद्याभावस्य च व्यापकत्वं बोध्यम्। उपपादकस्वरूपमाह—**यस्याभाव** इति। यस्य व्यापकीभूतस्यार्थस्याभावे इत्यर्थः। **यस्यानुपपत्तिरि**ति। यस्य व्याप्यस्यार्थस्यानुपपत्तिरित्यर्थः, व्यापकाभावाद् व्याप्याभाव इति नियमादिति भावः। **तदि**ति। प्रथमान्त-तत्पदेन प्रथम-यत्पदोपस्थाप्यस्य व्याप्यभूतस्यार्थस्य परामर्शः।

**रात्रिभोजनेन विना दिवाऽभुञ्जानस्य पीनत्वमनुपपन्नमिति तादृश-पीनत्व-मुपपाद्यम्। यथा च रात्रिभोजनस्याभावे तादृश-पीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकम्। रात्रिभोजन-कल्पना-रूपायां प्रमितावर्थस्यापत्तिः कल्पनेति षष्ठीसमासेनार्थापत्तिशब्दो वर्त्तते। कल्पनाकरण-पीनत्वादि-ज्ञानेऽर्थस्यापत्तिः कल्पना यस्मादिति बहुव्रीहि-समासेन वर्त्तत इति फल-करणयोरुभयोस्तत्पद-प्रयोगः।**

**सा चार्थापत्तिर्द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति। तत्र दृष्टार्था-**

**तत्रे**ति। तादृशस्थले इत्यर्थः। एतेन—उपपाद्याभाव-व्याप्यभूताभाव-प्रतियोगित्व-मुपपादकत्वमिति तल्लक्षणं पर्यवसितम्। उपपाद्यलक्षणं योजयति—**यथे**ति। पीनत्व-प्रत्यक्षदशायामिदं दृष्टार्थापत्तेरुदाहरणम्। पीनत्वश्रवणदशायान्तु श्रुतार्थापत्तेः, "पीनो दिवा न भुङ्क्ते चेत्येवमादिवचः-श्रुतौ। रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते"॥ इति वार्त्तिकोक्तेरितीति भावः। उपपाद्य-लक्षण-घटकं येन विनेत्येतद् योजयति—**रात्रि-भोजनेन विने**ति। यदनुपपन्नमित्येतद् योजयति—**दिवाऽ**भुञ्जानस्येति। षष्ठ्यर्थो निष्ठत्वम्। तथा च दिवाऽभुञ्जाननिष्ठमित्यर्थः। **पीनत्वं** स्थौल्यम्। **अनुपपन्नमि**ति। दिवारात्रं भोजनाभाववतः पुरुषस्य स्थौल्यायोगादिति भावः। **इति**र्हेतौ। **तादृश-**पीनत्वं दिवाऽभुञ्जाननिष्ठं पीनत्वम्, दिवाऽभुञ्जानत्व-समानाधिकरण-पीनत्वमिति यावत्। उपपादकलक्षणं योजयति—**यथा चे**ति। तथा च दिवाभोजनाभाववतो यदि रात्रि-भोजनं न स्यात्, तदा तस्य पीनत्वं न स्यात्, व्यापकाभावे व्याप्यस्थित्यनुपपत्तेः। दृश्यते च पीनत्वम्। अतस्तस्य रात्रिभोजनं कल्पनीयम्। तेन कल्पनीय-रात्रिभोजनेन पीनत्व-स्योपपत्तौ रात्रिभोजनाभावे च पीनत्वस्यानुपपत्तौ पीनत्वमुपपाद्यं रात्रिभोजनञ्चोपपादक-मिति भावः। ननूपपादकज्ञानस्य फलस्यार्थापत्तित्वे तस्यैवार्थापत्तिशब्देन व्यवहारः स्यान्न प्रमाणान्तरस्येत्यर्थापत्तिः प्रमाणान्तरं न स्यादित्याशङ्क्य फलकरणयोरेकपदप्रयोग-मुपपादयति—**रात्रि**भोजनेति। **अर्थस्य** रात्रिभोजनादेः। आपत्तिशब्दस्य विवरणमाह—**कल्पने**ति। **कल्पना**करणेति। उपपादक-कल्पनायाः करणं यत् पीनत्वादिज्ञानम्, तस्मिन्नित्यर्थः। **तत्पद**-प्रयोग इति। अर्थापत्तिपद-प्रयोग इत्यर्थः।

अर्थापत्तिं विभजते—**सा चे**ति। **दृष्टार्था**पत्तिः दृष्टेन शब्देतर-प्रमाण-प्रमितेना-र्थेनापत्तिरदृष्टस्यार्थस्य कल्पना। तथा चोक्तं श्लोकवार्त्तिके—प्रमाणषट्कविज्ञातो यत्रार्थो

**पत्तिर्यथा—इदं रजतमिति पुरोवर्त्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैव प्रतिषिध्यमानत्वं सत्यत्वेऽनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्यत्वात्यन्ताभाववत्त्वं वा मिथ्यात्वं कल्पयतीति।**

नान्यथा भवेत्। अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृतेति। **श्रुतार्था**पत्तिः श्रुतेनार्थेनापत्तिः। तथा च शुक्तिरजतादिनिष्ठ-मिथ्यात्वाद्यभाव-व्यापकीभूत-प्रमीयमाणनिषिध्यमानत्वाद्यभाव-प्रतियोग्यर्थविषयक-ज्ञानत्वं दृष्टार्थापत्तित्वम्। एवं शोकादिनिष्ठमिथ्यात्वाद्यभाव-व्यापकीभूत-श्रूयमाण-ज्ञाननिवर्त्त्यत्वाद्यभाव-प्रतियोग्यर्थविषयक-ज्ञानत्वं श्रुतार्थापत्तित्वम्। दृष्टार्थापत्तिमुदाहरति—**तत्रे**ति। तयोरर्थापत्त्योर्मध्ये इत्यर्थः। **प्रतिपन्नस्य** प्रत्यक्षविषयस्य। **तत्रैव** पुरोवर्त्तिनि शुक्त्यादावेव। **प्रतिषिध्य**मानत्वमिति। इदं कर्त्तृपदम्, कल्पयतीत्यग्रेतनेनास्यान्वयः। कथं कल्पयतीत्यत आह—**अनुपपन्नमि**ति। सत्यस्य ज्ञानेन निषेधायोगादिति भावः। प्रतिषिध्यमानत्वमनुपपन्नं सत् किं कल्पयतीत्यत आह—**मिथ्यात्वमि**ति। तस्य मिथ्यात्वस्य स्वरूपं न्यायदीपावलीकृतामानन्दबोधभट्टारकाणां सम्मतं दर्शयति—**सद्भिन्नत्वमि**ति। सत्प्रतियोगिक-भेदवत्त्वमित्यर्थः। प्रतियोगितावच्छेदकञ्च सत्त्वं प्रमाणसिद्धत्वम्। तच्च प्रमाणजन्यज्ञानविषयत्वम्, प्रमाणञ्च दोषाजन्यज्ञानकरणम्। तथा च दोषाजन्यं यज् ज्ञानम्, तत्करणं प्रमाणम्। तज्जन्यज्ञानविषयो यः, स प्रमाणसिद्धः। स एवात्र सत्पदेन विवक्षितः। शुक्तिरजतादिज्ञानस्य सादृश्यादिदोषजन्यत्वाद् वियदादिप्रपञ्चज्ञानस्याविद्यारूपदोषजन्यत्वाद् दोषाजन्यज्ञानविषयत्वं तेषां नास्ति। अतस्ते शुक्तिरजतादयो न प्रमाणसिद्धाः। यदि ते प्रमाणसिद्धाः सन्तो भवेयुर्निषिध्यमाना न स्युर्निषिध्यन्ते च। सोऽयं निषेधस्तेषां सद्भिन्नत्वं कल्पयतीति भावः। पञ्चपादिकाकृतां सम्मतं मिथ्यात्व-स्वरूपं दर्शयति—**सत्यत्वा**त्यन्ताभाववत्त्वमिति। तथा च शुक्तिरजतादिकं यदि सत् स्यात्, अधिष्ठानसाक्षात्कारेण निषिध्यमानं न स्यात्, निषिध्यते च। सोऽयं निषेधः सत्यत्वेऽनुपपन्नस्तस्य सत्यत्वात्यन्ताभाववत्त्वरूपं मिथ्यात्वं कल्पयतीति भावः। न च सत्यस्यापि ब्रह्महत्या-जन्य-दुरितस्य सेतुदर्शनान्निवृत्तेर्ज्ञाननिवर्त्त्यतामात्रान्न मिथ्यात्वसिद्धिरिति वाच्यम्, तस्य विहितक्रियात्वादिना निवर्त्तकत्वात्, पराशरादौ सेतुदर्शनस्य पापनाशकत्वानुक्तेः, व्रतविशिष्ट-समुद्रसेतुगमन-सेतुसन्निहित-समुद्रस्नानयोरेव तन्नाशकत्वोक्तेः। तथा चाह भगवान् पराशरः—एतेषु ख्यापयेदेनं पुण्यं गत्वा तु सागरम्। ब्रह्महापि प्रमुच्येत स्नात्वा तस्मिन् महोदधौ॥ इति।

**श्रुतार्थापत्तिर्यथा—श्रूयमाण-वाक्यस्य स्वार्थानुपपत्तिमुखेनार्थान्तर-कल्पनम्। यथा तरति शोकमात्मविदिति। अत्र श्रुतस्य शोकशब्दवाच्य-बन्धजातस्य ज्ञाननिवर्त्त्यत्वस्यानुपपत्त्या बन्धस्य मिथ्यात्वं कल्प्यत इति। यथा वा जीवी देवदत्तो गृहे नेति वाक्यश्रवणानन्तरं जीविनो गृहासत्त्वं बहिःसत्त्वं कल्पयतीति।**

अन्यथा सेतुदर्शनमात्रस्य दुरितनाशकत्वे तत्रत्य-म्लेच्छानामपि दुरितनाशप्रसङ्गात्। श्रुतार्थापत्तिं दर्शयितुमाह—**श्रुतार्थे**ति। **स्वार्थानु**पपत्तीति। स्वार्थस्यानुपपत्त्यनुरोधेनेत्यर्थः। **अर्थान्तर**कल्पनमिति। स्वार्थोपपादकस्यान्यस्यार्थस्य कल्पनं ज्ञानमित्यर्थः।

एतेन—"दृष्टार्थापत्तावर्थस्यैव कल्पनं, श्रुतार्थापत्तौ तु शब्दस्य प्रमाणस्य कल्पनमित्यभिधाय स्वोपपादकार्थान्तरबोधक-वाक्यान्तर-कल्पनमिति यदत्र परिभाषाप्रकाशिका-कृतामर्थान्तरकल्पनपदविवरणम्, तत्प्रत्युक्तम्, मूलविरोधात्. विवरणादावर्थान्तर-कल्पनाया उक्तत्वात्, अन्यथाप्यर्थापत्तिविभागसम्भवाच्च।

श्रुतार्थापत्तिमुदाहरति—**यथे**ति। **तरति** अत्यन्तमुच्छिनत्ति। **शोकं** भीतिहेतुम्, द्वैतमिति यावत्। **आत्मवित्** आत्मतत्त्वज्ञः। **श्रुतस्य** श्रुतिबोधितस्य। **शोक**शब्द-वाच्येति। शोकशब्दबोध्येत्यर्थः। **बन्धजा**तस्येति। ज्ञाननिवर्त्त्यत्वस्येत्यग्रेतनेनास्यान्वयः। षष्ठ्यर्थो निष्ठत्वम्। तथा च बन्धजातनिष्ठ-ज्ञाननिवर्त्त्यत्वस्येत्यर्थः। **मिथ्यात्वं** कल्प्यते इति। बन्धजातस्यात्मज्ञाननिवर्त्त्यत्वं श्रुतिबोधितम्, आत्मज्ञानवतो बन्धनिवर्त्तकत्वोपदेशेन तद्विशेषणस्याप्यात्मज्ञानस्य तन्निवर्त्तकत्वोपदेशात्। स चायं श्रुतिबोधितोऽर्थः शोकस्य सत्यत्वे नोपपद्यते, सत्यस्य ज्ञाननिवर्त्त्यत्वायोगात्, मिथ्यात्वे तूपपद्यत एव। न च मिथ्यात्वमनया श्रुत्या बोधितम्, तस्या ज्ञाननिवर्त्त्यत्व-बोधकत्वात्। न च मिथ्यात्व-बोधकत्वमपि, अनेकार्थताया अन्याय्यत्वात्। तथा चोक्तं भट्टपादैः—न ह्यनेकार्थता युक्ता वाक्ये वाचकता तथेति। तस्मात् स्वार्थोपपत्तये शोकस्य मिथ्यात्वं कल्पनीय-मिति भावः। लौकिकोदाहरणमाह—**यथा** वेति। **जीवी** जीवनवान्। **गृहासत्त्वं** गृहावृत्तित्वम्। **बहिरि**ति। गृहेतरत्रेत्यर्थः। **कल्पयती**ति। अस्माद् वाक्याद् जीवतो गृहासत्त्वं प्रतीयते। यदि जीवतो बहिरसत्त्वं स्यात्, नूनं तस्य गृहसत्त्वं स्यान्न गृहासत्त्वम्, जीवच्छरीरस्यैकदेशवृत्तित्व-नियमात्। अतस्तद् गृहासत्त्वं जीवतो बहिः-सत्त्वं विनाऽनुपपद्यमानं बहिःसत्त्वं कल्पयतीति भावः।

**श्रुतार्थापत्तिश्च द्विविधा—अभिधानानुपपत्तिरभिहितानुपपत्तिश्च। तत्र यत्र वाक्यैकदेश-श्रवणेऽन्वयाभिधानानुपपत्त्याऽन्वयाभिधानोपयोगि पदान्तरं कल्प्यते, तत्राभिधानानुपपत्तिः। यथा द्वारमित्यत्र पिधेहीत्यध्याहारः। यथा वा विश्वजिता यजेतेत्यत्र स्वर्गकाम-पदाध्याहारः। ननु द्वारमित्यादाव-**

श्रुतार्थापत्तिं विभजते—**श्रुतार्था**पत्तिश्चेति। प्रमारूपा श्रुतार्थापत्तिश्चेत्यर्थः। **अभिधाना**नुपपत्तिरिति। अत्राभिधानपदमभिधीयतेऽनेनेति करणव्युत्पत्त्या तात्पर्यमभिधत्ते। तस्यानुपपत्तिरित्यर्थः। **अभिहिता**नुपपत्तिश्चेति। वाक्यप्रतिपाद्यार्थानुपपत्तिश्चेत्यर्थः। **तत्र** तयोर्मध्ये। अभिधानानुपपत्तिं दर्शयति—**यत्रे**ति। यादृशस्थले इत्यर्थः। **अन्वया**भिधानानुपपत्त्या अन्वय-तात्पर्यानुपपत्त्या, तात्पर्यविषयीभूतान्वयानुपपत्त्येति यावत्। **तत्र** तादृशस्थले। उदाहरति—**यथे**ति। **अध्याहारः** अश्रुतपदस्य कल्पनम्। तथा च द्वारमित्युक्तौ श्रोतुः प्रकरणादिना द्वारकर्मकपिधाने वाक्यस्य तात्पर्यग्रहो भवति। तच्च तात्पर्यं पिधानोपस्थापकपदं विनाऽनुपपन्नमश्रुतं पिधेहीति पदं कल्पयतीति भावः। मीमांसकाभिमतं वैदिकोदाहरणमाह—**यथा वे**ति। **विश्वजिता** विश्वजिन्नामधेयेन। **यजेत** यागेनेष्टं फलं भावयेत्। **पदाध्याहार** इति। तथा चास्माद् वाक्याद् विश्वजिन्नामधेयेन यागेनेष्टं भावयेदित्येवार्थः प्रतीयते। तत्राख्यातार्थ-पुरुषप्रवृत्तिरूप-भावनाश्रयः कश्चिन्नियोज्यो न प्रतीयते, तद्वाचक-पदाभावात्। भवितव्यञ्च केनचिन्नियोज्येन, अन्यथा तत्र पुरुषप्रवृत्त्यभावेऽननुष्ठानलक्षणमप्रामाण्यं स्यात्। तस्माद् भावनान्वयतात्पर्यं नियोज्यवाचकपदं विनाऽनुपपद्यमानं नियोज्यवाचकं सर्वाभिलषणीय-स्वर्गफलबोधौपयिकं स्वर्गकामपदं कल्पयति। यद्यपि स्वर्गेतर-फलकामोऽपि नियोज्यो भवितुमर्हति, तथापि तस्य सर्वपुरुष-साधारण्याभावात् सर्वपुरुषाभिलषणीयं किमपि फलं कल्पनीयम्। तच्च स्वर्ग एव, तस्य सर्वाभिलषणीयत्वात्। तथा चाह भगवान् जैमिनिः—"स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" इति। अत एवात्र स्वर्गकाम-पदाध्याहार इति भावः। नन्वभिधानानुपपत्तिपदं भावव्युत्पत्त्याऽन्वयबोधानुपपत्तिपरम्। तथाविधानुपपत्तिज्ञानञ्च द्वारमित्येतद्वाक्यश्रवणानन्तरं श्रोतुर्द्वारकर्मक-पिधानबोधे सति भवति। सति तु पिधानोपस्थापके पिधेहीति पदे द्वारकर्मक-पिधानबोधो जायते, असति तु नेति तथाविधस्थले तदनुपपत्तिज्ञानं नैव सम्भाव्यते। तस्माच्छाब्दबोधात् प्रागन्वयबोधानुपपत्ति-ज्ञानासम्भवात् कथमन्वयबोधाऽनुपपत्त्याऽन्वयाभिधानोपयोगि-पदान्तरकल्पनेत्याशङ्कते—**नन्वि**ति।

**न्वयाभिधानात् पूर्वमिदमन्वयाभिधानं पिधानोपस्थापक-पदं विनाऽनुपपन्नमिति कथं ज्ञानमिति चेन्न, अभिधान-पदेन करणव्युत्पत्त्या तात्पर्यस्य विवक्षितत्वात्। तथा च द्वारकर्मक-पिधानक्रिया-संसर्ग-परत्वं पिधानोपस्थापक-पदं विनानुपपन्नमिति ज्ञानं तत्रापि सम्भाव्यते।**

**अभिहितानुपपत्तिस्तु यत्र वाक्यावगतोऽर्थोऽनुपपन्नत्वेन ज्ञातः सन्नर्थान्तरं कल्पयति, तत्र द्रष्टव्या। यथा स्वर्गकामो ज्योतिष्टोमेन यजेतेति। अत्र स्वर्गसाधनत्वस्य क्षणिक-ज्योतिष्टोम-याग-गततयाऽवगतस्याऽनुपपत्त्या मध्यवर्त्त्यपूर्वं कल्प्यते।**

**न चेयमर्थापत्तिरनुमान एवान्तर्भवितुमर्हति, अन्वयव्याप्त्यज्ञानेनाऽन्व-**

**अन्वया**भिधानात् अन्वयज्ञानात्। आशङ्कां परिहरति—**ने**ति। तत्र हेतुमाह—**अभिधान**-पदेनेति। नन्वस्तु करणव्युत्पत्त्याऽभिधानपदं तात्पर्यपरम्। तदनुपपत्ति-ग्रहस्तु कथमित्यत आह—**तथा** चेति। करणव्युत्पत्त्याऽभिधानपदस्य तात्पर्यपरत्वे चेत्यर्थः। **तत्रापि** अन्वयाभिधानात् पूर्वकालेऽपि। **सम्भाव्यते** इति। तथा च द्वारमित्येतद्-वाक्यश्रवणानन्तरं श्रोतुः कालात् प्रकरणादेर्वा द्वारकर्मक-पिधानविषयक-तात्पर्यग्रहो भवति। द्वार-कर्मक-पिधानपरत्वन्तु पिधानोपस्थापकपदं विना नोपपद्यत इत्यनुपपत्ति-ज्ञानमपि ततस्तस्य सम्भवतीति भावः।

अभिहितानुपपत्तेः स्थलं दर्शयति—**अभिहिते**ति। **अर्थान्तरं** वाक्यार्थोपपादक-मर्थान्तरम्। तदुदाहरणमाह—**यथे**ति। **ज्योति**ष्टोमेन ज्योतिष्टोम-नामधेयेन। **यजेत** यागेन स्वर्गं भावयेत्। **स्वर्ग**साधनत्वस्येति। क्षणिकज्योतिष्टोमयाग-गततयाऽवगत-स्येत्यनेनास्यान्वयः। **अनुपपत्त्ये**ति। ज्योतिष्टोमेनेति तृतीयाश्रुत्या ज्योतिष्टोमस्य स्वर्गसाधनत्वमवगम्यते। स्वर्गश्च कालान्तरभावी ज्योतिष्टोमस्य फलम्। न चैतत् फलं ज्योतिष्टोमेन भावनीयम्, तस्याशुविनाशितया फलाव्यवहित-पूर्ववर्त्तित्वाभावात्, फला-व्यवहितपूर्ववर्त्तिन एव फलसाधनत्वात्। तदिदं वेदावगतं ज्योतिष्टोमादेः फलसाधनत्वं नैवोपपन्नम्। अतस्तदुपपत्तये याग-तत्फलयोरन्तरा यागव्यापारभूतमपूर्वं कल्प्यते। स च यागजन्यापूर्वरूपो व्यापारः स्वर्गपर्यन्त-स्थायी स्वर्गजनकश्च। तेन च व्यापारेण यागस्यापि स्वर्गहेतुत्वमुपपद्यते, स्वरूपतो विनष्टस्य यागस्याहेतुत्वेऽपि स्वजन्यव्यापारवत्तासम्बन्धेन तस्य तत्पूर्ववर्तितया तद्धेतुत्व-सम्भवादिति भावः।

**यिन्यनन्तर्भावात्। व्यतिरेकिणश्चानुमानत्वं प्रागेव निरस्तम्। अत एवार्थापत्ति-स्थलेऽनुमिनोमीति नानुव्यवसायः, किन्त्वनेनेदं कल्पयामीति। नन्वर्थापत्तिस्थले इदमनेन विनाऽनुपपन्नमिति ज्ञानं करणमित्युक्तम्। तत्र किमिदं तेन विनाऽनुपपन्नत्वम्? तदभाव-व्यापकीभूताभाव-प्रतियोगित्व-**

नैयायिकादयस्तावदर्थापत्तेरनुमानान्तर्भावमङ्गीकुर्वन्ति, न प्रमाणान्तरत्वम्। तन्मतमपाकरोति—**न चेयमि**ति। यद्यर्थापत्तेरनुमानान्तर्भावः स्यात्, तदाऽन्वयिन्यन्तर्भावो व्यतिरेकिणि वा? नाद्य इत्यत्र हेतुमाह—**अन्वयव्याप्ती**ति। यदि बहिःसत्त्व-जीवित्व-समानाधिकरण-गृहासत्त्वयोरन्वयव्याप्तिग्रहः स्यात्, स्यादस्या अर्थापत्तेरन्वयिन्यन्तर्भावः। न चैष व्याप्तिग्रहः, तादृशस्थलाभावात्। न च देवदत्तशरीरे तादृशव्याप्तिग्रहः, तस्य पक्षत्वात्। नाप्यन्यत्र, अन्येषां पक्षसमत्वात्। न हि पक्षे पक्षसमे वाऽन्वयव्याप्तिग्रहः, तत्र साध्यसहचारानिश्चयात्। तस्माद् बहिःसत्त्व-गृहासत्त्वयोः स्वव्यापक-साध्यसामानाधिकरण्यरूपान्वयव्याप्तिग्रहो नैव सम्भवतीति भावः। **अन्वयिनि** अन्वय्यनुमाने। अस्तु तर्हि व्यतिरेकिण्यन्तर्भावः, नेत्याह—**व्यतिरेकिणश्चे**ति। **प्रागेव** अनुमानपरिच्छेदे। **निरस्तमि**ति। तथा हि—गृहासत्त्वमात्रं न बहिःसत्त्वस्यानुमापकम्, मृते बहिःसत्त्वाभाववति गृहासत्त्वदर्शनेन व्यभिचारात्। जीवित्वविशिष्टन्तु गृहासत्त्वं बहिःसत्त्वस्यानुमापकं भवेत्। तच्चानवगते बहिःसत्त्वेऽवगन्तुं न शक्यते। न चानवगतो हेतुरनुमापको भवति। तथा चान्वयिनि व्यतिरेकिणि चानन्तर्भावादर्थापत्तेरनुमानानन्तर्भाव इति भावः। ननु क्लृप्तानुमानेनैव प्रमोत्पत्त्युपपत्तावर्थापत्तेः प्रमाणान्तरत्वं नाङ्गीकरणीयम्, गौरवात्, व्याप्तिग्रहस्य स्वशरीरे सम्भवादित्यत आह—**अत एवे**ति। अर्थापत्तेरनुमानानन्तर्भावादेवेत्यर्थः। **अर्थापत्तिस्थले** प्रमारूपार्थापत्तिविषये। **नानुव्यवसाय** इति। यदि प्रमारूपार्थापत्तिरनुमितिः स्यात, अनेनेदमनुमिनोमीत्याकारकोऽनुव्यवसायः स्यात्। न च तथा, तस्मान्नेयमर्थापत्तिरनुमानात्मिकेति भावः।

नन्वर्थापत्तिस्थलेऽनुमानस्याकरणत्वमस्तु, उपपाद्यज्ञानरूपाया अर्थापत्तेरपि करणत्वं नैव युक्तम्, उपपाद्यलक्षणाभावेन तत्स्वरूपानवधारणादित्यभिप्रायेण तल्लक्षणं पृच्छति—**नन्वि**ति। उपपाद्यलक्षणं दर्शयति—**तदभावे**ति। अत्र तत्पदेनोपपादकत्वेनाभिमतस्य वस्तुनः परामर्शः। एवञ्च पीनो देवदत्त इत्यत्र तत्पदेनोपपादकस्य रात्रिभोजनस्य परिग्रहस्तदभावव्यापको दिवाऽभुञ्जानत्व-समानाधिकरणपीनत्वाभावः, दिवाऽभुञ्जाने

**मिति ब्रूमः। एवमर्थापत्तेर्मानान्तरत्वसिद्धौ व्यतिरेकि नानुमानान्तरम्। पृथिवीतरेभ्यो भिद्यत इत्यादौ गन्धवत्त्वमितरभेदं विनाऽनुपपन्नमित्यादि-ज्ञानस्य करणत्वात्। अत एवानुव्यवसायो पृथिव्यामितरभेदं कल्पयामीति।**

**इति श्रीमन्महामहोपाध्याय-धर्मराजाध्वरीन्द्र-**
**विरचितायां वेदान्त-परिभाषायाम्**
**अर्थापत्तिपरिच्छेदः**

रात्रिभोजनाभाववति पुरुषसामान्ये दिवाऽभुञ्जानत्व-समानाधिकरण-पीनत्वाभावदर्शनात्। तत्प्रतियोगित्वं पीनत्वस्येति पीनत्वे उपपाद्यलक्षण-सङ्गतिरिति भावः। एवं तद-भावव्याप्याभाव-प्रतियोगित्वमुपपादकत्वमित्युपपादकलक्षणमवगन्तव्यम्। तच्च प्रागुक्तम्। अत्र तत्पदमुपपाद्यत्वेनाभिमत-तादृशपीनत्वपरम्, तदभाव-व्याप्यो रात्रिभोजनाभाव-स्तत्प्रतियोगित्वं रात्रिभोजनस्येत्युपपादके रात्रिभोजने उपपादक-लक्षण-सङ्गतिर्द्रष्टव्या। ननु तदभावव्यापकीभूताभावप्रतियोगित्वस्योपपाद्यत्वेऽर्थापत्तेर्व्यतिरेक्यनुमानत्वमङ्गीकार्यम्, तदभावव्यापकीभूताभावप्रतियोगित्वस्यैव व्यतिरेक्यनुमानत्वादित्यत आह—**एवमि**ति। उक्तरीत्येत्यर्थः! **नानुमानान्तरमि**ति। व्यतिरेकिणोऽनुमित्यकरणत्वान्नानुमानत्वम्, किन्त्वर्थापत्तित्वमिति भावः। ननु पृथिव्यादावितरभेदसिद्धेर्व्यतिरेकव्याप्तिज्ञानाधीनत्वाद् व्यतिरेक्यनुमानमवश्यमङ्गीकार्यमित्यत आह—**पृथिवी**ति। **इतरभेदं** जलादि-भेदम्। **अनुपपन्नमि**ति। पृथिव्यामितरभेदाभावे तस्या इतरत्वेनेतरस्वरूपत्वे गन्धवत्त्वमनुपपन्नं स्यात्, तस्य पृथिवीमात्रधर्मत्वादिति भावः। नन्वितरभेदं विनाऽनुपपन्नत्वमितरभेदा-भाव-व्यापकीभूताभाव-प्रतियोगित्वम्। तच्च व्यतिरेकित्वम्। तस्येतरभेदप्रमाणत्वे तदुत्-पन्नाया इतरभेदप्रमाया अर्थापत्तित्वे को हेतुः, अनुमितित्वस्यापि सम्भवादित्यत आह— **अत एवे**ति। इतरभेदप्रमाया अर्थापत्तित्वादेवेत्यर्थः। **अनुव्यवसाय** इति। यदीतरभेद-प्रमाऽनुमितिः स्यादनुमिनोमीत्यनुव्यवसायः स्यात्, अनुव्यवसायस्यैव ज्ञानसाक्षित्वात्। न च तथानुव्यवसायः, तस्मादितरभेदप्रमा नानुमितिः, किन्त्वर्थापत्तिरिति भावः।

इति श्रीमन्महामहोपाध्याय-द्राविड़-लक्ष्मण-शास्त्रि-पूज्यपाद-शिष्य-
श्रीमन्महामहोपाध्याय-योगेन्द्रनाथ-तर्कसांख्यवेदान्ततीर्थ-
श्रीचरणान्तेवासि-श्रीपञ्चानन-भट्टाचार्य-विरचिते
परिभाषा-संग्रहे अर्थापत्ति-परिच्छेदः

## अनुपलब्धिपरिच्छेदः

इदानीं षष्ठं प्रमाणं निरूप्यते। ज्ञानकरणाजन्याभावानुभवासाधारण-कारणमनुपलब्धिरूपं प्रमाणम्। अनुमानादि-जन्यातीन्द्रियाभावानुभव-हेतावनुमानादावतिव्याप्तिवारणायाजन्यान्तम्। अदृष्टादौ साधारणकारणेऽति-व्याप्तिवारणायासाधारणेति। अभावस्मृत्यसाधारणहेतु-संस्कारेऽतिव्याप्ति-

द्वैताभावोपलक्षित-ब्रह्मनिर्विकल्पकनिश्चयरूपाया अद्वैतसिद्धेरनुकूलां क्रमप्राप्तामनुपलब्धिं निरूपयितुं प्रतिजानीते—**इदानीमि**ति। **षष्ठं** प्रमाणम् अनुपलब्धिम्, प्रमाणस्थानेषु षष्ठस्थानस्थितत्वेन तस्याः षष्ठप्रमाणत्वेन व्यवहार इति भावः। अनुपलब्धिस्वरूपं दर्शयति—**ज्ञानकरणे**ति। ज्ञानरूपं यत् करणं तदजन्यो योऽभावानुभवस्तस्यासाधारणकारणमिति विग्रहः। तल्लक्षणन्तु—ज्ञानकरणाजन्याभावानुभवासाधारणकारणत्वम्। नन्वभावानुभवासाधारणकारणत्वमेव लक्षणमुच्यताम्, किमजन्यान्तविशेषणेनेत्यत आह—**अनुमानादी**ति। आदिनागमार्थापत्तिपरिग्रहः। **अतीन्द्रि**याभावेति। धर्माधर्मगुरुत्वाद्यभावेत्यर्थः। इन्द्रिययोग्याभावज्ञानस्यानुमानाजन्यत्वात् तत्रातिव्याप्तिर्न स्यादतोऽतीन्द्रियेत्यभावविशेषणम्। **अजन्यान्तमि**ति। तथा चाजन्यान्तविशेषणानिवेशे धर्माधर्मादिभावानुमित्यसाधारणकारणेऽनुमानेऽभावानुभवासाधारण-कारणत्वसत्त्वादतिव्याप्तिः, अजन्यान्तनिवेशे तु नातिव्याप्तिस्तादृगभावानुभवस्य ज्ञानकरण-जन्यत्वात् तत्रानुमाने ज्ञानकरणजन्याभावानुभवासाधारण-कारणत्वसत्त्वेऽपि ज्ञानकरणाजन्याभावानुभवासाधारणकारणत्वाभावात्, अतस्तदतिव्याप्तिवारणाय–अजन्यान्तमभावानुभव-विशेषणमिति भावः। नन्वभावानुभवकारणत्वमेव लक्षणं स्यात्, किमसाधारणविशेषणेनेत्यत आह—**अदृष्टादा**विति। आदिना कालादि-साधारणकारण-परिग्रहः। **अतिव्याप्ती**ति। अदृष्टादिसाधारणकारणेऽभावानुभव कारणत्व-सत्त्वादिति भावः। **असाधारणे**तीति। असाधारणत्वं व्यापारवत्त्वम्, फलायोगव्यवच्छिन्नत्वं वा। व्यापारश्च वृत्तिविषययोः सम्बन्धः प्रागेवोक्तः। तथा चादृष्टादौ साधारणकारणेऽभावानुभव-कारणत्व-सत्त्वेऽप्यसाधारणकारणत्वाभावान्न तत्रातिव्याप्तिरिति भावः। नन्वभावज्ञानासाधारण-कारणत्वमेव लक्षणं स्यात्, किमनुभवेनेत्यत आह—**अभावस्मृ**तीति। फलायोगव्यवच्छिन्नत्वस्यासाधारणत्वमतेऽभावविषयकसंस्कारस्याभावस्मृत्यसाधारणकारणत्वात् तत्रातिव्याप्तिस्तत्रा-

**वारणायानुभवेति विशेषणम् । न चाभावानुमिति-स्थलेऽप्यनुपलब्ध्यैवाभावो गृह्यताम्, विशेषाभावादिति वाच्यम्, धर्माधर्माद्यनुपलब्धिसत्त्वेऽपि तद-भावानिश्चयेन योग्यानुपलब्धेरेवाभाव-ग्राहकत्वात् ।**

भावज्ञानासाधारण-कारणत्वसत्त्वात्। अनुभवनिवेशे तु नातिव्याप्तिस्तत्राभावज्ञानासाधारण-कारणत्वसत्त्वेऽप्यभावानुभवासाधारण-कारणत्वविरहात्, संस्कारस्य स्मृतिजनकत्वेऽप्यनु-भवाजनकत्वात्। व्यापारवत्त्वस्यासाधारणत्वमते तु यद्यपि संस्कारे नातिव्याप्तिस्तत्रा-साधारण-कारणत्वाभावात्। तथाप्यजन्यान्तविशेषणास्फुरणदशायामभावस्मृत्यसाधारण-कारणेऽभावानुभवेऽतिव्याप्तिः, तत्राभावज्ञानासाधारण-कारणत्वसत्त्वात्। अतस्तत्राति-व्याप्तिवारणाय—अनुभवेति विशेषणम्। अजन्यान्तविशेषणस्फुरणदशायामनुभवविशेषणा-भावेऽप्यभावस्मृत्यसाधारणकारणेऽभावानुभवे नातिव्याप्तिस्तत्र ज्ञानकरणजन्याभावज्ञाना-साधारणकारणत्वसत्त्वेऽपि ज्ञानकरणाजन्याभावज्ञानासाधारण-कारणत्व-विरहात्, अभाव-स्मृतेर्ज्ञानकरणजन्य-ज्ञानत्वेन तद्धेतोरभावानुभवस्य ज्ञानकरणजन्याभावज्ञानहेतुत्वादिति भावः। ज्ञानकरणाजन्यानुभवासाधारण-कारणत्वस्य लक्षणत्वे ज्ञानकरणाजन्य-घटाद्यनु-भवासाधारण-कारणे चक्षुरादीन्द्रियेऽतिव्याप्तिस्तत्र ज्ञानकरणाजन्यानुभवासाधारणकारण-त्वसत्त्वादतस्तदतिव्याप्तिवारणाय—अभावेत्यनुभवविशेषणम्। ज्ञानपदानिवेशे त्वसम्भवः, करणाजन्याभावानुभवस्याप्रसिद्धत्वात्, सर्वस्यैवाभावानुभवस्य करणजन्यत्वादतो ज्ञानेति-करणविशेषणम्। नन्वियमनुपलब्धिरज्ञाता करणं ज्ञाता वा? नाद्यः, अज्ञातकरणत्वे प्रत्यक्ष-त्वापत्तेः, अज्ञातकरणस्यैव प्रत्यक्षप्रमाणत्वनियमात्। ज्ञातकरणत्वेऽनवस्थापत्तेः, उपलब्ध्य-भावरूपाया अनुपलब्धेर्ज्ञानमनुपलब्ध्यन्तरेण स्यादेवं तस्या अप्यनुपलब्धेरनुपलब्ध्यन्तरेणेत्य-नवस्थापातादिति चेन्न, उपलब्धिविषय-विषयकाज्ञानस्य साक्षिभास्यस्य ज्ञानाभाव-व्याप्य-त्वात् तेनानुपलब्ध्यनुमानादनवस्थानुपपत्तेर्द्वितीयपक्षाभ्युपगमात्। नन्वनुपलब्धिरभाव-ग्राहिका चेदतीन्द्रियाभावोऽपि तयैव गृह्यताम्, लाघवात्। अतीन्द्रियाभावस्यानुमानादि-ग्राह्यत्वे तदितराभावस्य चानुलब्धिग्राह्यत्वे नानाकारणकल्पनागौरवात्, अजन्यान्त-विशेषणदानेन लक्षणगौरवाच्चेत्याशङ्कां निराकरोति— **न चे**ति। **अविशेषात्** अनुपलब्धि-ग्राह्यानुमानादिग्राह्याभावयोर्विशेषाभावात्, अभावत्वेन तुल्यत्वात्। निराकरण हेतुमाह—**धर्मादी**ति। आदिना गुरुत्वादिपरिग्रहः। **योग्यानु**पलब्धेरेवेति। यद्यनुपलब्धिसामान्य-मभावग्राहकं भवेत्, तदा सुषुप्त्यादावभावोपलब्धिः स्यात्, अनुपलब्धेस्तत्रापि सत्त्वात्,

**ननु केयं योग्यानुपलब्धिः ? किं योग्यस्य प्रतियोगिनोऽनुपलब्धिरुत योग्येऽधिकरणे प्रतियोग्यनुपलब्धि ? नाद्यः, स्तम्भे पिशाचादि-भेदस्याप्रत्यक्षत्वापत्तेः। नान्त्यः, आत्मनि धर्माधर्माद्यभावस्य प्रत्यक्षत्वापत्तेरिति चेन्न, योग्या चासावनुपलब्धिश्चेति कर्मधारयाश्रयणात्। अनुपलब्धेर्योग्यता च तर्कित-प्रतियोगिसत्त्वप्रसञ्जित-प्रतियोगिकत्वम्। यस्याभावो गृह्यते, तस्य यः प्रतियोगी, तस्य सत्त्वेनाधिकरणे तर्कितेन प्रसञ्जितमापादन-योग्यं प्रतियोगि उपलब्धिस्वरूपं यस्यानुपलम्भस्य तत्त्वम्, तदनुपलब्धेर्योग्यत्व-**

जाग्रति च धर्माधर्माद्यभावोपलब्धिः स्यात्। न च तथा। तस्मादनुपलब्धिसामान्यं नाभावग्राहकम्, किन्तु योग्यानुपलब्धिरूपानुपलब्धिविशेषस्तथा च धर्माधर्माद्यभावग्रह-दशायां धर्माधर्मादेरनुपलब्धिसत्त्वेऽपि योग्यानुपलब्धेरभावान्नानुपलब्धितस्तदभावग्रहः, किन्त्वनुमानादिति भावः।

नन्वेवमपि योग्यानुपलब्धेरभावग्राहकत्वं नैवोपपन्नम्, योग्यताया अनिर्णयादित्याशयेन शङ्कते—**नन्वि**ति। योग्यानुपलब्धिपदस्य समासं विकल्प्य पृच्छति—**किमि**ति। **योग्यस्य** प्रत्यक्षयोग्यस्य। षष्ठीतत्पुरुषपक्षे दूषणमाह—**नाद्य** इति। **पिशाचादी**-त्यादिपदात् अयोग्यपदार्थपरिग्रहः। **अप्रत्यक्ष**त्वापत्तेरिति। अननुभवापत्तेरित्यर्थः। पिशादिभेद-प्रतियोगिनः पिशाचादेरयोग्यतया योग्यानुपलब्धेरभावादिति भावः। यद्यपि विवरणकारादिमतेऽप्रत्यक्षत्वापत्तेरित्यस्य यथाश्रुतार्थकत्वं नोपपद्यते, तैरभाव-प्रत्यक्षानभ्युपगमात्। तथापि मूलकृद्भिरभावप्रत्यक्षाभ्युपगमादिदमनिष्टापादनं नानुपपन्नमिति मन्तव्यम्। सप्तमीतत्पुरुषपक्षे दूषणमाह—**नान्त्य** इति। **प्रत्यक्षत्वापत्ते**-रिति। उपलब्धियोग्ये आत्मनि प्रतियोग्यनुपलब्धिरूपाया योग्यानुपलब्धेः सत्त्वादिति भावः। हेतुं दर्शयन् परिहरति—**ने**ति। नन्वनुपलब्धिगता योग्यता कीदृशीत्यत आह—**अनुपल**ब्धेरिति। **तर्किते**ति। तर्कितेन प्रतियोगिसत्त्वेन प्रसञ्जितो प्रतियोगी यस्यानुपलम्भस्य, तत्त्वमिति विग्रहः। विग्रहवाक्यघटकपदस्यार्थं दर्शयितुं प्रतियोगिसत्त्वेनेत्य-स्यार्थमाह—**यस्ये**ति। **अधिकरणे** इति। अधिकरणे तर्कितेन सत्त्वेनेत्यन्वयः। **तर्कितेन** प्रसञ्जितेन। प्रसञ्जितपदस्यार्थमाह—**आपादन**योग्यमिति। प्रतियोगिपद-स्यार्थमाद—**उपलब्धि**स्वरूपमिति। तथा च प्रतियोगि-तद्व्याप्येतर-यावदुपलम्भ-कारण-समवहिते कस्मिंश्चिदधिकरणेऽभावप्रतियोगिनः सत्त्वापादनेन यदि तत्प्रतियोग्युपलम्भस्य

**मित्यर्थः। तथा हि स्फीतालोकवति भूतले यदि घटः स्यात्, तदा घटोपलम्भः स्यादित्यापादन-सम्भवात् तादृश-भूतले घटाभावोऽनुपलब्धिगम्यः, अन्धकारे तु तादृशापादनाभावान्नानुपलब्धि-गम्यता। अत एव स्तम्भे तादात्म्येन पिशाचसत्त्वे स्तम्भवत् प्रत्यक्षत्वापत्त्या तदभावोऽनुपलब्धिगम्यः। आत्मनि धर्माधर्म-सत्त्वेऽपि तस्यातीन्द्रियतया निरुक्तोपलम्भापादनासम्भवान्न धर्माधर्माद्यभावस्यानुपलब्धि-गम्यत्वम्।**

सत्त्वमापाद्यते, तदा तदभावं प्रति तदुपलम्भाभावो योग्यानुपलम्भः। स एव तदभावानुभावक इति भावः। उदाहरणेन योग्यानुपलब्धिलक्षणं योजयति—**तथा ही**ति। **स्फीता**लोकवतीति। अनेन यावदुपलम्भकारणसमवहितत्वं दर्शितम्। **घटोपलम्भः** स्यादिति। प्रतियोगि-तद्व्याप्येतर-यावदुपलम्भ-कारणस्य विद्यमानत्वादिति भावः। **अनुप**लब्धिगम्य इति। अभावोपलम्भकारणस्य योग्यानुपलम्भस्य विद्यमानत्वादिति भावः। नन्वेवं सत्यन्धकारेऽपि भूतले घटाभावोपलम्भः स्यात्, घटानुपलम्भस्य तत्रापि सत्त्वात्, तस्य च योग्यत्वादित्यत आह—**अन्धकारे** त्विति। **तादृशा**पादनेति। यद्यत्र घटः स्यात्, तस्योपलम्भः स्यादित्यापादनासम्भवादित्यर्थः। तथा च तत्र घटे विद्यमानेऽप्यालोकरूपस्योपलम्भकारणस्याभावान्नोपलम्भापादनम्। अतस्तत्र विद्यमानोऽपि घटानुपलम्भो न योग्यानुपलम्भस्तेन तत्र नोपलम्भो घटाभावस्येति भावः। नन्वेवं स्तम्भे पिशाचभेदस्यानुभवो न स्यात्, तत्र पिशाचसत्त्वेऽपि तस्यातीन्द्रियतया तदुपलम्भापादनासम्भवेन तत्र योग्यानुपलब्धेरभावादित्यत आह—**अत एवे**ति। तादृशापादनस्थलेऽनुपलब्धेर्योग्यत्वादेवेत्यर्थः। **प्रत्यक्षत्वा**पत्त्येति। महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वाद् यथा स्तम्भस्य प्रत्यक्षम्, तद्वत् तदभिन्नस्य पिशाचस्यापीति भावः। **तदभावः** पिशाचभेदः। **अनुप**लब्धिगम्य इति। भेदोपलब्धिकारणस्य योग्यानुपलम्भस्य विद्यमानत्वाद् भेदोपलम्भः। स्तम्भे संयोगेन पिशाचाभावस्तु नानुपलब्धिगम्यः, तत्र संयोगेन पिशाचसत्त्वेऽपि तत्प्रत्यक्षस्यापादनासम्भवात्, पिशाचस्यातीन्द्रियतया प्रत्यक्षायोग्यत्वादिति भावः। आत्मनि धर्माधर्माद्यभावस्य प्रत्यक्षत्वापादनं परिहरति—**आत्मनी**ति। धर्माधर्माद्यभावस्यानुपलब्ध्यगम्यत्वे प्रयोजकमाह—**निरुक्ते**ति। तथा च यद्यात्मनि धर्माधर्मौ स्यातामुपलभ्येयातामित्युपलम्भापादनं नैव सम्भवति, तयोरतीन्द्रियतयोपलम्भायोग्यत्वात्। अत एवात्मनि धर्माधर्माद्यभावसत्त्वेऽपि योग्यानुपलम्भाभावात् तदभावस्य नानुभव इति भावः।

**ननूक्तरीत्याऽधिकरणेन्द्रिय-सन्निकर्ष-स्थलेऽभावस्यानुपलब्धि-गम्यत्वं त्वदभिमतम्। तत्र क्लृप्तेन्द्रियमेवाभावाकार-वृत्तावपि करणम्, इन्द्रियान्वय-व्यतिरेकानुविधानादिति चेन्न, तत्प्रतियोग्यनुपलब्धेरप्यभावग्रहे हेतुत्वेन क्लृप्तत्वेन कारणत्वमात्रस्य कल्पनात्, इन्द्रियस्य चाभावेन सह**

ननु प्रतियोग्युपलम्भकारण-दशायामभावोपलम्भे इन्द्रियस्यैव क्लृप्तप्रमाणभावस्य करणत्वमुचितम्, क्लृप्तस्य तस्य प्रतियोग्युपलम्भकारणस्य तत्र विद्यमानत्वात्। न त्वनुपलब्धेः करणत्वम्, तस्याः कल्प्यत्वात्, क्लृप्तस्य प्रमाणभावोपपत्तौ कल्प्यस्य तत्कल्पने गौरवादिति नैयायिकः शङ्कते—**नन्वि**ति। **इन्द्रिय**सन्निकर्षस्थले इति। प्रतियोगितद्व्याप्येतर-यावत्प्रतियोग्युपलम्भ-कारण-समवधानदशायामित्यर्थः। **अनुप**लब्धिगम्यत्वमिति। सतीन्द्रियसन्निकर्षे तत्प्रतियोग्युपलम्भापादनेन योग्यानुपलम्भः सम्पद्यते, तेन चाभावोऽनुभूयते इति भावः। **तत्र** अभावानुभवस्थले। **क्लृप्त**मिति। करणत्वेनाऽभ्युपगतमित्यर्थः। घटाद्याकारवृत्ताविन्द्रियस्यैव करणत्वनिश्चयादिति भावः। **करण**मिति। अस्त्विति शेषः। कुत्र करणमित्याकांक्षायमाह—**अभावा**कारेति। तथा चाभावाकारवृत्तिदशायां यथा योग्यानुपलब्धेः पूर्ववर्त्तित्वं तथेन्द्रियस्यापि। तत्र द्वयोः पूर्ववर्त्तित्वे समानेऽपीन्द्रियस्य करणत्वं क्लृप्तम्, योग्यानुपलब्धेस्तु करणत्वं नैव क्लृप्तम्। अतोऽभावाकारवृत्तावपीन्द्रियस्यैव करणत्वमङ्गीकरणीयं, लाघवात्, अभावेन विशेषणतासन्निकर्षस्यापि सत्त्वादिति भावः। नन्विन्द्रियस्याभावाकारवृत्तौ कारणत्वे सिद्धे करणत्वं स्यात्, कारणविशेषस्यैव करणत्वात्। तदेव त्वसिद्धम्, अन्वयव्यतिरेकयोरभावात्, तयोरेव कारणत्वग्राहकत्वात्। तत् कथमिन्द्रियस्य करणत्वं कल्पनीयमित्यत आह—**इन्द्रियान्व**येति। इन्द्रियस्य सत्त्वेऽभावाकारा वृत्तिः, तदसत्त्वे तु नेत्यन्वयव्यतिरेकात् तस्य कारणत्वं भवतामपि सम्मतम्, परं करणत्वमात्रं तत्र कल्प्यताम्, लाघवादिति पूर्वपक्षाशयः। अभावग्रहे इन्द्रियस्य हेतुत्वमभ्युपगम्याशङ्कां परिहरति—**नेति**। **तत्प्रति**योग्यनुपलब्धेः अभावप्रतियोग्यनुपलब्धेः। **क्लृप्तत्वेने**ति। तथा चाभावाकारवृत्तौ यथेन्द्रियस्य कारणत्वमन्वयव्यतिरेकात्, तथा योग्यानुपलब्धेरप्यन्वयव्यतिरेकात् कारणत्वं सिद्धम्। तत्र द्वयोः कारणत्वे समाने त्वयेन्द्रियस्य कारणत्वं कल्प्यते, मया तु योग्यानुपलब्धेः। न च गौरवम्, अतिरिक्तकल्पनाया अभावादिति भावः। नन्वेवमपि योग्यानुपलब्धेः करणत्वं नैव कल्पनीयम्, विनिगमनाभावात्। अस्मन्मते त्वस्त्येव विनिगमना,

**सन्निकर्षाभावेनाऽभावग्रहाहेतुत्वात्, इन्द्रियान्वय-व्यतिरेकयोरधिकरणज्ञाना-द्युपक्षीणत्वेनाऽन्यथासिद्धेः।**

प्रमाणान्तरत्वाभावस्यैव विनिगमनात्वादित्याशंक्येन्द्रियस्याभावाकारवृत्तौ कारणत्व-निरासेन करणत्वं निरस्यति—**इन्द्रियस्ये**ति। **सन्निकर्षा**भावेनेति। नैयायिकैर्हीन्द्रिय-जन्यभावानुभवे संयोग-संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवायाना-मभावपदार्थानुभवे संयुक्तविशेषणता-संयुक्तविशेष्यतादीनां सन्निकर्षत्वमिच्छन्ति। तत्रा-भावेनेन्द्रिस्य संयोगादिर्न सन्निकर्षस्तेषां भावधर्मत्वात्। नापि विशेष्यविशेषणभावः, तस्य मूलसम्बन्धगर्भतया तन्निवृत्तौ निवृत्तेः। सम्बद्धयोर्हि दण्डघटयोः शौक्ल्यपटयोर्वा विशेष्यविशेषणभावो दृश्यते, नासम्बद्धयोः। न चास्ति शौक्ल्यपटयोरिवेन्द्रियाभावयोः कश्चिन्मूलसम्बन्धः, येन तयोर्विशेष्यविशेषणभावो भवेत्। न च निर्घटं भूतलमित्यादि-वदन्तरेणैव मूलसम्बन्धं विशेष्यविशेषणभावः स्यादिति वाच्यम्, तस्य प्रत्यक्षाहेतुत्वात्, अन्यथा प्रत्यक्षधर्मिकानुमानमात्रोच्छेदप्रसङ्गात्, तत्रापि संयुक्तविशेषणतादीनां सन्निकर्षाणां सत्त्वात्, तेषाञ्च लौकिकप्रत्यक्षसामग्रीतयाऽनुमानसामग्रीतो बलवत्त्वात्। तस्मात्तेषा-मिन्द्रियसन्निकर्षत्वं नैव युक्तम्। नाप्यन्यः कश्चित् सन्निकर्षस्तैर्निरूपितः। अतोऽभावेन सहेन्द्रियस्य प्रत्यक्षप्रयोजकः कश्चित् सन्निकर्षो नास्तीति भावः। **अभाव**ग्रहाहेतुत्वादिति। तथा चेन्द्रियस्याभावानुभवं प्रति करणत्वं नैव कल्पनीयम्, तस्य तं प्रत्यकारणत्वात्, कारणविशेषस्यैव करणत्वादिति भावः। नन्विन्द्रियान्वयव्यतिरेकदर्शनात् कथं तस्या-हेतुत्वं कथं वा सन्निकर्षाभाव इत्यत आह—**इन्द्रियान्**वयेति। **अधिकरण**ज्ञानादीति। आदिपदेन प्रत्यक्षयोग्याधिकरण-विशेषणादिपरिग्रहः। अधिकरणादेर्निश्चयाय प्रवृत्तयो-रिन्द्रियान्वय-व्यतिरेकयोरभावानुभवहेतुत्व-निश्चये सामर्थ्याभावादिति भावः। यद्यप्य-भावज्ञानं प्रत्यधिकरणज्ञानस्य प्रतियोगिज्ञानस्य वा न हेतुता, वायौ रूपवदन्योन्याभावस्य घटे मनस्त्वात्यन्ताभावस्य चाननुभवप्रसङ्गात्, तथापि प्रतियोगि-तद्व्याप्येतर-यावदुप-लम्भकसमवहितत्वस्य योग्यतारूपत्वात् तत्सम्पादकत्वेन तयोरिन्द्रियान्वयव्यतिरेकयोः सार्थक्यं मन्तव्यम्। **अन्यथा**सिद्धेः इन्द्रियान्वयव्यतिरेकयोरन्यथाऽप्युपपन्नत्वादभावा-नुभवं प्रति हेतुत्वासिद्धेः, अभावानुभवहेतोर्योग्यानुपलब्धेर्योग्यतां प्रतीन्द्रियस्य हेतुतया जनकजनकत्वेनान्यथासिद्धत्वादिति भावः। नन्वभावोपलब्धेः प्रत्यक्षत्वात् तत्करणत्वमि-न्द्रियस्यैव युक्तं, प्रत्यक्षप्रमायामिन्द्रियस्यैव भाक्तप्रमाणत्वाभ्युपगमात्, न योग्यानुपलब्धे-

**ननु भूतले घटो नेत्याद्यभावानुभवस्थले भूतलांशे प्रत्यक्षत्वमुभयवादिसिद्धमिति तत्र वृत्तिनिर्गमनस्यावश्यकत्वेन भूतलावच्छिन्न-चैतन्यवत् तन्निष्ठ-घटाभावावच्छिन्न-चैतन्यस्यापि प्रमात्रभिन्नतया घटाभावस्य प्रत्यक्षरूपतैव**

स्तत् कथं योग्यानुपलब्धेरभावानुभवहेतुत्वेन प्रमाणान्तरत्वमित्याशङ्कते—**नन्वि**ति। घटाभावानुभवस्य प्रत्यक्षतां सम्पादयति—**भूतल** इति। **उभय**वादिसिद्धमिति। यथा नैयायिकानां नये भूतलज्ञानस्येन्द्रियजन्यत्वात् प्रत्यक्षत्वम्, तद्विषयत्वाच्च भूतलस्य। तथा वेदान्तिनयेऽपि प्रमातृचैतन्यभूतलावच्छिन्नचैतन्योरभेदाद् भूतलस्य प्रत्यक्षत्वमिति भावः। नन्वस्तु भूतलस्य भूतलज्ञानस्य वा प्रत्यक्षत्वम्, तावता घटाभावस्य प्रत्यक्षत्वं कथमित्यत आह—**इती**ति। **तत्र** भूतले। **वृत्ती**ति। भूतलाकारवृत्तीत्यर्थः। **आवश्यकत्वेने**ति। विषयाकारवृत्तेर्निगमं विना विषयावच्छिन्नचैतन्य-प्रमातृचैतन्ययोरभेदायोगाद् विषयस्य प्रत्यक्षत्वानुपपत्तेरिति भावः। **भूतलावच्छिन्ने**ति। यथा भूतलावच्छिन्नचैतन्यस्य प्रमात्रभिन्नतया प्रत्यक्षत्वम्, तद्वदित्यर्थः। **तन्निष्ठे**ति। भूतलनिष्ठेत्यर्थः। घटाभावस्य प्रत्यक्षत्वे हेतुमाह—**प्रमात्रभिन्नतये**ति। अभावाकारवृत्तिदशायामभावांशे संयुक्तविशेषण-तारूपस्येन्द्रिय-सन्निकर्षस्य विद्यमानत्वादनुपलब्धि-जन्याया अभावाकारवृत्तेः सन्निकृष्टेन्द्रियद्वारा विषयसम्बन्धे सति चैतन्योपाधीनां भूतलाभाववृत्त्यन्तःकरणानां भिन्नदेशत्वाभावादिति भावः। **प्रत्यक्ष**रूपतैवेति। स्यादिति शेषः। तथा च विषयस्य तज्ज्ञानस्य च प्रत्यक्षत्वादिन्द्रियस्यैव तत्करणत्वमित्यनुपलब्धेर्मानान्तरत्वं नैव सिद्धमिति पूर्वपक्षाशयः।

यद्यपि सिद्धान्तेऽभावप्रतीतेर्न प्रत्यक्षत्वम्, अनुपलब्धिजन्याया अभावाकारवृत्तेर्विषयदेशगमनद्वाराभावेन विषयदेशासम्बन्धाच्चैतन्योपाधीनामेकदेशस्थत्वाभावेन प्रमातृचैतन्य-विषयावच्छिन्नचैतन्ययोरभेदाभावात्। न च विद्यमानस्यैवेन्द्रियस्य विषयदेशगमनद्वारत्वमिति वाच्यम्, केवलस्येन्द्रियस्य द्वारत्वाभावात्, विषयसन्निकृष्टेन्द्रियस्य द्वारत्वेऽपि सन्निकर्षाभावेन तद्द्वारत्वायोगात्। न च संयुक्तविशेषणतारूपस्य सन्निकर्षस्य विद्यमानत्वात् सन्निकर्षाभावोऽसिद्ध इति वाच्यम्, सत्यपि संयुक्तविशेषणत्वे तस्य द्वारत्वाप्रयोजकत्वात्, अन्यथा प्रत्यक्षधर्मिकानुमेयदावपि संयुक्तविशेषणतायाः सत्त्वेन तत्रापि वृत्तिनिर्गमनादनुमेयानुभवस्य प्रत्यक्षत्वप्रसङ्गात्, दशमस्त्वमसीत्यादौ सन्निकृष्टेन्द्रियस्यैव वृत्तिनिर्गमद्वारत्वात्। किञ्चाभावप्रतीतेः प्रत्यक्षत्वेऽज्ञानस्य ज्ञानाभावातिरिक्तत्वेन सिद्धिर्न स्यात्, अहमज्ञ इत्यादि-प्रतीतौ ज्ञानाभावस्यैव विषयत्वसम्भवात्,

**सिद्धान्तेऽपीति चेत्, सत्यम्। अभावप्रतीतेः प्रत्यक्षत्वेऽपि तत्करणस्यानुपलब्धेर्मानान्तरत्वात्। न हि फलीभूत-ज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्ष-प्रमाणता-नियतत्वमस्ति, दशमस्त्वमसीत्यादिवाक्यजन्य-ज्ञानस्य प्रत्यक्षत्वेऽपि तत्करणस्य प्रत्यक्षप्रमाणभिन्न-प्रमाणत्वाभ्युपगमात्। ननु फलवैजात्यं विना कथं प्रमाणभेद इति चेन्न, वृत्तिवैजात्यमात्रेण प्रमाणवैजात्योपपत्तेः। तथा**

विवरणादिविरोधप्रसङ्गाच्च, तैरभावप्रत्यक्षानभ्युपगमात्; तथाप्यभावप्रतीतेः प्रत्यक्षत्वापादानपरतयेदं पूर्वपक्षवाक्यं योजनीयम्। उत्तरवाक्यन्तु प्रौढ़िवादतयाऽनुपलब्धेर्मानान्तरत्वव्यवस्थापनपरं बोध्यम्। उत्तरवाक्यान्यप्येवं योजनीयानि।

एतेन—यथा चक्षुरादिकं सन्निकृष्टमन्तःकरणनिर्गमस्य द्वारम्, एवमनुपलब्धिरपि योग्या तद्द्वारमेवेति परिभाषाप्रकाशिकाकृतामभावप्रत्यक्षत्वसमर्थनपरं व्याख्यानं प्रत्युक्तम्, विषयसन्निकृष्टेन्द्रियस्यैव तद्द्वारत्वाभ्युपगमात्, योग्यानुपलब्धेरान्तराया प्रत्यक्षत्व-प्रयोजकविषयसम्बन्धाभावेन तद्द्वारत्वायोगात्, यथाकथञ्चित्-तत्सम्बन्धकल्पनया तद्द्वारत्वाभ्युपगमे ज्ञायमानहेत्वादेरपि तद्द्वारत्वसम्भवेन परोक्षापरोक्षप्रमाविलोपप्रसङ्गात्।

एतेन—अनुलब्धाभावस्य प्रत्यक्षयोग्यत्वाभावान्नाभावज्ञानस्य प्रत्यक्षत्वमिति शिखामणिकृतां व्याख्यानं प्रत्युक्तम्, तन्मते योग्यवृत्तिक्रियादेरिव योग्यवृत्त्यभावस्यापि प्रत्यक्षयोग्यत्वसम्भवात्, तैस्तथाभ्युपगमात्।

अभावप्रतीतेः प्रत्यक्षत्वमभ्युपेत्य प्रौढ़िवादितयाऽनुपलब्धेर्मानान्तरत्वं व्यवस्थापयति—**सत्यमि**ति। **तत्करणस्ये**ति। अभावानुभवकरणस्येत्यर्थः। प्रागुक्तरीत्येन्द्रियस्याभावानुभवकरणत्वायोगात् योग्यानुपलब्धेस्तत्करणत्वादिति भावः। ननु प्रमायाः प्रत्यक्षत्वे तत्करणस्य प्रत्यक्षप्रमाणत्वम्, प्रत्यक्षप्रमाकरणस्यैव प्रत्यक्षप्रमाणत्वात्। तथाचाभावानुभवकरणस्य योग्यानुपलब्धेः प्रत्यक्षप्रमाणान्तर्भावान्न मानान्तरत्वमित्यत आह—**न ही**ति। **नियतत्वमि**ति। व्याप्यत्वमित्यर्थः। तथा च यत्र प्रत्यक्षप्रमाकरणत्वम्, तत्र प्रत्यक्षप्रमाणत्वमिति व्याप्तिर्नास्तीत्यर्थः। उक्तनियमे व्यभिचारं दर्शयति—**दशमस्त्वमसी**ति। **तत्करणस्य** प्रत्यक्षप्रमाकरणस्य वाक्यस्य। ननु प्रमाभेदस्यैव प्रमाणभेद-प्रयोजकत्वात् प्रमाभेदाभावे कथं प्रमाणभेदः स्यादित्याशङ्कते—**नन्वि**ति। **फलवैजात्यं** प्रमाभेदः। फलवैजात्यं न प्रमाणभेद-प्रयोजकम्, किन्तु वृत्तिवैजात्यमित्युत्तरयति—**वृत्तिवै**जात्येति। प्रमाणवैजात्येत्यर्थः। तथा च भूतलाकारवृत्तेरिन्द्रियजन्यत्वा-

**च घटाभावाकारा वृत्तिर्नेन्द्रियजन्या, इन्द्रियस्य विषयेणाऽसन्निकर्षात्, किन्तु घटानुपलब्धिरूप-मानान्तर-जन्येति भवत्यनुपलब्धेर्मानान्तरत्वम्।**

**नन्वनुपलब्धिरूप-मानान्तर-पक्षेऽभाव-प्रतीतेः प्रत्यक्षत्वे घटवति घटाभाव-भ्रमस्यापि प्रत्यक्षत्वापत्तौ तत्राप्यनिर्वचनीय-घटाभावोऽभ्युपगम्येत। न चेष्टापत्तिः, तस्य मायोपादानकत्वेऽभावत्वानुपपत्तेः, मायोपादानकत्वाभावे मायायाः सकल-कार्योपादानत्वानुपपत्तिरिति चेन्न, घटवति घटाभाव-भ्रमो न तत्कालोत्पन्न-घटाभाव-विषयकः, किन्तु भूतलरूपादौ विद्यमानो**

दभावाकारवृत्तेश्चेन्द्रियाजन्यत्वाद् वृत्तिवैजात्यम्। तेन भाक्तप्रमाणयोः प्रत्यक्षानुपलब्ध्योर्वैजात्योपपत्तिरिति भावः। वृत्तिवैजात्यमुदाहरणेनाह—**तथा चे**ति। वृत्तिवैजात्यस्य प्रमाणभेद-प्रयोजकत्वे चेत्यर्थः। नन्वस्तु वृत्तिवैजात्यस्य प्रमाणभेद-प्रयोजकत्वम्, तदेव तु कुत इत्यत्राह—**घटाभावे**ति। **विषयेण** वृत्तिविषयेण घटाद्यभावेन। **असन्निकर्षा**दिति। इन्द्रियस्य सन्निकर्षद्वारैव वृत्तिजनकत्वम्। न चास्तीन्द्रियेणाभावस्य सन्निकर्षः, विशेषणतायाः सन्निकर्षत्वायोगादन्यस्य चानिरूपणादिति भावः। तर्ह्यभावाकारा वृत्तिः किंजन्येत्यत्राह—**किन्त्वि**ति। **मानान्तरत्वमि**ति। तथा चेन्द्रियजन्यत्व-तदजन्यत्वाभ्यां वृत्तिवैजात्याद् भाक्तप्रमाणयोर्भेद इति भावः। अभावप्रमायाः प्रत्यक्षत्वमद्वैताभिमतं मन्यमानो भावानभिज्ञः कश्चिच्छङ्कते—**नन्वि**ति। **प्रत्यक्षत्वे** इति। अभ्युपगते इति शेषः। **भ्रमस्यापी**ति। घटवति घटाभावज्ञानस्यातस्मिंस्तद्बुद्धित्वेन भ्रमत्वादिति भावः। **तत्रापि** घटवति घटाभावभ्रमकालेऽपि। **अनिर्वचनीये**ति। प्रातिभासिकेत्यर्थः। **अभ्युपगम्येते**ति। प्रत्यक्षस्य विद्यमानविषयकत्वाद् भ्रमविषयस्य घटाभावस्य तत्राविद्यमानत्वादनिर्वचनीयोत्पत्तेरावश्यकत्वमिति भावः। नन्वस्माकं मते भ्रमस्थलेऽनिर्वचनीयोत्पत्तिरिष्टैवेत्यत आह—**न चे**ति। इष्टापत्तौ बाधकमाह—**तस्ये**ति। अनिर्वचनीयाभावस्येत्यर्थः। **अनुपपत्तेरि**ति। मायाया भावरूपत्वेन तदुपादानकस्य कार्यस्य भावत्वौचित्यात्, उपादानधर्मस्योपादेयानुवृत्ति-नियमादिति भावः। **मायोपा**दानकत्वाभावे इति। मायाया भावत्वात्, अभावकार्यस्य च निरुपादानकत्व-नियमादभावस्य न मायोपादानकत्वमिति भावः। सिद्धान्ती स्वाभिप्रायमनाविष्कुर्वन्नन्यथाख्यातिमवलम्ब्य तामाशङ्कां निराकरोति—**नेति**। **घटवति** घटवद्भूतले। **तत्कालोत्पन्ने**ति। भ्रमकालोत्पन्नेत्यर्थः, प्रातिभासिकेति यावत्। **विद्यमान** इति। भूतल-

**लौकिको घटाभावो भूतले आरोप्यते इत्यन्यथाख्यातिरेव, आरोप्यसन्निकर्ष-स्थले सर्वत्रान्यथाख्यातेरेव व्यवस्थापनात्।**

**अस्तु वा प्रतियोगिमति तदभाव-भ्रमस्थले तदभावस्यानिर्वचनीयत्वम्, तथापि तदुपादानं मायैव। न हि उपादानोपादेययोरत्यन्तसाजात्यम्, तन्तु-पटयोरपि तन्तुत्व-पटत्वादिना वैजात्यात्, यत्किञ्चित्-साजात्यस्य मायाया अनिर्वचनीय-घटाभावस्य च मिथ्यात्वधर्मस्य विद्यमानत्वात्, अन्यथा**

रूपे घटो नास्तीति प्रतीतेर्लोकसिद्धत्वादिति भावः। **भूतले** घटवद्भूतले। **आरोप्यते** दोषमहिम्ना प्रतीयते। **अन्यथा**ख्यातिरिति। तदभाववति तत्प्रकारकज्ञानस्यैवान्यथा-ख्यातिरूपत्वादिति भावः। **एवे**ति। एवेकारेणानिर्वचनीयख्यातिव्यावृत्तिरिति भावः। ननु क्वचिदनिर्वचनीयस्य भ्रमविषयत्वम्, क्वचिच्च लौकिकस्य व्यावहारिकस्येत्यव्यवस्थेत्यत आह—**आरोप्य**सन्निकर्षस्थल इति। आरोप्यस्य भ्रमज्ञानविषयस्य लौकिकेन्द्रिय-सन्निकर्षदशायामित्यर्थः। **व्यवस्था**पनादिति। यत्रारोप्यमसन्निकृष्टम्, तत्रानिर्वचनीयोत्पत्तिर्नान्यत्रेति नाव्यवस्थेति भावः। नन्वारोप्यसन्निकर्ष-स्थलेऽन्यथाख्यात्यभ्युपगमे सेयं लब्धप्रसराऽन्यथाख्यातिः सर्वत्रैव दुर्वारा भवेत्। तथा चोक्तं तन्त्रवार्त्तिके—प्रसरं न लभन्ते हि यावत् क्वचन मर्कटाः। नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे॥ इति। तथा चानिर्वचनीयख्यातिविलोप इत्याशङ्कमानः सिद्धान्ती स्वाभिप्रायमाविष्कुर्वन् मायाया भावत्वमभ्युपगम्य परिहाररहस्यमाह—**अस्तु वे**ति। **मायैवे**ति। अनिर्वचनीय-मात्रं प्रति मायाया उपादानत्वाभ्युपगमादिति भावः। **एव**कारेणान्यस्योपादानत्व-व्यवच्छेदः। ननु विजातीययोः कथमुपादानोपादेयभाव इत्यत आह—**न ही**ति। **अत्यन्त-साजात्यम्** सर्वप्रकारेण साजात्यम्। आवश्यकमिति शेषः। ननु विजातीययोरुपादानोपादेयभावादर्शनादत्यन्तसाजात्यमावश्यकमिति चेत्, तत्र बाधकमाह—**तन्तुपटयो-रपी**ति। उपादानोपादेयभूतयोरिति शेषः। **वैजात्यादि**ति। तथा च विजातीययोरप्युपादानोपादेयभाव-दर्शनादुपादानोपादेययोर्नात्यन्तसाजात्यमपेक्षितम्, सर्वथा साजात्ये सर्वथा वैजात्ये वोपादानोपादेयभावादर्शनात्, अन्यथा तन्तुपटयोरुपादानोपादेय-भावोच्छेद-प्रसङ्गात्, तयोरत्यन्तसाजात्याभावादिति भावः। नन्वत्यन्तसाजात्यानपेक्षणेऽप्युपादानोपादेययोर्यत्किञ्चित् साजात्यमावश्यकम्, अन्यथा विजातीययोरप्युपादानोपादेयभाव-प्रसङ्गात्। तदेव त्वेतयोर्मायाभावयोर्नास्तीत्यत आह—**यत्कि**ञ्चिदिति।

**व्यावहारिकं घटाभावं प्रति कथं मायोपादानमिति कुतो नाशंकेथाः। न च विजातीययोरप्युपादानोपादेयभावे ब्रह्मैव जगदुपादानं स्यादिति वाच्यम्, प्रपञ्च-विभ्रमाधिष्ठानत्व-रूपस्य तस्येष्टत्वात्, परिणामित्व-रूपस्योपादानत्वस्य निरवयवे ब्रह्मण्यनुपपत्तेः। तथा च प्रपञ्चस्य परिणाम्युपादानं माया न ब्रह्मेति सिद्धान्तः। इत्यलमतिप्रसंगेन।**

**स चाभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभाव-**

ननु धर्मान्तरेण साजात्यवत्त्वेऽपि भावाभावत्वेन वैजात्यान्नोपादानोपादेयतेत्यत आह—**अन्यथे**ति। भावाभावत्वेन विजातीययोरुपादानोपादेयभावानभ्युपगमे इत्यर्थः। **व्यावहारिकं** लौकिकपारमार्थिकम्। **कुत** इति। प्रागिति शेषः।

वस्तुतस्तु भावाभावत्वेन विजातीययोरुपादानोपादेयभावानभ्युपगमेऽपि मायाया नाभावोपादानत्वव्याहतिः, सिद्धान्ते मायाया भावत्वानभ्युपगमात्, मायाविशेषणस्य भावस्याभाववैलक्षण्यपरत्वात्। तथा चोक्तमद्वैतसिद्धावज्ञानलक्षणे "भावत्वं चात्राभावविलक्षणत्वमात्रं विवक्षितमि"ति। ननु विजातीययोरुपादानोपादेयभावाङ्गीकारे ब्रह्मैव जगदुपादानं स्यान्न माया। तथा च सिद्धान्तविरोध इत्याशङ्क्य निराकरोति—**न चे**ति। **उपादानं** स्यादिति। ब्रह्मणो जगद्विलक्षणत्वादिति भावः। नेदमनिष्टापादनं, किन्त्विष्टापादनमेव, ब्रह्मणो जगदुपादानत्वस्येष्टत्वादित्याह—**प्रपञ्चे**ति। **तस्य** उपादानत्वस्य। **इष्टत्वादि**ति। द्विविधमुपादानं विवर्त्तोपादानं परिणाम्युपादानञ्चेति। तत्र विवर्त्तोपादानत्वं ब्रह्मण्येवाभिमतं न मायायामिति भावः। ननु परिणाम्युपादानत्वमपि तस्यैव स्यात्, किं माययेत्यत आह—**परिणामित्वे**ति। परिणामित्वानुपपत्तौ हेतुमाह—**निरवयव** इति। अवयवान्यथाभावस्य परिणामत्वान्निरवयवे ब्रह्मणि तदयोगादिति भावः। नन्वेकस्य परिणाम्युपादानत्वेऽन्यस्य च विवर्त्तोपादानत्वे गौरवम्, तद्वरमेकस्यैव परिणाम्युपादानस्य विवर्तोपादानत्वमप्यस्तु, लाघवादित्याशङ्क्य सिद्धान्तं दर्शयत्ति—**तथा चे**ति। निरवयवस्य ब्रह्मणः परिणामासम्भवे सतीत्यर्थः। **परिणाम्यु**पादानमिति। भ्रमोपादानाज्ञानविषयस्यैवाधिष्ठानत्वाद् जड़ायाश्च मायाया अज्ञानविषयत्वाभावेन विभ्रमाधिष्ठानत्वायोगाद् विवर्त्तोपादानत्वासम्भवेऽपि त्रिगुणात्मकत्वात् परिणाम्युपादानत्वं युक्तमिति भावः। प्रसङ्गागतमुपादानत्वनिरूपणमुपसंहरति—**इत्यल**मिति।

अभावप्रमाणं निरूप्य तत्प्रमेयं विभजते—**स चे**ति। **चतुर्विध** इति। एतेन—

**श्चेति। तत्र मृत्-पिण्डादौ कारणे कार्यस्य घटादेरुत्पत्तेः पूर्वं योऽभावः, स प्रागभावः। स च भविष्यतीति प्रतीति-विषयः। तत्रैव घटस्य मुद्गर-पातानन्तरं योऽभावः, स ध्वंसाभावः। ध्वंसस्यापि स्वाधिकरण-कपालनाशे नाश एव। न च घटोन्मज्जनापत्तिः, घटध्वंस-ध्वंसस्यापि घट-**

प्रागभावानङ्गीकर्त्तॄणां नृसिंहाश्रमादीनां मतं नैवानुमतमिति ध्वनितम्। प्रागभावं निरूपयति—**तत्रे**ति। अभावेषु मध्ये इत्यर्थः। **मृत्पिण्डा**दाविति। मृत्कपालादौ मृत्सामान्ये वेत्यर्थः। परिणामवादे मूर्त्तकार्यस्य स्वाश्रये कार्यान्तरोत्पत्तिविरोधितया मृत्पिण्डादेर्मूर्त्तकार्यस्य विद्यमानत्वे कार्यान्तरोपत्त्ययोगात् कपालादेः सामान्यस्यैव वोपादानत्वम्, मृद्घट इह कपाले घट इत्याद्यनुभवादिति भावः। आदिपदेन तन्त्वाद्युपादानस्य कालस्य च परिग्रहः। **कारणे** उपादाने। **घटादेरि**त्यादिपदेन पटादिपरिग्रहः। **योऽभाव** इति। ध्वंसप्रागभावयोः प्रतियोगिसमानदेशत्व-नियमादिति भावः। **प्रागभाव** इति। तल्लक्षणन्तु न विनाश्यभावत्वम्, ध्वंसेऽतिव्याप्तेः, सिद्धान्ते तस्यापि विनाशित्वाङ्गीकारात्। किन्तु कार्योपादानकारण-कालान्यावृत्तित्वे सत्यनादित्वे सत्यभावत्वम्। तत्राभावत्वमित्युक्तौ ध्वंसेऽतिव्याप्तिस्तस्याप्यभावत्वादत आह—अनादित्वे सतीति। तन्मात्रस्य लक्षणत्वेऽत्यन्ताभावेऽतिव्याप्तिस्तस्याप्यनाद्यभावत्वादतः प्रथमसत्यन्तदलम्। असम्भववारणाय—कालान्येति। प्रागभावे प्रमाणमाह—**स चे**ति। **भविष्यती**ति। तथा च भविष्यतीति प्रतीतिरेव तत्सद्भावे मानमिति भावः। न चास्याः प्रतीतेर्भविष्यत्वविषयत्वात् कथं प्रागभावविषयत्वमिति वाच्यम्, प्रागभावप्रतियोगित्वस्यैव भविष्यत्वपदार्थत्वात्। ध्वंसं निरूपयति—**तत्रैवे**ति। घटाद्युपादाने इत्यर्थः। **अनन्तरमि**ति। एतेन मुद्गरपातस्य ध्वंसहेतुत्वं सूचितम्। तल्लक्षणन्तु जन्याभावत्वम्। अत्यन्ताभावादीनां जन्यता नास्तीति न तत्रातिव्याप्तिः। ध्वंसस्याविनाशित्वं नैयायिका अभ्युपगच्छन्ति, तान् निरस्यति—**ध्वंसस्या**पीति। घटादिध्वंसस्यापीत्यर्थः। ननु ध्वंसस्य नाशकाभावान्नाशो न युक्त इत्याशङ्क्य ध्वंसस्य नाशकं दर्शयति—**स्वाधिकरणे**ति। ध्वंसाधिकरणेत्यर्थः। प्रतियोग्यधिकरणस्य प्रतियोग्युपादानस्य ध्वंसाधिकरणत्वात् तन्नाशो ध्वंसनाशकः। तथा च यदा प्रतियोग्युपादानस्य ध्वंसाधिकरणस्य नाशस्तदैव ध्वंसनाशः, उपादाननाशे तदुपादानैकाश्रयाश्रितस्य नाशनियमादिति भावः। **नाश** एवेति। ब्रह्मातिरिक्तस्य सर्वस्य नाशाभ्युपगमात् ध्वंसस्यापि नाश इति भावः। ननु प्रतियोगि-

**प्रतियोगिक-ध्वंसत्वात्; अन्यथा प्रागभावध्वंसात्मक-घटस्य नाशे प्रागभावोन्मज्जनापत्तिः। न चैवमपि यत्र ध्वंसाधिकरणं नित्यम्, तत्र कथं ध्वंसनाश इति वाच्यम्, तादृशमधिकरणं यदि चैतन्यव्यतिरिक्तम्, तदा तस्य नित्यत्वमसिद्धम्, ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मज्ञान-निवर्त्त्यतया वक्ष्यमाण-**

ध्वंसस्य ध्वंसाङ्गीकारे प्रतियोग्याविभार्वः स्यात्, प्रतियोगिविरोधिनो ध्वंसस्य ध्वंसेनाभावात् प्रतियोगिप्रागभावध्वंसवदित्यापादनं निराकरोति—**न चे**ति। **घटोन्म**ज्जनापत्तिः घटप्रादुर्भावापत्तिः। निराकरणहेतुमाह—**घटध्वंसे**ति। यथा घटध्वंसकाले घटो विनष्ट इति प्रतीतिर्जायते, तद्वद् घटध्वंस-ध्वंसकालेऽपीति लाघवाद् घटस्यैव घटध्वंस-ध्वंसप्रतियोगित्वम्। अतो घटध्वंसस्येव घटध्वंस-ध्वंसस्यापि घटः प्रतियोगी। तथा च घटध्वंस-ध्वंसस्य घटप्रतियोगिक-ध्वंसत्वात् तस्य च घटध्वंस-ध्वंसस्य घटविरोधिनो विद्यमानत्वान्न घटोन्मज्जनापत्तिरिति भावः। घटध्वंस-ध्वंसस्य घटप्रतियोगिकत्वानङ्गीकारे दोषमाह—**अन्यथे**ति। घटध्वंस-ध्वंसस्य घटस्वरूपत्वानङ्गीकारे प्रतियोगिनो विरोधित्वानङ्गीकारे चेत्यर्थः। **प्रागभाव**ध्वंसेति। प्रागभावनिवृत्तिरूपस्य घटस्य नाशे इत्यर्थः। घटोत्पत्तौ घटप्रागभावनिवृत्त्यपेक्षायां घटोत्पत्तेः प्राग् यथा घटप्रागभावनिवृत्तिरङ्गीक्रियते। तथा तन्निवृत्त्युत्पत्तौ तन्निवृत्तिप्रागभाव-निवृत्तिरपि तन्निवृत्त्युत्पत्तेः प्रागङ्गीकरणीयेति निवृत्त्यनवस्थाप्रसङ्गाद् घटरूपैव तत्प्रागभावनिवृत्तिः कल्पनालाघवादङ्गीकरणीयेति भावः। प्रतियोगिनः प्रागभावनिवृत्तिरूपत्वमतेनेदं बोध्यम्। **प्रागभावो**न्मज्जनापत्तिरिति। प्रागभावध्वंसात्मक-घटस्य ध्वंसे तद्ध्वंसस्य प्रागभावध्वंसातिरिक्तत्वे तस्य प्रागभावाविरोधित्वात् प्रागभावध्वंसस्य ध्वंसेनाभावात् प्रागभाव-प्रादुर्भावापत्तिः। प्रागभावध्वंस-ध्वंसस्य प्रागभावध्वंसरूपत्वे तु न तदापत्तिः, प्रागभावविरोधिनः प्रागभावध्वंसस्य विद्यमानत्वादिति भावः। नन्वेवमपि नित्यैकाधिकरणक-ध्वंसस्य ध्वंसो न युक्तः, तदधिकरणस्य नित्यत्वेन नाशाभावात्, तदधिकरणनाशस्यैव तन्नाशकत्वाभ्युपगमात्, अन्यस्य च नाशकस्याकल्पनादित्याशङ्क्य निरस्यति—**न चे**ति। **एवमपि** अनित्याधिकरणक-ध्वंसस्यानित्यत्वेऽपि। **यत्र** यत् यादृशस्थले वा। **तत्र** तस्मिन्नधिकरणे तादृशस्थले वा। **कथ**मित्याक्षेपे, नेत्यर्थः। **ध्वंसनाश** इति। ध्वंसनाशकस्य स्वाधिकरणनाशस्याभावादिति भावः। **अधिकरणम्** ध्वंसाधिकरणम्। **चैतन्यव्यतिरिक्तम्** आकाशादि। **तस्य** आकाशादेः। **असिद्धमि**ति। कपालादीनामनित्यत्वस्य लोकसिद्धत्वादाकाशादीनाम-

**त्वात्। यदि च ध्वंसाधिकरणं चैतन्यम्, तदाऽसिद्धिः, आरोपित-प्रतियोगिक-ध्वंसस्याधिष्ठाने प्रतीयमानस्याधिष्ठानमात्रत्वात्। तदुक्तम्—**

**अधिष्ठानावशेषो हि नाशः कल्पित-वस्तुनः**

**इति। एवं शुक्तिरूप्य-विनाशोऽपीदमवच्छिन्न-चैतन्यमेव। यत्राधिकरणे**

नित्यत्वस्य नैयायिकाद्यनभिमतत्वेऽपि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इत्याद्युत्पत्तिश्रुतिसिद्धत्वेन तत्र नित्यत्वानुमानानवतारादिति भावः। ननु मास्त्वनुमानेनाकाशस्य नित्यत्वसिद्धिः, ध्वंसस्तु कुतः? समवाय्यसमवायिकारणनाशस्य कार्यद्रव्यनाशकत्वात्, तस्य चात्राभावादित्याशङ्क्य नित्यत्वासिद्धौ हेतुमाह—**ब्रह्मव्यति**रिक्तस्येति। **ब्रह्मज्ञाने**ति। ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मणि कल्पितत्वात् कल्पितस्य स्वाधिष्ठानज्ञाननाश्यत्व-नियमात् सर्वेषां ब्रह्मज्ञाननिवर्त्यत्वमिति भावः। नन्वाकाशस्यानित्यत्वेऽपि चैतन्यस्यानित्यत्वं नैव सिद्धम्, श्रुतिस्मृत्यादिषु तस्य नित्यत्वोक्तेः। तच्च चैतन्यं यद्ध्वंसस्याधिकरणम्, तद्ध्वंसस्य नाशो नैव भवेत्, नाशकस्य स्वाधिकरणचैतन्यनाशस्याभावात्। तथा च ध्वंससामान्यस्यानित्यत्वं नैव सिद्धमित्यत आह—**यदि चे**ति। **तदासिद्धिः** तदाऽसिद्धिरिति च्छेदः। तदापि ध्वंसस्य नित्यत्वासिद्धिरित्यर्थः। तत्र हेतुमाह—**आरोपिते**ति। आरोपितः कल्पितः प्रतियोगी यस्य ध्वंसस्य, तादृशस्येत्यर्थः। **अधि**ष्ठानमात्रत्वादित्यनेनास्यान्वयः। कालवृत्तितया प्रतीयमानस्यारोपितप्रतियोगिक-ध्वंसस्य नाधिष्ठानमात्रत्वमित्यावेदयितुमाह—**अधिष्ठान** इति। स्वप्रतियोग्युपादाने इत्यर्थः। **अधिष्ठान**मात्रत्वात् अधिष्ठानस्वरूपत्वात्। तथा च ब्रह्मातिरिक्तस्य सर्वस्यारोपितत्वात् सर्व एव ध्वंस आरोपित-प्रतियोगिकः। स चाधिष्ठानरूपः, तदतिरिक्तत्वे प्रमाणाभावात्, भेदप्रतीतेश्च राहोः शिर इतिवदुपपत्तेः। यच्च ध्वंसस्याधिष्ठानस्वरूपत्वम्, स एव ध्वंसस्य ध्वंसस्तेन ध्वंसो न नित्यः, किन्त्वनित्य इति भावः। यद्वा तदाऽसिद्धिरित्यस्य तदा ध्वंसस्यासिद्धिरित्यर्थः। तथा च यदाधिष्ठानातिरिक्तो ध्वंसो नास्ति, तदा तन्नित्यत्वानित्यत्वविचारः शिरोहीनस्य शिरपीड़ाविचारमनुहरेदिति भावः। अन्यत् सर्वं पूर्ववद् व्याख्येयम्। आरोपित-प्रतियोगिक-ध्वंसस्याधिष्ठानमात्रत्वे सुरेश्वराचार्यवचनं प्रमाणमाह—**तदुक्त**मिति। सुरेश्वराचार्यैरिति शेषः। **अधिष्ठाने**ति। अधिष्ठानस्वरूप इत्यर्थः। प्रातिभासिकारोपेऽप्यारोपित-प्रतियोगिकध्वंसस्याधिष्ठानस्वरूपत्वं दर्शयति—**एव**मिति। यथा व्यावहारिकस्य नाशोऽधिष्ठानरूप-

**यस्य कालत्रयेऽप्यभावः, सोऽत्यन्ताभावः। यथा वायौ रूपात्यन्ताभावः। सोऽपि वियदादिवद् ध्वंस-प्रतियोग्येव। इदमिदं नेति प्रतीतिविषयोऽन्योन्याभावः। अयमेव विभागो भेदः पृथक्त्वं चेति व्यपदिश्यते, भेदातिरिक्तविभागादौ प्रमाणाभावात्। अयं चान्योन्याभावोऽधिकरणस्य सादित्वे**

स्तथेत्यर्थः। **इदमव**च्छिन्नचैतन्यमेवेति। शुक्त्यवच्छिन्नचैतन्यमेवेत्यर्थः। भ्रमोपादानाज्ञानविषयस्यैवाधिष्ठानत्वात्। तथा च शुक्तितत्त्वज्ञानाज् जायमानो रजतनाशः शुक्तिरूपादधिष्ठानतत्त्वान्नातिरिच्यते, यावत्कार्योत्पत्तिविरोधि-कार्यस्यैव ध्वंसरूपत्वादिति भावः। अत्यन्ताभावं निरूपयति—**यत्रे**ति। यस्मिन्नित्यर्थः। तल्लक्षणन्तु त्रैकालिकाभावत्वम्। तदुदाहरणमाह—**यथे**ति। रूपस्य कालत्रये वायावसम्बन्धादिति भावः। नैयायिकाभिमतमत्यन्ताभावस्य नित्यत्वं निराकरोति—**सोऽपी**ति। **वियदादिव**दिति। यथा वियदादिकं प्रलयकाल-ध्वंसप्रतियोगी, तद्वदत्यन्ताभावोऽपि प्रलयकालध्वंसप्रतियोगीत्यर्थः। तथा चाकाशाधिकरणस्य नाशाद् यथाकाशस्य नाशस्तद्वदत्यन्ताभावाधिकरणस्य नाशादत्यन्ताभावस्यापि नाश इति भावः। अन्योन्याभावं निरूपयति—**इदमिदं** नेति। **प्रतीति**विषय इति। अभाव इति शेषः। तल्लक्षणन्तु तादात्म्यसम्बन्धावच्छिन्न-प्रतियोगिताकाभावत्वम्। नैयायिकादयस्तावत् पृथक्त्वविभागयोर्गुणत्वमिच्छन्ति, तदसहमानः सिद्धान्तमाह—**अयमेवे**ति। अयमन्योन्याभाव एवेत्यर्थः। **व्यपदिश्यते** विभागपदेन व्यवह्रियते। नन्वन्योन्याभावस्य भेदपदेनाभिधानमस्तु, विभागपृथक्त्वपदाभ्यां कथं तदभिधानं, तयोस्तदतिरिक्तत्वादित्यत आह—**भेदाति**रिक्तेति। **प्रमाणा**भावादिति। तथा चेदमस्मात् विभक्तमिदमस्मादन्यदिदमस्मात् पृथगिति प्रतीतीनां वैलक्षण्याभावात् भेदविभागपृथक्त्वानामभिन्नत्वं मन्तव्यमिति भावः। न चेदमस्मात् पृथगिदमिदं नेति प्रतीत्योर्वैलक्षण्यादन्योन्याभावपृथक्त्वयोर्भेद इति वाच्यम्, तत्र शब्दभेदसत्त्वेऽप्यर्थभेदाभावात्। न चार्थभेदाभावे प्रयोगतुल्यता स्यादिति वाच्यम्, अन्यार्थकनामयोग एव पञ्चमीविधानात्, नञस्तु निपातरूपतया नामत्वाभावात् प्रयोगवैजात्योपपत्तेः। अत एवेदमस्मादन्यदिदमिदं नेति प्रयोगवैलक्षण्योपपत्तिः। अन्यथेदमस्मादन्यदितिवदिदमस्मान्नेति प्रयोगापत्तिर्दुर्वारा स्यादिति भावः। पदार्थतत्त्वनिरूपणकारा शिरोमणिपादा अपि पृथक्त्वस्यान्योन्याभावरूपतामाहुः। तथा च पदार्थतत्त्वनिरूपणे—पृथकत्वमपि न गुणान्तरम्, अन्योन्याभावादेव पृथक्त्वव्यवहारोप-

**सादिः। यथा घटे पटभेदः। अधिकरणस्यानादित्वेऽनादिरेव। यथा जीवे ब्रह्मभेदः, ब्रह्मणि जीवभेदः। द्विविधोऽपि भेदो ध्वंसप्रतियोग्येव, अविद्या-निवृत्तौ तत्परतन्त्राणां निवृत्त्यवश्यम्भावात्।**

**पुनरपि भेदो द्विविधः—सोपाधिको निरुपाधिकश्चेति। तत्रो-पाधिसत्ता-व्याप्य-सत्ताकत्वं सोपाधिकत्वम्, तच्छून्यत्वं निरुपाधिकत्वम्। तत्राद्यो यथैकस्याकाशस्य घटाद्युपाधिभेदेन भेदः। यथा चैकस्य सूर्यस्य**

पत्तेरिति। अन्योन्याभावो नित्य एवेति नैयायिकमतम्, तन्मतं निरस्यति—**अयश्चे**ति। **अधिकरणस्य** अन्योन्याभावाधिकरणस्य। इदं प्रतियोगिन इत्यस्याप्युपलक्षणम्। **सादित्वे** उत्पत्तिमत्त्वे। **सादिरि**ति। तथा चान्योन्याभावाधिकरणस्यान्योन्याभाव-प्रतियोगिनश्च सादित्वेऽन्योन्याभावस्य सादित्वमिति भावः। सादिभेदमुदाहरति—**यथे**ति। **पटभेद** इति। भेदाधिकरणस्य घटस्योत्पत्तिमत्त्वात् तदधिकरणस्य पट-प्रतियोगिक-भेदस्योत्पत्तिमत्त्वमिति भावः। **जीवे ब्रह्मभेद** इति। तथा च जीवब्रह्मणो-रनादित्वात् तत्प्रतियोगिक तदधिकरणक-भेदस्यानादित्वम्। एवं जीवेशादिभेदोऽप्यना-दिरेव। तथा चोक्तं—जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा। अविद्या-तच्चितो-र्योगः षड़स्माकमनादयः॥ इति। नन्वधिकरणस्य सादित्वानादित्वाभ्यां भेदस्य सादित्वानादित्वेऽधिकरणस्य नित्यत्वानित्यत्वाभ्यां भेदस्य नित्यत्वानित्यत्वे स्यातामित्यत आह—**द्विविधोऽपी**ति। सादिरनादिरपीत्यर्थः। **ध्वंसप्रति**योग्येव विनाश्येव। तत्र हेतुमाह—**अविद्ये**ति। **तत्पर**तन्त्राणाम् अविद्यापरतन्त्राणाम्, अविद्याकल्पितानामिति यावत्। **निवृत्त्य**वश्यम्भावादिति। तथा चाविद्याकल्पितानामविद्यानिवृत्तौ निवृत्ति-नियमादविद्याकल्पितस्य भेदस्याप्यविद्यानिवृत्तौ निवृत्तेर्नित्यत्वं नैव युक्तमिति भावः।

भेदस्य विभागान्तरं प्रतिपादयति—**पुनरपी**ति। तयोर्लक्षणमाह—**तत्रे**ति। तयोः सोपाधिक-निरुपाधिकयोर्मध्ये इत्यर्थः। **उपाधी**ति। उपाधिसत्ताव्याप्या सत्ता यस्य भेदस्य स भेद उपाधिसत्ताव्याप्य-सत्ताकस्तत्त्वमित्यर्थः। **तच्छून्य**त्वम् उपाधिसत्ताव्याप्य-सत्ताकत्वात्यन्ताभाववत्त्वम्। **तत्र** तयोः **आद्यः** सोपाधिकः। **घटाद्यु**पाधिभेदेनेति। आदिपदेन मठादिपरिग्रहः। तथा चैकस्याकाशस्य स्वरूपतो भेदाभावेऽपि घटाकाश-मठाकाशयोर्भेदः सार्वलौकिकः। स कस्मात्? घटमठयोराकाशोपाध्योर्भेदात्। तयो-राकाशोपाधित्वञ्च स्वधर्मासञ्जकत्वात्। अस्ति हि घट-मठयोः परस्परं भेदः। स च

**जलभाजनभेदेन भेदः। यथा चैकस्य ब्रह्मणोऽन्तःकरणभेदाद् भेदः। निरुपाधिकभेदो यथा घटे पटभेदः। न च ब्रह्मण्यपि प्रपञ्चभेदाभ्युपगमेऽद्वैतविरोधः, तात्त्विकभेदानभ्युपगमेन वियदादिवदद्वैताव्याघातात्, प्रपञ्चस्याद्वैते ब्रह्मणि कल्पितत्वाङ्गीकारात्। तदुक्तं सुरेश्वराचार्यैः—**

**अक्षमा भवतः केयं साधकत्व-प्रकल्पने।**
**किं न पश्यसि संसारं तत्रैवाज्ञान-कल्पितम्॥**

घटमठाभ्यामेवाकाशे आसज्यत इति युक्तं तयोराकाशोपाधित्वम्। स चायं भेदः सोपाधिकः, उपाधिसत्ताव्याप्य-सत्ताकत्वात्, यावद्धयाकाशादिभेदसत्ता तावद् घटाद्युपाधिसत्तेति भेदसत्ता घटाद्युपाधिसत्ता-व्याप्या, घटाद्युपाधिसत्ता तु व्यापिका, उपाधिनिवृत्तौ भेदस्यापि निवृत्तेस्तस्मादयं भेदः सोपाधिक इति भावः। **भेद** इति। ब्रह्मण एकत्वेऽपि तदुपाधेरन्तःकरणस्य भेदाद् ब्रह्मणो भेदः। यावदन्तःकरणं तावदेवास्य भेदस्य स्थितिः। निवृत्ते त्वन्तःकरणे तस्यापि निवृत्तिरिति सोऽपि सोपाधिक एवेति भावः। निरुपाधिकभेदोदाहरणमाह—**यथे**ति। **पटभेद** इति। घटपटयोर्भेदस्तु न सोपाधिकः, तयोरुपाधिविरहेणोपाधिसत्ताव्याप्य-सत्ताकत्वाभावात्, किन्तु निरुपाधिक इति भावः। ननु निरुपाधिकभेदस्याधिकरणनाशान्नाशाङ्गीकारे ब्रह्मणि वर्त्तमानस्य निरुपाधिक-प्रपञ्चभेदस्य नाशो न स्यात्, तदधिकरणस्य ब्रह्मणोऽनाशात्। इष्टापत्तावद्वैतहानिः, सत्यस्य ब्रह्मातिरिक्त-प्रपञ्चभेदस्य विद्यमानत्वादित्याशङ्क्य निराकरोति—**न चे**ति। परिहार-हेतुमाह—**तात्त्विके**ति। पारमार्थिकेत्यर्थः, भेदमात्रस्याविघ्नकत्वादिति भावः। **वियदा**दिवदिति। यथा वियदादीनामतात्त्विकत्वान्नाद्वैतहानिस्तद्वद् भेदस्याप्यतात्त्विकत्वान्निवृत्तेर्नाद्वैतहानिरिति भावः। ननु प्रपञ्चस्य कल्पितत्वे तत्प्रतियोगिक-भेदस्य कल्पितत्वं भवेत्। प्रपञ्चस्तु नैव कल्पितस्तत् कथं प्रपञ्चप्रतियोगिक-भेदस्य कल्पितत्वमित्यत आह—**प्रपञ्चस्ये**ति। **कल्पितत्वे**ति। अविद्याकल्पितत्वेत्यर्थः। प्रपञ्चस्याज्ञानकल्पितत्वे वार्त्तिककारोक्तिं प्रमाणयति—**तदुक्तमि**ति। **साधकत्वप्रकल्पने** ब्रह्मणो जगद्धेतुत्वकल्पने। **भवतः इयमक्षमा** असहिष्णुता **का**? इयमक्षमा नोचितेति भावः। कुतो नोचितेत्यत्राह—**किं ने**ति। **तत्रैव** ब्रह्मण्येव **अज्ञानकल्पितम्** अज्ञानेनाविद्यया कल्पितं **संसारं** प्रपञ्चं **किं न पश्यसि**? तथा चानन्तभेदभिन्नस्य प्रपञ्चस्य ब्रह्मणि कल्पनायां यदि भवतामक्षमा न भवेत्। तर्हि प्रपञ्चैकदेशस्य साधकत्वस्य कल्पनेऽक्षमा नोचितेति

**इति। अत एव विवरणेऽविद्यानुमाने प्रागभाव-व्यतिरिक्तत्व-विशेषणम्। तत्त्वप्रदीपिकायां चाविद्यालक्षणे भावत्वविशेषणं संगच्छते। एवमुक्तानां चतुर्विधानामभावानां योग्यानुपलब्ध्या प्रतीतिः। तत्रानुपलब्धिर्मानान्तरम्।**

भावः। नन्वयं विभागविचारस्तदैव भवेत्, यद्यभावो नाम भावातिरिक्तः कश्चित् स्यात्, स एव तु नास्ति, तस्य भावानतिरेकात्। तथा चोक्तं---"भावान्तरमभावो हि कयाचित् तु व्यपेक्षये"ति। तस्मात् तद्विभागविचारो नैवोचित इत्यत आह---**अत एवे**ति। भावातिरिक्तस्याभावस्य सद्भावादेवेत्यर्थः। **अविद्या**नुमान इति। विवाद-गोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्त-स्वविषयावरण-स्वनिवर्त्य-स्वदेशगत-वस्त्व-न्तरपूर्वकं भवितुमर्हति, अप्रकाशितार्थ-प्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्न-प्रदीपप्रभा-वदित्याकारकानुमान-प्रयोगे इत्यर्थः। **व्यतिरिक्तत्व**विशेषणमिति। **सङ्गच्छते** इत्युत्तरेणा-न्वयः। तथा च वेदान्तिनये यद्यभावो नाम कश्चिन्न स्यात्, तर्हि प्रागभाव-व्यावृत्त्यर्थ-मिदं विशेषणोपादानं व्यर्थं स्यात्। न चेदं व्यर्थं विशेषणम्। तस्मादस्त्येव कश्चिदभावो नाम भावातिरिक्तः पदार्थः, अतस्तद्विभागविचारश्चोचित इति भावः। न केवलं विवरण-कृद्भिरभावोऽङ्गीकृतस्तत्त्वप्रदीपिकाकृद्भिरप्यङ्गीकृत इत्याह—**तत्त्वप्रदीपिकायामि**ति। **अविद्या**लक्षणे इति। अनादित्वे सति भावरूपं विज्ञाननिरस्यमज्ञानमित्याकारकेऽज्ञान-लक्षणे इत्यर्थः। तत्रैतन्मते यद्यभावो नाम कश्चिदर्थो न स्यादिदं ज्ञानप्रागभावव्यावृत्त्यर्थं भावरूपविशेषणमनर्थकं स्यात्। न चेदमनर्थकम्। तस्मादभावोऽप्यतिरिक्तोऽङ्गीकरणीयः। अन्यथाऽभावव्यवहारविलोपः प्रसज्येतेति भावः।

वस्तुतस्तु विवरणकृद्भिरविद्यानुमाने स्वप्रागभावव्यतिरिक्तत्वविशेषणं चित्सुखा-चार्यैश्चाविद्यालक्षणे भावत्वविशेषणमभ्युपगमवादेनोक्तं बोद्धव्यम्, सिद्धान्ते भावाति-रिक्ताभावानभ्युपगमात्। अत एवाद्वैतदीपिकायां नृसिंहाश्रमचरणैरज्ञानलक्षणे भावत्व-विशेषणं नोपात्तम्। अत एवाचार्याणां मोक्षपदवाच्याया दुःखात्यन्तनिवृत्तेर्नित्यत्वोप-वर्णनमुपपन्नम्, अन्यथा मोक्षस्यानित्यत्वापत्तिर्दुर्वारा स्यात्।

उपसंहरति—**एवमि**ति। उक्तप्रकारेणेत्यर्थः। **तत्र** अभावानुभवे। **मानान्तर**-मिति। इन्द्रियादेर्मानत्वासम्भवादिति भावः।

प्रमात्वाप्रमात्वयोः स्वरूपं प्रागुक्तम्। तत्राचार्याणां विवादः श्रूयते। केचित् प्रमात्वाप्रमात्वयोः स्वतस्त्वमिच्छन्ति, केचिन्नेति। उक्तञ्च तार्किकरक्षायाम्—"प्रमाणत्वा-

**एवमुक्तानां प्रमाणानां प्रामाण्यं स्वत एवोत्पद्यते ज्ञायते च। तथा हि—स्मृत्यनुभव-साधारणं संवादि-प्रवृत्त्यनुकूलं तद्वति तत्प्रकारक-ज्ञानत्वं**

प्रमाणत्वे स्वतः सांख्याः समाश्रिताः। नैयायिकास्ते परतः, सौगताश्चरमं स्वतः। प्रथमं परतः प्राहुः प्रामाण्यं, वेदवादिनः। प्रमाणत्वं स्वतः प्राहुः परतश्चाप्रमाणता"मिति। तत्र प्रसङ्गात् तन्मतमपाकुर्वन् प्रामाण्यस्य स्वतस्त्वमुपपादयितुमाह—**एव**मिति। उक्त-प्रकारेणेत्यर्थः। **उक्तानां** निरूपितानाम्। **प्रमाणानां** प्रमाणाम्, भावव्युत्पत्त्या प्रमाणपदस्य प्रमार्थकत्वात्। **प्रामाण्यं** प्रमात्वम्। **स्वतः** स्वस्मात्, स्वस्य स्वहेतुकत्वा-नुपपत्तेरात्मीयादिति यावत्। आत्मीयश्च दोषाभावसहकृत-ज्ञानसामान्यसामग्री दोषाभाव-सहकृत-ज्ञानग्राहकसामग्री च, जनक-ज्ञापकयोरात्मीयत्वप्रसिद्धेः। तत्रोत्पत्तावाद्यो ज्ञप्तौ द्वितीय इति भावः। तत्र यादृशप्रामाण्यानां परतस्त्वं निराकृत्य स्वतस्त्वमुपपादनीयम्, तदेवादौ दर्शयति—**तथा** हीति। **तद्वति** तद्वद्विशेष्यकत्वे सति। **प्रामाण्य**मिति। प्रमात्वमित्यर्थः। यद्यपि सिद्धान्ते तद्वद्विशेष्यक-तत्प्रकारक-ज्ञानस्य प्रमात्वं नैव विवक्षि-तम्, इदं रजतमिति भ्रमस्यापि प्रमात्वप्रसङ्गात्, तस्यापि तथात्वात्। तत्रेदं विशेष्यं न रजतमिति चेन्न, इदं रजतं रजतमिदमित्यनुभवद्वयस्य सर्वजनीनत्वात्, भासमान-वैशिष्ट्यानुयोगित्वलक्षणस्य विशेष्यत्वस्य रजतेऽपि सद्भावात्। न हि रजतत्वसंसर्गो रजततादात्म्यं वा यच्छुक्तौ भासते, तद्रजते नास्ति,किन्त्वस्त्येव। अन्यथा रजतांशे ज्ञानस्य निर्विकल्पकत्वप्रसङ्गात्, अविद्यावृत्तिरूपस्य ज्ञानरूपस्य वा स्मरणस्य तथात्वात्, ग्रन्थकृतै-वान्यथोक्तत्वाच्च। तथापि यादृशप्रामाण्यस्य परतस्त्वं नैयायिकादिभिरभ्युपगतम्, तादृश-प्रामाण्यमभ्युपगम्य स्वतस्त्वमुपपादनीयम्, स्वतस्त्वस्यैव विचारणीयत्वात्, अतः परोक्तमेव प्रामाण्यं दर्शितम्, न स्वोक्तम्, तेन न पूर्वापरविरोधः। अत एव स्मृत्यनुभवसाधारणमिति संवादिप्रवृत्त्यनुकूलमिति च प्रामाण्यविशेषणमुपपन्नं भवति, तद्वद्विशेष्यकत्व-समाना-धिकरण-तत्प्रकारक-ज्ञानत्वस्य संवादिप्रवृत्त्यनुकूलस्य स्मृतेरपि सम्भवात्, अन्यथा प्राक् स्मृतिव्यावृत्तमत्र स्मृतिसाधारणं प्रमात्वलक्षणं कुर्वतो मूलकारस्य न्यूनता स्यादिति भावः।

एतेन—यद् यज् ज्ञानगतं प्रामाण्यम्, न तत् सर्वं स्वतः उत्पद्यते ज्ञायते वा तदभाववति तत्प्रकारकत्वाभावस्य विशेष्यावृत्त्यप्रकारकत्वादेश्च प्रामाण्यस्य तदयोगादित्यत आह—तथा हीतीति शिखामणिव्याख्या प्रत्युक्ता, अनिर्वचनीयख्यातिवादिनां मते निर्विकल्पका-तिरिक्तस्य सर्वस्यापि ज्ञानस्य विशेष्यवृत्ति-प्रकारकत्वेन विशेष्यावृत्त्यप्रकारत्वाभावात्।

**प्रामाण्यम्। तच्च ज्ञानसामान्य-सामग्री-प्रयोज्यम्, न त्वधिकं गुणमपेक्षते, प्रमामात्रेऽनुगत-गुणाभावात्। नापि प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रिय-सन्निकर्षः, रूपादिप्रत्यक्षे चात्मप्रत्यक्षे च तदभावात्, सत्यपि तस्मिन् पीतः**

यदप्यत्र परिभाषाप्रकाशिकाकृतां व्याख्यानं—यद्यपि वेदान्तिनां मते तद्वति तत्प्रकारकत्वरूपं प्रामाण्यं भ्रमसाधारणमेव, तथापि संवादिप्रवृत्तिजनकत्वविशिष्टं तन्न तत्साधारणमिति न दोष इति। तदपि प्रत्युक्तं वेदितव्यम्, तथाविधप्रामाण्यस्य भ्रमसाधारण्याभावेऽप्यप्रमासाधारण्यात्, स्मृतेस्तथाविध-तत्प्रकारकत्ववत्त्वात्।

वस्तुतस्त्वनधिगताबाधितार्थविषयकज्ञानत्वं तद्वति तत्प्रकारकज्ञानत्वं वा प्रमात्वं नैतद्विप्रतिपत्तिविषयः, तस्यायोग्यपदार्थघटितत्वेन स्वतस्त्वायोगात्, किन्त्वज्ञातार्थ-निश्चयत्वमिति प्रागेवोक्तम्।

**तच्च** तथाविधप्रामाण्यञ्च। **ज्ञान**सामान्येति। ज्ञानसामान्यस्य या सामग्री आत्म-मनःसयोगादिरूपः कारणकलापस्तज्जन्यमित्यर्थः। तथा च यया सामग्र्या ज्ञान-मुत्पद्यते, तयैव सामग्र्या तद्गतं प्रमात्वमपीति भावः। नैयायिकास्तु प्रमात्वस्य गुण-जन्यत्वमाहुः, तान् निराकरोति—**न त्विति**। **अधिकं** ज्ञानसामान्यसामग्रीतोऽति-रिक्तम्। प्रमाया गुणानपेक्षत्वे हेतुमाह—**प्रमामात्र** इति। प्रमासामान्यं प्रतीत्यर्थः। **अनुगत**-गुणाभावात् अव्यभिचारिण एकस्य गुणस्याभावात्। ननु प्रमासामान्यं प्रत्यनु-गतगुणाभावेऽपि तत्तत्प्रमाजातीयं प्रत्यस्त्येवानुगतो गुणः। तथा हि—प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रियसन्निकर्षो गुणः, अनुमितौ सल्लिङ्गपरामर्शः, उपमितौ सादृश्यज्ञानम्, शाब्दे तु यथार्थयोग्यताज्ञानम्। तथा च तत्तद्गुणादेव तत्तत्प्रमात्वोत्पत्तिः स्यादित्याशङ्क्य भूयोऽवयवेन्द्रिय-सन्निकर्षस्य गुणत्वमपाकरोति—**नापी**ति। **भूयो**ऽवयवेति। भूयोभि-र्बहुभिरवयवैरिन्द्रियस्य सन्निकर्ष इत्यर्थः। निराकरणहेतुमाह—**रूपादी**ति। **तद**भावादि-त्यनेनान्वयः। आदिपदेन रसादिपरिग्रहः। **तदभावात्** भूयोऽवयवेन्द्रिय-सन्निकर्षा-भावात्, तेषामवयवाभावादिति भावः। ननु भूयोऽवयवेन्द्रिय-सन्निकर्षो न गुणः, किन्तु विशेषणवद्विशेष्यसन्निकर्षो गुणः। तथा च रूपादिप्रत्यक्षे न व्यभिचारस्तत्र विशेषण-वद्विशेष्येन्द्रियसन्निकर्ष-सत्त्वादित्यपरितोषादाह—**आत्म**प्रत्यक्षे चेति। तथा च मनसो-ऽनिन्द्रियत्वादात्मप्रत्यक्षे विशेषणवद्विशेष्येन्द्रिय-सन्निकर्षाभावेन प्रमात्वोत्पत्तिर्न स्या-दिति भावः। ननु बाह्यप्रत्यक्षे विशेषणवद्विशेष्येन्द्रिय-सन्निकर्षो गुणः, नान्तरप्रत्यक्षे।

**शङ्क इति प्रत्यक्षस्य भ्रमत्वात्। अत एव न सल्लिंग-परामर्शादिकमप्यनुमित्यादि-प्रमायां गुणः, असल्लिंग-परामर्शादि-स्थलेऽपि विषयाबाधेनानुमित्यादेः प्रमात्वात्। न चैवमप्रमापि प्रमा स्यात्, ज्ञानसामान्य-सामग्र्या**

तत्प्रत्यक्षे तु मनःसन्निकर्षो गुणः। स चात्मप्रत्यक्षेऽप्यस्तीत्यतोऽन्वयव्यभिचारं दर्शयति—**सत्यपी**ति। **तस्मिन्** भूयोऽवयवेन्द्रिय-सन्निकर्षे विशेषणवद्विशेष्यसन्निकर्षे वा गुणे। **भ्रमत्वा**दिति। तथा च गुणसद्भावेऽपि प्रमात्वानुत्पत्तेस्तस्य तथाविधगुणजन्यत्वं नैव युक्तमिति भावः। न च दोषेण प्रतिबन्धान्न प्रमात्वोत्पत्तिरिति वाच्यम्, तुल्यकालयोस्तुल्यबलयोश्च गुणदोषयोर्बाध्यबाधकभावे विनिगमनाभावात्, दोषस्याधिष्ठानारोप्ययोर्भेदग्रहे रजतत्वासंसर्गग्रहे च प्रतिबन्धकत्वेन गुणाप्रतिबन्धकत्वात्। प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रिय-सन्निकर्षादीनामगुणत्वमुपपाद्यानुमितौ सल्लिङ्गपरामर्शस्य गुणत्वं निराकरोति **अत** एवेति। व्यतिरेकव्यभिचारादेवेत्यर्थः। **सल्लिंगे**ति। यथार्थलिङ्गेत्यर्थः। **परामर्शा**दीत्यादिपदेन यथार्थ-सादृश्यज्ञान-यथार्थ-योग्यताज्ञानयोः परामर्शः। निराकरणहेतुमाह—**असल्लिंगे**ति। यदा धूलिपटले धूमभ्रमानन्तरं वह्निव्याप्य-धूमवानयमिति परामर्शे जाते वह्न्यनुमितिर्जायते। तत्र तथाविधासल्लिङ्गपरामर्शकाले इत्यर्थः। अनुमित्यादेरित्यादिपदेनोपमिति-शाब्दबोधयोः परामर्शः। ननु परामर्शादीनामनुमित्यादिकारणानामयथार्थत्वादनुमित्यादेरप्ययथार्थत्वं युक्तमित्यत आह—**विषया**बाधेनेति। तथा च तत्तत्स्थलेऽनुमेयादीनां सत्त्वाद् बाधो नास्तीति तत्तदनुमित्यादेरबाधितार्थविषयकत्वेन प्रमात्वमिति भावः। **प्रमात्वा**दिति। तथा च सल्लिङ्गपरामर्शाद्यभावेऽप्यनुमित्यादेः प्रमात्वदर्शनात् सल्लिङ्गपरामर्शादेर्न गुणत्वम्। नापि प्रमात्वस्य गुणजन्यत्वमिति भावः। सत्यपि सल्लिङ्गपरामर्शे गन्धव्याप्य-पृथिवीत्ववान् पाषाण इत्याकारके गन्धप्रागभावावच्छिन्ने पाषाणे गन्धानुमितेरप्रमात्वादन्वयव्यभिचारोऽपि बोध्यः। ननु यदि प्रमात्वस्य ज्ञानसामान्य-सामग्री-जन्यत्वम्, तर्ह्यप्रमायामपि प्रमात्वोत्पत्तिः स्यात्, प्रमात्वहेतुभूताया ज्ञानसामान्यसामग्र्यास्तत्रापि सत्त्वात्, अन्यथा तस्य ज्ञानत्वं न स्यादित्यापत्तिमभ्युपगमवादेन परिहरति—**न चे**ति। **एवं** प्रामाण्यस्य ज्ञानसामान्य-सामग्री-जन्यत्वे सति। **प्रमा** स्यादिति। ज्ञानसामान्यसामग्र्या तत्र प्रमात्वोत्पादादिति भावः। प्रमात्वोत्पत्तौ हेतुमाह—**ज्ञान**सामान्येति। **अविशे**षादिति। प्रमास्थले यथा ज्ञानसामान्यसामग्री वर्त्तते तथैवाप्रमास्थलेऽपि, अप्रमाया अपि ज्ञानत्वात्। तथा चाप्रमायाः प्रमात्वं

**अविशेषादिति वाच्यम्, दोषाभावस्यापि हेतुत्वाङ्गीकारात्। न चैवं परतस्त्वम्, आगन्तुक-भावकारणापेक्षायामेव परतस्त्वात्।**

दुर्वारमिति भावः। आपत्तिपरिहारहेतुमाह—**दोषा**भावस्येति। प्रमां प्रतीति शेषः। तथा च प्रमां प्रति दोषाभाव-सहकृत-ज्ञानसामान्य-सामग्र्या हेतुत्वम्, अप्रमां प्रति तु दोषसहकृत-ज्ञानसामान्य-सामग्र्या हेतुत्वम्। तेन नाप्रमायां प्रमात्वोत्पत्तिस्तत्र तत्कारणस्य दोषाभावस्याभावादिति भावः। अस्तु वाऽप्रमाया अपि ज्ञानत्वम्, तथापि तत्र प्रमात्वापत्तिर्न युक्ता, तत्र प्रमात्वोत्पत्तेरिष्टत्वात्। न चैतावता तस्याः प्रमाप्रमा-रूपत्वम्, बाधात् प्राक् तस्यां प्रमात्वोत्पत्तावपि कारणदोषावगम-बाधबोधाभ्यां तदप-नयनाद् बाधादुत्तरमप्रमात्वात्। तथा चोक्तं वार्त्तिके—"तस्मात् स्वतःप्रमाणत्वं सर्वत्रौत्-सर्गिकं स्थितम्। बाधकारणदुष्टत्व-बोधाभ्यां तदपोद्यते"॥ इति। अद्वैतरत्नरक्षणे च—"तस्माद् दोषाद् भ्रम इत्येव मन्तव्यम्। तथा च गृहीतेऽपि प्रामाण्ये दोषात् संशयोऽस्तु, दोषोच्छेदादेव तु तदुच्छेद" इति। प्रत्यक्तत्त्वप्रदीपिकायाञ्च—"सत्यम्, गृहीतमेव तद् बाधकादपनीयते" इति।

वस्तुतस्त्वप्रमाया ज्ञानत्वमभ्युपगम्यैवायं परिहारः, सिद्धान्ते निरपवादप्रामाण्यस्यैवा-ङ्गीकारात्, ज्ञानाभासरूपायास्तस्या ज्ञानत्वाभावेन ज्ञानसामान्यसामग्रीजन्यत्वानभ्युप-गमात्। तथा चोक्तमद्वैतरत्नरक्षणे—"अप्रमाया अज्ञानविरोधित्वरूप-ज्ञानत्वाभावेन तज्-ज्ञानस्य ज्ञानाग्राहकत्वा"दिति। न च भ्रमज्ञानं मे वृत्तमिति भ्रमगत-ज्ञानत्वानुव्यवसाया-नुपपत्तिरिति वाच्यम्, इदमाकारान्तःकरणवृत्तिनिष्ठस्यैव ज्ञानत्वस्य तदविविक्ताविद्या-वृत्तिरूपे भ्रमे प्रतीयमानत्वात्। न हि भ्रमनिष्ठं ज्ञानत्वम्, तस्य ज्ञानाभासत्वात्।

नन्वेवं प्रमात्वस्योत्पत्तौ परतस्त्वं स्यात्, ज्ञानसामान्यसामग्र्यतिरिक्तस्य दोषा-भावस्य प्रमां प्रति हेतुत्वाङ्गीकारादित्याशङ्क्य निराकरोति—**न चे**ति। **एवं** दोषाभाव-स्यापि प्रमां प्रति हेतुत्वे। **परत**स्त्वमिति। प्रमाया इत्यादिः। प्रमायाः परतस्त्वा-भावे हेतुमाह—**आगन्तु**केति। ज्ञानसामान्य-सामग्र्यतिरिक्तेत्यर्थः, ज्ञानत्वाप्रयोजकेति यावत्। एतत्पदानिवेशे प्रमायाः परतस्त्वापत्तिः स्यात्, तस्या अदृष्टादिभाव-सापेक्ष-त्वात्। एतत्पदनिवेश तु न प्रमायाः परतस्त्वापत्तिः, तस्या अदृष्टादिसापेक्षत्वेऽपि तस्यादृष्टादेर्ज्ञानसामान्य-सामग्रीत्वेनागन्तुकत्वाभावात्। भावपदानिवेशे प्रमाया दोषा-भाव-सापेक्षत्वात् परतस्त्वापत्तिः, प्रतिबन्धकाभावस्याहेतुत्वमते तस्य प्रतिबन्धकाभाव-

**ज्ञायते च प्रामाण्यं स्वतः। स्वतो ग्राह्यत्वं च दोषाभावे सति यावत्-स्वाश्रयग्राहक-सामग्रीग्राह्यत्वम्। स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानं**

स्वेन ज्ञानसामान्यसामग्र्यतिरिक्तत्वात्, ज्ञानहेतोरेव ज्ञानसामग्रीत्वात्। भावपदनिवेशे तु न परतस्त्वापत्तिः, दोषाभावस्यागन्तुकत्वेऽपि भावत्वाभावात्। इदमापाततः।

वस्तुतस्तु प्रमाया दोषाभाव-सापेक्षत्वेऽपि परतस्त्वापादनं नोचितम्, अविद्यादृष्ट-दोषाभावादीनां साधारणकारणानां ज्ञानकारणत्वेन ज्ञानसामान्यसामग्रीत्वात्, ज्ञानसामान्य-सामग्र्यतिरिक्तापेक्षत्वे एव परतस्त्वादिति विभावनीयम्। परमार्थतस्तु दोषाभावस्य प्रमां प्रति न हेतुत्वम्, तस्य प्रमाप्रतिबन्धिकाया अप्रमाया निवर्त्तकत्वेनान्यथासिद्ध-त्वात्। तथा च प्रत्यक्तत्त्वप्रदीपिकायां—"स्यादेवं यद्यनन्यथासिद्धावन्वय-व्यतिरेकौ कारणत्वावेदकौ स्याताम्, तौ तु विरोध्यप्रमाप्रतिबन्धकत्वेनोपक्षीणौ न कारणत्व-मावेदयत" इति। तथा च विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्ताजन्यत्वं स्वतस्त्वमिति लक्षणं फलितम्। तत्र विज्ञानसामग्रीजन्यत्वमप्रामाण्येऽप्यस्तीति परतःप्रामाण्य-वादिभि-रङ्गीक्रियत इत्यप्रमायामतिव्याप्तिरर्थान्तरता च स्यात्, तन्निवृत्त्यर्थं—विशेष्यदलम्। तथा च नातिव्याप्तिस्तत्र विज्ञानसामग्रीजन्यत्वसत्त्वेऽपि तदतिरिक्ताजन्यत्वाभावात्, तस्यास्तदतिरिक्त-दोषजन्यत्वात्। तन्मात्रोक्तौ नित्येऽतिव्याप्तिः स्यात्, तस्याजन्यत्वेन तदतिरिक्ताजन्यत्वात्। अतः सत्यन्तदलम्। तथा च नातिव्याप्तिस्तस्याजन्यत्वेन विज्ञान-सामग्रीजन्यत्वाभावात्। न चैश्वरीय-नित्यप्रमायामव्याप्तिः, तज्ज्ञानस्याज्ञानविरोधित्वा-भावेन प्रमात्वानभ्युपगमात्। ज्ञानत्वं तस्याज्ञानानिवर्त्तकत्वेऽपि स्मृत्यादिवदिच्छादि-जनकत्वाद् गौणमेव मन्तव्यम्।

उत्पत्तौ स्वतस्त्वमुपपाद्य ज्ञप्तौ स्वतस्त्वमुपपादयितुं प्रतिजानीते—**ज्ञायते** चेति। स्वतो ग्राह्यत्वं लक्षयति—**स्वतो** ग्राह्यत्वञ्चेति। **दोषाभावे** आगन्तुक-दोषाभावे। **यावदि**ति। यावती स्वाश्रयस्य प्रमात्वाश्रयस्य ग्राहकसामग्री भासकसामग्री तया ग्राह्यत्व-मित्यर्थः। ग्राह्यत्वञ्च भास्यत्वम्, न तु तज्जन्य-ग्रहविषयत्वम्, सिद्धान्ते साक्षिण एव स्वाश्रयग्राहकत्वेन तज्जन्यग्रहाभावादिति भावः। मुरारिमिश्राणां मते ज्ञानग्राहकोऽनु-व्यवसायस्तेन यथा ज्ञानं गृह्यते, तथा तद्गतं प्रामाण्यमपि। तथा च तन्मते प्रमात्वस्य ज्ञानग्राहकसामग्रीग्राह्यत्वं सिद्धमेवेति तत्साधने सिद्धसाधनं स्यात्, अतस्तद्वारणाय—यावदिति। तथा च यावदित्यनेन साक्षिज्ञानादेरपि संग्रहात् तद्ग्राह्यत्वसाधने न सिद्ध-

**तेनापि वृत्तिज्ञाने गृह्यमाणे तद्गत-प्रामाण्यमपि गृह्यते। न चैवं प्रामाण्य-संशयानुपपत्तिः, तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभाव-घटित-स्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात्। यद्वा—यावत्-स्वाश्रयग्राहक-ग्राह्यत्वयोग्यत्वं स्वतस्त्वम्। संशयस्थले प्रामाण्यस्योक्तयोग्यतासत्त्वेऽपि**

साधनम्, तन्मते तस्यासिद्धत्वादिति भावः। लक्षणं योजयति—**स्वाश्रये**ति। **स्वं** प्रमात्वम्। **वृत्तिज्ञानं** वृत्त्यभिव्यक्त-चैतन्यम्, तस्यैवाज्ञाननिवर्त्तकत्वात्, अज्ञान-निवर्त्तकस्यैव प्रमात्वात्। **तद्**ग्राहकं प्रमाग्राहकम्, प्रमावभासकमिति यावत्। **तेनापि** साक्षिज्ञानेनापि। **गृह्यमाणे** अवभास्यमाने। **प्रामाण्यं** प्रमात्वम्। **गृह्यते** अव-भास्यते। एतेन ज्ञप्तौ परतस्त्ववादोऽपि निराकृतो वेदितव्यः। ननु प्रमात्वस्य साक्षि-ग्राह्यत्वेऽनभ्यासदशोत्पन्न-प्रमायां प्रमात्वसंशयो न स्यात्, प्रमावदेव तस्यापि निर्णीत-त्वात्, निर्णीते च संशयायोगात्। भवति च जलज्ञानानन्तरं संशय इदं जलं न वेति, इदं ज्ञानं प्रमा न वेति वा। तस्मात् प्रामाण्यसंशयानुपपत्तिरेव स्वतोग्राह्यत्व-बाधिकेत्यत आह—**न चे**ति। **एवं** प्रामाण्यस्य स्वतोग्राह्यत्वे। **संशया**नुपपत्तिरिति। प्रामाण्यस्य निश्चितत्वात्, निश्चिते च संशयायोगादिति भावः। बाधकपरिहारे हेतुमाह—**तत्रे**ति। प्रामाण्ये इत्यर्थः। **दोषस्यापि** सत्त्वेनेति। संशयो हि दोषजन्यो दोषं विनाऽनुपपद्य-मानो दोषसत्त्वमवगमयतीति भावः। **दोषा**भावघटितेति। दोषाभाव-सहकृतेत्यर्थः। **तत्र** प्रमायाम्। **अग्रहा**दिति। तथा च प्रमात्वनिश्चयकारणाभावात् प्रमात्वनिश्चयो नोत्पद्यत इति संशयप्रतिबन्धकस्य निश्चयस्याभावाच्छंशयोपपत्तिरिति भावः। ननु ज्ञानग्राहक-सामग्रीत एव प्रमात्वग्रहसम्भवे दोषाभावस्य तद्धेतुत्वकल्पना नैव युक्ता, तस्य विरोधिप्रतिबन्धकत्वेनान्यथासिद्धत्वात्। न चैकस्यापि संस्कारस्यानुभवनाशकत्व-स्मृति-हेतुत्ववदेकस्यापि दोषाभावस्य प्रतिबन्धकनिवृत्तिहेतुत्वं प्रमात्वग्रह-हेतुत्वञ्च स्यादिति वाच्यम्, स्मृतेः संस्कारातिरिक्तकारणान्तरानिरूपणादनन्यगतिकतयोभयहेतुत्वकल्पनेऽपि तद्वदत्रानन्यगतिकत्वाभावात्, प्रमात्वग्रहहेतुभूताया ज्ञानग्राहकसामग्र्या विद्यमानत्वात्। तथा चैकस्यैव ज्ञानग्राहकस्य प्रमात्वग्राहकत्वं कल्पनीयम्। तेन च ज्ञाने गृहीते तत्-प्रमात्वमपि गृहीतमेवेति कुतस्तत्संशय इत्यस्वरसादाह—**यद्वे**ति। **योग्यत्व**मिति। तथा च संशयस्थले प्रमात्वाग्रहेऽपि न प्रमात्वस्य स्वतस्त्वहानिः, तत्रापि ज्ञानग्राहकस्य साक्षिणो विद्यमानत्वात, ज्ञानस्य तद्ग्राह्यत्वयोग्यता-सत्त्वादिति भावः। ननु संशयस्थले तादृश-

**दोषवशेनाग्रहान्न संशयानुपपत्तिः। अप्रामाण्यं तु न ज्ञानसामान्य-सामग्री-प्रयोज्यम्, प्रमायामप्यप्रामाण्यापत्तेः; किन्तु दोष-प्रयोज्यम्। नाप्यप्रामाण्यं**

योग्यतासद्भावे कथं न प्रमात्वग्रह इत्यत आह—**दोष**वशेनेति। **अग्रहा**दिति। तथा च प्रमात्वग्रहस्य पुष्कलकारणे सत्यपि प्रबलप्रतिबन्धकवशान्न प्रामाण्यनिश्चयस्तेन न तत्-संशयस्यानुपपत्तिः, तत्सामग्र्यास्तत्र सद्भावादिति भावः।

वस्तुतस्त्वनभ्यासदशोत्पन्न-ज्ञानस्य प्रामाण्य-निश्चयेऽपि न तत्संशयानुपपत्तिः, दोष-प्राबल्यादेव तत्संशयोपपत्तेः, दोषाभावसहितस्य तस्य निश्चयस्य विपरीतज्ञानविरोधित्वेऽपि दोषसहितस्य तस्य विपरीतज्ञानाविरोधित्वात्। न चानभ्यासदशायामनभ्यास-रूपस्य दोषस्य विद्यमानत्वात् कथं प्रामाण्यज्ञानमिति वाच्यम्, फलबलेन तत्र तस्यादोष-त्वात्, विपरीतज्ञानोत्पत्तावेव तस्य दोषत्वात्। अत एव शास्त्र-युक्ति-संस्कार-पाटववतां स्थूलादिभिन्नोऽहमिति साक्षात्कारे स्थितेऽपि स्थूलोऽहमित्यादि-भ्रमसाक्षात्कारो जाय-मानः सङ्गच्छते, भ्रमसंस्काररूपस्य दोषस्य तत्र विद्यमानत्वात्। प्रपञ्चस्त्वाकरे द्रष्टव्यः।

पराभिमतस्याप्रामाण्यस्य तदभाववति तत्प्रकारकत्व-रूपस्य स्वतस्त्वं सांख्या इच्छन्ति। एवं हि मन्यन्ते—उपादानेषु सन्त एव सर्वे भावाः कारकव्यापारैरभिव्यज्यन्त इति। यद्येते भावाः स्वतोऽसन्तः स्युः, शशविषाणादिवत् साध्या न भवेयुः। न चैते न साध्याः, किन्तु साध्या एव। तस्मात् स्वतः सन्तः। उपादाननियम-दर्शनादेरपि भावानां स्वोपादानेषु स्वतः सत्त्वमवगच्छन्ति; एवं स्वतोऽसतामसाध्यत्वाद् ज्ञानगतयोरपि प्रामाण्या-प्रामाण्ययोर्भावभूतयोः स्वतःसत्त्वमवगन्तव्यमिति। सत्कार्यवादिनां सिद्धान्तमिमं निरा-कुर्वन्नप्रामाण्यस्य परतस्त्वमुपपादयति—**अप्रामाण्य**मिति। अप्रमात्वरूपस्याप्रामाण्यस्य स्वतस्त्वाभावे हेतुमाह—**प्रमायाम**पीति। ज्ञानसामान्यसामग्र्यास्तत्रापि सम्भवादप्रमात्वो-त्पत्त्यापत्तेरित्यर्थः। तथा च प्रमाणत्वाप्रमाणत्वयोर्ज्ञानसामान्यसामग्रीप्रयोज्यत्वे स्वतस्त्वं स्यात्, एकज्ञानजात्यनुबन्धिनी च प्रमात्वाप्रमात्वे भविष्यतः। तच्च न सम्भवति, विरोधात्, विरुद्धधर्मसमावेशस्य भेदनिबन्धनत्वात्। अतो यथा नैकस्याग्नेः शीतोष्णत्वम्, एवं ज्ञानस्यैकस्य न प्रमाणत्वाप्रमाणत्वे। तस्मादप्रामाण्यस्य ज्ञान-सामान्य-सामग्रीप्रयोज्यत्वं नैव कल्पनीयमिति भावः। तर्ह्यप्रमात्वं किं-प्रयोज्यमित्यत्राह—**किन्त्वि**ति। **दोष-**प्रयोज्यम् आगन्तुकदोष-प्रयोज्यम्। तथा च ज्ञानसामान्यसामग्र्यतिरिक्त-जन्यत्वेन तस्य परतस्त्वमेव न स्वतस्त्वमिति भावः। अप्रामाण्यस्य ज्ञप्तौ स्वतस्त्वं निराकुर्वन्

**यावत्-स्वाश्रय-ग्राहक-ग्राह्यम्, अप्रामाण्य-घटक-तदभाववत्त्वादेर्वृत्तिज्ञानानुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात्; किन्तु विसंवादि-प्रवृत्त्यादि-लिंगकानुमित्यादि-विषय इति परत एवाप्रामाण्यमुत्पद्यते ज्ञायते च।**

**इति श्रीमन्महामहोपाध्याय-धर्मराजाध्वरीन्द्र-**
**विरचितायां वेदान्त-परिभाषायाम्**
**अनुपलब्धिपरिच्छेदः**

परतस्त्वमुपपादयति—**नापी**ति। निराकरणहेतुमाह—**अप्रामा**ण्येति। अप्रामाण्यस्य घटका ये तदभाववत्त्वादिस्तस्येत्यर्थः। तदभाववद्विशेष्यक-तत्प्रकारक-ज्ञानत्वस्याप्रमात्व-रूपत्वात् तदभाववत्त्वादेरप्रामाण्यघटकत्वमिति भावः। **वृत्ति**ज्ञानानुपनीतत्वेनेति। अविद्यावृत्त्यग्रहीतत्वेनेत्यर्थः। तथा च शुक्तौ रजतज्ञानदशायामिदमाकारान्तःकरणवृत्तिर्जायते, रजताकारा त्वविद्यावृत्तिः, रजतत्वाभाववदाकारा तु न काचन वृत्तिरुदेति। अतो वृत्तिज्ञानमिदंविशेष्यकमपि रजतत्वप्रकारकमपि न रजतत्वाभाववद्विशेष्यकम्। तस्मात् सिद्धं रजतत्वाभाववद्विशेष्यकत्वादेर्वृत्तिज्ञानाविषयत्वमिति भावः। **अशक्य**त्वादिति। यद्धि वृत्त्युपनीतम्, तदेव साक्षिणा ग्रहीतव्यम्। वृत्त्युपनीतन्तु रजतत्वप्रकारकत्वम्, तदेव साक्षिणा गृह्यते। रजतत्वाभाववद्विशेष्यकत्वन्तु न वृत्त्युपनीतम्। अतस्तत् साक्षिणा ग्रहीतुमशक्यम्। तस्मात् तन्न स्वतोग्राह्यमिति भावः। तर्ह्यप्रमात्वं केन ग्रहीतव्यमित्यत्राह—**किन्त्वि**ति। **विसं**वादीति। तदर्थिनस्तदप्राप्तिफलिका प्रवृत्तिर्विसंवादिप्रवृत्तिः, सा आदिर्यस्य तद् विसंवादिप्रवृत्त्यादि, तदेव लिङ्गं यस्यानुमित्यादेरिति विग्रहः। प्रवृत्त्यादि-लिङ्गकानुमिति-प्रयोगस्तु—इदं ज्ञानमप्रमा विसंवादिप्रवृत्तिजनकत्वादित्येवं-रूपः। प्रवृत्त्यादीत्यादिपदेन निद्रादिदोषजन्यत्वस्य परिग्रहः। अनुमित्यादीत्यादिपदेन बाधज्ञानादि-परिग्रहः। प्रकरणं उपसंहरति—**इती**ति। अत एवेत्यर्थः। **ज्ञायते** चेति।

एतेन—सांख्यानां बौद्धानां चाप्रामाण्यस्वतस्त्ववादो निराकृतो वेदितव्यः।

इति श्रीमन्महामहोपाध्याय-द्राविड़-लक्ष्मण-शास्त्रि-पूज्यपाद-शिष्य-
श्रीमन्महामहोपाध्याय-योगेन्द्रनाथ-तर्कसांख्यवेदान्ततीर्थ-
श्रीचरणान्तेवासि-श्रीपञ्चानन-भट्टाचार्य-विरचिते
परिभाषा-संग्रहे अनुपलब्धिपरिच्छेदः

## विषयपरिच्छेदः

एवं निरूपितानां प्रमाणानां प्रामाण्यं द्विविधं—व्यावहारिक-तत्त्वावेदकत्वं पारमार्थिक-तत्त्वावेदकत्वं चेति। तत्र ब्रह्मस्वरूपावगाहि-प्रमाणव्यतिरिक्तानां सर्व-प्रमाणानामाद्यं प्रामाण्यम्, तद्विषयाणां व्यवहारदशायां बाधाभावात्। द्वितीयन्तु जीवब्रह्मैक्य-पराणां सदेव सौम्येदमग्र आसीदित्यादीनां तत्त्वमसीत्यन्तानाम्, तद्विषयस्य जीव-परैक्यस्य कालत्रयाबाध्य-

वेदान्तार्थसिद्ध्यनुकूलं प्रमाणानां प्रामाण्यं विभजते—**एव**मिति। **प्रमाणानां** प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिरूपाणां प्रमाकरणानाम्। **प्रामाण्यं** प्रमाजनकत्वम्, बोधकत्वमिति यावत्। **तत्त्वा**वेदकत्वं तत्त्वबोधकत्वम्। **पारमा**र्थिकेति। कालत्रयाबाधितेत्यर्थः। किं सर्वप्रमाणानां द्विविधं प्रामाण्यम्? नेत्याह—**तत्रे**ति। द्विविध-प्रामाण्ययोर्मध्ये इत्यर्थः। **ब्रह्म**स्वरूपावगाहीति। ब्रह्मस्वरूपबोधकेत्यर्थः। **आद्यं** व्यावहारिक-तत्त्वावेदकत्वम्। तत्र हेतुमाह---**तद्विष**याणामिति। तत्प्रमेयाणामित्यर्थः, ब्रह्मस्वरूप-बोधक-प्रमाणातिरिक्त-प्रमाण विषयाणामिति यावत्। **व्यव**हारदशायां व्यवहारकाले। **बाधा**भावादिति। व्यावहारिक-बाधकारणस्य व्यावहारिकोपादानाज्ञाननाशस्य व्यवहारकालेऽभावादिति भावः। **द्वितीयन्तु** पारमार्थिक-तत्त्वावेदकत्वन्तु। **जीव**ब्रह्मैक्यपराणाम् अखण्डचैतन्यस्वरूपमात्र-तात्पर्यकाणाम्, ऐकस्याखण्डचैतन्यस्वरूपत्वादिति भावः। ननु तत्त्वमस्यादि-वाक्यानां कथमात्मस्वरूपपरत्वम्, वचनव्यक्तिभेदेनार्थभेदोपपत्तेः। तथा हि—तस्मै त्वमिति वचनव्यक्तौ तस्मै जगत्कारणाय ब्रह्मणे त्वं त्वदात्मा समर्पणीय इत्यर्थो ज्ञायते। तस्मात् त्वमिति वचनव्यक्तौ तस्माज् जातस्त्वमित्यर्थः, तस्य त्वमिति वचनव्यक्तौ तत्स्वामिकस्त्वमित्यर्थः, तस्मिंस्त्वमिति वचनव्यक्तौ तदाश्रितस्त्वमित्यर्थोऽवबुध्यते। एवमन्यस्मादपि वचनव्यक्तिभेदादर्थभेदसम्भवे कथमेषां जीवब्रह्मैक्य-परत्वं निश्चीयत इत्यत आह—**सदेवे**ति। तथा चोपक्रमादि-लिङ्गगृहीताखण्डब्रह्मतात्पर्यानुरोधेन तत्पदोत्तर-श्रूयमाण-चतुर्थ्यादिविभक्तेरर्थं परित्यज्य निरुक्ततात्पर्यानुकूलं सामानाधिकरण्यमाश्रयितुं युक्तमिति भावः। **तत्त्वम**सीत्यन्तानां वेदान्तवाक्यानामिति शेषः। वेदान्तानां पारमार्थिकतत्त्वावेदकत्वे हेतुमाह—**तद्**विषयस्येति। वेदान्तवाक्यविषयस्येत्यर्थः। **जीव**परैक्यस्य शुद्धचैतन्यस्य। **काल**त्रयाबाध्यत्वादिति। अध्यस्तस्यैव

**त्वात्। तच्चैक्यं तत्त्वं-पदार्थ-ज्ञानाधीनमिति प्रथमं तत्पदार्थो लक्षण-प्रमाणाभ्यां निरूप्यते।**

**तत्र लक्षणं द्विविधम्—स्वरूप-लक्षणं तटस्थ-लक्षणं चेति। तत्र स्वरूपमेव लक्षणं स्वरूपलक्षणम्। यथा सत्यादिकं ब्रह्मस्वरूपलक्षणम्। "सत्यं**

बाध्यत्वाच्छुद्धचैतन्यस्यानध्यस्तत्वादबाध्यत्वमिति भावः। तर्ह्यादौ तद्विषयो निरूप्यताम्, किं तत्त्वंपदार्थविवेचनेनेत्यत आह—**तच्चै**क्यमिति। जीवपरैक्यज्ञानमित्यर्थः। **तत्त्वं**-पदार्थज्ञानाधीनमिति। ऐक्यस्य वाक्यार्थत्वाद् वाक्यार्थबोधस्य पदार्थज्ञानपूर्वकत्वादिति भावः। **प्रथम**मिति। तत्पदस्य प्रथमोपात्तत्वात् त्वंपदार्थापेक्षया तदर्थस्य दुर्ज्ञेयत्वाच्च प्रथमं तत्पदार्थनिरूपणमिति भावः। **लक्षण**-प्रमाणाभ्यामिति। लक्षणेन हि प्रमेयस्य सर्वतो व्यावृत्तत्वस्वरूपे उपस्थापिते सम्भावनया च तस्य सम्भावितत्वे व्यवस्थापिते प्रमाणं तदवबोधाय तत्र प्रवर्त्तते नान्यथेति। उक्तञ्च—"मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्। तच्चाध्यक्षादिमानेषु गीर्वाणैरपि दुर्भण"मिति। न च प्रमाणमेव प्रमेयं व्यवस्थापयत् तस्य सम्भावितत्वं सर्वतो व्यावृत्तत्वञ्च व्यवस्थापयति, किं लक्षणसम्भावनाभ्यामिति वाच्यम्, प्रमाणस्य स्वरूपमात्रपर्यवसन्नस्य व्यावृत्तादावप्रसरात्। तस्माल्लक्षणेन व्यावृत्तस्वरूपमुपस्थाप्य तस्य च सम्भावनया सम्भावितत्वं सम्पाद्य तत्र प्रमाणं प्रदर्शनीयमिति भावः। यद्यपि ब्रह्मणि लक्षणं प्रमाणञ्च भिन्नं न भवति, लक्षणवाक्यस्यैव प्रमाणवाक्यत्वात्। न चैकस्योभयपरत्वम्, वाक्यभेद-प्रसङ्गात्। तथापि लक्षणादाववान्तर-तात्पर्यं स्वरूपे च महातात्पर्यमिति न विरोधः।

एतेन—यदत्र परिभाषाप्रकाशिकाकृता लक्षण-प्रमाणादि-पद-विवरणं लक्षणवाक्यरूपप्रमाणवाक्याभ्यामित्यर्थः, न तु लक्षणेन प्रमाणेन चेतीति, तत् प्रत्युक्तम्, सूत्र-भाष्यमूलविरोधात्, व्यापारभेदाच्च।

तत्र प्रमाणस्य लक्षणपूर्वकत्वादादौ लक्षणं विभजते—**तत्रे**ति। लक्षण-प्रमाणयोर्मध्ये इत्यर्थः। **लक्षणम्** अव्याप्त्यादि-दोषत्रयरहितो लक्ष्यस्यासाधारणो धर्मः। स्वरूप-प्रतिपत्तौ स्वरूपलक्षणस्य प्रधानत्वात् श्रुतौ च प्रथमोपदेशात् तदेवादौ दर्शयति—**तत्रे**ति। द्विविधलक्षणयोर्मध्ये इत्यर्थः। स्वरूपस्य लक्षणमिति भ्रमनिरासायाह—**स्वरूप**मेवेति। प्रकृतोपयोगितया वैदिकोदाहरणमाह—**यथे**ति। **सत्यादिक**मित्यादिपदेन ज्ञानानन्दादि-परिग्रहः। सत्यादीनां ब्रह्मस्वरूपलक्षणत्वे तैत्तिरीयादि-श्रुतिं प्रमाणयति—**सत्य-**

**ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्मेति व्यजानादि"त्यादि-श्रुतेः। ननु स्वरूपस्य** मिति। विशेष्यस्य ब्रह्मणस्त्रीण्येतानि सत्यादीनि विशेषणानि न विशेषण-प्रधानानि विशेषणस्य सजातीयव्यावर्त्तकत्वात्, ब्रह्मणश्च सजातीयान्तराभावात्, किन्तु लक्षणार्थ-प्रधानानि, लक्षणस्य सजातीय-विजातीय-व्यावर्त्तकत्वात्। एतदुक्तं भवति—अति-व्याप्त्यादि-दोषत्रयरहितो व्यावर्त्तको धर्मो लक्षणम्। ब्रह्मशब्दनिर्वचन-बलेन यद-विशेषतः किञ्चिन्महत् प्रतिपन्नम्, तत् सत्यं ज्ञानमनन्तमिति विशेषतः प्रतिपत्तव्यमिति विशेषावगतिशेषभूतं लक्षणम्। अत एकैको विशेषणशब्दः परस्परं निरपेक्षो ब्रह्मशब्देन सम्बध्यते—सत्यं ब्रह्म ज्ञानं ब्रह्मानन्तं ब्रह्मेति। यद् यद्रूपेण निश्चितं न व्यभिचरति, तत् सत्यम्, यच्च व्यभिचरति, तदनृतमित्युच्यते। अतो विकारोऽनृतम्। तत्र सत्यत्व-विशेषणाद् ब्रह्मणोऽसत्याद् विकाराद् व्यावृत्तिरवगम्यते। न हि विक्रियमाणं वस्तु सत्यं भवितुमर्हति। सत्यत्वे च ब्रह्मणः कारणत्वं प्राप्तम्, लोके सत्यस्यैव मृदादि-वस्तुनः कारणत्वदर्शनात्। कारणस्य च कारकत्वं मृद्वदचिद्रूपत्वञ्च प्राप्तम्, अत इदमुच्यते—**ज्ञानं** ब्रह्मेति। चिद्रूपं ब्रह्मेत्यर्थः। ज्ञानशब्दोऽत्र भावव्युत्पत्त्या निर्विशेषं चिन्मात्रं लक्षयति, सत्यादिपद-सन्निधानात्। ज्ञानकर्तृत्वे च ब्रह्मणः सत्यत्वमनन्तत्वञ्चानुपपन्नं स्यात्, ज्ञानकर्त्तृत्वेन हि विक्रियमाणं कथं सत्यं भवेदनन्तञ्च। अतश्चिद्रूपविशेषणाद् ब्रह्मणो ऽचिद्रूपात् कर्त्रादिकारकाच्च व्यावृत्तिरवगम्यते। अस्तु तर्हि ब्रह्मणोऽन्तवत्त्वम्, लौकिकस्य ज्ञानस्यान्तवत्त्वदर्शनात्। अतस्तन्निवृत्त्यर्थमुक्तम्—**अनन्त**मिति। देश-काल-वस्तु-परिच्छेद-शून्यमित्यर्थः। अस्मादेव चानन्तत्वविशेषणादन्तवद्व्यावृत्तिरवगम्यते। यत्र विशेष्यं प्रमाणान्तरसिद्धम्, तत्र विशेषणं व्यावृत्तिमात्र-परम्। यथा नीलमुत्पल-मित्यादौ। इह तु ब्रह्म न प्रमाणान्तरसिद्धम्, पदमात्रस्याप्रमाणत्वात्, सत्यादीनाञ्च विशेषणानां व्यावृत्तिमात्र-परत्वात्। तथा चासदर्थकं लक्षणवाक्यं स्यात्। अतोऽनन्य-गतिकतया विशेषणान्येव स्वरूपसमर्पणद्वारेण विरोधि-व्यावर्त्तकानि मन्तव्यानि। यद्यपि सिद्धान्ते सत्याद्यन्यतमपदं स्वरूपलक्षणपरम्, ब्रह्मणोऽन्यस्य परमार्थसत्यत्वा-भावात्। तथापि परमते सत्यत्वस्य ब्रह्मणोऽन्यत्राङ्गीकारात् सत्यत्वाद्युपलक्षितं ब्रह्म जड़ादिरूपं न वेति संशयात् मिलितं विना तादृश-संशय-निवर्त्तको जड़ादिविलक्षणस्य ब्रह्मस्वरूपस्य निश्चयो न भवतीति मिलितं लक्षणम्। तस्माद् युक्तं सत्यादीनां ब्रह्मलक्षणत्व-मिति भावः। एष एव व्याख्याप्रकारः सर्वलक्षणवाक्येऽवगन्तव्यः। नन्वतिव्याप्त्यादि-

**स्ववृत्तित्वाभावेन कथं लक्षणत्वमिति चेन्न, स्वस्यैव स्वापेक्षया धर्मधर्मिभाव-कल्पनया लक्ष्य-लक्षणत्व-सम्भवात्। तदुक्तम्—**

**आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः।**
**अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते ॥ इति ॥**

**तटस्थ-लक्षणं नाम यावल्लक्ष्यकालमनवस्थितत्वे सति यद् व्यावर्त्तकं,**

दोषरहितस्य व्यावर्त्तक-धर्मस्य लक्षणत्वं चेत्, कथं स्वरूपस्य लक्षणत्वम्, तस्य धर्मित्वेन धर्मत्वाभावात्, अभेदे लक्ष्यलक्षणव्यवहाराभावाच्चेत्याशङ्क्ते—**नन्विति**। **स्वस्यैव** स्वापेक्षयेति। स्वस्यैव ब्रह्मण एव स्वापेक्षया ब्रह्मस्वरूपभूत-सत्यत्वाद्यपेक्षयेत्यर्थः। **धर्म-**धर्मिभावकल्पनयेति। यद्यपि सत्यज्ञानानन्दादयः परस्परं वस्तुतो न भिद्यन्ते, जड़त्वाद्यापत्तेः। यद्यपि च ते चिद्रूपे गृहीते गृह्यमाणा अपि दुःखप्रत्यनीकत्वादिरूपेणापरामृष्टा विविक्ता नोल्लिख्यन्ते, तथाप्यन्तःकरणवृत्त्युपाधावाकारभेदमापद्यमाना चिद्रूपाद् ब्रह्मणो भिन्ना इव प्रतिभासमाना धर्म-धर्मिभावं प्रतिपद्यन्ते। तस्मात् स्वरूपभूतानामपि तेषां लक्षणत्वं नानुपपन्नम्। न च सत्यज्ञानानन्दादीनां ब्रह्मस्वरूपत्वेऽन्तःकरणवृत्तावाकारभेदो न स्यात्। न ह्येकस्य कस्यचिद् वस्तुनो वृत्त्युपाधिनिबन्धन आकारभेदो दृष्टचरः, बहुशो घटाकारवृत्तौ जायमानायामप्याकारभेदादर्शनादिति वाच्यम्, सर्वतो व्यावृत्तरूपस्य ब्रह्मणोऽसत्यव्यावृत्ताकारेण वृत्त्युपारूढ़त्वे आकारभेदसम्भवात्, कम्बुग्रीवादिमान् घट इत्यभिज्ञायां सोऽयमित्यादि-प्रत्यभिज्ञायाञ्च तथा दृष्टत्वादिति भावः। सत्यत्वादीनां धर्मत्वे पञ्चपादिकासम्मतिमाह—**तदुक्तमिति**। पद्मपादाचार्यैरिति शेषः। **विषया-**नुभवो ज्ञानत्वम्। **नित्यत्वम्** अनन्तत्वम्। **च**कारात् सत्यत्वादिपरिग्रहः। नन्वानन्दादीनां ब्रह्मस्वरूपत्वान्न धर्मत्वमित्यत आह—**अपृथक्**त्वेऽपीति। स्वरूपत्वेऽपीत्यर्थः। **पृथगिवेति**। अन्तःकरणवृत्त्युपाधौ नानेवेत्यर्थः। तटस्थलक्षणमाह—**यावदिति**। लक्ष्यस्य यावन्तः स्थितिकालास्तावत् कालमविद्यमानत्वे सतीत्यर्थः। **व्यावर्त्तकम्** इतर-भेदबोधकम्। तथा च यावल्लक्ष्यकालानवस्थितत्वे सति व्यावर्त्तकत्वमिति तल्लक्षणं पर्यवसितम्। तत्र व्यावर्त्तकत्वमित्युक्तौ स्वरूपलक्षणेऽतिव्याप्तिस्तस्यापि व्यावर्त्तकत्वादतो लक्ष्यकालानवस्थितत्वं विशेषणम्। तावत्युक्तौ लक्ष्यालक्ष्योभयवृत्ति-धर्मे वृत्तिविषयत्वादिरूपेऽतिव्याप्तिरतो विशेष्यदलम्। तादृशधर्मस्याव्यावर्त्तकत्वान्नातिव्याप्तिरिति भावः। तावन्मात्रोक्तावसम्भवस्तटस्थस्य किञ्चिल्लक्ष्यकाल-वृत्तित्वेन लक्ष्यकालानवस्थितत्वाभावात्,

**तदेव। यथा गन्धवत्त्वं पृथिवीलक्षणम्, महाप्रलये परमाणुषूत्पत्तिकाले घटादिषु च गन्धाभावात्। प्रकृते च जगज्जन्मादि-कारणत्वम्। अत्र जगत्-**

अतो यावदिति लक्ष्यकालविशेषणम्। तथा च तटस्थस्य किञ्चिल्लक्ष्यकालवृत्तित्वेऽपि यावल्लक्ष्यकालावस्थितत्वाभावेन यावल्लक्ष्यकालानवस्थितत्व-सम्भवान्नासम्भव इति भावः। तत्र लौकिकोदाहरणमाह—**यथे**ति। **पृथिवी**लक्षणम् पृथिव्यास्तटस्थलक्षणम्। तत्र हेतुं दर्शयन् नैयायिकमतमभ्युपगम्य लक्षणं योजयति—**महा**प्रलय इति। **परमा**णुष्विति। पृथिवीपरमाणुष्वित्यर्थः। **गन्धा**भावादित्यनेनान्वयः। जन्यभावानधिकरणकालस्यैव महाप्रलयत्वात् तत्र गन्धस्यापि जन्यभावत्वेन विनाशादिति भावः। नन्वेवं स्यात्, यदि महाप्रलयः प्रामाणिकः स्यात्। न च महाप्रलयः प्रामाणिकः, प्रमाणादर्शनात्। पुराणादिवचनं प्रमाणमिति चेन्न, तस्यार्थवादत्वेन स्वार्थे तात्पर्याभावात्। तत् कथं पृथिवीपरमाणौ गन्धाभावः, अपाकज-गन्धस्य यावद्-द्रव्यभावित्वनियमात् तत्रापि गन्धसद्भावादित्यस्वरसादाह—**उत्पत्ति**काल इति।

एतेन—उभयमतेनाह—उत्पत्तिकाल इतीति शिखामणिकृतां व्याख्यानं प्रत्युक्तम्, सिद्धान्ते गुणवद्द्रव्योत्पत्तेरभ्युपगमात्, "गन्धेन गुणेन पूर्वानुगुणप्रवेशेन पञ्चगुणां पृथिवी"-मिति प्रश्नोपनिषद्भाष्योक्तेः, "क्रियागुणादेरपि साश्रयस्यैवोत्पत्तेरुत्पद्यमानाश्रयस्यैवो-पादानत्वादि"ति विवरणोक्तेश्च।

**घटा**दिषु गन्धाभावादिति। कार्यस्य गुणस्य समवायिकारणं द्रव्यमेवेति तस्य गुणात् प्राक्क्षणवर्त्तित्वं वक्तव्यम्, नियतप्राक्क्षणवर्त्तिन एव कारणत्वात्। अतस्तद्-द्रव्यमुत्पन्नमात्रं क्षणमगुणमङ्गीकर्त्तव्यम्। तेनोत्पत्तिकाले घटादिषु न गन्धोत्पत्तिरिति भावः। तत्पदार्थस्य ब्रह्मणस्तटस्थलक्षणमाह—**प्रकृते** चेति। तत्पदार्थे ब्रह्मणि चेत्यर्थः। **जन्मा**दीति। आदिपदेन स्थितिप्रलययोः संग्रहः, "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते। आनन्देन जातानि जीवन्ति। आनन्दं प्रयन्त्यभिसंविशन्ती"ति तैत्तिरीयश्रुतेः, "जन्माद्यस्य यत" इति सूत्राच्चेति भावः। यद्यपि जगज्जन्म-स्थिति-लयेष्वेकैककारणत्व-मप्यनन्यगामित्वाल्लक्षणं भवितुमर्हति, तथाप्येकैककारणत्वस्य निमित्तकारण-साधारण्-त्वाद् ब्रह्मणो निमित्तत्वमात्रमिति शङ्का स्यात्, तद्व्यवच्छेदाय ब्रह्मण उपादानत्व-प्रत्यायनाय च त्रितयग्रहणं कृतमिति मन्तव्यम्। ननु जगज्जन्मादिकारणत्वं ब्रह्मणो न लक्षणम्, जगदन्तर्गतामनादिभावभूतां मायां प्रति तस्याऽकारणत्वादित्याशङ्क्य जगच्च-

**पदेन कार्यजातं विवक्षितम्। कारणत्वं च कर्त्तृत्वम्, तेनाऽविद्यादौ नातिव्याप्तिः। कर्त्तृत्वं च तदुपादानगोचरापरोक्षज्ञानचिकीर्षा-कृतिमत्त्वम्। ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञान-सद्भावे च—"यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः। तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायत" इत्यादि-**

छब्दार्थ-निरूपणेन निराकरोति—**अत्रे**ति। अस्मिन् लक्षण इत्यर्थः। नन्वेवमप्येतल्लक्षणं नैव युक्तम्, तस्य कालादृष्टादि-साधारणत्वात्, तेषामपि कार्यप्रपञ्चस्य कारणत्वादित्याशङ्कां कारणपदार्थनिरूपणेन निराकरोति—**कारणत्वं** चेति। तादृशार्थ-विवक्षायां फलमाह—**तेने**ति। **अविद्या**दावित्यादिपदेन प्रधानादृष्टाद्यचेतन-कारणस्य जीवादिचेतन-कारणस्य च परिग्रहः। **नाति**व्याप्तिरिति। प्रधानादीनामुपादानतया जगज्जन्मादि-हेतुत्वेऽप्याधारतया स्थितिहेतुत्वेऽपि लयाधारतया लयहेतुत्वेऽपि तत्कर्त्तृत्वायोगात्, तेषामचेतनत्वात्, जीवादीनां शरीरेन्द्रियादिसृष्ट्युत्तरं जन्मादिकर्त्तृत्वसम्भवेऽपि शरीरेन्द्रियादि-रहितानां तेषां जन्मादिकर्त्तृत्वायोगादिति भावः। नन्वविद्यादीनां कारणत्वे कर्त्तृत्वमपि स्यात्, कारणविशेषस्यैव कर्त्तृत्वात्। तथा चाविद्यादावतिव्याप्तिस्तत्रापि तल्लक्षणसत्त्वादित्यतः कर्त्तृत्वस्यार्थमाह—**कर्त्तृत्व**ञ्चेति। **तदुपा**दानेति। जगदुपादाने-त्यर्थः। **गोचरः** विषयः। तथा चाविद्यादीनां जड़तया जगदुपादानगोचरापरोक्ष-ज्ञानवत्त्वाद्यभावात्, जीवस्य वा हिरण्यगर्भस्य चेतनस्य कतिपयकार्योपादानगोचरा-परोक्ष-ज्ञानादिसद्भावेऽपि सकलजगदुपादान-गोचरापरोक्षज्ञानाद्यभावान्न तत्र तत्रातिव्याप्तिरिति भावः। ननु ब्रह्मणस्तादृशापरोक्ष-ज्ञानादि-सद्भावे न प्रमाणमित्याशङ्क्य तत्र मुण्डकोपनिषदं प्रमाणयति—**ईश्वरस्ये**ति। ब्रह्मण इति वक्तव्ये ईश्वरस्येति वचनं ब्रह्मेश्वरयोरभेदज्ञापनार्थम्, मायोपाधिना ब्रह्मेश्वरयोः कल्पितभेदवत्त्वेऽपि वास्तवभेदाभावात्, मायावच्छिन्न-ब्रह्मण एवेश्वरत्वादिति भावः। **यः सर्वज्ञ** इति। श्रुत्यर्थस्तु—**यः** उक्तलक्षणोऽक्षराख्यः **सर्वज्ञः** सामान्येन समष्टिरूपेण मायाख्येनोपाधिना सर्वं जानातीति सर्वज्ञः विशेषेण व्यष्टिरूपेण सर्वं वेत्तीति **सर्ववित् यस्य ज्ञानमयं** ज्ञान-विकारमेव सार्वज्ञ्यलक्षणं **तपो** नायासलक्षणं **तस्माद्** यथोक्तात् सर्वज्ञात् **एतत्** उक्तं कार्यलक्षणं **ब्रह्म** हिरण्यगर्भाख्यं **जायते**। किञ्च **नाम** असौ देवदत्तो यज्ञदत्त इत्यादि-लक्षणं **रूपम्** इदं शुक्लं नीलमित्यादि **अन्नञ्च** व्रीहि-यवादि-लक्षणं जायत इति। यद्यपि बाह्येन्द्रियेण मनसा वा ब्रह्मणः सर्वज्ञत्वं न घटते, तस्येन्द्रियाद्यभावात्,

**श्रुतिर्मानम्। तादृश-चिकीर्षा-सद्भावे च—"सोऽकामयत बहु स्यां प्रजायेये"-त्यादि-श्रुतिर्मानम्। तादृश-कृतौ च—"तन्मनोऽकुरुते"त्यादि-श्रुति-वाक्यम्। ज्ञानेच्छाद्यन्यतमगर्भ-लक्षणत्रितयं विवक्षितम्,अन्यथा व्यर्थ-विशेषणतापत्तेः। अत एव जन्म-स्थिति-ध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः। एवं च लक्षणानि**

"पश्यत्यचक्षुः स शृणोत्यकर्ण" इत्यादिश्रुतेः। तथापि स्वरूपज्ञानेन तस्य सर्वदर्शित्वं बोध्यम्। तच्च स्वरूपज्ञानं यद्यपि न सविषयकम्, तथापि विषयस्य संसर्गे आदित्यवद् भासकम्, अतस्तस्य सर्वज्ञत्वाभिधानम्। तथा चोक्तं विवरणे पञ्चमवर्णके—"सर्वज्ञशब्देन सर्वावभासक्षमं विज्ञप्तिमात्रमादित्यादि-प्रकाशवदविषयोपाधिकं विज्ञानमेव ब्रह्मस्वरूप-लक्षणं विवक्ष्यते" इति। **इत्यादी**त्यादिपदेन "तदैक्षतेत्यादि-श्रुतिपरिग्रहः। उपादान-गोचर-चिकीर्षा-सद्भावे श्रुतिं प्रमाणयितुमाह—**तादृशे**ति। जगदुपादानगोचरेत्यर्थः। **स** परमात्मा **अकामयत** कामितवान्। कामनाविषयमाह—**बहु** स्यामिति। बहु भवेयमि-त्यर्थः। एकस्य परमात्मनो बहुभवनमेव सृष्टिरतस्तद्विषयिणी कामनाऽस्य जातेति भावः। **इत्यादी**त्यादिपदेन "सोऽकामयत द्वितीयो मे आत्मा जायेते"त्यादि-श्रुतिपरिग्रहः। उपादानगोचरकृतिसद्भावे श्रुतिं प्रमाणयितुमाह—**तादृशे**ति। उपादानगोचरेत्यर्थः। **तन्मनो**ऽकुरुत इति। श्रुत्यर्थस्तु प्रागेव दर्शितः। **इत्यादी**त्यादिपदेन—स त्रेधात्मानं व्यकुरुतेत्यादिश्रुतिपरिग्रहः। ननु ज्ञानेच्छादीनां समष्टिर्लक्षणे विवक्षिता व्यष्टिर्वेत्यत आह —**ज्ञाने**च्छेति। **अन्यत**मगर्भेति। एकैकगर्भेत्यर्थः। **लक्षण**-त्रितयमिति। जगदुपादान-गोचरापरोक्षज्ञानवत्त्वम्, जगदुपादानगोचर-चिकीर्षावत्त्वम्, जगदुपादानगोचर-कृति-मत्त्वञ्चेति लक्षणत्रितयमित्यर्थः। अतिव्याप्त्यभावादिति भावः। विपक्षे बाधकमाह—**अन्यथे**ति। लक्षणत्रितयस्याविवक्षितत्वे इत्यर्थः। ज्ञानादित्रितयस्यैव कर्तृत्वलक्षणत्वे इति यावत्। **व्यर्थ**विशेषणत्वापत्तेरिति। लक्षणघटकविशेषणानामितरभेदानुमितौ व्यभिचारा-वारकत्वात्, व्यभिचारावारक-विशेषणानां व्यर्थत्वाङ्गीकारादिति भावः। अत एव जन्म-स्थितिभङ्गानामपि समष्टिर्ब्रह्मलक्षणे न विवक्षणीयेत्यत आह—**अत** एवेति। लक्षणघटक-विशेषणानां व्यर्थत्वापत्तेरेवेत्यर्थः। **लक्षणे** ब्रह्मणस्तटस्थलक्षणे। **प्रवेश** इति। तथा च जगज्जन्मकर्तृत्वं जगत्स्थितिकर्तृत्वं जगल्लयकर्तृत्वमिति त्रितयं ब्रह्मणो लक्षणं विवक्षित-मिति भावः। ज्ञानादीनां जन्मादीनाञ्च समष्ट्यविवक्षायाः फलमाह—**एवञ्चे**ति। ज्ञानाद्येकैक-गर्भस्य कर्तृत्वलक्षणत्वे जन्माद्येकैकगर्भस्य च ब्रह्मतटस्थलक्षणत्वे चेत्यर्थः।

**नव सम्पद्यन्ते। ब्रह्मणो जगज्जन्मादिकारणत्वे च "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ती"त्यादि-श्रुतिर्मानम्।**

**यद्वा निखिल-जगदुपादानत्वं ब्रह्मणो लक्षणम्। उपादानत्वं च जगद्-**

**लक्षणानि** ब्रह्मलक्षणानि। **नवेति**। जगज्जन्मानुकूलापरोक्षज्ञानवत्त्वं जगज्जन्मानुकूल-चिकीर्षावत्त्वम्, जगज्जन्मानुकूल-कृतिमत्त्वम्। जगत्स्थितिभङ्गयोरप्येवं योजनया नव लक्षणानि द्रष्टव्यानीति भावः। ब्रह्मणो जगज्जन्मादि-कारणत्वे तैत्तिरीयोपनिषदं प्रमाणयति—**ब्रह्मण** इति। श्रुत्यर्थस्तु—**यतो** यस्माद् ब्रह्मणः आनन्दवाक्यैकवाक्यत्वा-दिति भावः। **वै** प्रसिद्धानि **इमानि** ब्रह्मादीनि स्तम्बपर्यन्तानि **भूतानि जायन्ते येन जातानि जीवन्ति** प्राणान् धारयन्ति वर्द्धन्ते विनाशकाले च **यत् प्रयन्ति** प्रति-गच्छन्ति स्वस्वकार्यस्वभावं परित्यजन्ति सन्तीत्यर्थः। **अभि**संविशन्ति तादात्म्यमेव प्रतिपद्यन्त इति। तत्र यतो वेति जन्म, येन जातानि जीवन्तीति जीवनं स्थितिं, यत् प्रयन्तीति तत्रैव लयं दर्शयतीति भवतीयं श्रुतिस्तत्र मानमिति भावः।

लाघवाल्लक्षणान्तरमाह—**यद्व वेति**। **निखिल**-जगदिति। निखिलकार्येत्यर्थः। शुक्त्यवच्छिन्नचैतन्यस्यापि जगद्रूपमिथ्यारजतोपादानत्वात् तत्रातिव्याप्तिरतो निखिलेति जगद्विशेषणम्। तथा च नातिव्याप्तिस्तस्य जगदुपादानत्वेऽपि निखिलजगदुपादान-त्वाभावादिति भावः। **लक्षणम्** तटस्थलक्षणम्।

एतेन—इदानीं तटस्थ-स्वरूपोभयात्मकमेकं लक्षणं वहु स्यामिति श्रुतिसिद्धमाह—यद्वा निखिलेतीति परिभाषाप्रकाशिकाकृतां लघुचन्द्रिकोपोद्वलितं व्याख्यानं प्रत्युक्तम्, औपाधिकस्य जगदुपादानत्वस्य स्वरूपलक्षणत्वायोगात्, स्वरूपलक्षण-तटस्थलक्षणयोरत्यन्त-विरुद्धत्वादेकस्य निखिलजगदुपादानत्वस्यात्यन्तविरुद्धोभयरूपत्वासम्भवात्, लघुचन्द्रि-कायां जगदुपादानत्वादेर्मुख्यतटस्थलक्षणत्वाभिधानाच्च। तथा चोक्तं सत्यादिवाक्या-खण्डार्थत्वोपपत्तौ—"मन्मते कालत्वव्यापकजातेरेव विशेषलक्षणत्वेन जगदुपादानत्वादे-र्मुख्यतटस्थलक्षणत्व-सम्भवाच्चे"ति।

नन्विदं लक्षणमतिव्यापकं मायाया अपि जगदुपादानत्वाभ्युपगमादित्यत आह—**उपादानत्वं चेति**। **जगद**ध्यासाधिष्ठानत्वम् जगदारोपाधिष्ठानत्वम्। आरोपाधिष्ठान-त्वञ्चारोपोपादानाज्ञान-विषयत्वम्। तथा च मायाया जगदुपादानत्वेऽपि न तदारोपाधि-ष्ठानत्वम्, तस्या जड़त्वेनाधिष्ठानत्वायोगात्, चैतन्यस्यैवाधिष्ठानत्व-नियमात्। तेन तत्र

**ध्यासाधिष्ठानत्वम्, जगदाकारेण परिणममान-मायाधिष्ठानत्वं वा। एतादृशमेवोपादानत्वमभिप्रेत्येदं सर्वं यदयमात्मा, सच्च त्यच्चाभवत्, बहु स्यां प्रजायेयेत्यादि-श्रुतिषु ब्रह्मप्रपञ्चयोस्तादात्म्य-व्यपदेशः। घटः सन् घटो भाति**

नातिव्याप्तिरिति भावः। नन्वेवमपि लक्षणमिदमव्यापकम्, निखिलजगदन्तर्गतस्य रज्जु-सर्पाद्यध्यासस्य ब्रह्मणोऽनधिष्ठानत्वात्, रज्ज्ववच्छिन्नचैतन्यस्यैव तदधिष्ठानत्वाङ्गीकारादित्यत आह—**जगदा**कारेणेति। वियदाद्याकारेणेत्यर्थः। तथा च रज्ज्ववच्छिन्नचैतन्यस्य सर्पाद्यध्यासाधिष्ठानत्वेऽपि वियदाद्याकारेण परिणममान-मायाधिष्ठानत्वाभावात् तस्य च ब्रह्मण्येव सत्त्वान्न क्षतिरिति भावः। **माया**धिष्ठानत्वम् मायातादात्म्यवत्त्वं मायाविषयत्वं वा। तत्र मायाधिष्ठानत्वमित्युक्तौ रज्ज्वाद्यवच्छिन्न-चैतन्येऽतिव्याप्तिस्तस्यापि मायाधिष्ठानत्वात्, मायाविद्ययोरभेदात्, अतो जगदाकारेण परिणममानेति मायाविशेषणम्।

एतेन—रज्जुसर्पादौ सर्पाध्यासाधिष्ठानत्वं रज्ज्ववच्छिन्न-चैतन्यस्यैव, न तु शुद्धचैतन्यस्येश्वरस्य वेति जगत्पदेन तस्य ग्रहणे रज्ज्ववच्छिन्न-चैतन्यादावतिव्याप्तिरित्यत आह—जगदाकारेणेतीति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, रज्ज्ववच्छिन्नचैतन्यादेर्जगदध्यासाधिष्ठानत्वेऽपि निखिलजगदध्यासाधिष्ठानत्वाभावेनातिव्याप्त्यप्रसरात्।

ईदृशोपादानत्वस्य ब्रह्मलक्षणत्वे बृहदारण्यकश्रुतिं प्रमाणयति—**एतादृ**शेति। **इदं** सर्वमिति। बृहदारण्यकोपनिषदि श्रूयते—इदं ब्रह्म इदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि इदं सर्वं यदयमात्मेति। अत्रेदं-शब्देन पूर्ववाक्यस्थं ब्रह्मादि-स्तम्बपर्यन्तं वस्तुजातं परामृश्यते। **सच्चे**ति। **सत्** विद्यमानत्वेन प्रतीयमानं क्षित्यादि। **त्यत्** परोक्षत्वेन प्रतीयमानमाकाशादि। ब्रह्मेति वाक्यान्तरीयेणास्यान्वयः। **इत्यादी**त्यादि-पदेन "ऐतदात्म्यमिदं सर्वं तत् सत्यमि"त्यादि-श्रुति परिग्रहः। **तादात्म्य**व्यपदेश इति। तत्र ब्रह्मादिष्वखिल-प्रपञ्चेष्वात्मतादात्म्यं श्रूयते। तच्च तादात्म्यं न ब्रह्मोपादेयत्व-प्रयुक्तम्, ब्रह्मणोऽपरिणामित्वाद् मायावत् परिणामायोगात्। नापि मायोपादेयत्वमात्र-प्रयुक्तम्, अन्योपादेयस्यान्यतादात्म्यादर्शनात्, अतिप्रसङ्गाच्च। किन्तु कार्योपादान-मायाधिष्ठानत्व-प्रयुक्तम्। इदमवच्छिन्न चैतन्ये रजतस्येव मायाधिष्ठाने मायातादात्म्यापन्ने ब्रह्मरूपे आत्मनि मायोपादानोपादेयस्य प्रपञ्चस्य तादात्म्याध्यासात् श्रूयमाणमात्मतादात्म्यमुपपद्यते नान्यथेति भावः। लौकिकाभेदव्यवहारोऽप्युक्तोपादानत्वे प्रमाणमित्याह—**घटः** सन्निति। सन् घट इति व्यवदेशे सन्नित्यधिष्ठानभूतं ब्रह्मै-

**घट इष्ट इत्यादि-लौकिकव्यपदेशोऽपि सच्चिदानन्दरूप-ब्रह्मैक्याध्यासात् ।**

**नन्वानन्दात्मक-चिदध्यासाद् घटादेरिष्टत्व-व्यवहारे दुःखस्यापि तत्राध्यासात् तस्यापीष्टत्व-व्यवहारापत्तिरिति चेन्न, आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्यारोप इत्यभ्युपगमेन दुःखादौ सच्चिदंशाध्यासे-**

वारोप्य-तादात्म्यापन्नं भासते। यदि सद्रूपं ब्रह्म घटोपादान-मायाधिष्ठानं न स्यात्, तर्हि तत्र घटतादात्म्यं घटे वा सत्तादात्म्यं नैव प्रतीयेत। प्रतीयते चात्र सत्तादात्म्यम्। तस्मात् सदात्मक-ब्रह्मणोऽधिष्ठानत्वमङ्गीकर्त्तव्यम्। तत्र सद्रूपब्रह्मणोऽधिष्ठानत्वे सन्निति चिद्रूपब्रह्मणोऽधिष्ठानत्वे भातीत्यानन्दरूप-ब्रह्मणोऽधिष्ठानत्वे इष्ट इति लोकानां व्यपदेश इति भावः। न च सत्ताजाति-निबन्धनोऽयं सद्व्यपदेशः, अभावादि-साधारण-सत्-प्रतीतेः सत्ताजाति-निबन्धनत्वायोगात्, अभावादिषु सत्तानभ्युपगमात्। न चाभावादिषु परम्परासम्बन्धेन सत्ताजातेः सत्त्वात् तन्निबन्धनोऽयं सद्व्यपदेश इति वाच्यम्, विजातीय-सम्बन्धेन समानाकार-प्रतीत्यनुपपत्तेः, अन्यथा सम्बन्धभेद एव न सिध्येत्। न च स्वरूपसत्तानिबन्धनोऽयं सद्व्यपदेशः, स्वरूपस्याननुगतत्वात्, अननुगतेनाप्यनुगत-प्रतीतौ जातिमात्रोच्छेद-प्रसङ्गात्। विस्तरस्त्वद्वैतसिद्ध्यादौ द्रष्टव्यः। तस्मात् सदधिष्ठानत्वनिबन्धनोऽयं सद्व्यपदेश इति वक्तव्यम्। ननु भातीति व्यपदेशो ज्ञानविषयत्व-निबन्धनः, इष्टत्वव्यपदेशस्त्विच्छाविषयत्वनिबन्धनः, इच्छाविषयस्यैवेष्टत्वात्, न त्वानन्दाधिष्ठानत्व-निबन्धनः; अन्यथा घटादिवद् दुःखादेरप्यानन्दात्मक-ब्रह्मणोऽधिष्ठानत्वात् तेषामपीष्टत्व-व्यवहार-प्रसङ्गादित्याह—**नन्वि**ति। **तत्र** आनन्दात्मक-ब्रह्मणि। **अध्यासादि**ति। तस्यापि मिथ्यात्वेन ब्रह्माधिष्ठानकत्वावश्यकत्वादिति भावः। **तस्यापि** दुःखस्यापि। परिहरति—**ने**ति। **निमित्ता**नुसरणम् आरोपकारणानुसन्धानम्, कारणस्य कार्योन्नेयत्वादिति भावः। **निमित्तं** यत्किञ्चिदेकं निमित्तम्। **आरोप** इति। कार्यस्य कारण-समुदायाधीनत्वादसति कारणसमुदाये कार्यानुत्पत्तेरिति भावः। **दुःखादा**वित्यादि-पदेन द्वेषादि-परिग्रहः। **अध्यासे**ऽपीति। तत्तादात्म्याध्यासकारणस्य चित्-तादात्म्याध्यास-कारणस्य च तत्तत्संस्कारादेस्तत्र विद्यमानत्वाद् दुःखादौ तत्तत्-तादात्म्याध्यास इति भावः। **अध्या**साभावादिति। आनन्दात्मक-चित्तादात्म्याध्यासं प्रति तत्संस्कारस्यापि हेतुत्वात् सत्यप्यधिष्ठान-सामान्यज्ञानेऽध्यासकारणे तत्-संस्काररूप-कारणान्तराभावेनानन्दतादात्म्याध्यासाभावादित्यर्थः। तथा च न ज्ञानविषयत्वनिबन्धनो

**ऽप्यानन्दांशाध्यासाभावात्। जगति नामरूपांश-द्वय-व्यवहारस्त्वविद्या-परिणामात्मक-नामरूप-सम्बन्धात्। तदुक्तम्—**

**अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।**
**आद्यत्रयं ब्रह्मरूपं जगद्रूपमतो द्वयमिति॥**

**अथ जगतो जन्मक्रमो निरूप्यते। तत्र स्वर्गाद्यकाले परमेश्वरः सृज्य-**

भातीति व्यपदेशः, विषयस्य सत्यत्वे ज्ञानविषययोः सम्बन्धानुपपत्तेः। न च विषय-विषयिभावस्यैव तत्-सम्बन्धत्वमिति वाच्यम्, तस्य दुर्निरूप्यत्वात्। विषयत्वविषयित्व-रूपस्य च तस्यैकैकव्यक्तिमात्रनिष्ठत्वेन द्विनिष्ठसम्बन्धात्मकत्वासम्भवात्, अन्यस्य चानि-रूपणात्। अत एव नेच्छाविषयत्व-निबन्धन इष्टत्वव्यवहारः, तस्य ज्ञानविषयत्वाधीन-त्वात्, तस्य च दुर्निरूप्यत्वात्, किन्त्वानन्दतादात्म्याध्यास-निबन्धनः। स च दुःखादौ नास्तीति न तत्रेष्टत्व-व्यवहार इति भावः। नन्विष्टत्वादि-व्यवहारस्यानन्दाद्यध्यास-निबन्धनत्वे जगति नामरूप-व्यवहारो न स्यात्, ब्रह्मणो नामरूपाभावादित्यत आह—**जगती**ति। **नाम-रूपे**ति। घटपटादिनाम्ना कम्बुग्रीवादि-रूपेण व्यवहारस्त्वित्यर्थः। **अविद्ये**ति। अविद्यापरिणामभूत-नामरूप-तादात्म्याद् जगति नाम-रूप-व्यवहार इति भावः। उक्तार्थे वाक्यसुधाकार-सम्मतिं दर्शयति—**तदुक्त**मिति। वाक्यसुधाकारैरिति शेषः। **अस्ति** सत् **भाति** प्रकाशः **प्रियम्** आनन्दः **रूपं** कम्बुग्रीवादिमत्त्वम्। **आद्य**त्रयं प्रथमत्रिकम् **ब्रह्म**रूपम् अधिष्ठान-भूतस्य ब्रह्मणः स्वरूपम्, कल्पितस्य जड़जगतः सदा-द्यात्मकत्वायोगादिति भावः। **अतो** द्वयम् तदनन्तरवर्त्ति-द्वयम्, नाम रूपं चेति यावत्। **जगद्रूपं** जगत्-स्वरूपम्, अविद्यातो नामरूपात्मक-जगदुत्पत्तेरिति भावः।

नन्वद्वितीयस्यैकस्य ब्रह्मणो जगज्जन्मादि-कर्त्तृत्वे क्रमिक-कार्योत्पत्तिर्न स्यात्, तत्तत्-कार्यानुकूल-क्रमिक-सहकारि-रहितत्वात्। कार्यवैचित्र्यमपि न भवेत्, एकस्मादनपेक्षात् कार्यवैचित्र्योत्पत्तेरदर्शनात्। तथा चोक्तं कुसुमाञ्जलौ—एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य नेतीतीत्यत आह—**अथे**ति। **जन्म**क्रम इति। एतेन सृष्टेः क्रमिकत्वमेवोक्त-मिति भावः। तत्र क्रमिक-कार्योत्पत्तौ हेतुं दर्शयन् कार्यवैचित्र्यमुपपादयति—**तत्रे**ति। सृष्टावित्यर्थः। कार्यस्य क्रमिकत्वे हेतुमाह—**सृज्य**मानेति। प्राणिकर्मणां क्रमिकत्वाद् वैचित्र्याच्च सृज्यमान-प्रपञ्चस्य क्रमिकत्वं वैचित्र्यञ्च, नेश्वरात् केवलात्, तस्य पर्जन्यवत् साधारणत्वात्। तथा च श्रुतिः—"पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने"ति।

**मान-प्रपञ्च-वैचित्र्य-हेतु-प्राणिकर्म-सहकृतोऽपरिमितानिरूपित-शक्तिविशेष-विशिष्ट-मायासहितः सन् नामरूपात्मक-निखिल-प्रपञ्चं प्रथमं बुद्धावाकलय्य इदं करिष्यामीति सङ्कल्पयति, तदैक्षत बहु स्यां प्रजायेयेति सोऽकामयत बहु स्यां प्रजायेयेत्यादि-श्रुतेः। तत आकाशादीनि पञ्चभूतान्यपञ्चीकृतानि तन्मात्रपदवाच्यान्युत्पद्यन्ते। तत्राकाशस्य शब्दो गुणः, वायोस्तु शब्द-**

एतेनेश्वरस्य विषमां सृष्टिं निर्मिमाणस्य पृथग्जनस्येव वैषम्य-नैर्घृण्य-प्रसङ्गोऽपि परिहृतो वेदितव्यः, तस्य कर्मसापेक्षत्वादिति भावः। न च सृष्टेः प्राक् प्राणिकर्मासम्भवात् तुल्यैवाद्या सृष्टिरिति वाच्यम्, सर्ग-कर्म-प्रवाहस्यानादित्वात्। नन्वेवं कार्यस्य क्रमिकत्वेऽप्युपादेयेषु नानाधर्मोत्पत्तिर्न स्यात्, उपादानधर्मस्यैवोपादेयधमहेतुत्वात्, तत्र चोपादानस्य ब्रह्मणो निर्धर्मकत्वादित्यत आह—**अपरि**मितानिरूपितेति। अनन्ताचिन्त्येत्यर्थः। कार्यस्यानन्तत्वादचिन्त्यरचनारूपत्वात् तदुपादानस्याप्यज्ञानस्याऽनन्ताचिन्त्यशक्तिमत्त्वं कल्पनीयम्, अन्यथा तस्मादनन्तकार्योत्पत्तिर्न स्यादिति भावः। **माया**-सहित इति। तथा चेश्वरस्य धर्माभावेऽपि परिणाम्युपादानभूताया मायाया विचित्रशक्तिमत्त्वात् तदुपादेयस्य प्रपञ्चस्य वैचित्र्यं नानाधर्मवत्त्वञ्चोपपन्नमिति भावः। नन्वेवं मायैव विचित्रकर्मसहकृता विचित्रकार्यरूपेण परिणमतां किमीश्वरेणेत्यत आह—**नाम**रूपेति। **निखिल**-प्रपञ्चमिति। पूर्वसर्गानुरूपं प्रपञ्चमित्यर्थः। "यथापूर्वमकलपयदि"ति मन्त्रवर्णादिति भावः। **बुद्धौ** मायावृत्तौ। **आकलय्य** विषयीकृत्य, पूर्वसर्गे यद् यद् वस्तु यद्यन्नामकं यद्यदाकारकञ्चासीत्, तदभिध्यायेति यावत्। **इदं** करिष्यामि इदं भविष्यामि, "बहु स्यामि"ति श्रुतेः। **सङ्कल्पयती**ति। तथा च चेतनानधिष्ठितस्याऽचेतनस्याकलनसङ्कल्पयोरसम्भवात् चेतनपूर्वकत्वं सृष्टेः कल्पनीयमिति भावः। सृष्टेः सङ्कल्पपूर्वकत्वे प्रमाणमाह—**तदैक्षते**ति। श्रुत्यर्थस्तु प्रागेव दर्शितः। **इत्यादी**त्यादिपदेन "स ऐक्षत लोकान्नु सृजा" इत्यादि-श्रुतिपरिग्रहः। **ततः** तादृशसङ्कल्पानन्तरम्। **आकाशा**दीनीति। आदिपदेन वाय्वादीनां परिग्रहः। तथा च प्रथममाकाशस्ततो वायुस्ततस्तेजस्ततो जलं ततः पृथिवीत्येवं-क्रमवन्ति पञ्चभूतान्युत्पद्यन्त इति भावः। तेषां स्वरूपमाह—**अपञ्ची**कृतानीति। भूतान्तरैरसंसृष्टानीत्यर्थः, शुद्धानीति यावत्। तद्वाचक-नामान्याह—**तन्मात्रे**ति। शब्दतन्मात्रादि-पदवाच्यानीत्यर्थः। तत्र शब्दतन्मात्रमाकाशस्य स्पर्शतन्मात्रं वायो रूपतन्मात्रं तेजसो रसतन्मात्रं जलस्य गन्धतन्मात्रं पृथिव्या वाचकमिति

**स्पर्शौ, तेजसस्तु शब्द-स्पर्श-रूपाणि, अपां शब्द-स्पर्श-रूप-रसाः, पृथिव्यास्तु शब्द-स्पर्श-रूप-रस-गन्धाः, न तु शब्दस्याकाशमात्र-गुणत्वम्, वाय्वादावपि**

भावः। कथं पुनस्तानि तन्मात्रनामधेयानीति चेत्, तुल्यजातीयविशेषानुपपत्तेरिति ब्रूमः। ये तावच्छब्दविशेषा उदात्तादयस्ते तत्र न सन्ति, तस्मात् तच्छब्दतन्मात्रमित्युच्यते। एवं स्पर्शतन्मात्रे मृदु-कठिनादयो रूपतन्मात्रे शुक्लकृष्णादयो रसतन्मात्रे मधुराम्लादयो गन्धतन्मात्रे सुरभ्यादयो विशेषा न सन्तीति तानि तन्मात्राणीत्युच्यन्ते। तस्मात् तस्य तस्य गुणस्य सामान्यमेवात्र न विशेष इति तान्यविशेषपदवाच्यान्यपि भवन्ति। नन्वारम्भकावयवाभावादाकाशोत्पत्तिर्नोपपद्यते। तत् कथमुच्यते आकाशादीन्युत्पद्यन्त इति चेन्न, आरम्भवादानभ्युपगमात्, ईश्वराधिष्ठिताज्ञानस्याकाशाद्युपादानत्वसम्भवात्, विजातीयैरपि सूत्रोर्णादिभिः कम्बलारम्भदर्शनात् समानजातीयारम्भकत्वे नियमाभावाच्च। अथैतेषां सूक्ष्मभूतानां तन्मात्राणां गुणसम्बन्धं प्रतिपादयति—**तत्रे**ति। तेषु पञ्चसु सूक्ष्मभूतेषु मध्ये इत्यर्थः। **आकाशस्य** शब्दतन्मात्रस्य। **शब्दः** सामान्यात्मकशब्दः, अविशेषरूप इति यावत्। **गुण** इति। यद्यपि तन्मात्रेषु गुणा नोपलभ्यन्ते, तेषां सामान्यात्मकत्वात्, विशेषभावमनापन्नस्य च सामान्यस्याज्ञेयत्वात्; तथापि तन्मात्रकार्येषु स्थूलभूतेषु गुणोपलम्भात् तदुपादानेऽपि तत्सद्भावः कल्पनीयः। न चैवं तदुपादानाज्ञानेऽपि तत्प्रसङ्ग इति वाच्यम्, इष्टापत्तेः, तत्राप्यव्यक्तरूपेण सूक्ष्मशब्दसद्भावात्, अन्यथाऽसत्कार्यवादापातादिति भावः। **शब्द**-स्पर्शाविति। सामान्यात्मकौ शब्द-स्पर्शावित्यर्थः। तथा च पूर्व-पूर्व-भूतभावापन्नाया अविद्याया एकदेशोस्योत्तरोत्तर-भूतं प्रत्युपादानत्वात् पूर्व-पूर्व-भूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशादेकैकगुणवृद्धिः। न ह्याकाशादिभावापन्नस्याज्ञानस्य कात्स्न्येन वाय्वादि-परिणामः, उत्तरोत्पत्तिकाले पूर्व-पूर्वोच्छेद-प्रसङ्गात्, किन्त्वेकदेशेन। अत एवाकाशादीनामुत्तरोत्तर-भूताद्यपेक्षया महत्त्वमपि पुराणाद्युक्तमुपपन्नं भवतीति भावः।

एतेन—यद्यपि स्पर्शः साधारणगुणस्तथापि पार्थिव-वायवीययोरनुष्णाशीतत्वं तैजसाप्ययोरुष्णशीतत्वम्। एवं रसेऽपि वैजात्यमनुभव-सिद्धमस्तीत्यसाधारण्यं बोध्यमिति शिखामणिकृतां व्याख्यानं प्रत्युक्तम्, तन्मात्रगुणानां सामान्यात्मकतया वैजात्याभावात्।

नैयायिकास्तावच्छब्दस्याकाशमात्रगुणत्वमिच्छन्ति, तान् निराकरोति—**न त्वि**ति। तत्र हेतुमाह—**वाय्वा**दाविति। स्थूलवाय्वादावित्यर्थः। आदिपदेनाऽग्न्यादि भूतवर्ग-

**तदुपलम्भात्। न चासौ भ्रमः, बाधकाभावात्। इमानि भूतानि त्रिगुण-मायाकार्याणि त्रिगुणानि। गुणाः सत्त्वरजस्तमांसि। एतैश्च सत्त्वगुणोपेतैः पञ्चभूतैर्व्यस्तैर्यथाक्रमं श्रोत्र-त्वक्-चक्षू-रसन-घ्राणाख्यानि पञ्चेन्द्रियाणि जायन्ते। एतैरेव च सत्त्वगुणोपेतैः पञ्चभूतैर्मिलितैर्मनो-**

परिग्रहः। तथा च स्थूलवाय्वादौ शब्दोपलम्भात् तत्कारणेनापि शब्दगुणकेन भवितव्यम्, कार्यगुणस्य कारणगुणजन्यत्व-नियमादिति भावः। ननु जलादौ गन्धोपलब्धिवच्छब्दोपलब्धिरप्यौपाधिकीति चेत्, तत्राह—**न चे**ति। **असौ** वाय्वादौ शब्दोपलम्भः। तत्र हेतुमाह—**बाधका**भावादिति। बाधो हि भ्रमसाधकः। तत्र चेत् तस्याभावः, कस्तस्य भ्रमत्वं साधयेदिति भावः। **इमानि** अपञ्चीकृतानि। भूतानां त्रिगुणत्वे हेतुमाह—**त्रिगुणे**ति। **माया**कार्याणि मायोपादेयानि। गुणस्वरूपमाह—**गुणा** इति। अपञ्चीकृतानामैककभूतानां कार्यमाह—**एतैश्चे**ति। आकाशादिभिरित्यर्थः। **सत्त्व**गुणोपेतैरिति। सत्त्वगुणप्रधानैरित्यर्थः। प्रकाशस्य सत्त्वाधीनत्वाद् ज्ञानेन्द्रियाणाञ्च प्रकाशानुकूलत्वात् युक्तं तेषां सत्त्वकार्यत्वम्। भूतानां त्रिगुणात्मकत्वेऽपि जीवकर्मवशात् कस्यचिद् गुणस्याङ्गित्वमितरयोस्त्वङ्गत्वम्, गुणानामङ्गाङ्गिभावेनैव कार्यजनकत्वात्। तथा चोक्तमीश्वरकृष्णेन सांख्यकारिकायाम्—प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः। अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः॥ इतीति भावः। **व्यस्तैः** परस्परनिरपेक्षैरेकैकैरिति यावत्। **यथा**क्रममिति। शब्दगुणादाकाशाच्छ्रोत्रम्, अत एवास्य शब्दव्यञ्जकत्वम्। वायोस्त्वक्, अग्नेश्चक्षुः, अद्भ्यो रसनम्, पृथिव्या घ्राणमित्यर्थः। **श्रोत्र**त्वगिति। श्रोत्रं च त्वक् च चक्षुषी च रसनं च घ्राणञ्च श्रोत्रत्वक्चक्षूरसनघ्राणानि। आख्यानमाख्या प्रत्यायनमित्यर्थः। एतैः शब्दैराख्या येषां तानीमानि श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानीति विग्रहः। **पञ्चे**न्द्रियाणि पञ्चबुद्धीन्द्रियाणि, बुद्धेरन्तःकरणस्य द्वारभूतत्वात्। अवहिर्वृत्तेरन्तःकरणस्य नास्ति बहिर्वृत्तिरिति नालमेतत् साक्षाच्छब्दादीनर्थान् ग्रहीतुम्। अतस्तच्छ्रोत्रादिलक्षणं द्वारभूतं किञ्चिदपेक्षते। तत्प्रणालिकया तस्य बाह्यविषयसम्बन्धः। तस्मात् तेषां बुद्धेर्बाह्यविषयसम्बन्धद्वारभूतत्वाद् बुद्धीन्द्रियाणीति संज्ञा युक्तेति भावः। अपञ्चीकृतानां सत्त्वप्रधानानां समस्तभूतानां कार्याण्याह—**एतै**रिति। पञ्चभूतगुण-ग्राहकत्वादन्तःकरणस्य पञ्चभूतकार्यत्वं युक्तमिति भावः। **मनो**-बुद्ध्यहङ्कारचित्तानि अन्तःकरणानि। एकमेवान्तःकरणं मननात् संशया-

**बुद्ध्यहङ्कारचित्तानि जायन्ते। श्रोत्रादीनां पञ्चानां क्रमेण दिग्-वातार्क-वरुणाश्विनोऽधिष्ठातृदेवताः, मनआदीनां क्रमेण चन्द्र-चतुर्मुख-शङ्कराच्युता अधिष्ठातृ-देवताः। एतैरेव रजोगुणोपेतैः पञ्चभूतैर्यथाक्रमं वाक्-पाणि-पाद-**

दिरूप-विचारकरणान्मन इत्यभिमानादहङ्कार इत्यध्यवसायाद् बुद्धिरिति स्मरणाच्चित्तमिति चाख्यायते। वृत्तिभेदाच्चाभिन्नमपि भिन्नमिवोपचर्यते। तत्त्वतस्त्वेकमन्तःकरणमिति भावः। विशेषस्त्वत्र प्रागेवोक्तः। अचेतनानामिन्द्रियाणां चेतनानधिष्ठितानां स्वस्वविषयेषु प्रवृत्त्ययोगात् तेषां चेतनाधिष्ठितत्वं दर्शयति—**श्रोत्रा**दीनामिति। **दिग्**वातेति। तत्र श्रोत्रस्याधिदेवता दिक्, त्वचो वायुश्चक्षुषोऽर्को रसनाया वरुणो घ्राणस्याश्विनौ। तथा च श्रीमद्भागवते द्वितीयस्कन्धे—दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः॥ इतीति भावः। सुबालोपनिषदि तु—घ्राणस्य पृथिव्यधिदेवताकत्वमाम्नातम्—नासाध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतमिति। चतुर्णामन्तःकरणानामधिदैवतस्वरूपं दर्शयति—**मन**आदीनामिति। **अधि**ष्ठातृदेवता इति। तत्र मनसश्चन्द्रोऽधिष्ठाता बुद्धेर्ब्रह्माऽहङ्कारस्य रुद्रश्चित्तस्याच्युतः। तथा च सुबालोपनिषत—मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतम्। बुद्धिरध्यात्मं बोद्धव्यमधिभूतम्, ब्रह्मा तत्राधिदैवतम्। अहङ्कारोऽध्यात्ममहङ्कार्यमधिभूतं रुद्रस्तत्राधिदैवतम्। चित्तमध्यात्मं चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतमिति। अत्र क्षेत्रज्ञपदेनाऽच्युतोऽभिधीयते। रजःप्रधानानामपञ्चीकृतानां भूतानां कार्याण्याह—**एतै**रिति। अपञ्चीकृतैराकाशादिभिरित्यर्थः। कर्मेन्द्रियाणामपि सूक्ष्मत्वात् सूक्ष्मभूत-कार्यत्वमिति भावः। **रजोगुणो**पेतैः रजोगुणप्रधानैः, कर्मेन्द्रियाणां वचनादानादि-क्रियाहेतुत्वाद् रजसश्च चलत्वात् तदुपादानकत्वमिति भावः। **यथाक्रम**मिति। आकाशतन्मात्राद् रजोगुणोपेताद् वागिन्द्रियम्, स्पर्शतन्मात्रात् पाणीन्द्रियम्, रूपतन्मात्रात् पादेन्द्रियम्, रसतन्मात्रात् पाय्विन्द्रियं जायते, गन्धतन्मात्रादुपस्थेन्द्रियमित्यर्थः। अधिष्ठानासम्भविनो वचनादानादिविषयग्रहणलक्षणस्य शक्तिविशेषस्य वागादिषूपलम्भात् तेषामधिष्ठानादतिरिक्तत्वमिन्द्रियत्वञ्च युक्तमिति भावः। ननु शक्तिविशेषोपलम्भाद् वागादीनामिन्द्रियत्वञ्चेन्निगरण-शक्तिविशेषोपलम्भात् कण्ठस्यालिङ्गनशक्तिविशेषोपलम्भाद् वक्षसो भारवहनशक्ति-विशेषोपलम्भादंशद्वयस्यापीन्द्रियत्वं स्यादिति चेत्, न, प्रक्षालन-परिमार्जनोपस्पर्शन-प्रहरण-निगरणालिङ्गन-वहन-व्यायामादि-कृत्स्न-ग्रहणस्य पाणीन्द्रिय-वृत्तित्वात्। ननु पाणीन्द्रियं पाणौ वर्त्तते,

**पायूपस्थाख्यानि कर्मेन्द्रियाणि जायन्ते। तेषां च क्रमेण वह्नीन्द्रोपेन्द्र-मृत्यु प्रजापतयोऽधिष्ठातृ-देवताः। रजोगुणोपेतैः पञ्चभूतैर्मिलितैः पञ्च वायवः प्राणापान-व्यानोदान-समानाख्या जायन्ते। तत्र प्राग्गमनवान् वायुः प्राणो**

निगरणन्तु कण्ठे, तत् कथं निगरणस्य पाणीन्द्रियवृत्तित्वमिति चेन्न, कर्मेन्द्रियाणां सर्वदेह-व्यापकत्वात्। तथा चोक्तं प्रत्यभिज्ञाविमर्शिण्याम्—"सर्वदेहव्यापकानि च कर्मेन्द्रिया-ण्यहङ्कारविशेषात्मकानि। तेन छिन्नहस्तो बाहुभ्यामाददानः पाणिनैवादत्ते। एवमन्यत्। केवलं ततत्स्फुटपूर्णवृत्तिलाभस्थानत्वात् पञ्चांगुलिरूपमधिष्ठानमस्योच्यते" इति। न चोप-लब्धिसाधनस्यैवेन्द्रियत्वं न व्यापारसाधनस्येति कश्चिन्नियमोऽस्ति, इन्द्रलिङ्गस्यैवेन्द्रिय-त्वात्, शरीरावच्छिन्नोपलब्धिवच्छरीरावच्छिन्न-व्यापारस्यापीन्द्रलिङ्गत्वात्। तथा चाह निरुक्तौ भगवान् यास्कः—"इन्द्रियनित्यं वचन"मिति। तद्व्याख्यायां दुर्गाचार्य-पादास्त्वाहुः—"इन्द्र आत्मा स येन ईयते लिङ्ग्यतेऽनुमीयते चास्त्यसावात्मा कर्त्ता, यस्येदं करणं, नाकर्त्तृकं करणमस्तीति तदिन्द्रिय"मिति। न च वागादीनामिन्द्रियत्वे प्रमाणाभावः, श्रुतिस्मृत्यादीनां तत्र प्रमाणत्वात्। श्रुतिस्तावत्—"दशेमे पुरुषे प्राणा आत्मै-कादश" इति। अत्रात्मशब्देनान्तःकरणं परिगृह्यते करणाधिकारात्। मत्स्यपुराणञ्च—"श्रोत्रं त्वक् चक्षुषी जिह्वा नासिके च यथाक्रमम्। पायूपस्थं हस्तपादं वाक् चेतीन्द्रिय-संग्रहः"॥ इति। अचेतनानां तेषां स्वव्यापारेषु प्रवृत्त्यनुपपत्तेस्तेषां चेतनाधिष्ठितत्व-माह—**तेषाञ्चे**ति। कर्मेन्द्रियाणाञ्चेत्यर्थः। **क्रमे**णेति। वाचोऽधिदेवता वह्निः पाणेरिन्द्रः पादस्योपेन्द्रः पायोर्मृत्युरुपस्थस्य प्रजापतिरित्यर्थः। तथा च सुबालोपनिषत्—वागध्यात्मं वक्तव्यमधिभूतमग्निस्तत्राधिदैवतम्। हस्तावध्यात्ममादातव्यमधिभूतमिन्द्रस्तत्राधिदैवतम्। पादावध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्राधिदैवतम्। पायुरध्यात्मं विसर्जयितव्यमधिभूतं मृत्युस्तत्राधिदैवतम्। उपस्थोऽध्यात्ममानन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवतमिति। भागवतमते तु पायोरधिदेवता मित्रः। प्राणोत्पत्तिप्रकारमाह—**रजोगुणो**पेतैरिति। रजोगुण-प्रधानैरित्यर्थः। प्राणानां प्रवृत्तिमत्त्वात् रजसाञ्च प्रवर्त्तकत्वाद् युक्तं तत्प्रधानस्य प्राणोपादानत्वमिति भावः। **एतैः** अपञ्चीकृतैः। **मिलितै**रिति। मिलितैः पञ्चभूतैरेक एव प्राणो जायते। स तु वृत्तिभेदाद् भिन्नमिव व्यपदिश्यते। तथा चोक्तं पञ्चदश्यां—तैः सर्वैः सहितैः प्राणो वृत्तिभेदात् स पञ्चधा। प्राणोऽपानः समानश्चोदानव्यानौ च ते पुनः॥ इतीति भावः। प्राणादिस्वरूपमाह—**तत्रे**ति। तेषु प्राणपञ्चकेषु मध्ये इत्यर्थः।

**नासादिस्थानवर्त्ती, अर्वागगमनवानपानः पाय्वादि-स्थानवर्त्ती, विश्वग्गतिमान् व्यानोऽखिलशरीरवर्त्ती, ऊर्ध्वगमनवानुत्क्रमणवायुरुदानः कण्ठस्थानवर्त्ती। अशित-पीतान्नादिसमीकरण-करः समानो नाभिस्थानवर्त्ती।**

**तैश्च तमोगुणोपेतैरपञ्चीकृतभूतैः पञ्चीकृतानि भूतानि जायन्ते, तासां च**

**प्राग्**गमनवान् उद्गम्य बहिर्निःसरणवान्। तथा च मैत्रेयोपनिषत्—अथ योऽयमूर्ध्वमुत्क्रामति। एष वाव स प्राण इति। प्राणस्य स्थानमाह—**नासादी**ति। तथा चैतरेयोपनिषत—वायुः प्राणो भूत्वा नासिके प्राविशदिति। आदिपदेन मुखादिपरिग्रहः। तथा च प्रश्नोपनिषत्—मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते इति। क्वचिच्च प्राणादीनां हृदादिस्थानत्वमपि स्मर्यते—हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः। उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः॥ इति। तथा च हृदयमारभ्य मुखनासादिपर्यन्तं स्थानं प्राणोऽधिकरोति। तेन न श्रुतिस्मृत्योर्विरोध इति भावः। अपानस्य स्वरूपमाह—**अर्वागि**ति। अध इत्यर्थः। तथा च मैत्रायण्युपनिषत्—अथ योऽयमवाञ्चं संक्रामति एष वाव सोऽपान इति। अपानस्य स्थानमाह—**पाय्वादी**ति। आदिशब्देन मूत्रद्वार-परिग्रहः। नाभिमारभ्य पायुपर्यन्तं तिष्ठतीत्यर्थः। मृत्युरपानो भूत्वा नाभिं प्राविशदित्यैतरेयश्रुतावपानाधिष्ठातृतया मृत्योर्नाभावस्थानश्रवणात्, पायुप्रदेशमात्रवर्त्तित्वे ऐतरेयश्रुतिविरोधापत्तेरिति भावः। व्यानस्य स्वरूपमाह—**विश्वगि**ति। सर्वत इत्यर्थः। व्यानस्य स्थानमाह—**अखिले**ति। "येनैताः शिरा अनुव्याप्ता एष वाव स व्यान"इति मैत्रायण्युपनिषदुक्तेरिति भावः। उदानस्य स्वरूपमाह—**ऊर्ध्वगमने**ति। **उत्क्रमणे**ति। जीवस्य देहाद् बहिर्गमनेत्यर्थः। "अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यां मनुष्यलोक"मिति प्रश्नोपनिषद्युदानस्य लोकान्तरगमयितृत्व-श्रवणादिति भावः। यद्वा—**उत्**क्रमणेति। उद्गिरणेत्यर्थः। "अथ योऽयं पीताशितमुद्गिरति निगिरतीति चैष वाव स उदान" इति मैत्रायण्युपनिषद्युदानस्योद्गिरणक्रियाहेतुत्वश्रवणादिति भावः। तस्य स्थानमाह—**कण्ठस्थाने**ति। उद्गिरणस्य कण्ठसाध्यत्वादुदानस्य तत्स्थानत्वं युक्तम्। समानस्वरूपमाह—**अशिते**ति। अशितपीतयोरन्नपानीययोः समीकरणं कुर्वन्नयं समाननाम्ना व्यपदिश्यत इति भावः। तथा च प्रश्नोपनिषत्—एष ह्येतद्धूतमन्नं समं नयतीति। समानस्य स्थानमाह—**नाभिस्थाने**ति। तथा च प्रश्नोपनिषत्—मध्ये तु समान इति। तद्भाष्ये च—मध्ये तु प्राणापानयोः स्थानयो-

**त्रिवृतं त्रिवृतमेकैकां करवाणीति श्रुतेः पञ्चीकरणोपलक्षणार्थत्वात्। पञ्ची-**
र्नाभ्यामिति। स्थूलभूतोत्पत्तिमाह—**तैश्चे**ति। आकाशादिभिरित्यर्थः। **तमो**गुणो-पेतैः तमोगुणप्रधानैः। स्थूलभूतानां गुरुत्वाद् वरणत्वाच्च तमः-प्रधानकार्यत्वं युक्तमिति भावः। **पञ्चीकृतानि** स्वस्वेतरभूतैर्मिश्रितानि। भोग्यभोगायतनमन्तरेण भोगं जनयितु-मसमर्थानि तान्यपञ्चीकृतानि भूतानि जीवकर्मवशात् स्थौल्यमधिगच्छन्ति पञ्चीकृतानि भवन्तीति भावः। **भूतानि** स्थूलभूतानि। ननु त्रिवृत्करण-श्रुतिविरोधाद् युक्तिविरो-धाच्च पञ्चीकरणमयुक्तमित्याशङ्क्य श्रुत्यविरोधमुपपादयति—**तासामिति**। तेजोवन्न-रूपाणां तिसृणां देवतानामित्यर्थः। **एकैकाम्** अग्निरूपां जलरूपां पृथिवीरूपाञ्च। **त्रिवृतं** भूतत्रयात्मिकाम्। **करवाणी**ति। सेयमहं देवतेति कर्त्तृपदमत्रानुषज्यते। अनेनेश्वरस्य पञ्चीकरणाभिध्यानमुक्तम्। तथा च पञ्चीकरणकर्त्तृत्वमीश्वरस्यैवेति दर्शितम्। कल्पतरु-कारास्तु पञ्चीकृतभूतसृष्टौ हिरण्यगर्भस्यैव साक्षात्कर्त्तृत्वमाहुः। **पञ्ची**करणोपलक्षणार्थ-त्वादिति। छान्दोग्ये भूतत्रयस्यैव सृष्टिरभिहिता, न त्वाकाशवाय्वोः, अतस्तत्र त्रिवृत्-करणमेवोक्तम्। तैत्तिरीयश्रुतौ त्वग्न्यादिसृष्टेः प्रागाकाशवाय्वोः सृष्टिरभिहिता तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायोरिति। तदेकवाक्यतया छान्दोग्यश्रुतौ वाय्वाकाशयोरुपलक्षणताया आवश्यकत्वे त्रिवृत्करणस्यापि पञ्चीकरणोपलक्षणार्थत्वमा-वश्यकम्, त्रिवृत्करणश्रुतेस्तत्परत्वे पञ्चीकरणनिवृत्तिपरत्वाभावादिति भावः। न च गगनपवनयोः पृथिव्याद्यात्मकत्वे रूपवत्त्वान्महत्त्ववत्त्वाच्च चाक्षुषत्वापत्तिरिति वाच्यम्, पृथिव्याद्यंशाविभावनेनाचाक्षुषत्वोपपत्तेः, त्रिवृत्करणपक्षेऽप्यप्तेजसोर्गन्धवत्त्वादिव्यवहारा-पत्तेर्दोषसाम्यात्, वाय्वाकाशयोरपञ्चीकृतत्वे व्यवहाराभावप्रसङ्गाच्च। न चात्र प्रमाणा-भावः, श्रुतिस्मृत्योस्तत्र प्रमाणत्वात्। तथा च प्रश्नोपनिषत--पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा चेति। अत्राकाशादेस्तन्मात्राणाञ्च पृथगुपादानेन पञ्चानामपि भूतानां पञ्चीकृतत्वं दर्शितम्। तथा चोक्तमानन्दज्ञानेन तद्भाष्यटीकायां—पञ्चीकरणमेतत् श्रुतिसिद्धमित्युक्तम्, अन्यथाकाशा-काशमात्रयोः पृथगुक्त्यनुपपत्तेरिति। विष्णुपुराणमपि—आकाशवायुतेजांसि सलिलं पृथिवी तथा। शब्दादिभिर्गुणैर्ब्रह्मन् संयुक्तान्युत्तरोत्तरैः। शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः। नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना। नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः। समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। एकसङ्घातलक्ष्यश्च सम्प्राप्यैक्यम-

करणप्रकारश्चेत्थम्—आकाशमादौ द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषां तु चतुर्णामंशानां वाय्वादिषु चतुर्षु भूतेषु योजनम्। एवं वायुं द्विधा विभज्य तयोरेकं भागं पुनश्चतुर्धा विभज्य तेषां चतुर्णामंशानामाकाशादिषु योजनम्। एवं तेजआदीनामपि। तदेवमेकैकभूतस्यार्द्धं स्वांशात्मकम्, अर्धान्तरं चतुर्भूतमयमिति पृथिव्यादिषु स्वांशाधिक्यात् पृथिव्यादिव्यवहारः। तदुक्तम्—वैशेष्यात् तु तद्वादस्तद्वाद इति।

**तैश्चापञ्चीकृतभूतैर्लिंगशरीरं परलोक-यात्रानिर्वाहकं मोक्षपर्यन्तं स्थायि**

शेषतः। इति। ननु पञ्चानां भूतानामन्योन्यसंमिश्रणं यदि पञ्चीकरणम्, तदा तस्मादेकस्यैव भूतस्योत्पत्तिः स्यान्न पञ्चभूतस्येत्यत आह—**पञ्चीकरण**प्रकार इति। **तयोः** आकाशार्द्धयोः। **भागम्** अर्धम्। **वाय्वादिषु** आकाशव्यतिरिक्तानां चतुर्णां भूतानामर्धभागेषु। **आकाशादिषु** वायुव्यतिरिक्तानां चतुर्णां भूतानामर्धभागेषु। **तेज**आदीनामपीति। अत्रादिपदेन जलपृथिव्योः परिग्रहः। तथा चोक्तं पञ्चदश्याम्—द्विधा विधाय चैकैकं चतुर्द्धा प्रथमं पुनः। स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते॥ इति। **चतुर्भूतमयम्** चतुर्भूतात्मकम्। नन्वेवमेकैकस्य भूतस्य पञ्चभूतात्मकत्वात् पञ्चभूतपदवाच्यता स्यात्, न पुनः पृथिव्यादि-पदवाच्यतेत्यत आह—**पृथिव्या**दिष्विति। आदिपदेन जलादिपरिग्रहः। **स्वांशाधिक्यात्** पृथिव्यां पार्थिवांशाधिक्यात्, जले जलांशाधिक्यादित्यर्थः। तत्र वेदान्तसूत्रं प्रमाणयति—**तदुक्तमि**ति। **वैशेष्यादि**ति। विशेषस्य भावो वैशेष्यं भूयस्त्वम्, तस्मादित्यर्थः। **तद्वादः** पृथिव्यादिवादः, पृथिव्यादिपदप्रयोग इति यावत्। तथा च पृथिव्याः पञ्चभूतमयत्वेऽपि पार्थिवांशाधिक्यात् पृथिवीति व्यवहारः। एवं जलादावपीति मन्तव्यम्। **तद्वादस्तद्वाद** इति। तद्वादपदाभ्यासस्त्वध्यायसमाप्तिद्योतनार्थः। अपञ्चीकृतभूतस्य कार्यान्तरमाह—**तैश्चे**ति। आकाशादिभिरित्यर्थः। **लिङ्गशरीरं** सूक्ष्मशरीरम्। ननु परिदृश्यमान-स्थूलशरीरेणैव जीवस्य सकलव्यवहारसम्भवात् सूक्ष्मशरीराङ्गीकारः किमर्थ इति चेत् तत्राह—**परलोके**ति। परोलोक-भोगनिर्वाहकमित्यर्थः। स्थूलशरीरस्येह विनाशादन्यस्य च भोगायतनस्य तदाऽनुत्पन्नत्वात् पारलौकिकभोगानुपपत्तिरान्तरभोगानुपपत्तिश्च। श्रूयते च देहनाश-देहान्तर-प्राप्त्योरन्तरा जीवस्योपभोगः। तथा चाह भगवान् मनुः—पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनां नृणाम्। शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवमिति। विष्णुरपि—कृतपातकिनः सर्वे देहत्यागा-

**मनोबुद्धिभ्यामुपेतं ज्ञानेन्द्रिय-पञ्चक-कर्मेन्द्रियपञ्चक-प्राणादिपञ्चक-संयुक्तं जायते। तदुक्तम्—**

**पञ्च-प्राण-मनो बुद्धि-दशेन्द्रिय-समन्वितम्।**
**अपञ्चीकृत-भूतोत्थं सूक्ष्मांगं भोगसाधनम्॥**

**इति। तच्च द्विविधम्—परमपरं चेति। परं हिरण्यगर्भ-लिङ्गशरीरम्। अपरमस्मदादि-लिङ्गशरीरम्। तत्र हिरण्यगर्भलिंगशरीरं महत्तत्त्वम्। अस्मदादि-लिंगशरीरमहङ्कारतत्त्वमित्याख्यायते। एवं तमोगुणयुक्तेभ्यः**

दनन्तरम्। याम्यं पन्थानमासाद्य दुःखमश्नन्ति दारुणम्॥ इति। ननु मरणाल्लिङ्गशरीरस्य निवृत्तेस्तदपि न भोगायतनमित्यत आह—**मोक्ष**पर्यन्तमिति। तथा चास्य सूक्ष्मत्वाद् दाहादिनिमित्तेन स्थूलशरीरोपमर्देन नोपमर्दः। अतस्तस्य मोक्षात् पूर्वमविनाशाद् युक्तं तस्य भोगायतनत्वमिति भावः। ननु सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेतीति कैवल्योपनिषदि सकलकार्यलयश्रवणाल्लिङ्गशरीरस्यापि लयो युक्तस्तत् कथमुच्यते मोक्षपर्यन्तस्थायीति चेन्न, सावशेषलयस्यैव तत्र विवक्षितत्वात्, अन्यथाऽऽत्यन्तिकलये प्रायणसमय एव सकलोपाधिलयात् पुनर्भवाभावात् मोक्षलाभाच्च विद्याविधिशास्त्रयोरानर्थक्यप्रसङ्गात्। न चास्मिन् पुनर्भवे प्रमाणाभावः, "योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतमि"त्यादिश्रुतेस्तत्र प्रमाणत्वात्। नन्वेवमपीदं शरीरं न भोगायतनम्, मनोबुद्ध्याद्यभावात्, भोगस्य तदधीनत्वादित्यत आह—**मनोबुद्धि**भ्यामिति। **उपेतं** युक्तम्। सूक्ष्मशरीरस्य मनोबुद्ध्याद्युपेतत्वे प्रमाणमाह—**तदुक्त**मिति। **सूक्ष्मांगं** सूक्ष्मशरीरम्। लिङ्गशरीरं विभजते—**तच्चे**ति। **परं** ब्रह्माण्डव्यापि समष्टिभूतम्। **अपरं** तदव्यापि व्यष्टिभूतम्। **तत्र** द्वयोर्लिङ्गशरीरयोर्मध्ये। **महत्तत्व**मिति। यद्यप्यानुमानिकाधिकरणे हिरण्यगर्भीयबुद्धेर्महत्तत्त्वत्वमभिहितम्, न तदीयसूक्ष्मशरीरस्य, तथापि तद्घटितत्वेन तदीयशरीरस्यापि तद्व्यपदेश्यत्वं बोध्यम्, लोके तथैव व्यवहारदर्शनादिति भावः। एतेन सांख्यानां महत्तत्त्ववादो निराकृतो वेदितव्यः, श्रुतिस्मृत्यादिष्वनुपलब्धत्वात्। तथा चाह भगवान् बादरायणः—इतरेषां चानुपलब्धेरिति। **अहङ्कार**तत्त्वमिति। व्यष्टिभूत-मनसोऽहङ्कारत्वात् तद्घटित-सूक्ष्मशरीरस्याप्यहङ्कारत्वेन व्यपदेश इति भावः। भूतोत्पत्तिमभिधाय भौतिकोत्पत्तिमाह—**एवमि**ति। **तमो**गुणयुक्तेभ्यः तमोगुणप्रधानेभ्यः, भौतिकस्य जड़त्वादस्वच्छत्वाच्च तमःप्रधानकार्यत्वं

**पञ्चीकृतभूतेभ्यो भूम्यन्तरीक्ष-स्वर्महर्जनस्तपः-सत्याख्यस्योर्ध्वलोकसप्तकस्यातल-पाताल-वितल-सुतल-तलातल-रसातल-महातलाख्यस्याधोलोकसप्तकस्य ब्रह्माण्डस्य जरायुजाण्डज-स्वेदजोद्भिज्जाख्यानां चतुर्विध-स्थूलशरीराणां चोत्पत्तिः। तत्र जरायुजानि जरायुभ्यो जातानि मनुष्य-पश्वादिशरीराणि, अण्डजान्यण्डेभ्यो जातानि पक्षि-पन्नगादिशरीराणि, स्वेदजानि तु स्वेदाद् जातानि यूक-मशकादीनि, उद्भिज्जानि तु भूमिमुद्भिद्य जातानि वृक्षादीनि, वृक्षादीनामपि पापफल-भोगायतनत्वेन शरीरत्वम्।**

युक्तमिति भावः। भौतिकस्य ब्रह्माण्डस्य स्वरूपमाह—**भूम्यन्तरी**क्षेति। भूर्लोक-भुवर्लोक-स्वर्लोक-महर्लोक-जनलोक-तपोलोक-सत्यलोकञ्चातल-पाताल-वितल-सुतल-तलातल-रसातल-महातलं ब्रह्माण्डञ्च विसर्जयेदित्यारण्यश्रुतेरिति भावः। यद्यपि मनुना ब्रह्माण्डं त्रिभुवनात्मकमुक्तं—तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम्। स्वयमेवात्मनो ध्यानात् तदण्डमकरोद् द्विधा। ताभ्यां स शकलाभ्याञ्च दिवं भूमिञ्च निर्ममे। मध्ये व्योम दिशश्चाष्टावपां स्थानञ्च शाश्वतमिति। पुराणेऽपि क्वचित् तथैव प्रसिद्धम्, तथापि चतुर्दशभुवनानां त्रिभुवनान्तर्भावान्नानुपपत्तिर्मनुवचनस्येति मन्तव्यम्। भौतिकशरीरं विभजन् तदुत्पत्तिमाह—**जरा**युजेति। जरायुर्गर्भाशयः। **चतु**र्विधेति। "तेषां खल्वेषां भूतानां त्रीण्येव वीजानि भवन्त्याण्डजं जीवजमुद्भिज्ज"मिति छान्दोग्यश्रतौ भौतिकशरीराणां त्रैविध्यकीर्त्तनन्तु स्वेदजौष्ण्यजयोरण्डजोद्भिज्जान्तर्भावाङ्गीकारादिति मन्तव्यम्। तथा च छान्दोग्यभाष्यम्—स्वेदजसंशोकजयोरण्डजोद्भिज्जयोरेव यथासम्भवमन्तर्भाव इति। तत्र जीवजमिति जरायुजमित्यर्थः! जरायुजादीनां शरीराणां क्रमेणोदाहरणमाह—**तत्रे**ति। चतुर्विध शरीरेषु मध्ये इत्यर्थः। वृक्षादीनां शरीरत्वे प्रमाणमाह—**वृक्षादी**नामपीति। **पाप**फलेति। दुःखेत्यर्थः। पुण्यफलस्याप्युपलक्षणमेतत्। ननु वृक्षादीनां सुखदुःखभोगायतनत्वे सिद्धे शरीरत्वं सिध्येत्, तदेव तु नाद्यापि सिद्धम्, तेषामिन्द्रियाभावादिति चेन्न, तत्रापि प्रमाणसद्भावात्। तथा च महाभारतीयमोक्षधर्मपर्ववचनम्—उष्मतो म्लायते वर्णं त्वक् फलं पुष्पमेव च। म्लायते शीर्यते चापि स्पर्शस्तेनात्र विद्यते॥ वाय्वग्न्यशनिनिर्घोषैः फलं पुष्पं विशीर्यते। श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः॥ वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति। न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात् पश्यन्ति पादपाः॥ पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि। अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः॥ पादैः सलिलपानाच्च

**अत्र परमेश्वरस्य पञ्चतन्मात्राद्युत्पत्तौ सप्तदशावयवोपेत-लिङ्गशरीरोत्पत्तौ हिरण्यगर्भ-स्थूलशरीरोत्पत्तौ च साक्षात् कर्त्तृत्वम्, इतरनिखिल-प्रपञ्चोत्पत्तौ हिरण्यगर्भादि-द्वारा, "हन्ताहमिमास्तिस्रो देवताऽनेन जीवे-**

व्याधीनां चापि दर्शनात्। व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे॥ इति। नन्वस्तु वृक्षाणां सेन्द्रियत्वम्, सुखदुःखभोगायतनत्वं तु कुतः? प्रमाणाभावादिति चेन्न, तत्रापि प्रमाणसद्भावात्। तथा च छान्दोग्योपनिषत्—अस्य सौम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज् जीवन् स्रवेद् यो मध्येऽभ्याहन्याज् जीवन् स्रवेद् योऽग्रेऽभ्याहन्याज् जीवन् स्रवेत् स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठतीति। महाभारतमपि—सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात्। जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते॥ इति। वृक्षायुर्वेदोऽपि वृक्षाणामनिन्द्रियत्वं निराकुर्वन् सुखदुःखभोगायतनत्वमाह। ननु निखिलजगत्-कर्त्तृत्वं ब्रह्मणो नोपपन्नं, घटपटादिभौतिकसृष्टेर्जीवसाध्यत्वदर्शनात्, ब्रह्मणश्चाजीवत्वादित्यत आह—**अत्रे**ति। उक्तेषु सृष्टपदार्थेषु मध्ये इत्यर्थः। **पञ्चत**न्मात्रादीति। आदिपदेनेन्द्रियवर्गपरिग्रहः। तथा च तत्तद्भूतसृष्टिर्न जीवकर्त्तृका, तदानीं जीवाभावात्। नाप्यन्यकर्त्तृका, अन्यस्य च कस्यचित् कर्त्तुरभावात्। तस्मात् तस्या ईश्वरकर्त्तृकत्वं युक्तमिति भावः। नन्वस्तु भूतसृष्टिरीश्वरकर्त्तृका। शरीरसृष्टिस्तु नवेश्वरकर्त्तृका, तस्याः शरीरसाध्यत्वात्। न हि द्वयसमापत्तिमन्तरेण क्वचिच्छरीरसृष्टिर्दृष्टा श्रुता वेत्यत आह—**हिरण्य**गर्भस्थूलेति। हिरण्यगर्भस्य स्थूलशरीरं हिरण्यगर्भस्थूलशरीरं तस्योत्पत्ताविति विग्रहः। तच्च शरीरं त्रैलोक्यम्, अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग् विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मेति मुण्डकवचनात्, त्रैलोक्यशरीरस्य प्रजापतेरिति शारीरकभाष्याच्च। तथा च न हि शरीरसृष्टेः शरीरसाध्यत्वनियमः, शरीरं विनापि द्रोण-कृप-धृष्टद्युम्नादिशरीरसृष्टेः श्रूयमाणत्वात्, द्वयसमापत्तिमन्तरेणापि क्वचिच्छरीरसृष्टेरद्याप्यनुभूयमानत्वात्। तथा चोक्तं युक्तिदीपिकायां सांख्यकारिकाव्याख्यायाम्—पूर्वसर्गे प्रकृतेरुत्पन्नानां प्राणिनां सत्त्वधर्मोत्कर्षादन्तरेण द्वयसमापत्तिं मनसैवापत्यमन्यद् वा यथेप्सितं प्रादुर्बभूव। तदेतदद्यापि चानुवर्त्तते। यत्तु कच्छपिका निरीक्षितेनाण्डधारणं करोति, प्रियं खल्वपि चक्षुषा निरीक्ष्य कृतार्थमात्मानं मन्यते। इति। नापीश्वरस्य शरीराभावः, अविद्याया तच्छरीरत्वात्। तस्माच्छरीरकर्त्तृत्वमीश्वरस्य नानुपपन्नमिति भावः। **साक्षात्**कर्त्तृत्वमिति। अविद्या-

**नात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति श्रुतेः। हिरण्यगर्भो नाम मूर्त्तित्रयादन्यः प्रथमो जीवः, स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्त्ता स भूतानां ब्रह्माग्रे समवर्त्तत। हिरण्यगर्भः समवर्त्तताग्रे इत्यादि-श्रुतेः। एवं भूत-भौतिकसृष्टिर्निरूपिता।**

**इदानीं प्रलयो निरूप्यते। प्रलयो नाम त्रैलोक्य-विनाशः। स च चतु-**

तिरिक्त-द्वाराभावादिति भावः। **हिरण्य**गर्भादिद्वारेति। कर्त्तृत्वमिति प्राक्तनेनान्वयः। आदिपदेन विराड़ादि-जीवपरिग्रहः। तथा च घटपटादि-भौतिकसृष्टौ ब्रह्मणः साक्षात्-कर्त्तृत्वाभावेऽपि परम्परया कर्त्तृत्वसत्त्वान्निखिलजगत्कर्त्तृत्वं ब्रह्मणो नानुपपन्नम्, जीव-ब्रह्मणोरभेदात्, उपाधिविशिष्टस्यैव ब्रह्मणो जीवव्यवहारास्पदत्वादिति भावः। नन्वेवं स्याद्, यदीश्वरकर्त्तृकसृष्टौ हिरण्यगर्भादि-जीवस्य द्वारत्वं स्यात्, तदेव तु नैव सिद्धम्, प्रमाणाभावादित्याशङ्क्य तत्र छान्दोग्यश्रुतिं प्रमाणयति—**हन्ते**ति। **अहं** सदाख्या देवता। **इमाः** यथोक्तास्तेज-आद्याः। **जीवेन** प्राणधारणकर्त्रा। **आत्मना** स्वात्मनोऽव्यतिरिक्तेन चैतन्यरूपतयाऽविशिष्टेन स्वरूपेण। **नामरूपे व्याकरवाणि** देवदत्तादि-नाम्ना रूपेण च करचरणादिना संयोज्य पिण्डं व्याकरवाणि। तथा चात्रात्मनेति वचनाद् जीवब्रह्मणोरभिन्नत्वं तृतीयया च द्वारत्वं दर्शितम्। तेन जीवकर्त्तृक-कार्यस्यापि ब्रह्म-कर्त्तृकत्वं नानुपन्नमिति भावः। नन्वेवं स्याद्, यदि हिरण्यगर्भस्य जीवत्वं स्यात्, तदेव तु नैव सिद्धं, तस्य ब्रह्मत्वेन श्रूयमाणत्वात्, ब्रह्मणश्च देवतात्वादित्यत आह—**हिरण्य-गर्भ** इति। **मूर्ति**त्रयात् ब्रह्म-विष्णु-रुद्रलक्षणान्मूर्त्तित्रयात्। हिरणगर्भस्यादिजीवत्वे प्रमाण-माह—**स वै** इति। यो **ब्रह्मा** हिरण्यगर्भो**ऽग्रे** मन्वादिसृष्टेः प्राक् **समवर्त्तत** अजायत। **स वै** एव हिरण्यगर्भः **प्रथमः शरीरी** प्रथमो जीव उच्यते। **स वै पुरुषः**। स वै **भूतानामादिकर्त्ते**त्युच्यते इत्यर्थः। **इत्यादी**त्यादिपदेन—ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्तेति मुण्डकादिश्रुतिपरिग्रहः। उपसंहरति—**एवमि**ति।

प्रलयं निरूपयितुं प्रतिजानीते—**इदानीमि**ति। जगज्जन्मनिरूपणानन्तरमित्यर्थः। यद्यपि जन्मनिरूपणानन्तरं स्थितिनिरूपणमेवोचितम्, तस्या जन्मानन्तरभावित्वात्, तथापि तस्या सुप्रसिद्धतया प्रकृतानुपयोगितया च तन्निरूपणं विहाय प्रलयनिरूपणं कृतमिति मन्तव्यम्। प्रलयस्य स्वरूपमाह—**प्रलयो** नामेति। त्रैलोक्यविनाशः, भूरादि-लोकत्रयस्य लयः। लयश्च स्वकारणे सूक्ष्मरूपेणावस्थानम्। यद्यपि दृष्टिसृष्टिवादे नित्य-

**विधः नित्यः प्राकृतो नैमित्तिक आत्यन्तिकश्चेति। तत्र नित्यः प्रलयः सुषुप्तिः, तस्याः सकलकार्य-प्रलय-रूपत्वात्। धर्माधर्म-पूर्वसंस्काराणां च तदा कारणात्मनावस्थानम्। तेन सुप्तोत्थितस्य न सुखदुःखाद्यनुपपत्तिः, न वा स्मरणानुपपत्तिः। न च सुषुप्तावन्तःकरणस्य विनाशेन तदधीनप्राणादि-**

नैमित्तिकप्रलययोर्न सकलकार्यनाशः, धर्माधर्म-पूर्वसंस्काराणां तत्रापि विद्यमानत्वात्, तथाप्यस्त्येव तत्र त्रैलोक्यस्य लय इति तस्यैव प्रलयसाधारणलक्षणत्वमुक्तम्। प्रलयं विभजते—**स चे**ति। **चतुर्विध** इति। "नित्यो नैमित्तिकश्चैव प्राकृतात्यन्तिकौ तथा। चतुर्धायं पुराणेऽस्मिन् प्रोच्यते प्रतिसञ्चरः॥" इति कूर्मपुराणोक्तेरिति भावः। नित्यप्रलयस्य स्वरूपमाह—**तत्रे**ति। तेषु प्रलयेषु मध्ये इत्यर्थः। नित्यः प्रलय इति लक्ष्यनिर्देशः। सुषुप्तिरिति लक्षणनिर्देशः। "इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती"ति छान्दोग्यश्रुतेः, "यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति, चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येतीति कौषितक्युपनिषदुक्तेः, "नित्यः सदैव जातानां यो विनाशो दिवानिशमि"ति विष्णुपुराणोक्तेश्चेति भावः। सुषुप्तिश्चाज्ञानकार्यलिङ्गशरीरप्रविलयः। सुषुप्तेः प्रलयरूपत्वे हेतुमाह—**तस्या** इति। "न तु तद्-द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्येत्" "सुषुप्तिकाले सकले विलीने" इत्यादिश्रुतौ सुषुप्तौ सकल-प्रपञ्चलय-श्रवणादिति भावः। ननु सुषुप्तेः सकलकार्यप्रलयरूपत्वे सुप्तोत्थितस्य सुखदुःखाद्यनुभवो घटादिप्रतिसन्धानञ्च न स्यात्, तत्कारणानां धर्माधर्मसंस्काराणां कार्यत्वेन तत्र नाशादित्यत आह—**धर्माधर्मे**ति। **कारणात्मना** सूक्ष्मरूपेण, शक्तिरूपेणाविद्यात्मनेति यावत्। तथा च तेषां सावशेषो लयः, न निरवशेष इति भावः। कारणात्मनावस्थानस्य फलमाह—**तेने**ति। कारणात्मनावस्थानेनेत्यर्थः। **सुखदुःखा**द्यनुपपत्तिरिति। आदिपदेन द्वेषादिपरिग्रहः। तथा च जाग्रद्भोगप्रद-कर्मवशात् सुप्तोत्थितस्य सावशेषलीनानां धर्माधर्मादीनां पुनरभिव्यक्त्या सुखदुःखाद्युपभोगो भवतीति भावः। **स्मरणा**नुपपत्तिरिति। पूर्वसंस्काराविर्भावादिति भावः। नन्वेवमपि शरीरादिप्रत्यभिज्ञा न स्यात्, प्रबुद्धशरीरादेरपूर्वत्वात्। न हि विनष्टस्य पूर्वरूपेणैवाविर्भावः क्वचिद् दृष्टचर इति चेन्न निरवशेषविनष्टस्य पूर्वरूपेणाविर्भावासम्भवेऽपि सावशेषविनष्टस्य पूर्वरूपेणैवाविर्भावसम्भवात्। श्रुतिस्मृत्यादिषु तथैवावगमात्। तथा च मन्त्रवर्णः—सूर्या-

**क्रियानुपपत्तिः, वस्तुतः श्वासाद्यभावेऽपि तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वात् सुषुप्त-शरीरोपलम्भवत्। न चैवं सुषुप्तस्य परेताद्विशेषः, सुषुप्तस्य**

चन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवञ्च पृथिवीञ्चान्तरीक्षमथो स्व इति। उपनिषदपि —त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद् यद् भवन्ति तदा भवन्तीति। स्मृतिरपि—ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः। शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः। यथर्त्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिषु। यथाभिमानिनोऽतीतास्तुल्यास्ते साम्प्रतैरिह। देवा देवैरतीतैर्हि रूपैर्नामभिरेव चेति। अन्यथाऽपूर्वस्यान्यस्याविर्भावे कृतप्रणाशाकृताभ्यागमप्रसङ्गो दुर्वारो भवेत् स्मरणानुपपत्तिश्च।

एतेन—तथा च तेषां स्वरूपतोऽवस्थानस्य सत्त्वान्न सुप्तोत्थितस्य तन्निमित्तसुखाद्यनुपपत्तिरिति परिभाषाप्रकाशिकाकृतां व्याख्या प्रत्युक्ता, अद्वैताचार्यैः सुषुप्तावन्तःकरणलयाभ्युपगमात्, तल्लये तदाश्रितानां धर्माधर्मसंस्काराणां स्वरूपतोऽवस्थानायोगात्, पुनः सृष्टिश्रुतेरप्रामाण्यप्रसङ्गाच्च। अत एव पीलुपाकवादिनां प्रत्यभिज्ञानमप्युपपन्नं भवति।

नन्वन्तःकरणस्य सुषुप्तौ लयाभ्युपगमे श्वासादिक्रियाऽनुपपत्तिः, श्वासादिक्रियाया अन्तःकरणाधीनत्वादित्याशङ्क्य निराकरोति—**न चे**ति। **तदधीने**ति। अन्तःकरणाधीनेत्यर्थः। **प्राणादि**क्रिया श्वासादिक्रिया। उक्ताशङ्कां विवरणोक्तदृष्टिसृष्टिवादमनुस्मरन् परिहरति—**वस्तुत** इति। **श्वासाद्य**भावेऽपीति। सुषुप्तौ सकललयस्य श्रुतिसिद्धत्वात्, "एवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका" इत्यादिश्रुतौ पुनः सृष्ट्यभिधानात्, सत्तासाधकप्रमाणाभावाच्चेति भावः। ननु सुषुप्तौ सकललयाभ्युपगमे पुरुषान्तरस्य पुरुषान्तरश्वासाद्युपलब्धिर्न स्यात्। भवति च पुरुषान्तरस्य पुरुषान्तरश्वासाद्युपलब्धिरित्यत आह—**तदु**पलब्धेरिति। श्वासाद्युपलब्धेरित्यर्थः। **पुरुषान्तरे**ति। सुप्तस्योपलब्धिसाधनान्तःकरणादेर्विलयान्न श्वासाद्युपलब्धिः किन्तु पुरुषान्तरस्य। सा चोपलब्धिर्भ्रमरूपा, तदविद्यया तद्विषयाणां दृष्टिसमय एव सृष्टत्वात्। अन्यथा तच्छरीरस्योपलब्धिर्न स्यात्, तस्य पुरुषान्तर-भ्रमसिद्धत्वात्, अन्य-भ्रमसिद्धस्यान्येन द्रष्टुमशक्यत्वात्। अत एवोक्तं विवरणे प्रथमवर्णके —सुषुप्तप्राणशरीरादिदर्शनस्य पुरुषान्तरस्य विभ्रमत्वादितीति भावः। दृष्टिसमयसृष्टावुदाहरणमाह—**सुषुप्त**शरीरेति। सुषुप्तस्य जाग्रति स्वशरीरोपलम्भवदित्यर्थः। तथा च

**हि लिङ्गशरीरं संस्कारात्मनात्रैव वर्त्तते, परेतस्य तु लोकान्तर इति वैलक्षण्यात्। यद्वा—अन्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चेति। तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशो न क्रियाशक्ति-विशिष्टस्येति**

यो यो यद् यत् पश्यति, तत्तत् तदविद्याविजृम्भितम्। तस्य तु दृष्टिसमय एव सृष्टिर्न पूर्वोत्तरकालयोः तदस्तित्वम्, मानाभावादिति भावः। न चैक्यप्रत्यभिज्ञाविरोधस्तस्या दीपादिप्रत्यभिज्ञावद् भ्रान्तित्वात्। न चात्र बाधकाभावः, प्रतिभासमात्रशरीरत्वस्य प्रतिभासकालातिरिक्तसत्त्वे बाधकस्य विद्यमानत्वात्। न च तस्य प्रतिभासमात्र-शरीरत्वासिद्धिः, ब्रह्मातिरिक्तप्रपञ्चस्य मिथ्यात्वेन तस्य सिद्धत्वात्। न च सुषुप्तौ प्राणादेरपि विलयाङ्गीकारे सुषुप्त्युत्क्रान्त्योर्भेदो न स्यादित्याशङ्क्य निराकरोति— **न चे**ति। **एवं** सुषुप्तौ श्वासादिक्रियाया अपि विलयाङ्गीकारे। **परेतात्** मृतात्। **अविशेषः** विशेषाभावः, भेदाभाव इति यावत्। देह-जीवविच्छेदस्यैव मरणत्वात् सुषुप्त्युत्क्रान्त्योस्तत्सद्भावाद् मृत-सुषुप्तयोरविशेष इति भावः। आशङ्कानिराकरण-हेतुमाह—**सुषुप्तस्ये**ति। **संस्कारात्मना** सूक्ष्मरूपेण, कारणे सूक्ष्मरूपेणावस्थानस्यैव लयलक्षणत्वात्, परमसूक्ष्मसंस्कारात्मनावस्थाने तु पुराणाद्युक्तविरोधात्, पुराणेषु पृथिव्यादेः शुष्कगोमयपिण्डाकारत्वोक्तेः। तथा च कूर्मपुराणम्—दग्ध्वा गोमयपिण्डाभं ब्रह्माण्डं सारवर्जितमितीति भावः। **अत्र** इह लोके। परेतस्य तद्वैलक्षण्यं दर्शयति— **परेतस्य** त्विति। स्वरूपेणेति शेषः। **लोकान्तर** इति। "स यदाऽस्माच्छरीरादुत्-क्रामति सहैवैतैः सर्वैरुत्क्रामती"ति कौषितक्युपनिषदुक्तेरिति भावः। **वैलक्षण्या**दिति। यद्यपि स्थूलदेहाभावेन सुप्तमृतयोः साम्यम्, तथापि नैक्यम्। न हि स्थूलदेहाभाव-साम्यमात्रेण सुप्तमृतयोरभेदः, तथा सति विशेषविज्ञान-सद्भाव-साम्यमात्रेण स्वप्नजागरयो-रभेदप्रसङ्गात्। वाह्येन्द्रियव्यापारभावाभावाभ्यां तु तयोर्भेदे सुप्तमृतयोरपि लिङ्गशरीरो-द्भवाभिभवाभ्यां भेद इति भावः। न चैवमेकस्यैव जीवस्य सुप्तमृतस्योपाधिभेदाद् भेदः स्यादिति वाच्यम्, उद्भवाभिभवयोर्भेदेऽपि सुप्तमृतस्योपाधेर्लिङ्गशरीरस्याभेदात्। सृष्टि-दृष्ट्यभिप्रायेण सुषुप्तस्य श्वासादिक्रियामुपपादयति—**यद्वे**ति। **ज्ञानशक्तिः** ज्ञानोत्पत्त्यनु-कूल-सामर्थ्यम्। **क्रियाशक्तिः** श्वासादिक्रियोत्पत्त्यनुकूलसामर्थ्यम्। **तत्र** तयोः शक्त्यो-र्मध्ये। **अन्तःकरणस्ये**ति। ज्ञानक्रियाशक्तिविशिष्ट-स्वच्छद्रव्यस्येत्यर्थः। सत्त्वांश-प्रधानादपञ्चीकृतभूतसमवायात् चित्ररूपस्येव ज्ञानक्रियाशक्तिविशिष्टस्यैकस्य स्वच्छद्रव्य-

**प्राणाद्यवस्थानमविरुद्धम्। "यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एकधा भवति। अथैनं वाक् सर्वैर्नामभिः सहाप्येति। सता सौम्य तदा सम्पन्नो भवति, स्वमपीतो भवतीत्यादि-श्रुतिरुक्त-सुषुप्तौ मानम्।**

**प्राकृतप्रलयस्तु कार्यब्रह्म-विनाश-निमित्तकः सकल-कार्यनाशः। यदा**

स्योत्पत्तिः। तस्य च स्वच्छद्रव्यस्य ज्ञानशक्तिप्रधानांशोऽन्तःकरणम्। क्रियाशक्तिप्रधानांशश्च प्राणः। अत एव तस्य स्वच्छद्रव्यस्य ज्ञानक्रियाशक्तिमत्त्वमिति भावः। **विनाश** इति। जाग्रत्स्वप्नभोगप्रदकर्मणां विनाशात् सौषुप्तानुभवजनक-कर्मणाञ्चोदयादिति भावः। **न क्रिये**ति। श्वासादिक्रियाकारककर्मणामविनाशात् क्रियाशक्तिविशिष्टस्यान्तःकरणस्याविनाश इति भावः। **इति**र्हेतौ। **प्राणादी**त्यादिपदेन धर्माधर्मशरीरादीनां परिग्रहः। तथा चैतन्मतेऽन्तःकरण-तत्कार्य-प्रविलयो हि सुषुप्तिः। तथा चोक्तं विवरणप्रमेयसंग्रहे प्रथमवर्णके—सुषुप्तेरन्तःकरणप्रलयरूपत्वान्न तत्र तत्सद्भाव इति। सिद्धान्तबिन्दौ च—स्वप्नावस्थाज्ञानस्यैवान्तःकरणलयसहितस्य सुषुप्तिरूपत्वादिति। न च सकललयश्रुतिविरोधः, तासां गौणलयपरत्वात्। दृष्टिसृष्टिसमाश्रयणे तु सुप्तपुरुषं प्रति सर्वलयो मुख्य एव। तस्मात् सृष्टिदृष्टिवादे सुषुप्तौ प्राणादीनां लयाभावात् श्वासादिक्रिया युक्तैवेति भावः। सुषुप्तौ सकलकार्यलये कौषितकीश्रुतिं प्रमाणयति—**यदे**ति। **अथ** स्वप्नदर्शननिवृत्तौ। **प्राणे** ब्रह्मणि। **एकधा**ऽभिन्नः। **अथ** जीवस्य प्राणैक्यानन्तरम्। **एनं** ब्रह्म। **नामभिः** कार्यजातैः। **अप्येति** लयं गच्छति। तत्र तद्-दार्ढ्याय छान्दोग्यश्रुतिमपि प्रमाणयति—**सते**ति। ब्रह्मणेत्यर्थः। **सोम्य**! श्वेतकेतोः! **तदा** सुषुप्तिकाले। **सम्पन्नः** सम्बद्धः, एकीभूत इति यावत्। सम्पन्नो भवतीत्यस्यार्थमाह—**स्वमपीत** इति। उपाधिकृतं जीवभावं परित्यज्यानौपाधिकं स्वरूपमपीतो भवतीत्यर्थः। औपाधिकजीवभावपरित्यागेनानौपाधिके ब्रह्मणि लीनो भवतीति भावः। **इत्यादी**त्यादिपदेन —"न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत् पश्ये"दित्यादि-श्रुतिपरिग्रहः। **उक्तसुषुप्तौ** सकलकार्यलयात्मक-सुषुप्तौ।

प्राकृतप्रलयं निरूपयति—**प्राकृते**ति। प्रकृतौ भवः प्राकृतः। प्रकृतिश्चावरणविक्षेपशक्तिद्वयविशिष्टाज्ञानम्। यदा तु कार्यवर्गस्य प्रकृत्यात्मनाऽवस्थानम्, तदा प्राकृतप्रलयः। "तद्धेयदं तर्ह्यव्याकृतमासीत्" "नासदासीन्नो सदासीत् तदानीं नासीद्रजो नो व्योमापरो यदि"त्यादिश्रुतेरिति भावः। **कार्यब्रह्मे**ति। हिरण्यगर्भेत्यर्थः। **विनाश**निमित्तक इति।

**तु प्रागेवोत्पन्न-ब्रह्मसाक्षात्कारस्य कार्यब्रह्मणो ब्रह्माण्डाधिकार-लक्षण-प्रारब्ध-कर्म-समाप्तौ विदेहकैवल्यात्मिका परममुक्तिस्तदा तल्लोकवासिनामप्युत्पन्न-ब्रह्मसाक्षात्काराणां ब्रह्मणा सह विदेहकैवल्यम्, ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति श्रुतेः।**

**एवं तल्लोकवासिभिः सह कार्यब्रह्मणि मुच्यमाने तदधिष्ठित-ब्रह्माण्डा-**

तथा च कार्यब्रह्मविनाशजन्यत्वे सति सकल कार्यलयत्वं प्राकृतप्रलयत्वमिति लक्षणं पर्यवसितम्। तेन सुषुप्त्यादौ नातिव्याप्तिः। तेषां कर्मादिनाशजन्यत्वादिति भावः।

एतेन—न च सौषुप्तिकप्रलयेऽतिव्याप्तिः, तदा सुखादिविनाशस्यान्तःकरणनिष्ठत्वादिति शिखामणिकृतां व्याख्यानं प्रत्युक्तम्, सुषुप्तावन्तःकरणलयस्याचार्याभिमतत्वात्।

सकलकार्यनाशक्रमं दर्शयन् प्राकृतप्रलयमुपपादयति—**यदे**ति। **प्रागेव** प्रलयात्पूर्वमेव अनेन कार्यब्रह्मणो मुक्तिहेतुसमवधानं सूचितम्, ब्रह्मसाक्षात्कारस्यैव मुक्तिहेतुत्वात्, तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति श्रुतेरिति भावः। ननु कार्यब्रह्मण उत्पन्नश्चेद् ब्रह्मसाक्षात्कारो विदेहकैवल्यं स्यात्, सत्यां सामग्र्यां कार्यविलम्बायोगादित्यत आह—**ब्रह्माण्डे**ति। ब्रह्माण्डस्याधिकारेण भोगेन लक्ष्यते ज्ञायते यत् प्रारब्धं शरीराद्यारम्भकं कर्म तत्समाप्तावित्यर्थः। तथा च भोगैकनाश्यस्य प्रारब्धकर्मणो ब्रह्मसाक्षात्कारानाश्यतया यावद्भोगं तत्सद्भावावश्यकत्वाद् देहस्यापि सत्त्वम्। अतः प्रारब्धकर्मनाशात् प्राग् न विदेहकैवल्यम्। प्रारब्धकर्मसमाप्तौ तु भवत्येव विदेहकैवल्यम्, प्रारब्धकर्मनाशेन देहस्य नाशादिति भावः। **विदेह**कैवल्येति। देहपातोत्तरकैवल्येत्यर्थः। तल्लोकवासिनां कार्यब्रह्मलोकवासिनाम्, सत्यलोकवासिनामिति यावत्। **उत्पन्ने**ति। एतेनाकृत-ब्रह्मसाक्षात्काराणां **तल्लोक**वासिनां न विदेहकैवल्यम्, किन्तु यावद् ब्रह्मलोकस्थितिस्तावत् तत्रैवावस्थानम्, ततस्तस्मादवतरणञ्चेति सूचितम्। यद्यपि सत्यलोकवासिनां विदेहकैवल्याभिधानं न प्रकृतं स्पृशति, तथाप्युत्पन्नब्रह्मसाक्षात्काराणामविशेषेण विदेहकैवल्यं न लोकान्तरमिति दर्शयितुं तदभिधानमिति मन्तव्यम्। तत्र प्रमाणमाह—**ब्रह्मणे**ति। **परस्य** हिरण्यगर्भस्या**न्ते** मुक्तिसमये **प्रतिसञ्चरे** प्रलये **सम्प्राप्ते** सति **कृतात्मानः** साक्षात्कृतात्मानः **ते** सत्यलोकवासिनः **सर्वे ब्रह्मणा सह परं पदं** ब्रह्मरूपं **प्रविशन्ति** प्राप्नुवन्तीति वाक्यार्थः। **श्रुतेः** श्रवणात्। स्मृतेरिति पाठस्तु युक्तः। **तदधिष्ठिते**ति। कार्यब्रह्माधिष्ठितेत्यर्थः। **निखिललोके**ति।

न्तर्वर्त्ति-निखिल-लोक-तदन्तर्वर्त्ति-स्थावरादीनां भौतिकानां भूतानां च प्रकृतौ मायायां लयो न तु ब्रह्मणि, बाधरूप-विनाशस्यैव ब्रह्मनिष्ठत्वात्। अतः प्राकृत-प्रलय इत्युच्यते।

कार्य-ब्रह्मणो दिवसावसान-निमित्तकस्त्रैलोक्यमात्र-प्रलयो नैमित्तिक-

**चतुर्दश**भुवनेत्यर्थः। **तदन्तर्वर्त्ती**ति। चतुर्दशभुवनान्तर्वर्त्तीत्यर्थः। **स्थावरादीनाम** वृक्षादीनाम्। **भौतिकानां** पृथिव्यादि-भूतविकाराणाम्। **भूतानां** पृथिव्यादीनाम्। **प्रकृतौ** मायायां परिणाम्युपादानेऽज्ञाने। **लय** इति। तस्यैव साक्षात् परम्परया सर्वोपादानत्वात्, उपादान-सत्ताकालीन-कार्यनाशस्योपादानाश्रयत्वनियमादिति भावः। नन्वव्याकृतं परे तत्त्वे लीयते सकलाश्रये इत्यादिष्वव्याकृतस्याज्ञानस्य लयश्रवणात् कथं तत्र तेषां लय इति चेन्न, तादृशवाक्यानां परिणामशून्यतयाऽवस्थानरूप-भाक्तलयबोधकत्वात्, अन्यथा मुख्यलयबोधकत्वे "तद्धेयदं तर्ह्यव्याकृतमासी"दित्यादिश्रुत्याव्याकृतस्य सत्त्वाभिधानानुपपत्तेः, अनादेरव्याकृतस्य कारणाभावेन लयासम्भवात्। ननु ब्रह्मणोऽप्युपादानत्वात् तत्रैव लयोऽस्त्विति चेत्, तत्राह—**न त्वि**ति। तत्र हेतुमाह—**बाधरूपे**ति। **ब्रह्मनिष्ठत्वात्** ब्रह्मरूपत्वात्, अधिष्ठानावशेषो हि नाशः कल्पितवस्तुन इत्युक्तेरिति भावः। उक्तप्रलयस्य प्राकृतपदाभिधेयत्वे हेतुमाह—**अत** इति। अस्मादित्यर्थः, लयस्य प्रकृतिनिष्ठत्वादिति यावत्।

नैमित्तिकप्रलयं निरूपयति—**कार्य**ब्रह्मण इति। प्रजापतेर्विराज इत्यर्थः। **दिवसे**ति। दिवसावसानं निमित्तं यस्य प्रलयस्य स इत्यर्थः। **त्रैलोक्य**मात्रेति। भूरादिलोकत्रयमात्रस्येत्यर्थः। मात्रशब्देन महरादिलोकव्यावृत्तिः। तथा च विष्णुपुराणम्—ब्राह्मो नैमित्तिको नाम तस्यान्ते प्रतिसञ्चरः। तदा विदह्यते सर्वं त्रैलोक्यं भूर्भुवादिकम्। जनं प्रयान्ति तापार्त्ता महर्लोकनिवासिनः॥ इति।

एतेन—त्रैलोक्यमात्रस्येति मात्रपदं यावदर्थकम्। सर्वकार्यविनाशः नैमित्तिकप्रलय इति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, पुराणवाक्यविरोधात्, कार्यस्यापञ्चीकृत-महाभूतस्य नैमित्तिकलयाधारस्य तदा विद्यमानत्वात्। अत एवोक्तं न्यायरत्नावल्याम्—अत्र महर्लोकस्य तापितत्वेन निर्जनत्वेऽप्यनाशाज्जनलोकादौ च तापितत्वस्याभावात् न विराजः सम्पूर्णस्य लयो दैनन्दिन-प्रलये, किन्तु चतुर्दशभुवनैकदेशावच्छिन्नस्येति। एतेन—शिखामणिकृतां व्याख्यानमपि प्रत्युक्तं वेदितव्यम्।

**प्रलयः। ब्रह्मदिवसश्चतुर्युग-सहस्र-परिमित-कालः, चतुर्युग-सहस्रं तु ब्रह्मणो दिनमुच्यते इति वचनात्। प्रलय-कालो दिवसकाल-परिमितः, रात्रिकालस्य दिवस-तुल्यत्वात्। प्राकृतप्रलये नैमित्तिक-प्रलये च पुराण-वचनानि प्रमाणानि।**

**द्विपरार्द्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः।**
**तदा प्रकृतयः सप्त कल्प्यन्ते प्रलयाय हि॥**

ब्रह्मणो दिवसादिपरिमाणमाह—**ब्रह्मदि**वसश्चेति। **चतुर्युगे**ति। कृतं त्रेतां द्वापरञ्च कलिश्चेति चतुर्युगमिति पुराणोक्त-युगचतुष्टयेत्यर्थः। चतुर्युगपरिमाणन्तु—मनुष्याणां यद् वर्षं, तदेव देवानामहोरात्रम्, तादृशैरहोरात्रैः पक्षादिक्रमेण द्वादशभिर्वर्षसहस्रैश्चतुर्युगं भवति। तत्र वर्षाणां चतुःसहस्रं कृतयुगं त्रिसहस्रं त्रेता द्विसहस्रं द्वापरमेकसहस्रं कलिः, अष्टशतं कृतयुगस्य पूर्वोत्तरसन्ध्ये। एवमग्रेऽपि युगक्रमेण षट्चतुर्द्विशत-संख्याक-सन्ध्याक्रमो वेदितव्य इति। तत्र प्रमाणमाह—**चतुर्युगे**ति। अत्र सहस्राणीत्यपपाठः, चतुर्युगैकसहस्रस्यैव ब्रह्मदिवसत्वात्, प्रोच्यते तत्सहस्रन्तु ब्रह्मणो दिवसो मुने इति स्मृतेः। नैमित्तिकप्रलयस्य परिमाणमाह—**प्रलयकाल** इति। **दिवसे**ति। ब्रह्मदिवसेत्यर्थः। ननु—यदा स देवो जागर्त्ति तत्रेदं चेष्टते जगत्। यदा स्वपिति शान्तात्मा तदा सर्वं निमीलतीति मनुवचनाद् रात्रिकालपरिमितकालस्य प्रलय-परिमाणत्वं ज्ञायते, तत् कथमुच्यते दिवसकालपरिमितस्यैव प्रलयपरिमाणत्वमिति। तत्राह—**रात्रि**कालस्येति। **दिवस**तुल्यत्वादिति। "दैविकानां युगानान्तु सहस्रं परिसंख्यया। ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव चेति मनूक्तेरिति भावः। **पुराण**-वचनानीति। वेदात् प्रलयः प्रतीतोऽपि तद्भेदः स्पष्टं न प्रतीयते, प्रतीयते च पुराण-वचनात्। अतस्तद्वचनानि प्रमाणत्वेनोपन्यस्तानीति भावः। तत्र प्राकृतप्रलये पद्म-पुराणवचनं प्रमाणमाह—**द्विपरार्द्धे** इति। परस्य ब्रह्मायुषोऽर्द्धं परार्द्धं द्वे च परार्द्धे चेति द्विपरार्द्धं तस्मिन्नित्यर्थः। ब्रह्मायुषः पूर्वार्द्धमुत्तरार्द्धञ्चेति यावत्। तत्र परशब्देन परिभाषितो ब्रह्मजीवितकालोऽभिधीयते। तथा च विष्णुपुराणे—निजेन तस्य मानेन आयुर्वर्षशतं स्मृतम्। तत् पराख्यं तदर्द्धञ्च परार्द्धमभिधीयते। इति। **परमेष्ठिनः** ब्रह्मणः। **सप्त प्रकृतयः** महदहङ्कारपञ्चतन्मात्राणि। तथा चोक्तं सांख्यकारिकायां—मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्तेति। **कल्प्यन्ते** योग्या भवन्ति।

**एष प्राकृतिको राजन् प्रलयो यत्र लीयते।**

**इति वचनं प्राकृत-प्रलये मानम्।**

**एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक्।**
**शेतेऽनन्तासने नित्यमात्मसात्कृत्य चाखिलम्॥**

**इति वचनं नैमित्तिक-प्रलये मानम्।**

**तुरीय-प्रलयस्तु ब्रह्मसाक्षात्कार-निमित्तकः सर्वमोक्षः। स चैकजीव-वादे युगपदेव, नानाजीव-वादे क्रमेण, सर्वे एकीभवन्तीत्यादि-श्रुतेः। तत्राद्या-**

अत्र प्रकृतिवर्गाणां लयाभिधानादेव विकृतिवर्गाणामपि लयो दर्शितः, प्रकृतीनां लये तद्विकृतीनां लयावश्यम्भावादिति भावः। **यत्र** यस्मिन् प्रलये। **लीयते** इति। सर्वमेव कार्यमिति शेषः। नैमित्तिकप्रलये प्रमाणमाह—**एष** इति। **यत्र** यस्मिन् प्रलये। **विश्वसृक्** विराट्। **अखिलं** भूरादिलोकत्रयम्। **अनन्तासने** शेषशय्यस्य हरेर्नाभिकमले। **नैमित्तिकः** ब्रह्मणो रात्र्यागम-निमित्तकः।

आत्यन्तिकप्रलयं निरूपयति—**तुरीये**ति। चतुर्थेत्यर्थः। **सर्वमोक्षः** परमात्मनि सर्वेषामविद्या-तत्कार्याणां लयः। आत्यन्तिकलये अविद्याया अपि लयात् परमात्मन्येव सर्वेषां लयः, "ज्ञानमात्यन्तिकः प्रोक्तो योगिनः परमात्मनि। प्रलयः प्रतिसर्गोऽयं कालचिन्तापरैर्द्विजैः"रिति स्मृतेरिति भावः। सर्वमोक्षप्रकारमाह—**स चे**ति। सर्व-मोक्ष इत्यर्थः। **एकजीववाद** इति। जीवो नामाविद्याप्रतिबिम्बितं चैतन्यम्। स चैकः, तदुपाधेरविद्याया एकत्वात्। तत्र केचिन्मन्यन्ते—एको जीवस्तेनैकमेव शरीरं सजीवम्। अन्यानि च शरीराणि निर्जीवानि। तस्य च यावदविद्यं सर्वो व्यवहारः स्वप्नदर्शनवद-नुवर्त्तते। बद्धमुक्तादि-भेदव्यवहारस्तु कल्पित एवेति। अन्ये तु तत्र विरोधं मन्यमाना आहुः—हिरण्यगर्भ एको मुख्यो जीवः। अन्ये तु जीवास्तत्प्रतिबिम्बभूता जीवाभासाः संसारादिभाजः, उपाधेः प्रतिबिम्बपक्षपातित्वादिति। अपरे त्वत्राप्यनुपपत्तिं प्रतिपद्य-मानाः—एको जीवोऽविशेषेण सर्वं शरीरमधितिष्ठतीत्याहुरिति भावः। विस्तरस्त्वद्वैत-सिद्धौ सिद्धान्तलेशसंग्रहे च द्रष्टव्यः। **युगपदेवे**ति। एकस्य तत्त्वज्ञानेनैकदैवाज्ञान-तत्कार्याणां नाशादिति भावः। अन्ये त्वत्रापि बद्धमुक्तव्यवस्थाभावं श्रुतिभाष्यादि-विरोधञ्च मन्यमाना अन्तःकरणानां जीवोपाधित्वमङ्गीकुर्वाणा बहुजीववादमातिष्ठन्ते। तन्मतेन सर्वमोक्षप्रकारमाह—**नानाजीवे**ति। यावन्तोऽन्तःकरणानि तावन्तो जीवा-

**स्त्रयोऽपि प्रलयाः कर्मोपरम-निमित्ताः। तुरीयस्तु ज्ञानोदय-निमित्तोऽज्ञानेन सहैवेति विशेषः। एवं चतुर्विध-प्रलयो निरूपितः।**

स्तेनास्मिन् पक्षे न श्रुत्यादिविरोधो न वा बद्धमुक्तव्यवस्थाभाव इति भावः। ननु नानाजीववादेऽप्यज्ञानस्यैकत्वादेकस्य कस्यचित् तत्त्वज्ञानेनाज्ञान-तत्कार्याणां नाशादेकदैव सर्वमोक्ष इत्यत आह—**क्रमेणे**ति। तथा चैकस्य तत्त्वज्ञानेन न कृत्स्नाज्ञाननाशः, अज्ञानस्य सांशत्वादेकस्य ज्ञानेनैकांशस्य नाशेऽप्यंशान्तराणां वर्त्तमानत्वात्। एवमेकैकक्रमेण सर्वेषां तत्त्वज्ञाने जाते क्रमेणैवाज्ञान-तत्कार्याणां नाशात् क्रमेणैव मोक्षो न युगपत्। न च युगपत् सर्वेषां तत्त्वज्ञानोदयः, युगपत् तत्साधन-समवधानादर्शनात्। नाप्यज्ञानस्य सांशत्वे मानाभावः, जीवन्मुक्तव्यवहारस्य तत्र प्रमाणत्वात्। जीवन्मुक्तावावरण-शक्तिमदंशस्य नाशेऽपि विक्षेपशक्तिमदंशस्यानाशात्। अन्यथा जीवन्मुक्तानामज्ञाननिमित्तको व्यवहारो न स्यादिति भावः। आत्यन्तिक-प्रलये प्रमाणमाह—**सर्वे** इति। सर्वे पदार्था इत्यर्थः। **एकीभवन्ति** परमात्मस्वरूपतां सम्पद्यन्ते। **इत्यादी**त्यादिपदेन "यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्ये"दित्यादिश्रुति-परिग्रहः। आत्यन्तिकप्रलयादन्येषां प्रलयानां वैलक्षण्यं दर्शयति—**तत्रे**ति। चतुर्षु प्रलयेषु मध्ये इत्यर्थः। **आद्यास्त्रयः** नित्य-प्राकृत-नैमित्तिकाः। वैलक्षण्यहेतुं निमित्तभेदं दर्शयति—**कर्मोपर**मेति। कर्मोपरमो निमित्तं येषामिति विग्रहः। तत्र स्थूलशरीराभिमानिनो व्यष्टिजीवस्य स्वप्न-जाग्रद्-भोगप्रद-कर्मोपरमो नित्यप्रलय-निमित्तम्। समष्टिस्थूलशरीराभिमानिनो विराजो जाग्रद्भोगप्रद-कर्मोपरमो नैमित्तिकप्रलय-निमित्तम्। हिरण्यगर्भस्य प्रारब्धकर्मोपरमः प्राकृतप्रलय-निमित्तमिति विवेकः। आत्यन्तिकप्रलयस्य निमित्तमाह—**तुरीयस्त्वि**ति। **ज्ञानोदये**ति। तत्त्वसाक्षात्कारस्तुरीयप्रलयनिमित्तमित्यर्थः। ननु तुरीयप्रलयोऽपि प्रारब्धकर्मोपरतिमपेक्षते। न हि तत्त्वज्ञानोदयमात्रात् कस्यचिदात्यन्तिकलयः, तत्त्वज्ञानिनः शरीरादेस्तदापि विद्यमानत्वादिति चेत्, सत्यं, प्रारब्धकर्मोपरतेः प्रतिबन्धकाभावमात्रत्वात्, कर्मोपरमनिमित्तत्वेऽपि वैलक्षण्यसद्भावात्। स्वरूपभेदमाह—**अज्ञानेने**ति। तत्र प्रथमत्रिकेष्वज्ञानातिरिक्तकार्यस्य लयो नाज्ञानस्य। आत्यन्तिकप्रलये त्वज्ञानेन सह सकलकार्यस्य लय इति स्वरूपभेद इत्यर्थः। एतेन फलभेदोऽप्यस्तीति सूचितम्। तत्राद्यत्रयस्य फलं श्रमापनुत्तिः। आत्यन्तिकस्य त्वविद्यानिवृत्तिरिति। प्रलयविभागमुपसंहरति—**एवमि**ति। उक्तप्रकारेणेत्यर्थः।

**तस्येदानीं क्रमो निरूप्यते। भूतानां भौतिकानाञ्च न कारणलय-क्रमेण लयः, कारणलयसमये कार्याणामाश्रयमन्तरेणावस्थानानुपपत्तेः, किन्तु सृष्टि-क्रमविपरीत-क्रमेण, तत्तत्कार्यनाशे तत्तज्जनकादृष्ट-नाशस्यैव प्रयोजकतयो-**

प्रलयकारणं निरूप्य तत्क्रमं निरूपयितुं प्रतिजानीते—**तस्ये**ति। प्रलयस्येत्यर्थः। ननु भूतभौतिकानामुत्पत्तौ क्रमः श्रूयते, नाप्यये, अप्ययमात्रस्य श्रुतत्वात्। तत्र किमनियतक्रमेण भूतानां लय उत्पत्तिक्रमेण वा तद्विपरीतक्रमेण वेति संशयेऽनियतक्रमस्याव्यवस्थितत्वात् सत्यां व्यवस्थायामव्यवस्थाया अन्याय्यत्वाद् व्यवस्थितेनैवोत्पत्तिक्रमेण भूतानां लयः स्यादित्यत आह—**भूताना**मिति। **न कारणे**ति। नोपादानकारणलयक्रमेणेत्यर्थः। अपञ्चीकृतानां भूतानां लये तत्कार्याणां पञ्चीकृतभूतानां लयः, पञ्चीकृतभूतानां लये तत्कार्याणां भौतिकानां लयः। एष कारणलयक्रमः। नानेन क्रमेण भूतभौतिकानां लय इति भावः। तत्र हेतुमाह—**कारण**लयेति। कार्यं हि वर्त्तमानमुपादानाश्रितं सद् वर्त्तते नाऽनाश्रितमन्याश्रितं वा। तद् यद्युपादाननाशोत्तरं कार्यनाशः स्यात्, तदा कार्यमनाश्रितं स्यात्, आश्रयान्तराभावात्। न चानाश्रितस्य कार्यस्यावस्थानं युक्तम्। तस्मादुत्पत्तिक्रमेण कार्याणां लयो न युक्त इति भावः। केन तर्हि क्रमेण कार्याणां लय इत्यत आह—**किन्त्विति**। भौतिकानामादौ पञ्चीकृतभूतेषु लयस्तेषामपञ्चीकृतभूतेषु तेषाञ्चाव्याकृतेऽज्ञाने। एष सृष्टिक्रम-विपरीतक्रमः। तेनैव क्रमेण भूत-भौतिकानां लय इति भावः। ननूपादानलयक्रमेणैव कार्याणां लयो युक्तः, उपादानलयस्यैवोपादेयलयहेतुत्वात्, नैयायिकैस्तथाऽभ्युपगमादित्यत आह—**तत्तत्**कार्येति। **तत्तज्जनका**दृष्टनाशस्येति। यथाश्रुतार्थस्तु न युक्तः, अदृष्टस्य फलनाश्यत्वात् कार्यजनकादृष्टस्य कार्यजननोत्तरक्षण एव नाशात् कार्यस्य नाशापत्त्या क्षणिकत्वप्रसङ्गात्। अतस्तत्पदस्य तत्तदुपभोगजनकादृष्टनाशस्येत्यर्थः कल्पनीयः। तेनोत्पत्तिजनकादृष्टस्योत्पत्त्यनन्तरं नाशेऽपि न कार्याणां नाशापत्तिर्न वा कार्याणां क्षणिकत्वम्, उत्पत्तिजनकादृष्टभिन्नस्य तत्स्थितिहेतोस्तदुपभोगजनकादृष्टस्य कार्यनाशं यावदवस्थानात्, अन्यथा तस्मादुपभोगानुपपत्तेरिति भावः।

एतेन—यागः स्वर्गसाधनमित्यादिवाक्यस्य हि स्वर्गानुभवसाधनं याग इत्येवार्थः। सुखविशेषात्मकस्य च स्वर्गस्यास्मन्मते प्रातिभासिकत्वेन यावत्प्रतिभासमेव सत्त्वात् तदनुभवसाधनत्वं तत्साधनत्वे एव पर्यवस्यतीति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्,

**पादान-नाशस्याप्रयोजकत्वात्; अन्यथा न्यायमतेऽपि महाप्रलये पृथिवी-परमाणु-गत-रूप-गन्ध-रसादेरविनाशापत्तेः। तथा च पृथिव्या अप्सु, अपां तेजसि, तेजसो वायौ, वायाराकाशे, आकाशस्य जीवाहङ्कारे, तस्य हिरण्य-**

तद्बोधानुपपत्तेः, एकस्यैवादृष्टस्य तज्जनकत्वे तदनुभवजनकत्वे च सर्वस्य सर्वोपभोगप्रसङ्गात्, सर्वकार्याणां सर्वादृष्टाधीनत्वात्, उत्पन्नविनष्टकथायाश्च दत्तजलाञ्जलित्वप्रसङ्गात्।

**प्रयोजकतये**ति। उपभोगजनकादृष्टनाशे उपभोग्यनाशादिति भावः। ननूपादाननाशे उपादेयनाशादुपादाननाशस्यैवोपादेयनाशहेतुत्वं स्यात्, किमदृष्टनाशस्य हेतुत्वकल्पनयेत्यत आह—**उपादाने**ति। सत्युपादाने उपादेयनाशादुपादाननाशस्य नोपादेयनाशहेतुत्वम्। कार्यद्रव्यनाशं प्रत्युपादाननाशस्य हेतुत्वेऽपि कार्यसामान्यनाशं प्रति तस्याहेतुत्वात्, अननुगतानां कार्यनाशहेतुत्वकल्पनापेक्षयानुगतस्यादृष्टनाशस्य हेतुत्वौचित्यादिति भावः।

एतेन—समवायिकारणनाशात् कार्यनाश इति नैयायिकसिद्धान्ते हीति परिभाषाप्रकाशिकाकृतां नैयायिकसिद्धान्तख्यापनं प्रत्युक्तम्, तत्सिद्धान्तानवबोधात्, समवायिकारणनाशादसमवायिकारणनाशाद्वा कार्यद्रव्यनाशो न तु कार्यनाश इति तत्सिद्धान्तात्।

उपादाननाशस्य कार्यमात्रनाशकत्वाभ्युपगमे दोषमाह—**अन्यथे**ति। उपादाननाशस्य कार्यमात्रनाशकत्वे इत्यर्थः। **न्यायमतेऽपी**ति। यन्मतमवलम्ब्योपादाननाशस्योपादेयनाश-हेतुत्वमभ्युपगम्यते, तन्मतेऽपीत्यर्थः। **अविना**शापत्तेरिति। परमाणुगतरूपरसादेर्विनाशाभावप्रसङ्गात्, नैयायिकनये समवायिकारणस्य परमाणोर्नित्यत्वाभ्युपगमेनोपादाननाशाभावात्, दोधूयमानास्तिष्ठन्ति प्रलये परमाणव इति तत्सिद्धान्तादिति भावः। सृष्टिक्रमविपरीतक्रमेण लयप्रकारं दर्शयति—**तथा चे**ति। **पृथिव्याः** स्थूलपृथिव्याः। **अप्स्विति**। अब्भावापन्नाज्ञानैकदेशस्य पृथिव्युपादानत्वात् पृथिव्या अप्सु लय इति भावः। एवमुत्तरोत्तरत्रापि द्रष्टव्यम्। **जीवाह**ङ्कारे जीवलिङ्गशरीरे। अपञ्चीकृतभूतानां द्वेधा परिणामः पञ्चीकृतपञ्चभूतात्मको लिङ्गशरीरात्मकश्च। तच्च लिङ्गशरीरं पुनर्द्विविधं समष्टिरूपं परम्, व्यष्टिरूपञ्चापरम्। तत्र समष्टिर्हिरण्यगर्भाहङ्कार इति व्यपदिश्यते, व्यष्टिश्च जीवाहङ्कार इति। तत्पुनर्द्विविधमपि लिङ्गशरीरमासंसारमनपायितया जीवोपाधित्वेन स्थितम्। तत्र स्थूलभूतलयदशायां जीवलिङ्गशरीरात्मकानामेवापञ्चीकृतभूतानां सद्भावात् तत्रैवाकाशस्य लयो दर्शित इति भावः। **तस्य** जीवाहङ्कारस्य जीवलिङ्गशरीरस्येति यावत्। **हिरण्य**गर्भाहङ्कारे हिरण्यगर्भलिङ्गशरीरे।

**गर्भाहङ्कारे, तस्य चाविद्यायामित्येवंरूप एव प्रलयः । तदुक्तं विष्णुपुराणे—**

**जगत्-प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।**
**तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥**
**वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ।**
**अव्यक्तं पुरुषे ब्रह्मन् निष्कले च प्रलीयते ॥**

**इति । एवंविध-प्रलय-कारणत्वं तत्पदार्थस्य ब्रह्मणस्तटस्थ-लक्षणम् ।**

**ननु वेदान्तैर्ब्रह्मणि जगत्कारणत्वेन प्रतिपाद्यमाने सति सप्रपञ्चं ब्रह्म**

समष्टेयकदेशभूतस्य जीवलिङ्गस्य लयदशायामपञ्चीकृतभूतानां हिरण्यगर्भलिङ्गशरीरात्मनावस्थानात् तत्रैव जीवलिङ्गशरीरस्य विलय इति भावः । **तस्य** हिरण्यगर्भाहङ्कारस्य । **अविद्या**यामिति । तस्यास्तदुपादानत्वादिति भावः । **एवंरूपः** सृष्टिक्रम-विपरीतक्रमः । **एवे**ति । एवकारेण सृष्टिक्रमव्यवच्छेदः ।

वस्तुतस्तु नित्यादिप्रलयत्रिकेषु सृष्टिक्रम-विपरीतक्रमेणैव लयः । आत्यन्तिकप्रलये तु कारणक्रमेणैव, तत्र कारणोच्छेदादेव कार्योच्छेदात् । न च कार्योच्छेदस्योत्तरभावित्वे कार्यस्य निराश्रयत्वापत्तिः, कार्योच्छेदस्य पूर्वभावित्वनिरासे तात्पर्यात् । तथा च कार्यं प्रथमतो नोच्छिद्यते किन्तु युगपदेवाज्ञान-तत्प्रयुक्तस्योच्छेद इति भावः ।

पृथिव्यादेरवादौ लये प्रमाणमाह—**तदुक्त**मिति । **अप्सु** प्रलीयते अबात्मनाऽवतिष्ठते, अब्भावप्राप्तस्याज्ञानैकदेशस्य पृथिवीरूपेण परिणामात् तां प्रत्यपामप्युपादानत्वादिति भावः । उत्तरत्राप्येवमेवार्थः । **तच्च** व्योम । **अव्यक्ते** अज्ञाने, जीवाहङ्कार-हिरण्यगर्भाहङ्कारयोर्लयेनेति शेषः । **अव्यक्तम्** अज्ञानम् । **निष्कले** शुद्धे । **पुरुषे** ब्रह्मणि । **प्रलीयते** शुद्धब्रह्मात्मनाऽवतिष्ठते, कल्पितनाशस्याधिष्ठान-रूपत्वादिति भावः । सपरिकरप्रलयनिरूपणस्य फलमाह—**एवंविधे**ति । प्रलयकारणत्वस्य ब्रह्मलक्षणत्वे तस्माल्लक्षणवाक्यान्निर्विशेषब्रह्मप्रतिपत्तिः, लक्षणवाक्यानां स्वरूपमात्रपरत्वात् । तस्माद् ब्रह्मावगमाय प्रलयनिरूपणमावश्यकमिति भावः । ननु जगत्कारणत्वादीनां ब्रह्मलक्षणत्वमुक्तम् । तच्चेद् वेदान्तप्रमाणप्रतिपाद्यं स्यात् , स्यात् पारमार्थिकम्, प्रमाणप्रतिपाद्यस्य पारमार्थिकत्वनियमात् , अबाधितार्थस्यैव पारमार्थिकत्वात् , अबाधितार्थविषयक-प्रमाकरणस्यैव प्रमाणत्वात् । तथा च ब्रह्मधर्माणां जगत्कारणत्वादीनां पारमार्थिकत्वात् सविशेषं ब्रह्मैव शास्त्रप्रतिपाद्यम् , न निर्विशेषमित्याशङ्कते—**नन्वि**ति । **वेदान्तैः** "यतो

**स्यात्, अन्यथा सृष्टिवाक्यानामप्रामाण्यापत्तेरिति चेन्न, न हि सृष्टि-वाक्यानां सृष्टौ तात्पर्यम्, किन्त्वद्वये ब्रह्मण्येव। तत्प्रतिपत्तौ कथं सृष्टेरुपयोगः ? इत्थम्। यदि सृष्टिमनुपन्यस्य प्रपञ्चस्य निषेधो ब्रह्मणि प्रतिपाद्येत,**

वा इमानि भूतानि जायन्ते" इत्याद्युपनिषद्वाक्यैः। **जगत्**कारणत्वेन जगदुपादानत्वेन **सप्रपञ्चं** सविशेषं, पारमार्थिकधर्मकमिति यावत्। **स्यादि**ति। वेदान्तानां प्रमाणत्वात् प्रमाणस्य चाबाधितार्थविषयक-प्रमाजनकत्वात्, अबाधितार्थस्य च पारमार्थिकत्वात् पारमार्थिकधर्मवदेव ब्रह्म शास्त्रैः प्रतिपाद्यम्, न निर्विशेषमिति भावः। ननु जगत्-कारणत्वादिकं शास्त्रप्रतिपाद्यमपि न पारमार्थिकम्, तस्याविद्याकल्पितत्वेनापारमार्थिक-त्वात्। तस्मान्निर्विशेषमेव ब्रह्म शास्त्रप्रतिपाद्यमिति चेत्, तत्राह—**अन्यथे**ति। ब्रह्म-धर्माणां जगत्कारणत्वादीनामपारमार्थिकत्वे इत्यर्थः। **सृष्टि**वाक्यानां "तस्माद् वा एतस्मादात्मन आकाशः सम्भूत" इत्याद्युपनिषद्वाक्यानाम्। **अप्रामा**ण्यापत्तेरिति। बाधितार्थविषयकज्ञान-जनकत्वादिति भावः। आशङ्कां निराकरोति—**ने**ति। **सृष्टौ** तात्पर्यमिति। न हि यस्माद् वाक्याद् यो योऽर्थः प्रतीयते, स सर्वोऽपि तस्यार्थः, विष-भोजनादीनामपि वाक्यार्थत्वप्रसङ्गात्। यस्तु तात्पर्यविषयीभूतोऽर्थः, स एव तस्यार्थः, "यत्परः शब्दः स एव तस्यार्थ" इति शास्त्रतात्पर्यविद्वचनात्। न च सृष्टौ तात्पर्यम्, अज्ञातस्यैव सप्रयोजनस्य शास्त्रतात्पर्य-विषयत्वात् तस्याश्च लोकावगतत्वेन निष्प्रयो-जनत्वात्। तथा च शास्त्राविषये सृष्ट्यादावप्रमाणमपि शास्त्रं स्वविषयेऽप्रमाणं भवितुं नार्हति। न हि चक्षू रसादावप्रमाणमपि रूपेऽप्यप्रमाणं भवितुमर्हति। तस्मात् सृष्टि-वाक्यानां श्रुतार्थे प्रामाण्याभावेऽपि तात्पर्यविषयीभूतार्थे प्रामाण्यसद्भावान्नाप्रामाण्य-मिति भावः। ननु सृष्ट्यादिवाक्यानां यदि सृष्टौ न तात्पर्यम्, क्व तर्हि तात्पर्यमित्यत आह—**किन्त्वि**ति। **अद्वये** अद्वितीये, द्वितीयाभावोपलक्षिते इति यावत्। नन्व-द्वितीय-ब्रह्म-प्रतिपत्तौ सृष्टेरुपयोगित्वे सिद्धे सृष्ट्यादिवाक्यानामद्वितीय-ब्रह्मतात्पर्यकत्वं भवेत्। तदेव तु नाद्यापि सिद्धम्। न चास्ति कश्चित् सिद्ध्युपाय इत्यभिप्रायवान्न-द्वयब्रह्मप्रतिपत्तौ सृष्टेरुपयोगित्वप्रकारं पृच्छति—**तत्प्रति**पत्ताविति। अद्वयब्रह्मप्रति-पत्तावित्यर्थः। तत्रोत्तरमाह—**इत्थमि**ति। इदं-प्रकारेणेत्यर्थः। तमेव प्रकारं दर्शयति —**यदी**ति। **अनुपन्यस्य** विहाय, ब्रह्मणि प्रपञ्चोत्पत्तिमप्रदर्श्येति यावत्। **प्रति-**पाद्येतेति। "नेह नानास्ति किञ्चने"त्यादिश्रुत्येति शेषः। ब्रह्मणो जगदुत्पत्तिमनभिधाय

**तदा ब्रह्मणि प्रतिषिद्धस्य प्रपञ्चस्य वायौ प्रतिषिद्धस्य रूपस्येव ब्रह्मणोऽन्यत्रावस्थानशङ्कायां न निर्विचिकित्समद्वितीयत्वं प्रतिपादितं स्यात्। ततः सृष्टिवाक्याद् ब्रह्मोपादेयत्व-ज्ञाने सत्युपादानं विना कार्यस्यान्यत्र सद्भावशंकायां निरस्तायां "नेति नेती"त्यादिना ब्रह्मण्यपि तस्यासत्त्वोपपादनेन प्रपञ्चस्य तुच्छत्वावगमे निरस्तनिखिलद्वैतविभ्रममखण्डं सच्चिदानन्दैकरसं ब्रह्म सिध्यतीति परम्परया सृष्टिवाक्यानामद्वितीये ब्रह्मण्येव तात्पर्यम्।**

तत्र क्रियमाणस्य प्रपञ्चनिषेधस्य फलमाह—**तदे**ति। **प्रपञ्चस्ये**ति। अन्यत्रावस्थान-शङ्कायामित्यग्रेतनेनास्यान्वयः। **अन्यत्रे**ति। प्रपञ्चस्य ब्रह्मान्यत्र ब्रह्मणि चासत्त्वेऽलीकत्वं स्यात्। निषेधश्चालीकप्रतियोगिको भवेत्। स चानभ्युपगत इति प्रतियोगिनः प्रपञ्चस्यान्यत्रावस्थानशंकेति भावः। तत्र दृष्टान्तमाह—**वायावि**ति। वायौ रूपं नास्तीति रूपस्य निषेधेऽन्यत्रास्तीति प्रतीयते, रूपस्य सत्यत्वात्, सत्यस्यैकत्र निषेधेऽन्यत्रावस्थाननियमात्। तद्वद् ब्रह्मणि प्रपञ्चस्य निषेधेऽन्यत्रास्तीति प्रतीयात्। तस्य च प्रपञ्चाधिकरणस्य प्रपञ्चवत् सत्यत्वाद् ब्रह्मणोऽद्वितीयत्वं न सिध्येत्, ब्रह्मातिरिक्तस्य सत्यस्य विद्यमानत्वादिति भावः। **निर्विचिकित्सम्** असन्दिग्धम्। ननु सृष्टिवाक्यैर्ब्रह्मणो जगदुत्पत्तावभिधीयमानायामपि कथं ब्रह्मणोऽद्वितीयत्वसिद्धिस्तत्राह—**तत** इति। सृष्ट्युपन्यासे इत्यर्थः। **ब्रह्मो**पादेयत्वज्ञान इति। सृष्टिवाक्याद् ब्रह्मैव जगदुपादानमित्याकारके ज्ञाने जाते इत्यर्थः। **अन्यत्र** ब्रह्मातिरिक्ते। **निरस्ता**यामिति। उपादेयस्योपादानाश्रितत्वनियमादिति भावः। **नेति** नेतीत्यादिनेति। आदिना "नेह नानास्ति किञ्चने"त्यादिश्रुतियुक्तिपरिग्रहः। **ब्रह्मण्य**पीति। ब्रह्मातिरिक्ते तत्सद्भावस्तावत् प्रागेव निराकृतः। साम्प्रतं निषेधश्रुत्यादिना ब्रह्मण्यपि तदसद्भाव उपपाद्यत इति भावः। **तस्य** प्रपञ्चस्य। **तुच्छत्वावगमे** मिथ्यात्वावबोधे, द्वैताभावोपलक्षित-ब्रह्मनिर्विकल्पकनिश्चयरूपस्याद्वैतावबोधस्य द्वैतमिथ्यात्वनिश्चयपूर्वकत्वाद् द्वैतमिथ्यात्वमेवादावुपपादनीयम्। तच्च स्वाधिकरणे स्वस्यासत्त्वोपपादनादिति भावः। **निरस्तेति**। निरस्तो निराकृतो निखिलद्वैतस्य प्रपञ्चस्य विभ्रमो यस्मिंस्तदित्यर्थः। **अखण्डं** निरंशम्। **सच्चिदा**नन्दैकरसमिति। सच्चिदानन्दः एको रसः सारो यत्रेति विग्रहः। सच्चिदानन्दरूपमित्यर्थः। **सिध्यती**ति। तथा चोपलक्षितबुद्धिर्हि विशिष्टबुद्धिपूर्विका, विशिष्टबोधानन्तरमुपलक्षितबोधोदयात्। अत एव द्वैताभावोपलक्षितबुद्धौ द्वैताभावविशिष्टबुद्धेः पूर्वभावित्वम्। द्वैताभावविशिष्ट-

**उपासनाप्रकरण-पठित-सगुण-ब्रह्म-वाक्यानामुपासनाविध्यपेक्षित-गुणारोप-**बुद्धेश्चाभावबुद्धित्वेन द्वैतबुद्धिपूर्वकत्वम्, अभावबुद्धेः प्रतियोगिप्रसक्तिपूर्वकत्वात्, द्वैतस्य प्रतियोगित्वात्, द्वैतवत्त्वबुद्धिं विना द्वैताभावप्रकारकबुद्धेरनुपपत्तेः। द्वैतवत्त्व-बुद्धिश्च सृष्टिवाक्यान्नान्यथेति सृष्टिवाक्याद् ब्रह्मणो द्वैतवत्त्वेऽवगते "नेह नानास्ति किञ्चने" त्यादिश्रुत्या द्वैतवति ब्रह्मणि द्वैतवत्त्वकालावच्छेदेन द्वैताभावबोधे जाते द्वैतमात्रस्य मिथ्यात्वमुपपन्नं भवति। उपपन्ने च द्वैतमिथ्यात्वे "एकमेवाद्वितीय"मित्यादिवाक्यं निष्प्रत्यूहं द्वैताभावोपलक्षितं ब्रह्मावगमयतीति सिद्धं ब्रह्मणोऽद्वितीयत्वमिति भावः। **परम्परये**ति। द्वैतबुद्धिद्वारेणान्नादिद्वारेण वेत्यर्थः। अयम्भावः—तैत्तिरीयभृगुवल्ल्यां वरुणः स्वपुत्रायान्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति ब्रह्मोपलब्धिद्वाराणि यतो वा इमानि भूतानीत्यादिना ब्रह्मलक्षणञ्चोक्तवान्। स च श्रुतपितृवाक्यो लब्धविज्ञानसाधनो भृगुः कुत्रेदं लक्षणं वर्त्तते परिपूर्णमित्येकाग्रेण मनसा पर्यालोच्याविशुद्धात्मतयाऽन्नादिषु यथोक्त-लक्षणयोगं मन्यमानोऽन्नं प्राणं मनो विज्ञानञ्च ब्रह्मेति विज्ञातवान्। ततः स तपोविशुद्धा-त्मान्नादिषु दोषं पश्यन् साकल्येन ब्रह्मलक्षणञ्च तत्रापश्यन् शनैः शनैरन्तरमनुप्रविश्यान्तर-तममानन्दं ब्रह्मेति विज्ञातवान्। तत्र यथा सृष्ट्यादिवाक्यानां यतो वा इमानीत्यादीनां सृष्टौ न तात्पर्यम्, ब्रह्मजिज्ञासवे इत्थं ब्रह्मेति वक्तव्यत्वात्, तदधिकप्रत्युक्तेरयुक्तत्वात्। किन्तु ब्रह्मणि, तस्यैव बुभुत्सितत्वात्। तथान्नादिवाक्यानामपि ब्रह्मण्येव तात्पर्यम्, ब्रह्मणो जिज्ञासितत्वात्, अन्नादीनाञ्चाब्रह्मत्वात्, अन्नादिब्रह्मोपलब्धौ प्रयोजनाभावाच्च। तस्मात् सृष्टिवाक्यमादावन्नादिकं जगत्कारणत्वेनोपस्थापयति। तत्र च दोषं दर्शयदन्तर-तमानन्दं जगत्कारणत्वेन ग्राहयति। तत्रापि दोषं दर्शयद् लक्षणया स्वरूपमात्रपरं भवतीति परम्परया सृष्टिवाक्यानां ब्रह्मण्येव तात्पर्यमिति भावः। नन्वेवमपि ब्रह्मणो नाद्वितीयत्व-सिद्धिः, उपासनाप्रकरणपरिपठितानामुपास्यगुणसमर्पकाणां सगुणब्रह्मवाक्यानां सगुण-ब्रह्मपरत्वात्, गुणानाञ्चोपासनाविध्यपेक्षितत्वेन वास्तवत्वात्, अन्यथोपसनानुपपत्तेरित्यत आह—**उपासने**ति। उद्गीथाद्युपासनेत्यर्थः। छान्दोग्ये हि—ॐमित्येतदक्षरमुपासीते-त्यादिवाक्यैरुद्गीथोपासनमुपक्रम्याऽथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्ण इत्यादिवाक्यैरुपास्यगुणानभिधायाथ समस्तस्य खलु साम्न उपासनमित्यादिनोपासनविशेषस्याभिधानात् सगुणब्रह्मवाक्यानां य एषोऽन्तरादित्ये इत्यादीनामुपासनाप्रकरणपठितत्वमिति भावः। **सगुण**ब्रह्मवाक्यानां

**मात्रपरत्वम्; न गुणपरत्वम्। निर्गुण-प्रकरण-पठितानां सगुणवाक्यानां तु निषेधवाक्यापेक्षित-निषेध्य-समर्पकत्वेन विनियोग इति न किञ्चिदपि वाक्यमद्वितीय-ब्रह्मप्रतिपादनेन विरुध्यते।**

ब्रह्मणः सगुणत्वप्रतिपादकानाम् "य एषोऽन्तरादित्ये" इत्येवमादीनाम्। सगुणवाक्यानां ब्रह्मपरत्वमुपपादयितुमादौ तेषां गुणपरत्वाभावे हेतुमाह—**उपासनाविधी**ति। उपासनविधौ सगुणोपासनविधावपेक्षितो यो गुणारोपस्तन्मात्रपरत्वादित्यर्थः। तथा चोपासनाविधिर्हि स्वविषयस्योपासनस्य सिद्धये उपास्यमात्रमपेक्षते, विषयनिरूप्यस्य हि चेतसः समानाकारप्रत्यय-प्रवाहरूपस्योपासनस्योपास्यमन्तरेणानुपपद्यमानत्वात्, उपास्यं विना किमुपासीतेति साध्याकाङ्क्षाया अनिवृत्तेः; न तु तस्योपास्यस्य तात्त्विकत्वम्, वाचं धेनुमुपासीतेत्यादिवत् तात्त्विकत्वाभावेऽप्युपासनोपपत्तेरिति भावः। **न गुण**परत्वम् न तात्त्विकगुणपरत्वम्, किन्तु निर्विशेषब्रह्मपरत्वम्। न च सगुणवाक्यानां तदारोपपरत्वमस्तु न ब्रह्मपरत्वमिति वाच्यम्, तेषामारादुपकारकत्वात्, अफलानां फलवदङ्गतयाऽन्तःकरणशुद्ध्यादि-द्वारा, सफलानां तु तेषां वैराग्यद्वारा ब्रह्मज्ञानोपकारकत्वात्। तथा च स्मृतिः—ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मण इति। भगवद्गीता च—योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये। इति। नन्वेवमपि ब्रह्मणोऽद्वितीयत्वं नैव सिध्यति, निर्गुणप्रकरणपठितैर्मूर्तञ्चैवामूर्तञ्चेत्यादिभिः सगुणवाक्यैस्तस्य सद्वितीयत्वबोधात्। न च तेषामपि गुणारोप-परत्वम्, ज्ञेयब्रह्मप्रकरणगतानां तेषामुपासनापरत्वाभावेनोपास्यापेक्षाविरहादित्याशङ्क्य तेषामप्यद्वैतब्रह्मपरत्वमुपपादयति—**निर्गुणे**ति। ज्ञेयब्रह्मप्रकरण-पठितानामित्यर्थः। **सगुण**वाक्यानां सगुणत्वबोधकवाक्यानां मूर्तञ्चैवामूर्तञ्चेत्यादीनाम्। बृहदारण्यके—नैवेह किञ्चनाग्र आसीदिति निर्विशेषं ब्रह्म प्रकृत्य मूर्तामूर्तवाक्यादीनां पाठात् तेषां निर्गुणप्रकरणपठितत्वम्, मूर्तत्वादिगुणबोधकत्वाच्च सगुणवाक्यत्वं बोध्यमिति भावः। **निषेध**वाक्येति। निषेधवाक्यैरपेक्षितो यो निषेध्यः प्रतियोगी तत्समर्पकत्वेनेत्यर्थः। **विनियोगः** उपयोगित्वम्। तथा चाथात आदेशो नेति नेतीत्यादिवाक्यैर्ब्रह्मणि पदार्थसामान्यनिषेधोऽवगम्यते। निषेधश्च प्रसक्तस्यैव भवति नाप्रसक्तस्येति ब्रह्मणि निषेध्यप्रसक्तिर्वक्तव्या। सा प्रसक्तिः सगुणवाक्यैरेव भवतीति सगुणवाक्यानां निषेधापेक्षित-निषेध्यबोधकतया निर्गुणब्रह्मज्ञानोपयोगित्वमिति भावः। नन्वेवमपि ब्रह्मणोऽद्वितीयत्वं नैवोपपन्नम्, कर्मकाण्डीयवाक्यैरवगतस्य स्वर्गादिलोकप्रपञ्चस्य श्रुत्या

**तदेवं स्वरूप-तटस्थ-लक्षण-लक्षितं तत्पदवाच्यमीश्वरचैतन्यं मायाप्रतिबिम्बितमिति केचित्। तेषामयमाशयः—जीव-परमेश्वर-साधारण-चैतन्यमात्रं बिम्बम्। तस्यैव बिम्बस्याविद्यात्मिकायां मायायां प्रतिबिम्बमीश्वरचैतन्यम्, अन्तःकरणेषु प्रतिबिम्बं जीवचैतन्यम्; "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इति श्रुतेः। एतन्मते जलाशयगत-शरावगत-सूर्यप्रति-**

सत्यत्वबोधनात्, "अपाम सोमममृता अभूम" "अक्षय्यं ह वै चातुर्मास्य-याजिनः सुकृतं भवती"त्यादिश्रुतेरित्यत आह—**इती**ति। अनेन प्रकारेणेत्यर्थः। **न किञ्चि**दपीति। न कर्मकाण्डीयवाक्यमपीत्यर्थः। **विरुध्यत** इति। "तद् यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिन्यायानुगृहीत-श्रुत्यन्तरैकवाक्यतया फलनित्यत्वश्रुतेः प्रलयकालस्थायित्वपरतया भिन्नविषयत्वान्न विरोधः। तथा च तेषामपि निषेध्य-समर्पकत्वेन ब्रह्मज्ञानोपयोगित्वमिति भावः।

लक्षणद्वयलक्षितस्येश्वरस्य स्वरूपे मतभेदानाह—**तदेवमि**ति। **मायाप्रतिबिम्बित**मिति। मायायां प्रतिबिम्बरूपमित्यर्थः। **केचित्** संक्षेपशारीरककाराः। अनेनास्य मतस्याऽस्वारस्यं सूचितम्। तद्बीजन्तु मूलकारेणैवाभिधास्यते। नन्वेवं जीवेश्वरयोर्भेदो न स्यात्, द्वयोरेवाविद्याप्रतिबिम्बत्वादित्याशङ्क्य जीवेश्वरयोर्भेदं निरूपयितुमाह—**तेषामि**ति। प्रतिबिम्बस्य बिम्बनिरूप्यत्वात् तमेवादौ निरूपयति—**जीवे**ति। **चैतन्य**मात्रमिति। मात्रपदेन बिम्बत्वादिविशिष्टचैतन्यव्यवच्छेदः। तेन निरुपाधिकचैतन्यस्य बिम्बत्वं दर्शितम्। यद्यप्यनादेर्मायायास्तत्सम्बन्धस्य च विद्यमानत्वान्निरुपाधिकचैतन्यं दुर्लभम्, तथापि तत्त्वज्ञदृष्ट्या तत् सुलभम्, तदा निखिलोपाधेर्निरासादिति भावः। **तस्य** निरुपाधिकचैतन्यस्य। **बिम्बस्ये**ति। तस्यैवाविद्यायां प्रतिबिम्बोदयाद् बिम्बत्वेनाभिधानमिति भावः। जीवोपाधिं दर्शयति—**अन्त**ःकरणेष्विति। तथा चान्तःकरणस्य जीवोपाधेः प्रतिशरीरं भेदाद् जीवभेद इति भावः। जीवेश्वरयोस्तादृग्रूपत्वे प्रमाणमाह—**कार्यो**पाधिरिति। कार्यमन्तःकरणमुपाधिर्यस्येति विग्रहः। **कारणो**पाधिरिति। कारणमज्ञानमुपाधिर्यस्येति विग्रहः। "न च जीवेशावाभासेन करोति माया चाविद्या चे"ति श्रुतिविरोधः, तत्र जीवस्य कारणोपाधिकत्वप्रतीतेरिति वाच्यम्, तत्र मायापदस्य मायापरिणामान्तःकरणपरत्वात्, अन्यथा द्वयोरेव विरोधादप्रामाण्यप्रसङ्गात्। दृष्टान्तेन जीवेशयोर्भेदं दर्शयति—**एतन्मत** इति। संक्षेपशारीरक-कृन्मते

**बिम्बयोरिव जीवपरमेश्वरयोर्भेदः। अविद्यात्मकोपाधेर्व्यापकतया तदुपाधिकेश्वरस्यापि व्यापकत्वम्, अन्तःकरणस्य परिच्छिन्नतया तदुपाधिकजीवस्यापि परिच्छिन्नत्वम्।**

**एतन्मतेऽविद्याकृत-दोषा जीव इव परमेश्वरेऽपि स्युः, उपाधेः प्रति-**

इत्यर्थः। **जलाशये**ति। जलाशयस्थ-जलगतेत्यर्थः। **शरावे**ति। शारवस्थ-जलगतेत्यर्थः। **सूर्य**प्रतिबिम्बयोरिवेति। सूर्यस्य स्वरूपतो भेदाभावेऽप्युपाध्योर्भेदाद् यथा कल्पितभेदस्तथेत्यर्थः। **भेद** इति। कल्पितभेद इत्यर्थः। तथा च निरुपाधिकचैतन्यस्य स्वरूपतो भेदाभावेऽपि जीवेश्वरयोः प्रतिबिम्बत्वेनाविशेषेऽपि प्रतिबिम्बोपाध्योरज्ञानान्तःकरणयोर्भेदात् कल्पितभेद इति भावः। ननु जीवेश्वरयोः प्रतिबिम्बत्वेऽव्यापित्वम्, प्रतिबिम्बस्य स्वोपाध्यपेक्षया न्यूनपरिमाणत्वात्, सूर्यप्रतिबिम्बादिषु तथादर्शनादित्यत आह—**अविद्यात्मके**ति। **तदुपाधिके**ति। अविद्योपाधिकेत्यर्थः। **व्यापकत्वमि**ति। तथा च परिच्छिन्न-जड़प्रतिबिम्बस्य स्वोपाध्यपेक्षया न्यूनपरिमाणत्वेप्यपरिच्छिन्नचेतनप्रतिबिम्बस्य स्वोपाध्यपेक्षया न न्यूनपरिमाणत्वम्, अन्यथा चेतन-प्रतिबिम्बस्य स्वोपाध्यपेक्षया न्यूनपरिमाणत्वेऽन्तःकरणव्यापितया जीवोपलब्धिर्न स्यात्। तथा चेश्वरोपाधेरविद्याया व्यापकत्वात् तत्र व्यापक-चेतन-प्रतिबिम्बस्य व्यापकत्वे सिद्धमीश्वरस्य व्यापकत्वमिति भावः। **परिच्छिन्नतया** अव्यापकतया। **तदुपा**धिकेति। अन्तःकरणोपाधिकेत्यर्थः। **परिच्छिन्नत्व**मिति। प्रतिबिम्बस्यान्तःकरणव्यापित्वेऽप्यन्तःकरणस्याव्यापकतया तत्र प्रतिबिम्बस्य जीवस्य न सर्वव्यापकत्वमिति भावः।

इदानीं पूर्वमतास्वरसबीजं प्रदश्र्य मतान्तरं दर्शयति—**एतन्मते** इति। **अविद्या**कृतदोषाः असर्वज्ञत्व-राग-द्वेषादयः। **जीव** इवेति। अन्तःकरणोपाधिकस्य जीवस्य चेतनत्वाविशेषेऽपि यथान्तःकरणोपाधिदोषाणां कर्त्तृत्वभोक्तृत्वादीनां जीवात्मनि भानम्। तथेश्वरेऽप्यविद्योपाधिदोषाणामसर्वज्ञत्वादीनां भानं स्यादिति भावः। ननूपाधिदोषाणां कथमुपधेये भानमतिप्रसङ्गादित्यत आह—**उपाधे**रिति। **प्रतिबि**म्बपक्षपातित्वादिति। प्रतिबिम्बे एवातिशयेन कार्यकरत्वादित्यर्थः, प्रतिबिम्बे एव कार्यविशेषजनकत्वादिति यावत्। यथा सर्वाभिमतदाताऽपि भगवान् भक्तान् प्रत्यतिशयेन तथात्वात् तत्पक्षपातीत्युच्यते। तथा बिम्बप्रतिबिम्बयोः कार्यकरोऽप्युपाधिरतिशयेन प्रतिबिम्बे एव कार्यकरत्वात् तत्पक्षपातीत्युच्यते। यथा मलिनो दर्पणः स्वमालिन्यं स्वान्तर्गतत्वञ्च प्रति-

**बिम्ब-पक्षपातित्वादित्यस्वरसाद् बिम्बात्मकमीश्वर-चैतन्यमित्यपरे। तेषामयमाशयः—एकमेव चैतन्यं बिम्बत्वाक्रान्तमीश्वर-चैतन्यम्, प्रतिबिम्बत्वाक्रान्तं जीवचैतन्यम्। बिम्बप्रतिबिम्ब-कल्पनोपाधिश्चैक-जीववादेऽविद्या, अनेकजीववादेऽन्तःकरणान्येव। अविद्यान्तःकरणोपाधिप्रयुक्तो जीवपरभेदः।**

बिम्बे एव जनयति, तद्वदविद्यापि स्वावरणकृत्यं प्रतिबिम्बभूते परमात्मन्यपि कुर्यादिति भावः। **अस्वरसात्** असामञ्जस्यात्। **बिम्बात्मकमि**ति। अविद्यायां चैतन्यप्रतिबिम्बस्य यद् बिम्बभूतं चैतन्यम्, तदेवेश्वरचैतन्यमित्यर्थः। एतेन प्रतिबिम्बचैतन्यं जीवचैतन्यमिति ध्वनितम्। **अपरे** विवरणकाराः। ननु बिम्बचैतन्यस्येश्वरत्वे प्रतिबिम्बचैतन्यस्य च जीवत्वे बिम्बप्रतिबिम्बयोरभेदाद् जीवेश्वरयोर्भेदो न स्यादित्यत आह **—तेषामि**ति। विवरणकाराणामित्यर्थः। **बिम्बत्वाक्रान्तं** बिम्बत्वविशिष्टम्। नन्वेकस्यैव चैतन्यस्य बिम्बत्वं प्रतिबिम्बत्वञ्चायुक्तम्, विरुद्धयोस्तयोरेकत्रावस्थानायोगादित्यत आह—**बिम्ब**प्रतिबिम्बेति। यद्यप्येकस्य विरुद्धधर्माश्रयत्वं न युज्यते, विरुद्ध-धर्माश्रयत्वस्य नानात्वव्याप्यत्वात्, एकस्य नानात्वाभावात्। तथाप्युपाधिनाऽभिन्नोऽपि भिन्न इवावभासमानो बिम्बप्रतिबिम्बभावमधिगच्छति, "उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मे"ति श्रुतेः। तत्त्वतस्तु न बिम्बो नापि प्रतिबिम्बः। तथा चौपाधिको बिम्बप्रतिबिम्बभावो न स्वाभाविक इति भावः। न च प्रतिबिम्बस्यौपाधिकत्वेऽपि बिम्बस्य नौपाधिकत्वम्, निरुपाधिकस्य बिम्बत्वादिति वाच्यम्, उपाधिमन्तरेण बिम्बप्रतिबिम्ब-व्यवहारानवतारात्। ननु बिम्बप्रतिबिम्बभावस्यौपाधिकत्वं न युक्तम्, उपाध्यभावात्, ब्रह्मातिरिक्तस्य कस्यचिद् द्वितीयस्यानङ्गीकारादित्यत आह—**एकजीव**वादे इति। **अविद्ये**ति। तथा च वस्तुभूतस्य कस्यचिद् द्वितीयस्याभावेऽप्यवस्तुभूताया अनादेरविद्याया विद्यमानत्वात् तस्यैवोपाधित्वम्। तत्राविद्याप्रतिबिम्बो जीवः, बिम्बस्त्वीश्वरः। प्रतिबिम्बोपाधेरविद्याया एकत्वादेको जीव इति भावः। ननु जीवेश्वरयोरेकत्वे प्रतिबिम्बस्यैव जीवत्वं न बिम्बस्येति कथम्, वैपरीत्यस्यापि सम्भवादिति चेन्न, उपाधेः प्रतिबिम्बपक्षपातित्वात्। अविद्या हि प्रतिबिम्बे एवासर्वज्ञत्वादिव्यवहारं जनयति न बिम्बे। असर्वज्ञश्च जीवो नेशः। अतः प्रतिबिम्बस्यैव जीवत्वमुक्तं न बिम्बस्येति बोध्यम्। अनेकजीववादाभिमतमुपाधिमाह—**अन्तः**करणान्येवेति। एवकारो भिन्नक्रमः। यद्यप्यनेकजीववादेऽन्तःकरण-तत्संस्कारावच्छिन्नाज्ञानस्यैवोपाधित्वं विवरण-

**उपाधिकृत-दोषाश्च प्रतिबिम्बे जीवे एव वर्त्तन्ते, न तु बिम्बे परमेश्वरे, उपाधेः प्रतिबिम्ब-पक्षपातित्वात्। एतन्मते च गगनसूर्यस्य जलादौ भासमान-प्रतिबिम्ब-सूर्यस्येव जीवपरयोर्भेदः।**

**ननु ग्रीवास्थ-मुखस्य-दर्पणप्रदेश इव बिम्बचैतन्यस्य परमेश्वरस्य जीव-प्रदेशेऽभावात् तस्य सर्वान्तर्यामित्वं न स्यादिति चेन्न, साभ्र-नक्षत्रस्याकाशस्य जलादौ प्रतिबिम्बितत्वेऽपि बिम्बभूत-महाकाशस्यापि जलादिप्रदेशसम्बन्ध-**

कृतामभिमतं नान्तःकरणमात्रस्य। तथाप्यन्तःकरणावच्छिन्नस्यैव संसारित्वदर्शनादन्तः-करणस्याप्युपाधित्वावश्यकत्वादत्रान्तःकरणस्योपाधित्वमुक्तं वेदितव्यमिति भावः। जीवे-श्वरयोरभेदेऽपि भेदव्यवहारमुपपादयति—**अविद्ये**ति। एकजीववादेऽविद्योपाधिको जीवेशभेदः, प्रतिबिम्बस्य जीवत्वात्, बिम्बस्येशत्वात्। नानाजीववादे त्वन्तःकरण-तत्-संस्कारावच्छिन्नाज्ञानोपाधिकः, अन्तःकरण-तत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितचैतन्यस्य जीवत्वाद् बिम्बस्य चेशत्वादिति भावः। प्रतिबिम्बेश्वरवादोक्तदोषस्यात्रासत्त्वमुपपादयति—**उपाधिकृ**तेति। अविद्योपाधिप्रयुक्ता दोषा अन्तःकरणोपाधिप्रयुक्ता दोषाश्चेत्यर्थः। जीवेशभेदं दृष्टान्तेन विशदीकृत्य प्रतिपादयति—**एतन्मते** इति। विवरणकृन्मते इत्यर्थः। **गगन**सुर्यस्येति। यथा गगनसूर्य-प्रतिबिम्बसूर्ययोः पारमार्थिकभेदाभावे-ऽप्यौपाधिकः कल्पितो भेदस्तथा जीवेशयोरपीति भावः।

नन्वीश्वरचैतन्यस्य बिम्बत्वे तस्य जीवाद् बहिर्भावेनैवावस्थानं वाच्यम्, बहिर्विद्य-मानस्यैव बिम्बत्वनियमात्, ग्रीवास्थमुखादिषु तथैव दर्शनात्। तथा च तस्य जीवान्त-र्यामित्वं न स्यादित्याशङ्कते—**नन्वि**ति। **दर्पण**प्रदेश इवेति। दर्पणप्रदेशेऽभावादिवे-त्यर्थः। यथा ग्रीवास्थमुखस्य दर्पणानन्तर्गतस्यैव बिम्बत्वम्, तथेश्वरस्यापि जीवाद् बहि-र्भूतस्य बिम्बत्वमिति भावः। ननु बहिर्विद्यमानस्य बिम्बत्वे का हानिरिति चेत् तत्राह—**बिम्ब**चैतन्यस्येति। **जीव**प्रदेशे जीवोपाधावन्तःकरणे। **तस्य** ईश्वरस्य। **सर्वान्त**र्यामित्वं "य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतान्यन्तरो यमयती"त्यादिश्रुत्युक्तं सर्वनियन्तृ-त्वम्। एतच्च सर्वोपादानत्वस्याप्युपलक्षणम्। ईश्वरस्य बिम्बत्वे सर्वोपादानत्वं न स्यात्, बहिर्विद्यमानस्योपादानत्वायोगादिति भावः। न च व्यवहितराजादेः प्रजानियन्तृत्ववद् व्यवहितेश्वरस्य जीवनियन्तृत्वमिति वाच्यम्, "यो विज्ञाने तिष्ठन्नि" त्यादिश्रुत्या तस्य जीवान्तर्यामिभावेन तदन्तरावस्थानश्रवणात्। आशङ्कां परिहरति—**नेति**। **आकाशस्य**

**दर्शनेन परिच्छिन्न-बिम्बस्य प्रतिबिम्बदेशासम्बन्धेऽप्यपरिच्छिन्न-ब्रह्मबिम्बस्य प्रतिबिम्ब-प्रदेश-सम्बन्धाविरोधात्। न च नीरूपस्य ब्रह्मणो न प्रतिबिम्ब-सम्भवः, रूपवत एव तथात्व-दर्शनादिति वाच्यम्, नीरूपस्यापि रूपस्य प्रतिबिम्बदर्शनात्। न च नीरूपस्य द्रव्यस्य प्रतिबिम्बाभाव-नियमः, आत्मनो द्रव्यत्वाभावस्योक्तत्वात्, "एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्"॥ "यथा ह्ययं ज्योतिरात्मा विवस्वा-**

महाकाशस्य। **प्रतिबि**म्बितत्वेऽपीति। अपिकारेण महाकाशस्य बिम्बत्वं प्रतिबिम्बदेशाद् बहिःसत्त्वञ्च दर्शितम्। **जला**दिप्रदेश-सम्बन्धदर्शनेन प्रतिबिम्बोपाध्यन्तर्भाव-ज्ञानेन, अन्यथाकाशस्य त्वदभिमतं विभुत्वं न स्यादिति भावः। **परि**च्छिन्नबिम्बस्य अव्यापि-बिम्बस्य मुखादेः। **प्रतिबि**म्बदेशासम्बन्धेऽपि दर्पणादिदेशगतत्वाभावेऽपि, ग्रीवादेश-गतत्वेनैवानुभूयमानत्वादिति भावः। **अपरि**च्छिन्नेति। सर्वव्यापीत्यर्थः। **प्रतिबिम्ब-**प्रदेशसम्बन्धेति। अन्तःकरणगतत्वाविरोधादित्यर्थः। अव्यापिबिम्बस्य प्रतिबिम्बदेश-गतत्वाङ्गीकारे यथा प्रत्यक्षादिप्रमाणविरोधः, व्यापकबिम्बस्य प्रतिबिम्बदेशगतत्वाङ्गी-कारे न तथा प्रमाण-विरोधः, तस्य प्रतिबिम्बदेशगतत्वे श्रुत्यादेरेव प्रमाणत्वात्। तथा च श्रुतिः—"य आत्मनि तिष्ठन्नात्मानमन्तरो यमयती"तीति भावः। ननु चित्प्रतिबिम्बस्य जीवत्वं न युक्तम्, चैतन्यस्य प्रतिबिम्बासम्भवात्, रूपवत एव प्रतिबिम्बनियमात्, चैतन्यस्य रूपाभावादित्यवच्छेदवादिनः शङ्कां प्रदर्श्य परिहरति—**न चे**ति। **तथा-**त्वेति। प्रतिबिम्बेत्यर्थः। परिहारहेतुमाह—**नीरूपस्यापी**ति। ननु रूपवत एव प्रतिबिम्ब इत्ययं न नियमः, किन्तु रूपवद्-द्रव्यस्यैव प्रतिबिम्ब इत्ययं नियमः। ब्रह्म च द्रव्यमपि न रूपवत्। तस्मात् तस्य प्रतिबिम्बो न युक्त इत्याशङ्कां परिहरति—**न चे**ति। परिहारहेतुमाह—**आत्मन** इति। तथा च तथाविधनियमाभ्युपगमेऽपि न काचिद्धानिः, ब्रह्मणोऽद्रव्यत्वात्। तस्य चाद्रव्यत्वं प्रागेवोक्तमिति भावः। नन्व-द्रव्यत्वेऽपि ब्रह्मण प्रतिबिम्बकल्पना नैव युक्ता, प्रतिबिम्बाभावानुमानस्य जागरूकत्वा-दित्यत आह—**एक एवे**ति। यथा चन्द्र एकोऽपि जलोपाधिभेदेन बहुधा भिन्नरूपो दृश्यते, तद्वत् सर्वभूतव्यवस्थितः परमात्मा एक एव। स च निरुपाधिकतयैकरूपोऽप्यन्तः-करणोपाधिकतया भिन्नरूपः प्रतीयते इति स्मृतिवाक्यार्थः। **यथा ह्ययमि**ति। यथा-ऽयं ज्योतिरात्मा प्रकाशस्वरूप एको विवस्वान् सूर्यो भिन्ना अपो जलानि अनुगच्छन्

**नपो भिन्ना बहुधैकोऽनुगच्छन्नित्यादि-वाक्येन ब्रह्मप्रतिबिम्बाभावानुमानस्य बाधितत्वाच्च। तदेवं तत्पदार्थो निरूपितः।**

**इदानीं त्वंपदार्थो निरूप्यते। एकजीववादेऽविद्या-प्रतिबिम्बो जीवः। अनेकजीववादे त्वन्तःकरण-प्रतिबिम्बः। स च जाग्रत्-स्वप्न-सुषुप्तिरूपावस्था-त्रयवान्। तत्र जाग्रद्दशा नामेन्द्रियजन्य-ज्ञानावस्था, अवस्थान्तरे इन्द्रिया-**

भिन्नेषु जलेषु प्रतिबिम्बितः सन् बहुधा भवतीति श्रुतिवाक्यार्थः। **इत्यादी**त्यादि-पदेन—"रूपं रूपं प्रतिरूपो बभूव" "तदस्य रूपं प्रति चक्षणाय" "मायाभासेन जीवेशौ करोती"त्यादि-श्रुतिवाक्यपरिग्रहः। **ब्रह्म**प्रतिबिम्बानुमानस्येति। ब्रह्म न प्रतिबिम्बते अचाक्षुषत्वाद् गन्धवदित्याकारकस्य ब्रह्मप्रतिबिम्बाभावानुमानस्येत्यर्थः। तत्पदार्थ-निरूपणमुपसंहरति—**तदेव**मिति। **तत्पदार्थ** इति। तत्त्वमसीति वाक्यघटक-तत्पदस्य शक्यार्थो लक्ष्यार्थश्चेत्यर्थः।

इदानीं क्रमप्राप्तं त्वंपदार्थं निरूपयितुं प्रतिजानीते—**इदानीमि**ति। तत्पदार्थ-निरूपणानन्तरमित्यर्थः। एकजीववादे जीवस्वरूपमाह—**एक**जीवेति। उपाधिभूताया अविद्याया एकत्वाद् जीवस्यैकत्वमिति भावः। **अविद्ये**ति। अविद्यायां चित्प्रतिबिम्ब इत्यर्थः। जीवनानात्वमतेन तत्स्वरूपमाह—**अनेके**ति। **अन्तः**करणे चित्प्रतिबिम्ब इत्यर्थः। जीवोपाधेरन्तःकरणस्य नानात्वाद् जीवस्यापि नानात्वमिति भावः। ननु चित्प्रति-बिम्बस्य जीवत्वे जीवो निर्धर्मकः स्यात्, बिम्बस्य चैतन्यस्य निर्धमकत्वादित्यत आह—**स चे**ति। जीवश्चेत्यर्थः। तथा च स्वरूपतो जीवस्य निर्धर्मकत्वेऽप्युपाधेः प्रतिबिम्ब-पक्षपातित्वाद् जीवोपाधीनां जीवे एव स्वधर्माधानादौपाधिकधर्मवत्त्वं चित्प्रतिबिम्बस्य जीवस्य नानुपपन्नमिति भावः। **अवस्था**त्रयेति। यद्यपि तुरीयावस्थापि श्रुतिसिद्धा, तथापि तदवस्थापन्नस्य जीवत्वापायात् तदवस्था न जीवावस्था। अतो जाग्रदादि-त्रयाणामेव जीवावस्थात्वं दर्शितम्।

वस्तुतस्तु सुषुप्तिवत् तुरीयस्यापि जीवावस्थात्वम्, श्रुतौ तथैवोक्तत्वात्। तथा च सुबालोपनिषत्—जागरितं स्वप्नं सुषुप्तं तुरीयञ्चेति। न च तदा जीवत्वापायात् कथं तस्या जीवावस्थात्वमिति वाच्यम्, जीवत्वापायस्य तुरीयावस्थोत्तरभावित्वात्। अन्यथा सुषुप्ता-वपि जीवत्वापायात् तस्या जीवावस्थात्वं न स्यात्। तुरीयावस्था नाम तत्त्वज्ञानावस्था।

जाग्रदवस्थां निरूपयितुमाह—**तत्रे**ति। तास्ववस्थासु मध्ये इत्यर्थः। **इन्द्रिय-**

**भावान्नातिव्याप्तिः। इन्द्रियजन्य-ज्ञानं चान्तःकरण-वृत्तिः, स्वरूपज्ञानस्यानादित्वात्।**

**सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम्। तथा हि—अविद्योपहित-चैतन्यस्य जीवत्व-पक्षे घटाद्यधिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदा घटादि-भान-प्रसक्तौ घटाद्यवच्छिन्न-चैतन्यावरकमज्ञानं मूलाविद्या-परतन्त्रमवस्थापदवाच्यमभ्युपगन्तव्यम्। एवं सति सर्वदा न घटादेर्भान-**

जन्येति। इन्द्रियजन्य-ज्ञानयोग्यः कालो जाग्रदित्यर्थः। तेन जाग्रति सुखाद्यनुभव-काले औदासीन्यकाले चेन्द्रियजन्यज्ञानसम्बन्धाभावेऽपि नाव्याप्तिः, तदेन्द्रियजन्यज्ञाना-भावेऽपि तद्योग्यतासत्त्वादिति भावः। इन्द्रियपदस्य व्यावर्त्यमाह—**अवस्थान्तरे** इति। स्वप्नसुषुप्त्योरित्यर्थः। **इन्द्रिया**भावात् इन्द्रियव्यापाराभावात्, तेन स्वप्ने सत्स्वपीन्द्रियेषु तद्व्यापाराभावान्नातिव्याप्तिः। नन्विदं लक्षणं नैव युक्तम्, इन्द्रियजन्य-ज्ञानाभावात्, ज्ञानस्य चैतन्यात्मकतया नित्यत्वादित्यत आह—**इन्द्रिय**जन्यज्ञानञ्चेति। तथा चेन्द्रियजन्यज्ञानाभावेऽपीन्द्रियजन्यान्तःकरणवृत्तेः सत्त्वान्नानुपपन्नं लक्षणमिति भावः। ननु मुख्यज्ञानमेव परिगृह्यतां किममुख्यज्ञान-ग्रहणेनेत्यत आह—**स्वरूप**ज्ञानस्येति। चैतन्यरूपस्य मुख्यज्ञानस्येत्यर्थः। **अनादित्वात्** अजन्यत्वात्।

नन्वियमन्तःकरणवृत्तिर्निरर्थका, इन्द्रियद्वारेणैव जीवस्य विषयावभास-सम्भवादि-त्याशङ्क्य वृत्तेरुपयोगं दर्शयितुं तत्र मतभेदानाह—**सा चे**ति। **आवरणे**ति। आवरण-स्याभिभवो भङ्ग एवार्थः प्रयोजनं यस्याः सेत्यर्थः। **एकं** मतमिति। अनेन मतान्तर-सत्त्वं सूचितमिति भावः। वृत्तेरावरणभङ्गार्थत्वमुपपादयति—**तथा ही**ति। **अविद्यो**-पहितचैतन्यस्येति। अविद्यायां प्रतिबिम्बितचैतन्यस्येत्यर्थः। **जीवत्व**पक्षे जीवत्वमते। **जीव**रूपतया जीवाभिन्नतया, तदुपाध्योर्घटाविद्ययोश्चैतन्यरूपैकदेशस्थयोर्भिन्नदेशत्वा-भावादिति भावः। **जीवस्य** जीवसाक्षिणः। **सर्वदा** विषयेन्द्रियसन्निकर्षाभावदशाया-मपि। **घटादिभाने**ति। भासकस्यानावृत-जीवचैतन्यस्य घटादिना साक्षात् सम्बन्ध-सद्भावात् भासकस्य साक्षात् स्वसम्बद्धभासकत्वनियमादिति भावः। **मूला**विद्यापर-तन्त्रं मूलाविद्यातादात्म्यापन्नम्। **अवस्था**पदवाच्यमिति। मूलाज्ञानेन घटाद्यधिष्ठान-चैतन्यावरणाभ्युपगमे संसारदशायां घटादिभानं न स्यात्, तस्य मूलाज्ञानावरणस्य ब्रह्मज्ञानमात्रबाध्यत्वात् संसारदशायां ब्रह्मज्ञानाभावेन तदावरणस्यानाशात्। अतोऽ-

**प्रसङ्गः, अनावृत-चैतन्यस्यैव भानप्रयोजकत्वात्। तस्य चावरणस्य सदातनत्वे कदाचिदपि घटादिभानं न स्यादिति तद्भंगे वक्तव्ये तद्भंगजनकं न चैतन्यमात्रम्, तद्भासकस्य तदनिवर्त्तकत्वात्। नापि वृत्त्युपहितं चैतन्यम्, परोक्षस्थलेऽपि तन्निवृत्त्यापत्तेरिति परोक्षव्यावृत्त-वृत्तिविशेषस्य तदुप-**

वस्थाज्ञानस्यैव ब्रह्मज्ञानेतर-ज्ञानबाध्यस्य चैतन्यावरकत्वमभ्युपगन्तव्यमिति भावः। नन्वस्त्वेकमेव मूलाज्ञानम्, किमनेनावस्थाज्ञानेनेत्यत आह—**एवं** सतीति। घटाद्यधिष्ठानचैतन्यावरकस्यावस्थाज्ञानस्याभ्युपगमे सति। **भान**प्रसङ्ग इति। अज्ञानेनावृतत्वादिति भावः। तत्र हेतुमाह—**अनावृ**तेति। आवरणस्य प्रकाशप्रतिबन्धकत्वादनावृतचैतन्यस्य प्रकाशकत्वमिति भावः। **कदा**चिदपि घटेन्द्रियसन्निकर्षदशायामपि। **न स्यादि**ति। प्रकाशप्रतिबन्धकस्यावरणस्य विद्यमानत्वादिति भावः। **इति**र्हेतौ। **तद्भंगे** आवरणनाशे। **वक्तव्ये** अवश्याभ्युपेये। नन्वयमावरणभङ्गश्चैतन्येनैवास्तु, अज्ञानरूपावरणस्य चैतन्यैकनाश्यत्वादित्यत आह—**तद्भङ्गजनकमि**ति। तन्नाशकमित्यर्थः। **चैतन्यमात्रम्** साक्षिचैतन्यम्। तत्र हेतुमाह—**तद्**भासकस्येति। आवरणसाधकस्येत्यर्थः। **तद**निवर्त्तकत्वात् आवरणानिवर्त्तकत्वात्। यो हि यत्-साधकः, स न तन्निवर्त्तकः, तन्निवर्त्तकत्वे तत्सिद्धिर्न स्यात्। अत एवोक्तमद्वैतसिद्धावविद्याश्रयनिरूपणे—अज्ञानविरोधिज्ञानं हि न चैतन्यमात्रं किन्तु वृत्तिप्रतिबिम्बितम्। तच्च नाविद्याश्रयः। यच्चाविद्याश्रयस्तच्च नाज्ञानविरोधीतीति भावः। ननु चैतन्यस्याज्ञानसाधकत्वं न युक्तम्, अज्ञानावृतत्वात्, अनावृतस्यैव भानप्रयोजकत्वोक्तेरिति चेन्न राहुवदविद्यायाः स्वावृतचैतन्य-प्रकाश्यत्वात्। अत एवोक्तम्—राहुवत् स्वावृतचैतन्य-प्रकाश्याऽविद्येति।

वस्तुतस्त्वविद्या न स्वावृतचित्प्रकाश्या किन्तु साक्षिचैतन्यभास्या। तथा चोक्तमद्वैतसिद्धौ—सा चाविद्या साक्षिवेद्या न शुद्धचित्प्रकाश्येति। साक्षी च नाज्ञानावृतः, अविद्यान्तःकरण-तद्धर्मादीनां संशयाद्यगोचरत्वात् तत्र तत्राज्ञानानभ्युपगमात्।

ननु शुद्धस्य तदनाशकत्वेऽपि वृत्त्युपहितं तन्नाशकं स्यात्, तस्य तदसाधकत्वादित्यत आह—**नापी**ति। **वृत्त्यु**पहितं परोक्षापरोक्षसाधारण-वृत्त्युपहितं चैतन्यम्। **परोक्ष**-स्थलेऽपि विषयस्मृत्यादिकालेऽपि। तदानीमप्यविद्यावृत्त्युपहित-चैतन्यस्यान्तःकरण-वृत्त्युपहितचैतन्यस्य वा सत्त्वादिति भावः। **तन्निवृत्त्या**पत्तेरिति। आवरणनिवृत्त्यापत्तेरित्यर्थः। तथा च परोक्षवृत्त्यावरणनाशाभ्युपगमे वृत्त्युदयेनैवावरणनाशाज् जीवस्य सर्वदैव

**हित-चैतन्यस्य वाऽवरण-भङ्ग-जनकत्वमित्यावरणाभिभवार्था वृत्तिरुच्यते।**

**सम्बन्धार्था वृत्तिरित्यपरं मतम्। तत्राप्यविद्योपाधिकोऽपरिच्छिन्नो जीवः। स च घटादि-प्रदेशे विद्यमानोऽपि घटाद्याकारापरोक्षवृत्तिविरह-**

विषयभानं स्यात्। न च तथा। तस्मात् तत्रावरणसत्त्वमभ्युपगन्तव्यम्। एवञ्च परोक्षवृत्त्यावरणयोः साहित्यात् तद्वृत्त्युपहितचैतन्यस्य तदनाशकत्वं स्वीकार्यमिति भावः।

वस्तुतस्तु परोक्षवृत्त्याऽभानापादकाज्ञानस्यानाशेऽप्यसत्त्वापादकाज्ञानस्य नाशोऽस्त्येव। अत एव जानाम्यहं पर्वते वह्निरिति, स तु कीदृगिति मे न भातीत्यादिव्यवहारोऽप्युपपद्यते। तथा चोक्तमद्वैतसिद्धौ प्रतिकर्मव्यवस्थायाम्—विषयावच्छिन्नाभानावरणतत्कार्यसद्भावेऽपि प्रमात्रवच्छिन्नासत्त्वावरणनिवृत्त्याऽनुमानादौ व्यवहारोपपत्तिरिति।

**इति**हेतौ। कस्तर्हि तन्नाशक इत्यत आह—**परोक्ष**व्यावृत्तेति। अपरोक्षेत्यर्थः। ननु वृत्तिविशेषस्याज्ञाननाशकत्वं न युक्तम्, तस्य जड़त्वात्, ज्ञानस्यवाज्ञाननाशकत्वादित्यस्वरसादाह—**तदुपहि**तेति। अपरोक्षवृत्त्युपहितप्रमाचैतन्यस्येत्यर्थः। **आवरण-भङ्गे**ति। यथा स्वतस्तृणतूलादिभासकस्य सौरालोकस्य तृणतूलाद्यदाहकत्वेऽपि सूर्यकान्तावच्छेदेन स्वभास्यतृणतूलादिदाहकत्वम्, तद्वत् स्वतोऽविद्यातत्कार्यभासकस्य चैतन्यस्याविद्याद्यदाहकत्वेऽपि वृत्त्यवच्छेदेन तद्दाहकत्वं युक्तमिति भावः। उपसंहरति—**इती**ति। **आवरणाभि**भवार्था **वृत्तिरि**ति। तथा च वृत्त्युपहितचैतन्यस्यावरणाभिभवार्थत्वे वृत्तेरप्यवच्छेदकतया तदर्थत्वमिति भावः।

एकं मतमित्यनेन सूचितं मतान्तरमाह—**सम्बन्धार्थे**ति। सम्बन्धः विषयेण सह चैतन्यस्य संसर्गः अर्थः प्रयोजनं यस्या सेति विग्रहः। जीवस्य विषयोपरागजनिकेत्यर्थः। स्वप्रतिबिम्बाश्रयवृत्तिसंश्लेषार्थेति यावत्। वृत्तेः संश्लेषस्तु संयोगादिरूप आकाराख्यविषयतारूपश्च बोध्यः। रूपाकारवृत्तेः सम्बन्धस्य संयुक्ततादात्म्यस्य रसादावपि सत्त्वाद् रूपाकारवृत्तिदशायां रसादेर्भानवारणाय विषयतानिवेशः। परोक्षवृत्त्या रूपादेर्भानवारणाय संयोगादिनिवेशः। जीवस्यापरिच्छिन्नत्वमतेनादौ वृत्तेः सम्बन्धार्थत्वमुपपादयितुमुपक्रमते—**तत्रापी**ति। वृत्तेः सम्बन्धार्थत्वपक्षे इत्यर्थः। कीदृशस्य जीवस्य विषयोपरागार्था वृत्तिरित्यत आह—**अविद्ये**ति। तथा च न केवलमन्तःकरणप्रतिबिम्बितस्य जीवस्य विषयोपरागार्था वृत्तिः किन्त्वविद्याप्रतिबिम्बितस्य जीवस्यापीति भावः। नन्वविद्याप्रतिबिम्बो जीवो व्यापकत्वात् स्वत एव सर्वगतस्तत कथमुच्यते तत्-

**दशायां न घटादिकमवभासयति, घटादिना सम्बन्धाभावात्। तत्तदाकार-वृत्ति-दशायान्तु भासयति, तदा सम्बन्धसत्त्वात्। नन्वविद्योपाधिकस्यापरिच्छिन्न-जीवस्य स्वत एव समस्त-वस्तु-सम्बद्धस्य वृत्तिविरहदशायां सम्बन्धाभावाभिधानमसङ्गतम्। असङ्गत्वदृष्ट्या च सम्बन्धाभावाभिधाने वृत्त्यनन्तरमपि सम्बन्धो न स्यादिति चेत्? उच्यते। न हि वृत्तिविरहदशायां जीवस्य घटादिना सह सम्बन्धसामान्यं निषेधामः। किं तर्हि? घटादि-भानप्रयोजकं सम्बन्ध-विशेषम्। स च सम्बन्धविशेषो विषयस्य जीव-चैतन्यस्य च व्यंग्यव्यञ्जकभावलक्षणः कादाचित्कस्तदाकार-वृत्ति-निबन्धनः।**

सम्बन्धार्था वृत्तिरित्यत आह—**स चे**ति। अविद्योपाधिकोऽपरिच्छिन्नो जीवश्चेत्यर्थः। **विद्य**मानोऽपीति। जीवस्य सर्वगतत्वादिति भावः। **सम्बन्धा**भावात् घटादिभान-प्रयोजक-सम्बन्धाभावात्। तथा च सर्वगतत्वनिबन्धनो योऽयं जीवस्य घटादिविषयेण सम्बन्धः, स न घटादिविषयभानप्रयोजकः किन्तु तद्विलक्षणः। स च वृत्त्यधीन इति वृत्तिविरहदशायां तत्सम्बन्धाभावान्न जीवस्य घटादिभानमिति भावः। **तत्त**दाकारेति। घटाद्याकारेत्यर्थः। **सम्बन्ध**सत्त्वाद् विषयभानप्रयोजक-सम्बन्धसद्भावात्। ननु वृत्ति-विरहदशायामपरिच्छिन्नस्य जीवस्य विषयसम्बन्धाभावो न युक्तः। न हि तत्र विद्य-मानस्य तत्र तत्सम्बन्धाभावः कस्यचिद् दृष्टचरः। यदि त्वसङ्गत्वदृष्ट्या तत्-सम्बन्धा-भावः कल्प्यते, तर्हि वृत्त्यापि तत्सम्बन्धो न घटते, असङ्गत्वविरोधादित्याशङ्कां मूलाशय-मविद्वानाविष्करोति—**नन्वि**ति। **असङ्ग**त्वदृष्ट्येति। "असङ्गो न हि सज्जते" इत्यादि-श्रुत्या चैतन्यस्य प्रपञ्चसम्बन्धनिषेधावगमादित्यर्थः। स्वाशयमुद्घाटयति—**न ही**ति। **निषेधाम** इति। तथा च सम्बन्धाभावाभिधानं न सम्बन्धसामान्यनिषेधविषयकम्, यावद्विशेषाभावस्य सामान्याभावरूपत्वात्, यत्किञ्चिद् विशेषसत्त्वे सामान्यनिषेधा-योगात्। किन्तु सम्बन्धविशेषनिषेधविषयकमिति भावः। यदि सम्बन्धसामान्यस्य न निषेधस्तर्हि कस्य निषेध इति पृच्छति—**किमि**ति। **सम्बन्ध**विशेषमिति। निषेधाम इति प्राक्तनेनान्वयः। कोऽसौ सम्बन्धविशेष इत्यत्राह—**स चे**ति। **व्यङ्ग्य**व्यञ्जकभाव-लक्षणः ज्ञातृज्ञेयत्वलक्षणः। ननु ज्ञातृज्ञेयत्वलक्षण-सम्बन्धोऽपि सर्वदैवास्ति, सर्वगत-स्याहङ्कर्त्तुर्ज्ञातुः स्वत एव सर्वविषयसम्बन्धादित्यत आह—**कादा**चित्क इति। यथा सर्वगतस्य जीवस्य ग्रामसम्बन्धे विद्यमानेऽपि कर्त्तृसमवेतया गतिक्रियया कर्त्तृसमवेतो

**तथा हि—तैजसमन्तःकरणं स्वच्छद्रव्यत्वात् स्वत एव जीव-चैतन्याभिव्यञ्जनसमर्थम्। घटादिकं तु न तथा, अस्वच्छद्रव्यत्वात्। स्वाकार-वृत्तिसंयोगदशायान्तु वृत्त्यभिभूत-जाड्यधर्मकतया वृत्त्युत्पादितचैतन्याभिव्यञ्जनयोग्यताश्रयतया च वृत्त्युदयानन्तरं चैतन्यमभिव्यनक्ति। तदुक्तं विवरणे**

ग्रामव्यापी सम्बन्धविशेष आधीयते। तद्वद् वृत्तिरूपयाऽन्तःकरणपरिणामभूतया ज्ञानक्रिययाऽहङ्कर्त्तुर्जीवे ज्ञातृज्ञेयत्वलक्षणो विषयव्यापी सम्बन्धविशेष आधीयते, क्रियायाः स्वाश्रयातिशयजनकत्वात्। तत्र प्रयोजकस्य कादाचित्कत्वात् प्रयोज्यस्य तथाविधसम्बन्धस्य कादाचित्कत्वमिति भावः। कादाचित्कस्य हेतुसापेक्षत्वात् तमाह—**तदाका**रेति। विषयाकारेत्यर्थः। तथा चाहङ्कर्त्तुर्जीवस्य ज्ञातृत्वे विषयस्य घटादेर्ज्ञेयत्वे तदाकारवृत्तिविषयत्वमपेक्षितमिति वृत्तेस्तथाविधसम्बन्धप्रयोजकत्वमिति भावः। वृत्तेस्तथाविधसम्बन्धप्रयोजकत्वमुपपादयति—**तथा ही**ति। विषयस्फुरणोपयोगितया प्रथमं तावदन्तःकरणस्य चित्प्रतिबिम्बग्राहित्वमुपपादयति—**तैजसमि**ति। स्वच्छस्वभावमित्यर्थः, सत्त्वस्य स्वच्छस्वभावत्वादन्तःकरणस्य तत्सम्भूतत्वात् स्वच्छस्वभावत्वमित्यर्थः। यद्यप्यन्तःकरणस्य पञ्चभूतकार्यत्वात् पाञ्चभौतिकत्वम्, तथापि तेजोवयवित्वात् तैजसोपकार्यत्वाच्च तैजसत्वमन्नमयत्ववद् बोध्यम्। **स्वत** एव स्वभावत एव। **जीव**चैतन्येति। जीवचैतन्यस्याभिव्यञ्जनमभिव्यक्तिस्तत्र समर्थं योग्यमित्यर्थः। अभिव्यक्तिश्च विषयावच्छिन्नाज्ञानाभिभवो न रूपातिशयः। **न तथा** न जीवचैतन्याभिव्यञ्जनसमर्थम्। तत्र हेतुमाह—**अस्वच्छे**ति। अस्वच्छस्वभावद्रव्यत्वादित्यर्थः। स्वच्छस्वभावस्यैव द्रव्यस्याभिव्यञ्जकत्वदर्शनादस्वच्छस्वभावस्य घटादेर्न तद्योग्यत्वमिति भावः। तर्हि वृत्त्युदयानन्तरं घटादेर्विषयस्यावभासो न स्यात्, अन्तःकरणाभिव्यक्ततया चैतन्यस्य तदाकारत्वेऽप्यस्वच्छविषयानभिव्यक्ततया तदाकारत्वाभावात्। तथा च मयेदमवगतमिति प्रमातृप्रमेयसंसर्गावभासि-संवेदनं न स्यादित्यत आह—**स्वाका**रेति। घटाद्याकारवृत्तेः सम्बन्धदशायामित्यर्थः। **वृत्त्य**भिभूतेति। वृत्त्याऽभिभूतो जाड्यधर्मोऽप्रकाशो यस्य तथाभूततयेत्यर्थः। तथा च वृत्तेर्विषयस्य च व्याप्तिदशायामन्तःकरणावच्छिन्नचैतन्य-विषयावच्छिन्नचैतन्ययोरभेदाद् विषयस्याप्रकाशस्वभावत्वापगमेन प्रकाशस्वभावत्वमिति भावः। **वृत्त्युत्**पादितेति। वृत्त्या उत्पादिता या चैतन्याभिव्यक्तिजननयोग्यता चिद्व्यञ्जकत्वयोग्यता तदाश्रयतयेति विग्रहः। तथा च वृत्त्या विषयेषु प्रकाशस्वभावत्वाधानाद् जड़-

**—"अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्ति-योग्यतामापादयती"ति। दृष्टं चास्वच्छ-द्रव्यस्यापि स्वच्छद्रव्य-सम्बन्धदशायां प्रतिबिम्बग्राहित्वम्। यथा कुडयादेर्जलादिसंयोगदशायां मुखादिप्रतिबिम्ब-ग्राहिता। घटादेरभिव्यञ्जकत्वं च तत्प्रतिबिम्बग्राहित्वम्। चैतन्याभिव्यक्तत्वं च तत्र प्रतिबिम्बितत्वम्। एवंविधाभिव्यञ्जकत्व-सिद्ध्यर्थमेव वृत्तेरपरोक्ष-**

स्यापि विषयस्य चिद्व्यञ्जकत्व-योग्यत्वमिति भावः। **वृत्त्युद**यानन्तरम् वृत्तेर्विषय-व्याप्त्यनन्तरम्। **चैतन्य**मभिव्यनक्ति विषयचैतन्यमनावरणं करोति। घटादिकमिति शेषः। तथा च वृत्तिमदन्तःकरणसंसर्गाद् घटादिकं जड़मपि जाड्याभिभवलक्षणं चैतन्या-भिव्यञ्जकत्व-योग्यत्वं प्राप्तमपरोक्षतया चाभिव्यक्तं विषयावच्छिन्नचैतन्यावरणं निवर्त्त-यतीति भावः। उक्तार्थे विवरणसम्मतिमाह—**तदुक्त**मिति। **विवरणे** इति। प्रथम-वर्णके इति शेषः। **अन्तः**करणं वृत्तिमदन्तःकरणम्। **स्वसंसर्गि**ण्यपि वृत्तिमदन्तःकरण-सम्बन्धवत्यपि। नन्वन्तःकरणस्य स्वच्छत्वाद् युक्तं चैतन्याभिव्यक्तियोग्यत्वम्, अस्वच्छस्य तु घटादेस्तद्योग्यत्वं नैव दृष्टचरमित्यत आह—**दृष्टं चे**ति। क्व दृष्टमित्यत्राह—**यथे**ति। **कुडयादे**रिति। भित्त्यादेरित्यर्थः। आदिपदेन काष्ठादिपरिग्रहः। **जलादी**त्यादिपदेन स्वच्छद्रव्यपरिग्रहः। ननु घटादेश्चैतन्याभिव्यञ्जकत्वं नाम चैतन्यावरणनिवर्त्तकत्वम्। कुडयादेस्तु न तथा, तेषां प्रतिबिम्बमात्रग्राहित्वात्। तत् कथं तेषां दृष्टान्तत्वं, वैषम्या-दित्यत आह—**घटादे**रिति। **अभि**व्यञ्जकत्वम् चैतन्याभिव्यञ्जकत्वम्। **तत्**प्रति-बिम्बेति। चैतन्यप्रतिबिम्बेत्यर्थः। तथा च यथा स्वच्छजलसंयोगात् कुडयादेरपि द्रव्या-न्तरप्रतिबिम्बग्राहित्वम् तथा स्वच्छान्तःकरणसंसर्गाद् घटादेश्चैतन्यप्रतिबिम्बग्राहित्वमित्य-स्त्येव साम्यम्। अतस्तेषां दृष्टान्तत्वं युक्तमिति भावः। ननु घटादेर्विषयस्याभिव्यञ्ज-कत्वे चैतन्याभिव्यक्तत्वं नैव घटते। न ह्यभिव्यञ्जकस्याभिव्यक्तत्वं युक्तम्, विरोधादित्यत आह—**चैतन्या**भीति। **तत्र** घटादौ। **प्रति**बिम्बितत्वं प्रतिबिम्बवत्त्वम्। वस्तुतस्त्वेवं व्याख्यानं चिन्त्योपपत्तिकम्, विवरणादिष्वावरणाभिभवस्यैवाभिव्यञ्जकत्वोक्तेरिति। ननु विषयगत-जाड्याभिभवे हि विषयस्य चिदभिव्यञ्जकत्वम्। स एव तु जाड्याभि-भवो नैव घटते, वृत्तेरन्तःकरणगतत्वेन जाड्याभिभवस्य च विषयगतत्वेन तयोर्वैयधि-करण्यात्, वैयधिकरण्ये च कार्यकारणभावायोगात्। तस्माद् वृत्तेर्जाड्याभिभावकत्वं विषयस्याभिव्यञ्जकत्वं च नैव युक्तमित्यत आह—**एवं**विधेति। चित्प्रतिबिम्बग्राहित्व-

**स्थले बहिर्निगमनाङ्गीकारः। परोक्षस्थले तु वह्न्यादेर्वृत्तिसंयोगाभावेन चैतन्यानभिव्यञ्जकतया नापरोक्षत्वम्। एतन्मते विषयाणामपरोक्षत्वं चैतन्याभिव्यञ्जकत्वमिति द्रष्टव्यम्। एवं जीवस्यापरिच्छिन्नत्वेऽपि वृत्तेः सम्बन्धार्थत्वं निरूपितम्।**

**इदानीं परिच्छिन्नत्व-पक्षे सम्बन्धार्थत्वं निरूप्यते। तथा हि—अन्तःकरणोपाधिको जीवः, तस्य च घटाद्यनुपादानता घटादिदेशासम्बन्धात्।**

लक्षणेत्यर्थः। **अपरोक्ष**स्थले प्रत्यक्षस्थले। एतेन परोक्षस्थले वृत्तेर्बहिर्निगमनं नास्तीति सूचितम्। **निर्गम**नाङ्गीकार इति। तथा च वृत्तेर्बहिर्गमनेन विषयदेशप्राप्तौ जाड्याभिभावकत्वं विषयस्याभिव्यञ्जकत्वञ्च नानुपपन्नम्, तयोः सामानाधिकरण्यादिति भावः। वृत्तेर्बहिर्गमनाभावस्य फलमाह—**परोक्षस्थले** इति। **संयोगा**भावेनेति। तथा च वह्न्यादौ विषये इन्द्रियसम्बन्धाभावेनेन्द्रियद्वारक-बहिर्गमनाभावाद् वृत्तेर्न विषयसंयोग इति भावः। ततः किमित्यत आह—**चैतन्यानभी**ति। चित्प्रतिबिम्बाग्राहितयेत्यर्थः। वृत्तिसंयोगकृत-विषयगत-जाड्यापनयनाभावादिति भावः। नन्वस्तु विषयस्य चैतन्यानभिव्यञ्जकत्वम्, तेन किमित्यत आह—**नापरोक्षत्वमि**ति। तथा च विषयस्य चित्प्रतिबिम्बग्राहित्वाभावे प्रतिबिम्बित-चित्तादात्म्यरूपमपरोक्षत्वं न भवेदिति भावः। ननु वह्न्यादेर्विषयस्य चिदभिव्यञ्जकत्वेऽप्यपरोक्षत्वं नैव युक्तम्, प्रमातृचैतन्याभिन्नत्वस्य विषयगतप्रत्यक्षत्वरूपत्वात्, तस्य च तत्राभावादित्यत आह—**एतन्मते** इति। व्यङ्ग्यव्यञ्जकभावलक्षण-सम्बन्धार्था वृत्तिरिति मते इत्यर्थः। ननु प्रमातृचैतन्याभिन्नत्वं विषयाणां प्रत्यक्षत्वमिति प्रागुक्तम्। अत्र तु चैतन्याभिव्यञ्जकत्वस्य प्रत्यक्षत्वमुच्यते इति पूर्वापरविरोध इति चेन्न, विषयाणां चैतन्याभिव्यञ्जकत्वे एव प्रमातृचैतन्याभिन्नत्वरूपस्य विषयगतप्रत्यक्षत्वस्य सम्भवात् चैतन्याभिव्यञ्जकत्वस्य प्रत्यक्षत्वोक्तौ प्रागुक्तविरोधानवकाशात्। प्रकरणमुपसंहरति—**एवमि**ति। **अपरिच्छिन्नत्वे**ऽपीति। अपिकारेण परिच्छिन्नत्वपक्षे वृत्तेः सम्बन्धार्थत्वं नितरामपेक्षितमिति सूचितम्।

साम्प्रतं परिच्छिन्नत्वपक्षे वृत्तेः सम्बन्धार्थत्वमुपपादयितुं प्रतिजानीते—**इदानी**मिति। **सम्बन्धार्थ**त्वम् अभेदलक्षणसम्बन्धार्थत्वम्। निरूपणप्रकारं दर्शयति—**तथा ही**ति। तत्र जीवस्वरूपं दर्शयति—**अन्तः**करणेति। तथा चान्तःकरण-प्रतिबिम्बितचैतन्यस्य जीवत्वेऽन्तःकरणस्य परिच्छिन्नत्वाज् जीवस्य परिच्छिन्नत्वं सिद्धमिति

**किन्तु ब्रह्मैव घटाद्युपादानम्, तस्य मायोपहित-चैतन्यस्य सकल-घटाद्यन्वयित्वात्। अत एव ब्रह्मणः सर्वज्ञता। तथा च जीवस्य घटाद्यधिष्ठान-ब्रह्मचैतन्याभेदमन्तरेण घटाद्यवभासासम्भवे प्राप्ते तदवभासाय घटाद्यधिष्ठान-ब्रह्म-चैतन्याभेद-सिद्ध्यर्थं घटाद्याकारा वृत्तिरिष्यते। ननु वृत्त्यापि**

भावः। नन्वस्तु जीवस्य परिच्छिन्नत्वम्। तथापि तस्य विषयभानप्रयोजकाधिष्ठान-ब्रह्मचैतन्याभेदसिद्ध्यर्थं वृत्त्यपेक्षा नैव युक्ता, विषयप्रकाशकाधिष्ठानब्रह्मचैतन्याभिन्नत्वेन तस्य विषयप्रकाशसम्भवादित्यत आह—**तस्य चे**ति। जीवचैतन्यस्येत्यर्थः। जीवस्यानुपादानत्वे हेतुमाह—**घटादि**देशेति। स्वरूपतो जीवचैतन्यस्य घटाद्यधिष्ठानब्रह्मचैतन्याभेदेऽप्युपाध्यवच्छेदेन भेदादन्तःकरणावच्छिन्नस्य तस्यान्तःकरण-देशत्वेन घटादिदेशत्वाभावान्न घटाद्युपादानत्वम्, कार्यान्वयिन एव कार्योपादानत्वात्। अत एवास्य कल्पितभेदस्य न विषयप्रकाशकत्वम्, विषयदेशासम्बन्धादिति भावः। ननु यदि जीवचैतन्यं नोपादानम्, किं तर्हि घटाद्युपादानमित्यत आह—**किन्त्वि**ति। **ब्रह्मैव** मायावच्छिन्नमीश्वरचैतन्यमेव। एवकारेण शुद्धजीवादिव्यवच्छेदः। न च शुद्धस्यैवोपादनत्वमस्तु किमीश्वरस्येति वाच्यम्, "असङ्गो न हि सज्जत" इत्यादिनिर्गुणवाक्यविरोधात्, एकस्मात् तस्माद् विचित्रकार्यानुपपत्तेश्च। तस्येश्वरस्योपादानत्वे हेतुमाह—**तस्ये**ति। ईश्वरस्येत्यर्थः। **सकले**ति। मायाया व्यापकत्वेनेश्वरस्यापि व्यापकत्वादिति भावः। ब्रह्मणः सकलकार्यान्वयित्वे फलमाह—**अत** एवेति। ब्रह्मणः सकलकार्यान्वयित्वादेवेत्यर्थः। **सर्वज्ञ**तेति। तस्यानावृतत्वात् सर्वविषयसम्बद्धत्वाच्चेति भावः। ननूपहितचैतन्यभेदाद् जीवचैतन्यस्य विषयासम्बद्धतयाऽप्रकाशकत्वे मयेदमवगतमिति प्रमातृप्रमेयसंसर्गावभासिसंवेदनं न स्यादित्यत आह—**तथा चे**ति। मायोपहितस्यैवेश्वरचैतन्यस्य घटाद्युपादानतया प्रकाशकत्वे चेत्यर्थः। **घटाद्य**वभासा**सम्भवे** इति। घटाद्यधिष्ठानं ब्रह्मचैतन्यं घटाद्यवभासकम्, तेन तस्य सम्बन्धात्, प्रकाशकस्य च स्वसम्बद्धवस्त्ववभासित्वात्। जीवचैतन्यन्तु न घटाद्यवभासकम्, तेन तस्य सम्बन्धाभावात्, प्रकाशकेन ब्रह्मणाभेदाभावाच्च। अतो जीवचैतन्यसन्निधौ न घटाद्यवभास इति भावः। **तदव**भासाय घटाद्यवभासाय। **चैतन्या**भेदसिद्ध्यर्थमिति। प्रकाशकब्रह्मचैतन्येन जीवचैतन्यस्यैकीभावाद् जीवस्य प्रकाशकत्वम्। स चैकीभावो वृत्त्यधीन इति जीवब्रह्मणोरैक्यसिद्ध्यर्थं वृत्तिरभ्युपगन्तव्या। तथा च वृत्त्या जीवब्रह्मणोरभेदे सिद्धे जीवस्य विषयप्रकाशोपपत्तिरिति भावः।

**कथं प्रमातृ-विषय-चैतन्ययोरभेदः सम्पाद्यते, घटान्तःकरणरूपोपाधिभेदेन तदवच्छिन्न-चैतन्ययोरभेदासम्भवादिति चेन्न, वृत्तेर्बहिर्देश-निर्गमनाङ्गीकारेण वृत्त्यन्तःकरण-विषयाणामेकदेशस्थत्वेनोपधेयभेदाभावस्योक्तत्वात्। एवमपरोक्ष-स्थले मतभेदेन वृत्तेर्विनियोगः।**

**इन्द्रियाजन्य-विषय-गोचरापरोक्षान्तःकरण-वृत्त्यवस्था स्वप्नावस्था। जाग्रदवस्था-व्यावृत्त्यर्थम्—इन्द्रियाजन्येति। अविद्यावृत्तिमत्यां सुषुप्तावति-**

ननु प्रकाशकाभेदे हि जीवस्य विषयप्रकाशोपपत्तिः स्यात्। तदभेदस्तु नैव सुघटः, द्वयोर्भिन्नत्वादत आह—**घटाद्या**कारेति। यद्यपि जीवचैतन्य-विषयाधिष्ठान-ब्रह्मचैतन्ययोरुपाधिकृतो भेदस्तथापि वृत्तिकृतस्तयोरभेद इति भावः। ननु वृत्त्यङ्गीकारेऽपि तयोश्चैतन्ययोर्नाभेदः, उपाधिभेदेन तयोर्भेदादिति शङ्कते—**नन्वि**ति। **बहिर्दे**शेति। इन्द्रियप्रणालीकया विषयदेशप्राप्त्यङ्गीकारेणेत्यर्थः। **उपधे**येति। उपाध्यवच्छिन्नचैतन्येत्यर्थः। वृत्तेः प्रयोजनमुपसंहरति—**एवमि**ति। **विनियोगः** उपयोगः, साफल्यमिति यावत्।

क्रमप्राप्तां स्वप्नावस्थां निरूपयति—**इन्द्रिया**जन्येति। इन्द्रियजन्य-व्यापाराभाव-योग्यकालीनेत्यर्थः। **अन्तः**करणवृत्त्यवस्थेति। अन्तःकरणगत-वासनानिमित्त-वृत्त्यवस्थेत्यर्थः। यथाश्रुतार्थस्तु नैव, स्वप्नसृष्ट-विषयेष्वविद्यावृत्त्यभ्युपगमात्, जाग्रद्भोगप्रद-कर्माभावादिन्द्रियादिव्यापारस्याभावेन तत्पूर्विकाया अन्तःकरणवृत्तेरसम्भवादिति भावः।

एतेन—इन्द्रियाजन्या इन्द्रियव्यापारोपरमकालीना, विषयगोचरा अधिष्ठानाकारा, अपरोक्षान्तःकरणवृत्तिः नित्यापरोक्षान्तःकरणावस्थाविशेषः स्वप्नावस्थेत्यर्थः। अत्र सुखादिविषयकापरोक्षान्तःकरणवृत्तिर्जाग्रद्दशायामपि विद्यते इत्यतिव्याप्तिवारणार्थमिन्द्रियाजन्येतीति परिभाषाप्रकाशिकाकृतां व्याख्यानं प्रत्युक्तम्, स्वाप्नज्ञानस्याधिष्ठानाकारत्वाभावात्, स्वाप्नवृत्तेरन्तःकरणवृत्तित्वासम्भवात्, अन्तःकरणावस्थाविशेषस्य नित्यत्वायोगात्, सुखादिविषयकान्तःकरणवृत्त्यनभ्युपगमात्, तेषामविद्यावृत्तिविषयत्वात्। तथा चोक्तमद्वैतसिद्धौ स्वप्रकाशत्वनिरूपणे—रूप्यसुखादौ साक्षिभास्यतयाऽपरोक्षव्यवहारेऽपि प्रमाणजन्यापरोक्षवृत्तिविषयत्वाभावादिति।

लक्षणघटकपदकृत्यं दर्शयितुमाह—**जाग्रद**वस्थेति। यदि विषयगोचरापरोक्षान्तःकरणवृत्त्यवस्थात्वमात्रं लक्षणं स्यात्, तदाऽपरोक्ष-भ्रमकालीन-जाग्रदवस्थायामतिव्याप्तिः स्यात्, तस्या विषयगोचरान्तःकरण-वासनानिमित्त-वृत्त्यवस्थारूपत्वात्। इन्द्रिया-

**व्याप्तिवारणाय—अन्तःकरणेति। सुषुप्तिर्नामाविद्यागोचराऽविद्यावृत्त्यवस्था। जाग्रत्स्वप्नयोरविद्याकारवृत्तेरन्तःकरण-वृत्तित्वान्न तत्रातिव्याप्तिः।**

**अत्र केचिन्मरण-मूर्च्छयोरवस्थान्तरत्वमाहुः। अपरे सुषुप्तावेव तयोरन्त-**

जन्येति विशेषणदाने तु नातिव्याप्तिः, तदवस्थायास्तादृशावस्थारूपत्वेऽपीन्द्रियजन्य-व्यापाराभावयोग्य-कालीनत्वाभावात्, तस्या इन्द्रियजन्य-व्यापारयोग्य-कालीनत्वादिति भावः। अन्तःकरणपदकृत्यं दर्शयति—**अविद्या**वृत्तीति। यदीन्द्रियाजन्यविषयगोचरा-परोक्षवृत्त्यवस्थात्वं लक्षणं भवेत्। तदा सुषुप्त्यवस्थायामतिव्याप्तिः स्यात्, तस्या इन्द्रियाजन्यविषयगोचरापरोक्षवृत्त्यवस्थारूपत्वात्। अन्तःकरणस्य वृत्तिविशेषणत्वे तु नातिव्याप्तिः, तस्यास्तादृशवृत्त्यवस्थारूपत्वेऽप्यन्तःकरणवृत्त्यवस्थारूपत्वाभावात्, सुषुप्तिं प्रत्यन्तःकरणवासनाया अहेतुत्वात्, तदानीमन्तःकरणस्य विलयादिति भावः। सुषुप्तिं लक्षयति—**सुषुप्ति**रिति। अविद्यावृत्त्यवस्था सुषुप्तिरित्युक्तौ स्वप्नजागरयोरतिव्याप्तिस्तयो-रप्यविद्यावृत्तिमत्त्वात्, जाग्रति शुक्तिरजतादिगोचराया स्वप्ने स्वाप्नविषयिण्या अविद्या-वृत्तेरभ्युपगमात्। अत अविद्यागोचरेति विशेषणम्। तथा च जाग्रत्कालीनामविद्या-वृत्तिमादाय नातिव्याप्तिस्तस्या वृत्तेरविद्यातिरिक्त-विषयत्वात्। **अविद्या**गोचरा अविद्या-विषयिणी, संसर्गाविषयिणीति यावत्। एतच्च सुखसाक्षिणोरुपलक्षणम्, सुषुप्तौ सुख-साक्ष्यज्ञानगोचराविद्यावृत्तेरङ्गीकारात्। तदुक्तं सिद्धान्तबिन्दौ—साक्ष्याकारं सुखाकार-मवस्थाज्ञानाकारञ्चाविद्याया वृत्तित्रयमभ्युपेयते इति। न च तत्र प्रमाणाभावः, सुखमह-मस्वाप्सं न किञ्चिदवेदिषमिति सुप्तोत्थित-परामर्शस्य प्रमाणत्वात्। अन्यथैतत्त्रितय-विषयक-वृत्त्यनुत्पादे सूक्ष्मावस्थारूपसंस्काराभावात् स्मरणानुपपत्तेः। **अविद्या**वृत्त्यवस्थेति। अत्राविद्यापदं स्पष्टार्थम्, अविद्यादिगोचरवृत्त्यन्तरानभ्युपगमात्। लक्षण-घटक-पदकृत्यं दर्शयति—**जाग्रत्**स्वप्नयोरिति। **अविद्या**कारवृत्तेः अविद्यागोचरवृत्तेः। **अन्तः**करण-वृत्तित्वात् अन्तःकरणविषयक-वृत्तित्वात्, अहङ्कारादिविशिष्टविषयकवृत्तित्वादिति यावत्। **तत्र** जाग्रत्स्वप्नयोः। **अतिव्याप्ति**रिति। तथा च जाग्रत्स्वप्नयोरविद्यागोचरवृत्तेरहङ्कारा-दिविशिष्ट-विषयक-वृत्तित्वात् सौषुप्तवृत्तौ तु तदभावान्न तत्रातिव्याप्तिरिति भावः।

मतविशेषे जीवस्यावस्थान्तरमप्यस्तीत्याह—**अत्रे**ति। जीवावस्थासु मध्ये इत्यर्थः। **केचित्** शङ्कराचार्यानुयायिनः। **अवस्थान्**तरत्वमिति। प्रयोजनभेदान्निमित्तभेदाल्लक्षण-भेदाच्च तयोरवस्थात्रयानन्तर्भावादवस्थान्तरत्वम्। प्रयोजनभेदस्तावत् सुषुप्तेः श्रमापनोदनं

**र्भावमाहुः। तत्र तयोरवस्थात्रयान्तर्भाव-बहिर्भावयोस्तत्त्वंपदार्थनिरूपणे उपयोगाभावान्न तत्र यत्यते। तस्य मायोपाध्यपेक्षयैकत्वम्, अन्तःकरणोपाध्यपेक्षया नानात्वं व्यवह्रियते। एतेन—जीवस्याणुत्वं प्रत्युक्तम्, "बुद्धेर्गुणेनात्मगुणेन चैवाराग्रमात्रो ह्यवरोऽपि दृष्टः" इत्यादौ जीवस्य बुद्धिशब्दवाच्यान्तःकरण-परिमाणोपाधिकस्य परमाणुत्व-श्रवणात्। स च जीवः**

मोहस्य तु शरीरविसर्जनम्। यद्यपि सत्यपि मोहे न मरणम्, तथाप्यसति मोहे न मरणमिति मरणार्थो मोहः। निमित्तभेदस्तावत् सुषुप्तेः श्रमादि, मोहस्य तु मुषलसम्पातादि। लक्षणभेदस्तावत् सुषुप्तेः प्रसन्नवदनत्वादि, मोहस्य तु मुखनेत्रादिविकार इति भावः। मतान्तरमाह—**अपरे** इति। **सुषुप्ता**वेवेति। एवकारेणावस्थान्तरान्तर्भावव्यवच्छेदः। **तयोः** मरणमूर्च्छयोः। **अन्तर्भाव**मिति। विशेषविज्ञानाभावः सुषुप्तिरिति सुषुप्तिलक्षणयोगाद् तयोः सुषुप्तावन्तर्भाव इति भावः। ननु मरणमूर्च्छयोरवस्थात्रयानतिरिक्तत्वे का युक्तिरित्यत आह—**तत्रे**ति। तयोर्मतयोर्मध्ये इत्यर्थः। **तयोः** मरणमूर्च्छयोः। **तत्र** अन्तर्भावबहिर्भावप्रतिपादने। जीवस्वरूपं निरूप्य तस्यैकत्वानेकत्वे निरूपयति—**तस्ये**ति। जीवस्येत्यर्थः। **एकत्व**मिति। मायाया एकत्वादिति भावः। **नानात्व**मिति। उपाधेरन्तःकरणस्य नानात्वादिति भावः। "बलाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेय" इत्यादि-श्रुतिषु जीवस्याणुत्वकीर्त्तनादणु-परिमाणत्वं जीवस्येति माध्वाद्यभिमतं जीवाणुत्वं निराकरोति—**एतेने**ति। वक्ष्यमाणहेतुनेत्यर्थः। **प्रत्युक्तम्** खण्डितम्। तत्र श्वेताश्वतरश्रुत्या हेतुं दर्शयति—**बुद्धेरि**ति। बुद्धिरूपोपाधेरित्यर्थः। **गुणेन** परिच्छिन्नत्वरूपगुणेन। **आराग्रमात्रः** आरा तीक्ष्णमुख-सूचीविशेषस्तदग्रस्येव मात्रा परिमाणं यस्य स तथाभूतोऽतिसूक्ष्मो दृष्टः। **आत्मगुणेन** आत्मनोऽपरिच्छिन्नत्वलक्षणगुणेन। **अवरोऽपि** नास्ति वरो महान् यतः स तथाभूतः, अपरिच्छिन्नोऽपीति यावत्। **दृष्टः** श्रवणमननादियुक्तैः शास्त्रैः साक्षात्कृतः। **परमाणु**त्वश्रवणादिति। अतिसूक्ष्मत्वश्रवणादित्यर्थः। सूक्ष्मभूतमयस्यान्तःकरणस्य सूक्ष्मतया तदुपाधिकस्यात्मनः सूक्ष्मत्वश्रवणादिति यावत्। तथा चास्यां श्रुतौ बुद्धिगुणेनाराग्रमात्रत्वोक्तेः स्वाभाविकमेव विभुत्वम्, औपाधिकन्तु सूक्ष्मत्वमिति भावः। न चात्मगुणेनाराग्रमात्रत्वम्, बुद्धिगुणेण चावरत्वमिति व्युत्क्रमयोजनयात्मनः स्वाभाविकमेवाणुत्वमिति वाच्यम्, बुद्धेरवरत्वाभावात्, क्रमान्वयसम्भवे व्युत्क्रमान्वयस्यान्याय्यत्वात्, व्यापकत्वबोधकानेकश्रुति-

**स्वयंप्रकाशः, स्वप्नावस्थामधिकृत्या"ऽत्रायं पुरुषः स्वयंज्योति"रिति श्रुतेः। अनुभवरूपश्च, "प्रज्ञानघन एवे"त्यादि-श्रुतेः। अनुभवामीति व्यवहारस्तु**

विरोधेनास्याः श्रुतेरौपाधिकाणुत्वपरत्वाच्च। न चोत्क्रान्तिमत्त्वाद् गतिमत्त्वात् क्रियावत्त्वाद् जीवो न व्यापक इति वाच्यम्, बुद्धिगतानामुत्क्रमणादीनां तदुपहिते श्रुत्या प्रतिपादनात्। विस्तरस्त्वाकरे द्रष्टव्यः। जीवस्यौपाधिकं रूपं जाग्रदादिकं निरूप्य स्वाभाविकं रूपं निरूपयति—**स चे**ति। **स्वयं**प्रकाश इति। स्वप्रकाश इत्यर्थः। तल्लक्षणन्तु अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम्। अपरोक्षव्यवहारयोग्यघटादावतिव्याप्तिपरिहारार्थम्—अवेद्यत्वे सतीति विशेषणम्। न चैतावदेवास्तु लक्षणमिति वाच्यम्, तथा सत्यतीतानागतेषु नित्यानुमेयेषु च धर्मादिष्वतिव्याप्तेः, फलव्याप्यत्वरूप-वेद्यत्वस्य तत्र तत्राभावात्। तस्मात् तत्र तत्रातिव्याप्तिवारणाय—विशेष्यदलम्। न च स्वप्रकाशरूपे आत्मनि योग्यतारूपधर्माङ्गीकारे मोक्षेऽव्याप्तिः, तदा तस्य निर्धर्मकत्वात्, अपसिद्धान्तापाताच्चेति वाच्यम्, गुणवत्त्वात्यन्ताभावानधिकरणस्य द्रव्यत्ववद् योग्यतात्यन्ताभावानधिकरणत्वस्य तत्त्वात्, अनधिकरणत्वस्य स्वरूपतया तदापि सत्त्वात्, काल्पनिकधर्माणां संसारदशायामभ्युपगमेनापसिद्धान्ताभावात्। ननु जीवस्य स्वयंप्रकाशत्वं नैव युक्तम्, प्रमाणाभावात्। न च श्रुतिस्तत्र प्रमाणम्, तस्याः परमात्मपरत्वादित्यत आह—**स्वप्नावस्था**मिति। जीवस्यैव स्वप्नावस्थासम्भवात् तदधिकारीयश्रुतेर्जीवविषयकत्वमेव न परमात्मविषयकत्वमिति भावः। **अधिकृत्ये**ति। "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति"-रित्यादिना जीवस्वरूपं निर्दिश्य "तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत" इत्यादिना तस्य स्थानद्वयमिहलोक-परलोकरूपमभिधाय "स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती"ति तस्यैव स्वप्नावस्थां प्रकृत्येत्यर्थः। स्वप्रकाशत्वसाधिकां बृहदारण्यकश्रुतिमुदाहरति—**अत्रे**ति। अस्यां स्वप्नावस्थायामित्यर्थः। **अयं पुरुषः** आत्मा। **स्वयं**ज्योतिरिति। विविक्तज्योतिर्बाह्याध्यात्मिक-भूतभौतिक-संसर्गरहितं ज्योतिर्भवतीत्यर्थः। ननु चिद्रूपस्यैव स्वप्रकाशत्वं श्रुतावुक्तम्। जीवस्तु चिद्गुणवानपि न चिद्रूपस्तत् कथं तस्य स्वप्रकाशत्वमिति नैयायिकशङ्कां निराकर्त्तुं तस्य चिद्रूपत्वं दर्शयति—**अनु**भवरूपश्चेति। चिद्रूपश्चेत्यर्थः। तत्र बृहदारण्यकवचनं प्रमाणयति—**प्रज्ञाने**ति। **घनः** पिण्डः। यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति, न रसान्तरम्। एवमेवास्यात्मनोऽन्तर्बहिश्च चैतन्यान्न रूपान्तरम्। चैतन्यमेव तु निरन्तरमस्य स्वरूपमिति भावः।

**वृत्ति-प्रतिबिम्बित-चैतन्यमादायोपपद्यते। एवं त्वंपदार्थो निरूपितः।**

**अधुना तत्त्वंपदार्थयोरैक्यं महावाक्यप्रतिपाद्यमभिधीयते। ननु नाहमीश्वर इत्यादि-प्रत्यक्षेण, किञ्चिज्ज्ञत्व-सर्वज्ञत्वरूप-विरुद्धधर्माश्रयत्वादि-लिंगेन, "द्वासुपर्णे"त्यादि-श्रुत्या, "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि**

**इत्यादी**त्यादिपदेन "योऽयं विज्ञानघन" इत्यादि श्रुतिर्ग्राह्या। नन्वस्यात्मनोऽनुभवरूपत्वेऽहमनुभवामीत्यनुभवाश्रयं विषयीकुर्वतः प्रत्ययस्य निर्विषयत्वापत्तिः, अनुभवस्यानुभवं प्रत्याधारत्वायोगादिति नैयायिकशङ्कां निराकर्त्तुमाह—**अनुभ**वामीति। **वृत्ति**प्रतिबिम्बितेति। यद्यप्यनुभवरूपो जीवो नानुभवाश्रयः, एकस्याधाराधेयत्वायोगात्, तथाप्यनुभवामीत्यनुभवाश्रयत्वं जीवस्य नानुपपन्नम्, अनुभवामीत्यनुभवस्य वृत्तिप्रतिबिम्बितचैतन्यात्मकत्वात्, तस्य च वृत्तिप्रतिबिम्बितचैतन्यस्य चिद्रूपानुभव-भिन्नत्वाद् बिम्बप्रतिबिम्बयोरभेदेऽप्युपाधिसत्त्वदशायां तयोर्भेदात्, अस्मदर्थस्य प्रमातुर्वृत्त्याश्रयत्वेन वृत्तिप्रतिबिम्बित चैतन्याश्रयत्वसम्भवात्। तथा चोक्तं विवरणे प्रथमवर्णके—"यथाऽयो दहतीत्यत्र दग्धृत्वायसोरेकाग्निसम्बन्धात् परस्परसम्बन्धावभासस्तथाऽनुभवान्तःकरणयोरेकात्मसम्बन्धात् तथावभास" इति। तस्मादनुभवामीत्यादिव्यवहारो नानुपपन्न इति भावः।

महावाक्यार्थस्य तत्त्वंपदार्थयोरैक्यस्य ज्ञानं तत्त्वंपदार्थज्ञानाधीनमिति तत्त्वंपदार्थौ निरूप्य तज्ज्ञानाधीनं तत्त्वंपदार्थयोरैक्यं प्रतिपादयितुं प्रतिजानीते—**अधुने**ति। तत्त्वंपदार्थनिरूपणानन्तरमित्यर्थः। **महा**वाक्येति। महावाक्यं नाम षड्विध-तात्पर्यग्राहकलिङ्गोपेत-वाक्यम्। तच्चतुर्विधम्—तत्त्वमसि, प्रज्ञानं ब्रह्म, अयमात्मा ब्रह्म, अहं ब्रह्मेति। तथाविध-चतुर्विध-महावाक्यस्य प्रतिपाद्यं जीवब्रह्मणोरैक्यमित्यर्थः। ननु जीवब्रह्मणोरैक्यं न महावाक्यप्रतिपाद्यम्, भेदग्राहिप्रमाण-विरोधादिति शङ्कते—**नन्वि**ति। तत्र प्रथमं प्रत्यक्षप्रमाणविरोधमुपस्थापयति—**नाहमि**ति। **इत्यादी**त्यादिपदेन मनुष्योऽहमित्यादि-प्रत्यक्षपरिग्रहः। तथा च जीवेश्वरभेदग्राहि-प्रत्यक्षस्य ज्येष्ठत्वादुपजीव्यत्वात् तद्विरोधादस्याम्नायस्याभेदपरत्वं नैव युक्तमिति भावः। न केवलं प्रत्यक्षविरोधादाम्नायस्याभेदाबोधकत्वमनुमानविरोधादपीत्याह—**किञ्चि**ज्ज्ञत्वेति। तथा च जीवो नेश्वरः, विरुद्धधर्माश्रयत्वाद् दहनतुहिनवदित्याद्यनुमानविरोधान्महावाक्यस्य नैक्यपरत्वमिति भावः। अत्र मुण्डकोपनिषद्वचनविरोधमप्याह—**द्वा सुपर्णे**ति। श्रुतिवाक्यन्तु—द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्-

**भूतानि कूटस्थोऽक्षर उच्यते" ॥ इत्यादि-स्मृत्या च जीवपरभेदस्यावगतत्वेन तत्त्वमस्यादि-वाक्य"मादित्यो यूपो" "यजमानः प्रस्तर" इत्यादिवाक्यवदुपचरितार्थमेवेति चेन्न, भेदप्रत्यक्षस्य सम्भावित-करणदोषस्यासम्भावित-दोष-**

न्योऽभिचाकशीति। तदर्थस्तु—द्वेत्यादौ द्विवचनस्याकारश्छान्दसः। द्वा द्वौ सुपर्णौ सुपर्णसाम्यात् सयुजा सयुजौ सर्वदा सहयुक्तौ सखाया सखायौ समानाख्यानौ समानाभिव्यक्तिकारणौ समानमुपलब्ध्यधिष्ठानतयैकं वृक्षं परिषस्वजाते परिष्वक्तवन्तौ। तयोः परिष्वक्तयोरन्यः एकः क्षेत्रज्ञः लिङ्गोपाधिवृक्षमाश्रितः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वादु अनेकविचित्रवेदनास्वादरूपमत्ति भक्षयति उपभुङ्क्तेऽविवेकतः। अन्यः परमात्मा अनश्नन् अभिचाकशीति पश्यत्येव केवलमिति। प्राचीनानां वृत्तिकाराणां मतेनेदमुदाहृतमिति मन्तव्यम्। **इत्यादी**त्यादिपदेन—द्वे ब्रह्मणा वेदितव्ये परञ्चापरञ्चेत्यादि-श्रुतिपरिग्रहः। तथा च जीवेशभेदबोधिकया श्रुत्या विरोधात् तत्त्वमसीत्यादीनां महावाक्यानां नैक्यपरत्वमिति भावः। श्रुतिविरोधं दर्शयित्वा स्मृतिविरोधमपि दर्शयति—**द्वावि**माविति। तस्यार्थस्तु **क्षरः** नश्वरः। **अक्षर**स्तद्विपरीतः। **इमौ द्वावेव पुरुषौ लोके** प्रसिद्धाविति शेषः। तयोः स्वरूपं स्वयमेव भगवानाह—**क्षर** इति। तत्र **क्षरो** नाम पुरुषः **सर्वाणि भूतानि** समस्तं विकारजातमित्यर्थः। **कूटस्थ**स्तु कूटो माया तस्मिन् स्थितः कूटस्थस्तु **अक्षरः** संसारबीजानन्त्यान्न क्षरतीत्यक्षर **उच्यते** इति। **इत्यादी**त्यादिपदेन—"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत" इत्यादिवचनं ग्राह्यम्। तथा च प्रमाणान्तरानुगृहीतया श्रुतिस्मृत्या जीवेशभेदबोधनात् तत्त्वमस्यादिमहावाक्यानां नाभेदपरत्वमिति भावः। तत् किं तत्त्वमस्यादिवाक्यमप्रमाणं नेत्याह—**तत्त्वम**स्यादीति। आदिपदेनाहं ब्रह्मास्मीत्यादि महावाक्य-परिग्रहः। अस्योपचरितार्थमेवेत्यग्रेतनेनान्वयः। अत्रैव वैदिकदृष्टान्तमाह—**आदित्य** इति। **यूपः** पशुबन्धनार्थो यज्ञीयदारुविशेषः, यूपे पशुं बध्नातीति श्रुतेः। **प्रस्तरः** स्रुग्धारणार्थः पाषाणविशेषः, प्रस्तरे जुहुमासादयतीति श्रुतेः। **इत्यादी**त्यादिशब्देन—"यजमान एककपाल" इत्यादिवाक्यपरिग्रहः। **वाक्य**वदिति। यथा यूपादित्यादीनामभेदस्य प्रत्यक्षबाधितत्वात् तद्विरोधादादित्यादिशब्दानामुपचरितार्थत्वं, तद्वदिति भावः। **उपच**रितार्थं गौणार्थम्, अन्यार्थपरमिति यावत्। आशङ्कां निराकरोति—**ने**ति। **सम्भा**वितेति। एतेन—प्रत्यक्षस्य बाध्यत्वे बीजं दर्शितम्, सम्भावितदोषस्य बाधबीजत्वादिति भावः। वैदिक-

**वेद-जन्य-ज्ञानेन बाध्यमानत्वात्, अन्यथा चन्द्रगताधिक-परिमाणग्राहि-ज्योतिःशास्त्रस्य चन्द्रप्रदेश-ग्राहि-प्रत्यक्षेण बाधापत्तेः, पाकरक्ते घटे रक्तोऽयं न श्याम इतिवत् "सविशेषणे ही"ति न्यायेन जीव-पर-भेदग्राहि-प्रत्यक्षस्य विशेषणीभूत-धर्मभेद-विषयत्वाच्च। अत एव नानुमानमपि प्रमाणम्,**

ज्ञानस्य बाधकत्वबीजं दर्शयति—**असम्भा**वितेति। तथाच निश्चितप्रामाण्यमेव प्रत्यक्षमितर-बाधकं भवेत्। न चात्र प्रामाण्यं निश्चितम्, तत्र दोषस्य सम्भावितत्वात्। तस्मात् सन्दिग्ध-प्रमाणभावेन प्रत्यक्षेणागमस्य बाध्यत्वमुपचरितार्थत्वं वा नैव युक्तमितिभावः। ननु प्रत्यक्ष-मनुमानाद्य पेक्षया जात्यैव प्रबलम्। कथमन्यथौष्ण्यप्रत्यक्षेण वह्निशैत्यानुमिति-प्रतिबन्ध इत्यत आह—**अन्यथे**ति। सदोषस्यापि प्रत्यक्षस्य जात्या प्रबलत्वे इत्यर्थः। **अधिके**ति। प्रत्यक्षगृहीत-परिमाणादधिकेत्यर्थः। **ज्योतिः**शास्त्रस्येति। सार्द्धानि षट्सहस्राणि योजनानि विवस्वतः। विष्कम्भो मण्डलस्येन्दोः सहाशीत्या चतुःशतमिति सूर्यसिद्धान्तादि शास्त्रस्येत्यर्थः। **चन्द्रप्रदेश**ग्राहीति। ज्योतिःशास्त्रावगतपरिमाणान् न्यूनपरिमाण ग्राहकेत्यर्थः। तथा च प्रत्यक्षस्य जात्या प्राबल्येऽभ्युपगम्यमाने चन्द्रपरिमाणग्राहिप्रत्यक्षेण ज्योतिःशास्त्रस्य बाधाद् दृश्यमानचन्द्रपरिमाणस्य तात्त्विकत्वं स्यात्। न च तत्तात्त्विकम्। तस्मात् जात्या प्रत्यक्षस्य न प्राबल्यम्, किन्तु परीक्षिततया। परीक्षा च प्रवृत्तिसंवाद-विसंवादाभाव-दोषाभावादिरूपा। सा च प्रकृते नास्ति, दोषस्य सम्भावितत्वात् विसंवादस्य च बहुलमुपलम्भात्। वह्निशैत्यानुमितिप्रतिबन्धकत्वन्तूपजीव्यत्वेनैव, न जात्या, चक्षु-रादिना धर्म्यादिग्रहेऽपि त्वचं विना साध्यप्रसिद्धेरभावात्। तस्मान्मानाभावात् प्रत्यक्षस्य जात्या न प्राबल्यमिति भावः। एतेन—उपजीव्यत्वेन प्रत्यक्षस्य प्राबल्यं निराकृतं वेदितव्यम्, प्रत्यक्षस्य कचिदुपजीव्यत्वेऽपि स्वप्रमेये जीवपरैक्येऽनुपजीव्यत्वात्। उपजीव्यत्वञ्चापेक्षिताशेषार्थग्राहकतया। न चात्र प्रत्यक्षस्यापेक्षिताशेषार्थग्राहकत्वम्, तदर्थस्यागममात्रैकवेद्यत्वात्। न च भेदविरहरूपैक्यग्रहस्य भेदग्रहसापेक्षत्वात् तद्ग्राहकस्य प्रत्यक्षस्यापेक्षितार्थ-ग्राहकतयोपजीव्यत्वमिति वाच्यम्, ऐक्यस्यात्मस्वरूपत्वेन भेदविरह-रूपत्वायोगात्, भेदस्यैक्यविरहरूपत्वेऽन्योन्याश्रयप्रसङ्गात्, यथाकथञ्चिदपेक्षामात्रेणोप-जीव्यत्वे नेदं रजतमित्यत्रापीदं रजतमित्यस्योपजीव्यतापत्तेश्च। तस्मात् प्रत्यक्षं न परीक्षितम्। शब्दस्तु परीक्षितः। तेन च परीक्षित-प्रमाणभावेन प्रत्यक्षस्य बाधो युक्त इति भावः। तत् किं प्रत्यक्षं सर्वथैवाऽप्रमाणम्? नेत्याह—**पाकरक्त** इति।

**आगमविरोधात्, मेरुपाषाणमयत्वानुमानवत्। नाप्यागमान्तर-विरोधः; तत्परातत्पर-वाक्ययोस्तत्पर-वाक्यस्य बलवत्त्वेन लोकसिद्ध-भेदानुवादि-द्वा-**

**धर्म**भेदविषयत्वाच्चेति। रक्तोऽयं न श्याम इत्यत्र यथेदंपदार्थे रक्तत्वविशिष्टे घटे श्यामत्व-विशिष्ट-घटस्य भेदो नावभासते, तस्यैक्यप्रत्यभिज्ञया बाधितत्वात्, किन्तु तद्विशेषणी-भूतयोः श्यामत्वरक्तत्वयोर्भेदो भासते, विशेष्यबाधितस्य विधेयस्य विशेषणोपसंक्रान्ति-नियमात्, सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामतः सति विशेष्ये बाधे इति न्यायात्। तथा नाहं ब्रह्मेत्यादौ जीवत्वविशिष्टचैतन्ये ईश्वरत्वविशिष्टचैतन्यस्य भेदो नावभासते, तद्भेदस्य श्रुतिबाधितत्वात्। किन्तु तद्विशेषणीभूतयोर्धर्मयोर्जीवत्वेश्वर-त्वयोर्भेदो भासते। तथा चास्य प्रत्यक्षस्य धर्मभेदविषयकतया प्रामाण्यमिति भावः। ननु मास्तु प्रत्यक्षविरोधादागमस्योपचरितार्थत्वम्, अनुमानविरोधात् तूपचरितार्थत्वं केन वारणीयमित्यत आह—**अत** एवेति। परीक्षितशब्दापेक्षयाऽपरीक्षितप्रमाणभाव-स्यापि शब्दस्य दुर्बलत्वादेवेत्यर्थः। **न प्रमाणम्** न जीवेश्वर-भेदसाधकम्। तत्र हेतु-माह—**आगम**विरोधादिति। जीवपरैक्यसाधकागम-विरोधादित्यर्थः। नन्वनुमानस्य शब्दबाध्यत्वं क्व दृष्टम्? तत्राह—**मेरु**पाषाणेति। मेरुः पाषाणमयः पर्वतत्वाद् विन्ध्यादि-वदित्यनुमानं यथा "मध्ये पृथिव्यामद्रीन्द्रो भास्वान् मेरुर्हिरण्मय" इत्याद्यागमविरोधान्न प्रमाणम्। तद्वज्जीवेश्वरभेदानुमानमप्यागमविरोधान्न प्रमाणमित्यर्थः। यद्येतादृशानि मेरु-हिरण्मयत्वबोधकान्यागमवचनानि प्रत्यक्षादिविरोधादुपचरितार्थानि प्रशंसापराणि स्युस्तदात्र नरशिरःशौचानुमानं दृष्टान्ततयोद्भावनीयम्। ननु मास्त्वनुमानं प्रबलम्। भेदश्रुतिस्तु प्रबला, निर्दोषत्वात्। तद्विरोधान्महावाक्यस्यैवान्यपरत्वं युक्तमित्यत आह—**नाप्यागम**ान्तरेति। तत्र हेतुमाह—**तत्पर**ेति। द्वयोर्वाक्ययोर्मध्ये यस्य स्वार्थे तात्पर्यम्, तत् तत्परम्। यस्य च स्वार्थे न तात्पर्यम्, तदतत्परम्। तत्र तत्परवाक्य-मितरापेक्षया झटित्यर्थबोधकत्वात् प्रबलमितरद् दुर्बलमिति भावः। अस्तु तत्परवाक्य-स्यातत्परवाक्यापेक्षया प्राबल्यम्। तेन किमित्यत आह—**लोक**सिद्धेति। "द्वा सुपर्णे"-त्यादिवाक्यं हि लोकसिद्ध-भेदानुवादकतया स्वार्थतात्पर्यरहितम्, ज्ञातज्ञापनेऽप्रामाण्या-पत्तेस्तत्र शास्त्रतात्पर्यायोगात्। तस्मात् तन्न भेदपरम्। महावाक्यन्तु न तथा, तदर्थस्य जीवपरैक्यस्य सर्वथैवाऽज्ञातत्वात्। तस्मात् तत्रैव तस्य तात्पर्यम्। तथा च तत्परातत्पर-वाक्ययोस्तत्परवाक्यस्य प्राबल्यान्महावाक्यं प्रबलम्, तत्परत्वात्। "द्वा सुपर्णे"त्यादि-

**सुपर्णादि-वाक्यापेक्षयोपक्रमोपसंहाराद्यवगताद्वैत-तात्पर्य-विशिष्टस्य तत्त्व-मस्यादि-वाक्यस्य प्रबलत्वात्। न च जीवपरैक्ये विरुद्धधर्माश्रयत्वानुपपत्तिः, शीतस्यैव जलस्यौपाधिकौष्ण्याश्रयत्ववत् स्वभावतो निर्गुणस्यैव तस्यान्तः-करणाद्यौपाधिक-कर्त्तृत्वाद्याश्रयत्व-प्रतिभासोपपत्तेः। यदि च जलादावौष्ण्य-**

वाक्यन्तु दुर्बलम्, अतत्परत्वात्। तस्मान्न तेन महावाक्यस्य बाधोऽन्यार्थत्वं वा, निर्दोषस्यापि तस्य भेदपरत्वाभावेनैक्यश्रुत्या विरोधाभावादिति भावः।

नन्वनयोर्भेदैक्ययोः स्वार्थत्वाविशेषेऽप्यैक्ये तात्पर्यं न भेदे इत्यत्र किं नियामक-मित्यत आह—**उपक्रमे**ति। छान्दोग्ये हि—एकमेवाद्वितीयं ब्रह्मेत्युपक्रमः। ऐतदात्म्य-मिदं सर्वमित्युपसंहारः। तत्त्वमसीत्यादि-नवधाऽभ्यासः। आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये इति फलम्। उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्यर्थवादः। सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्याद्युपपत्तिः। अपूर्वत्वन्तु प्रसिद्धम्, तदैक्यस्य प्रमाणान्तराबोध्यत्वात्। तथा च यस्मिन्नर्थे उपक्रमादीनि तात्पर्यग्राहकाणि लिङ्गान्युपलभ्यन्ते, तत्रैव तद्वाक्यस्य तात्पर्यम्। ऐक्ये यथा तात्पर्य-लिङ्गान्युपलभ्यन्ते न तथा भेदे। तेन तद्वाक्यानां न भेदपरत्वमिति भावः। न च "द्वा सुपर्णे"त्यादिवाक्यमैक्यश्रुतिविरोधादप्रमाणमिति वाच्यम्, तस्य व्यावहारिकभेदविषय-त्वेन प्रमाणत्वात्, प्रतीयमानार्थे चाभेदश्रुतिविरोधेनाप्रामाण्यस्येष्टत्वाच्च। ननु जीवे-श्वरयोरैक्ये विरुद्धधर्माश्रयत्वं न स्यात्, तस्य भेदव्याप्तत्वात्। अस्ति च तयोर्विरुद्ध-धर्माश्रयत्वम्। तच्चान्यथाऽनुपपद्यमानं तयोर्भेदं कल्पयतीत्यर्थापत्तिरेव तयोर्भेदे मानम्। तद्विरोधात् तस्योपचरितार्थत्वमित्यत आह—**न चे**ति। सत्यामनुपपत्तौ तद्भेदः सिध्येत्। सैव त्वसिद्धा, अन्यथोपपत्ति-सम्भवादिति सदृष्टान्तमाह—**शीतस्यैवे**ति। स्वभावतः शीतस्यैवेत्यर्थः। **औपाधिके**ति। अग्निसंयोगरूपोपाधि-प्रयोज्येत्यर्थः। यथा जले औष्ण्याभावेऽपि जलान्तर्गताग्निगतौष्ण्यस्य दोषात् तत्र प्रतीतिरुष्णं जलमिति, तद्वदित्यर्थः। **तस्य** ईश्वरस्य। **अन्तःक**रणादीत्यादिपदान्मायापरिग्रहः। **प्रतिभा-सोपपत्ते**रिति। यथा जले औष्ण्याभावेऽपि तदुपाधिगतस्यौष्ण्यस्य दोषात् तत्र प्रतीति-स्तथा जीवेश्वरयोः कर्त्तृत्वाद्यभावेऽपि तदुपाधिगतस्य कर्त्तृत्वादेर्दोषात् तत्र प्रतीतिरिति भावः। ननु जलानुप्रविष्टाग्निगतौष्ण्यस्य जले भानाङ्गीकारेऽन्यथाख्यातिः स्यात्, औष्ण्य-

**मारोपितम्, तदा प्रकृतेऽपि तुल्यम्। न च सिद्धान्ते कर्त्तृत्वस्य क्वचिदप्यभावादारोप्य-प्रमाहित-संस्काराभावे कथमारोप इति वाच्यम्, लाघवेनारोप्यविषयक-संस्कारत्वेनैव तस्य हेतुत्वात्। न च प्राथमिकारोपे का गतिः, कर्त्तृत्वाद्यध्यास-प्रवाहस्यानादित्वात्।**

संसर्गमात्रस्य तत्रारोप्यत्वात्। सा च नेष्टा, अनभ्युपगमादित्यस्वरसादाह—**यदि चे**ति। **आरोपितम्** अध्यस्तम्। **प्रकृतेऽपि** आत्मन्यपि। **तुल्यमि**ति। कर्त्तृत्वादिकमारोपितमित्यर्थः। तथा च कर्त्तृत्वादि-धर्मविशिष्टस्यैवाहङ्कारस्यात्मन्यध्यस्ततया नान्यथाख्यातिः, तस्याः संसर्गमात्रारोपस्वरूपत्वादत्र च तथाभावादिति भावः। न च कर्त्तृत्वस्यात्मन्यध्यासाङ्गीकारे जवाकुसुमलौहित्यवदहङ्कारगतसत्यकर्त्तृत्वमात्मगतमिथ्याकर्त्तृत्वञ्चेति कर्त्तृत्वद्वयावभासप्रसङ्ग इति वाच्यम्, कर्त्तृत्वद्वयेऽपि धर्मिणोरेकत्वापत्त्या धर्मभेदानवभासात्। नन्वेवमपि कर्त्तृत्वादीनामध्यासो नोपपद्यते, अध्यासस्याध्यस्तविषयक-प्रमासंस्कारजन्यत्वात्, ब्रह्मातिरिक्तस्य सर्वस्यापारमार्थिकत्वेन कर्त्तृत्वादेरप्यपारमार्थिकत्वात् तद्विषयकज्ञानस्य प्रमात्वाभावेन प्रमासंस्काराभावादित्याशङ्क्य निराकरोति—**न चे**ति। **सिद्धान्ते** वेदान्तसिद्धान्ते। **कर्त्तृत्वस्य** पारमार्थिक-कर्त्तृत्वस्य। **क्वचित्** आत्मन्यन्तःकरणे वा, आत्मनो निर्धर्मकत्वात्, अन्तःकरणस्याचैतन्यात्, आत्मातिरिक्तस्य सर्वस्यापारमार्थिकत्वाच्चेति भावः। **आरोप्य**प्रमेति। आरोप्यविषयिणी या प्रमा, तया आहितः उत्पादितो यः संस्कारस्तस्याभावे इति विग्रहः। **कथमि**त्याक्षेपे, नेत्यर्थः। आरोप्यहेतोरारोप्यप्रमाहित-संस्कारस्याभावादिति भावः। शङ्कानिराकरणहेतुमाह—**लाघवे**नेति। आरोप्यविषयक-प्रमासंस्कारापेक्षयाऽऽरोप्यविषयकसंस्कारस्य लघुत्वेनेत्यर्थः। **तस्य** आरोप्यविषयक-संस्कारस्य। नन्वारोप्यविषयक-संस्कारस्यारोपहेतुत्वे प्रथमारोपो न स्यात्, तत्पुर्वं तद्धेतोरारोप्यसंस्कारस्याभावादित्याशंक्य निषेधति—**न चे**ति। **का गतिः** अगतिः। तत्र हेतुमाह—**कर्त्तृत्वादी**ति। **अनादित्वा**दिति। इदंप्राथम्याभावादित्यर्थः। तथा चोक्तं विवरणे प्रथमवर्णके—तत्र भोक्तृत्वाध्यासः कर्त्तृत्वाध्यासमपेक्षते, अकर्त्तुर्भोगाभावात्, कर्त्तृत्वञ्च रागद्वेषसंयोगाध्यासमपेक्षते, तद्रहितस्य कर्त्तृत्वाभावात्, दोषसंयोगश्च भोक्तृत्वमपेक्षते, अनुपभुक्ते तज्जातीये वा रागाद्यनुपपत्तेः। एवं बीजाङ्कुरवद्धेतुपरम्परयाऽनादित्वादध्यासस्य नैसर्गिकत्वमिति। ननु तत्त्वमस्यादिवाक्यानामभेदपरत्वेऽपि जीवब्रह्मणोरभेदो नैव घटते, विरुद्धत्वात्। न ह्यागमाः सहस्रमपि घटं पटयितुमीशते। तत्

**तत्र तत्त्वम्पद-वाच्ययोर्विशिष्टयोरैक्यायोग्यत्वेऽपि लक्ष्यस्वरूपयोरैक्यमुपपादितमेव। अत एव तत्प्रतिपादक-तत्त्वमस्यादिवाक्यानामखण्डार्थत्वम्, सोऽयमित्यादि-वाक्यवत्। न च कार्यपराणामेव प्रामाण्यम्, "चैत्र! पुत्रस्ते जात" इत्यादौ सिद्धेऽपि सङ्गतिग्रहात्। एवं सर्वप्रमाणाविरुद्धं श्रुतिस्मृतीतिहास-पुराणप्रतिपाद्यं जीवपरैक्यं वेदान्तशास्त्रस्य विषय इति सिद्धम्।**

**इति श्रीमन्महामहोपाध्याय-धर्मराजाध्वरीन्द्र-**
**विरचितायां वेदान्त-परिभाषायां**
**विषयपरिच्छेदः**

कथं तत्त्वंपदार्थयोरैक्यं महावाक्यप्रतिपाद्यं भवेदित्यत आह—**तत्रे**ति। महावाक्ये इत्यर्थः। **तत्त्वंपदवाच्ययोः** सर्वज्ञासर्वज्ञयोर्जीवेशयोः। **विशिष्टयोः** सर्वज्ञत्वासर्वज्ञत्वयुक्तयोः। **अयोग्यत्वे**ऽपीति। विरुद्धधर्माक्रान्तत्वादिति भावः। **लक्ष्यस्वरूपयो**रिति। सम्प्रदायमतेनेदमुक्तम्, स्वमते लक्षणाभावस्य प्रागुक्तत्वादिति भावः। नन्वस्तु-तत्त्वंपदलक्ष्ययोरैक्यम्। ततः किमित्यत आह—**अत एवे**ति। तत्त्वंपदलक्ष्ययोरैक्यस्योपपादितत्वादेवेत्यर्थः। **तत्प्रतिपादके**ति। ऐक्यप्रतिपादकेत्यर्थः। ननु वेदान्तानामखण्डैकब्रह्मपरत्वं नैव युक्तम्, तेषां कार्यपरत्वेनैव प्रामाण्यात्, "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थाना"मिति जैमिनिसूत्रात्, तस्मात् तत्त्वमस्यादिवाक्यानामभेदोपासनापरत्वमित्याशङ्क्य निषेधति—**न चे**ति। **कार्य**पराणामेवेति। एवकारेण सिद्धपरवाक्यव्यवच्छेदः। निषेधहेतुमाह—**चैत्र** इति। **इत्यादा**वित्यादिपदेन कन्या ते गर्भिणीत्यादिवाक्यपरिग्रहः। **सिद्धेऽपि** कृत्यसाध्ये पुत्रादावपि। **सङ्गतिग्रहात्** पुत्रादिपदानां शक्तिग्रहात्। परमपुरुषार्थभूतस्य जीवब्रह्मणोरैक्यस्य निरूपणमुपसंहरति—**एवमि**ति। **सर्वप्र**माणाविरुद्धमिति। सर्वप्रमाणानां व्यावहारिक-भेदपरत्वात्, श्रुतेस्तु तात्त्विकाभेद-परत्वाद् व्यावहारिकार्थ-तात्त्विकार्थपरयोः प्रमाणयोर्विरोधाभावादिति भावः।

इति श्रीमन्महामहोपाध्याय-द्राविड़-लक्ष्मण-शास्त्रि-पूज्यपाद-शिष्य-
श्रीमन्महामहोपाध्याय-योगेन्द्रनाथ-तर्कसांख्यवेदान्ततीर्थ-
श्रीचरणान्तेवासि-श्रीपञ्चानन-भट्टाचार्य-विरचिते
परिभाषा-संग्रहे विषयपरिच्छेदः

## प्रयोजन-परिच्छेदः

**इदानीं प्रयोजनं निरूप्यते। यदवगतं सत् स्ववृत्तितयेष्यते, तत् प्रयोजनम्। तच्च द्विविधं—मुख्यं गौणञ्चेति। तत्र सुखदुःखाभावौ मुख्ये प्रयोजने। तदन्यतर-साधनं गौणं प्रयोजनम्। सुखं च द्विविधं—सातिशयं**

जीवब्रह्मैक्यावधारण-फलं निरूपयितुं प्रतिजानीते—**इदानीमि**ति। तत्रादौ प्रयोजनं निरूपयति—**यदि**ति। **स्ववृत्ति**तयेति। स्वस्मिन् वृत्तिर्यस्येति व्युत्पत्त्या स्वसम्बन्धितयेत्यर्थः। स्वेन वृत्तिर्वर्त्तनमिति व्युत्पत्त्या च स्वात्मकतयेत्यर्थः। तथा च सातिशयस्य वैषयिकसुखस्य निरतिशयसुखस्य च ब्रह्मात्मक-मोक्षस्य प्रयोजनत्वनिर्वाहः, वैषयिकसुखस्य स्वसम्बन्धितयेष्यमाणत्वात्, निरतिशयसुखस्य च स्वसम्बन्धितयेच्छाविषयत्वाभावेऽपि स्वात्मकतयेच्छाविषयत्वात्। तथा च यत् स्ववृत्तितया स्वात्मकतया वावगतं सत् तथैवेष्यते, तत् प्रयोजनमिति फलितोऽर्थः। एवञ्च स्ववृत्तितया स्वात्मकतया वा प्रमितत्वे सति तत्तयेच्छाविषयत्वं प्रयोजनत्वमिति लक्षणं फलितम्। सुखादिकं हि ममेदं सुखादिकमिति स्वसम्बन्धितया ज्ञातं सत् सुखादिकं मे भूयादिति स्वसम्बन्धितयेष्यते, तेन सुखत्वादिरूपेण सुखादिकं प्रयोजनमिति सुखादौ तल्लक्षणसमन्वयः। इच्छाविषयत्वं प्रयोजनत्वमित्युक्तौ उपकाराचरणेन परकीयसुखं सम्पादयामीच्छाविषयीभूते परकीयसुखे लक्षणस्यातिव्याप्तिस्तद्वारणायाह—**स्ववृत्ति**तयेति। तथा च तादृशसुखस्येच्छाविषयत्वेऽपि स्वसम्बन्धितयेच्छाविषयत्वाभावान्नातिव्याप्तिरिति भावः। तत्र स्ववृत्तितयेच्छाविषयत्वं प्रयोजनत्वमित्युक्तौ राजसुखादावतिव्याप्तिः, तस्यापि स्ववृत्तितयेच्छाविषयत्वात्। तद्वारणाय—सत्यन्तदलम्। यत्रानिष्टमिष्टत्वेन ज्ञातं सत् स्ववृत्तितयेष्यते, तत्रानिष्टस्य प्रयोजनत्ववारणाय बुद्धिविषयत्वं विहाय प्रमितत्वे सतीत्युक्तम्। अनिष्टस्य स्ववृत्तितयाऽवगतत्वेऽपि स्ववृत्तितयेष्यमाणत्वेऽपि प्रमितत्वाभावान्नातिव्याप्तिः। राजदण्डादावतिव्याप्तिवारणाय विशेष्यदलम्। प्रयोजनं विभजते—**तच्चे**ति। **मुख्यम्** अन्येच्छानधीनेच्छाविषयः। **गौणम्** अन्येच्छाधीनेच्छाविषयः। मुख्यमुदाहरति—**तत्रे**ति। द्वयोः प्रयोजनयोर्मध्ये इत्यर्थः। **मुख्ये** इति। तयोरन्येच्छानधीनेच्छाविषयत्वेन स्वतःपुरुषार्थत्वादिति भावः। गौणप्रयोजनं दर्शयति—**तदन्यतरे**ति। सुखदुःखाभावयोरन्यतरस्य साधनमित्यर्थः। **गौण**मिति। अन्येच्छाधीनेच्छाविषयत्वात्,

**निरतिशयं चेति। तत्र सातिशयं सुखं विषयानुषङ्ग-जनितान्तःकरण-वृत्ति-तारतम्य-कृतानन्दलेशाविर्भाव-विशेषः, "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुतेः। निरतिशय-सुखं च ब्रह्मैव, "आनन्दो ब्रह्मेति व्यजानाद्" "विज्ञानमानन्दं ब्रह्मे"त्यादि-श्रुतेः। आनन्दात्मक-ब्रह्मप्राप्तिश्च**

साधनेच्छां प्रति फलेच्छाया हेतुत्वादिति भावः। एवञ्च सुखदुःखाभाव-तत्साधनान्यतरस्य प्रयोजनरूपत्वाद् धर्मार्थकाममोक्षाणां न प्रयोजनत्वव्याहतिस्तेषां तत्तदन्यतरान्तःपातित्वात्। तेन न पूर्वापरग्रन्थविरोधः। सुखं विभजते—**सुखञ्चे**ति। **सातिशयं** तारतम्यवत्, न्यूनाधिक-भाववदिति यावत्। सातिशयसुखस्वरूपं दर्शयति—**तत्रे**ति। सातिशयनिरतिशयसुखयोर्मध्ये इत्यर्थः। **विषये**ति। विषयानुषङ्गः स्रक्चन्दनवनितादि-विषयसम्बन्धः, विषयावगतिरिति यावत्, तज्जनितं यदन्तःकरणवृत्ति-तारतम्यम्, तत्कृतो य आनन्दलेशस्याविर्भावविशेषः प्रकाशविशेषः, स एव सातिशयसुखमित्यर्थः। यस्यामन्तःकरणवृत्तौ चैतन्यस्यानन्दांशः प्रतिविम्बते, आनन्दप्रतिविम्बवत्-तदन्तःकरण-वृत्तिरेव सुखमित्यभिधीयते। तत्रानन्दप्रतिविम्बस्याल्पत्वे सुखस्याल्पत्वमाधिक्ये चाधिक्यमिति सुखतारतम्यम्। तादृशान्तःकरणवृत्तिं प्रति स्रक्चन्दनादिविषयानुभवो हेतुस्तथैवान्वयव्यतिरेकदर्शनात्। तत्र विषयतारतम्याद् विषयानुभवतारतम्यम्। विषयानुभवतारतम्याच्च तादृशान्तःकरणवृत्तेस्तारतम्यम्। तत्रान्तःकरणवृत्तावल्पानन्द-प्रतिविम्बेऽल्पं सुखम्, अधिकानन्द-प्रतिविम्बेऽधिकं सुखमित्यस्मदादिसुखस्य निकृष्टत्वं स्वर्गादि-सुखस्योत्कृष्टत्वमिति सुखतारतम्यव्यवहार इति भावः। तत्र श्रुतिं प्रमाणयति—**एतस्यैवे**ति। **आनन्दस्य** नित्यानन्दमयस्य ब्रह्मणः। **अन्यानि भूतानि** स्रक्चन्दनादीनि। **मात्रां** लेशम्। **उपजीवन्ति** आश्रयन्ते। तथा चान्येषां स्वभावत आनन्द-रहितानामपि ब्रह्मानन्दयोगादानन्दहेतुत्वम्। सोऽयमानन्दयोगो नैकरूपः किन्तु बहुरूप इति सिद्धमानन्दस्य तारतम्यमिति भावः। निरतिशयसुखमुदाहरति—**निरतिशये**ति। ब्रह्मण आनन्दरूपत्वे श्रुतिं प्रमाणयति—**आनन्द** इति। **व्यजानात्** विज्ञातवान्। **इत्यादी**त्यादिपदेन "यदेष आकाश आनन्द" इत्यादि-श्रुतिपरिग्रहः। ननु निरतिशयानन्दरूपत्वाद् ब्रह्म प्रयोजनमस्तु। तन्निरूपणन्तु प्रथमं नैवोचितम्, मोक्षस्यैव प्रथमं निरूपणीयत्वात्, "स च ब्रह्मज्ञानादिति ब्रह्म तज्ज्ञानं तत्प्रमाणञ्च सप्रपञ्चं निरूप्यते" इत्युक्तेरित्यत आह—**आनन्दात्मके**ति। आनन्दात्मकब्रह्मात्मत्वस्फुरण-

**मोक्षः शोकनिवृत्तिश्च, "ब्रह्मविद् ब्रह्मैव भवति" "तरति शोकमात्मविदि"-त्यादि-श्रुतेः। न तु लोकान्तरावाप्तिः, तज्जन्य-वैषयिकानन्दो वा, तस्य कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः।**

मित्यर्थः। ब्रह्मात्मकोऽपि जीवः स्वाविद्ययावृतः स्वं रूपं ब्रह्मात्मकं न जानाति। यदा त्वस्य तत्त्वज्ञानोदयस्तदाज्ञाननिवृत्त्या स्वरूपस्य ब्रह्मात्मैक्यस्य प्रकाशो भवति। सोऽयं प्रकाशो ब्रह्मप्राप्तिरिति गीयते, अन्यादृश्याः प्राप्तेरसम्भवात्। स एव च मोक्षः, ब्रह्मरूपत्वात्। तदेव च परं प्रयोजनम्, तल्लक्षणयोगात्, स्वात्मकतया प्रमितत्वात् स्वात्मकतयेष्यमाणत्वाच्चेति भावः। नन्वानन्दात्मकब्रह्मप्राप्तिर्न मोक्षः, तस्या नित्यत्वेन तद्रूपस्य मोक्षस्य तत्त्वज्ञानासाध्यत्वप्रसङ्गात्, सर्वैस्तीर्थकरैर्मोक्षस्य तत्त्वज्ञानसाध्यत्वाभ्युपगमात्, अविद्यानिवृत्तेश्च मोक्षत्वाभ्युपगमात्, "अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृत" इत्युक्तेरित्यत आह—**शोक**निवृत्तिश्चेति। तथा चाविद्यानिवृत्त्युपलक्षित-नित्यानन्दब्रह्म-स्वरूप-प्रकाशस्य मोक्षत्वम्, न केवलस्य ब्रह्मणः। एवञ्च नित्यानन्द-ब्रह्मप्रकाशस्य नित्यतयाऽसाध्यत्वेऽपि तादृशोपलक्षित-ब्रह्मात्मकमोक्षस्य नासाध्यता, उपलक्षणसाध्यतयैव तत्साध्यत्वोपपत्तेरिति भावः। मोक्षस्यानन्दात्मक-ब्रह्मरूपत्वे दुःखनिवृत्तिरूपत्वे च क्रमेण श्रुतिं प्रमाणयति—**ब्रह्म**विदिति। **ब्रह्मै**वेति। एवकारेण निरूपाधिक-ब्रह्मस्वरूपत्वं दर्शितम्। **तरति** निवर्त्तयति। **शोकं** दुःखजातम्। **इत्यादी**त्यादिपदेन—"तत्र को मोहः कः शोक एकत्वमनुपश्यत" इत्यादिश्रुतिर्ग्राह्या। ननु सालोक्यादेरपि मुक्तित्वं श्रूयते, "सालोक्यमथ सारूप्यं सार्ष्टिः सामीप्यमेव च। सायुज्यञ्चेति मुनयो मुक्तिं पञ्चविधां विदु"रिति। तत् कथमानन्दात्मकब्रह्मावाप्तेर्दुःखनिवृत्तेर्वा मोक्षत्वमुच्यते इत्यत आह—**न त्वि**ति। **लोकान्त**रावाप्तिः वैकुण्ठादिलोकप्राप्तिः। तथा च वैकुण्ठादिलोकप्राप्तेर्न मोक्षत्वम्, सुखदुःखाभावरूपत्वाभावात्। बाह्यदुःखाभावमात्रसाम्यात् सालोक्यादि-चतुष्टयानां गौणो मोक्षव्यपदेशः। सायुज्यस्य तु निर्वाणाख्यस्य मुख्यं मोक्षत्वम्, ब्रह्मविद् ब्रह्मैव भवतीत्यादिश्रुतेरिति भावः। ननु मास्तु लोकान्तरावाप्तेः सुखस्वरूपत्वाभावान् मोक्षत्वम्, तज्जन्यानन्दस्य तु मोक्षत्वं स्यात्, तस्य नित्यत्वादित्याशङ्क्य निषेधति—**तज्जन्ये**ति। लोकान्तरावाप्तिजन्येत्यर्थः। निषेधहेतुमाह—**तस्ये**ति। लोकान्तरीयवैषयिकानन्दस्येत्यर्थः। **कृतकत्वेन** कर्मविशेषजन्य-लोकान्तरप्राप्तिजन्यत्वेन। **अनित्यत्वे** इति। कर्मणः क्षये कर्मविशेषजन्यस्य क्षयावश्यम्भावात्, "तद् यथेह कर्म-

**ननु तन्मतेऽप्यानन्दावाप्तेरनर्थनिवृत्तेश्च सादित्वे तुल्यदोषः, अनादित्वे मोक्षमुद्दिश्य श्रवणादौ प्रवृत्त्यनुपपत्तेरिति चेन्न, सिद्धस्यैव ब्रह्मरूपस्य मोक्षस्यासिद्धत्वभ्रमेण तत्साधने प्रवृत्त्युपपत्तेः। अनर्थनिवृत्तिरप्यधिष्ठानभूत-**

चितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादिश्रुतेरिति भावः। वैषयिकानन्दस्यानित्यत्वे फलमाह—**मुक्तस्ये**ति। सालोक्यादिमुक्तिमतः पुरुषस्येत्यर्थः। कर्मजनितलोकस्थितेः कर्मणः क्षये क्षयावश्यम्भावात्, "क्षीणे पुण्ये मर्त्यलोकं विशन्ती"ति भगवद्वचनादिति भावः। न च वैकुण्ठादिलोकविशेषं गतानां तत्राक्षय्यमेव सुखमुत्पन्नमिति वाच्यम्, उत्पन्नस्य कार्यत्वेनाक्षय्यत्वानुपपत्तेः। किञ्च साधनपरतन्त्रस्य वैषयिकानन्दस्य स्वर्गादिवत् सातिशयत्वेनामोक्षत्व-प्रसङ्गः; निरतिशयसुखस्यैव मोक्षत्वात्। अपि च वैषयिकानन्दस्य शरीरजन्यत्वात् तत्र तच्छरीरकल्पनायां "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इत्यादि-श्रुतिविरोधप्रसङ्गश्च। तस्मादात्माभिन्नमानन्दात्मकं ब्रह्मैव मोक्ष इति वेदान्तसिद्धान्तः।

ननु भवन्मतेऽपि श्रुतिविरोधः, आनन्दावाप्तेरनर्थनिवृत्तेर्वा सादित्वे तस्याः कृतकत्वेनानित्यतया क्षये मुक्तानां पुनरावृत्त्यापातात्। न च मुक्तः पुनरावर्त्तते, अपुनरावृत्तिश्रुतेः। अनादित्वे च तस्या असाध्यतया तत्साधकश्रवणादौ प्रवृत्त्यभावप्रसङ्गादिति शङ्कते—**नन्वि**ति। **सादित्वे** साध्यत्वे। **अनादित्वे** असाध्यत्वे, नित्यत्वे इति यावत्। **श्रवणादा**वित्यादिपदेन मनननिदिध्यासनयोः परिग्रहः। शङ्कां परिहरति—**ने**ति। **सिद्धस्यैवे**ति। तथा च नाद्यपक्षोक्त-दोषावकाशः, असिद्धत्वपक्ष एव तत्प्रसरादिति भावः। **असिद्धत्वभ्रमेणे**ति। तथा च न द्वितीयपक्षोक्तदोषः, साधनप्रवृत्तौ प्रतिबन्धकस्य सिद्धत्वज्ञानस्याभावादिति भावः। **तत्साधने** मोक्षसाधने। **प्रवृत्त्यु**पपत्तेरिति। प्रवृत्तौ हि कारणमिष्टसाधनताज्ञानम्। तच्च नाहं ब्रह्मेति भ्रमवतः पुरुषस्यापि सम्भवति श्रवणं ममेष्टसाधनमिति। अतो न तस्य प्रवृत्त्यनुपपत्तिरिति भावः। न च प्रमात्मकेष्टसाधनताज्ञानं प्रवृत्तौ कारणम्। तच्च भ्रमवतः पुरुषस्य न सम्भवतीति न तस्य प्रवृत्त्युपपत्तिरिति वाच्यम्, प्रवृत्तिसामान्यं प्रति भ्रमप्रमासाधारणस्येष्टसाधनताज्ञानस्य हेतुत्वात्, प्रमात्मकेष्ट-साधनताज्ञानस्य कारणत्वकल्पनापेक्षयेष्टसाधनताज्ञानस्य कारणत्वकल्पनायां लाघवात्, इष्टसाधनताभ्रमेण लोकप्रवृत्तेर्बहुशो दृष्टत्वाच्च। नन्वकृतश्रवणानां पुंसां तादृशभ्रमसम्भवेऽपि कृतश्रवणानां तादृशभ्रमो नैव भवेत्, तेषां सिद्धत्वज्ञान-सद्भावात्। तथा

**ब्रह्मस्वरूपतया सिद्धैव। लोकेऽपि प्राप्तप्राप्ति-परिहृत-परिहारयोः प्रयोजनत्वं दृष्टमेव। यथा स्वहस्तगत-विस्मृत-सुवर्णादौ तव हस्ते सुवर्णमित्याप्तोपदेशादप्राप्तमिव प्राप्नोति। यथा वा बलयित-चरणायां स्रजि सर्पत्वभ्रमवतः**

च तेषां श्रवणादौ न प्रवृत्त्युपपत्तिरिति चेत्, नाहं ब्रह्मेति प्रत्यक्षविरोधेन तादृशसिद्धत्वज्ञानस्य प्रामाण्यानिश्चयात् तादृशभ्रम-सम्भवात्, अविद्योच्छेदोपलक्षितस्य पुर्णानन्दरूपस्यात्मनो मोक्षत्वात् तस्य स्वरूपतोऽसाध्यत्वेऽप्युपलक्षणसाध्यतयैव साध्यत्वसम्भवात् तत्साधने प्रवृत्त्युपपत्तेः। अत एवोक्तमद्वैतसिद्धावविद्यानिवृत्तिनिरूपणे—प्राप्तप्राप्तिरूपतया फलस्यानन्दप्रकाशस्य स्वरूपतोऽसाध्यत्वेऽपि तत्तिरोधायकाज्ञाननिवर्त्तकवृत्तेः साध्यत्वमात्रेण साध्यत्वोपपत्तेरिति। तद्व्याख्याने च लघुचन्द्रिकायां—आनन्दप्रकाशस्य फलत्वं न जन्यत्वम्, किन्तु व्यङ्ग्यत्वम्। तच्च जन्यस्यावरणनाशस्याश्रयत्वम्। तत्र नाशो यद्युक्तात्मस्वरूपः, तदोपलक्षणस्य जन्यत्वाज्जन्यत्वम्। अथ वृत्तिरेव, तदा सा जन्यैवेतीति। नन्वस्तु ब्रह्मरूपाया मुक्तेर्नित्यत्वात् सिद्धत्वम्। शोकनिवृत्तिरूपायास्तु मुक्तेर्न सिद्धत्वम्, तस्या जन्यत्वात्। तथा च तस्या जन्यत्वेन क्षयावश्यम्भावाद् मुक्तेर्निवृत्तौ मुक्तस्य पुनरावृत्त्याऽपुनरावृत्ति-श्रुतिविरोधस्तुल्य इत्यत आह—**अनर्थ**निवृत्तिरिति। अविद्यानिवृत्तिरित्यर्थः। **अधिष्ठाने**ति। यथा लोके सकारणस्य रजतविभ्रमस्य निवृत्तिर्ज्ञाता शुक्तिरेव। तथाऽविद्यानिवृत्तिरप्यधिष्ठानभूतं ज्ञातं ब्रह्मैव, ध्वंसस्याऽधिकरणरूपत्वात्, अधिकरणातिरिक्ताभावानभ्युपगमात्। एवं सति—"यस्मिन् सर्वाणि भूतान्यात्मैवाऽभूद् विजानतः" "यत्र त्वस्य सर्वमात्मैवाभूदि"त्याद्याः श्रुतयः सर्वस्य द्वैतजातस्यात्ममात्रतया प्रविलयमुपपादयन्त्यो मुख्यार्था भवेयुः, अन्यथैता उपचरितार्थाः कदर्थिताः स्युरिति भावः। एतेन—अज्ञाननिवृत्तेरनित्यत्वे पुनरज्ञानस्य संसारस्य चोन्मज्जनापत्तिरित्यादयो दोषाः प्रत्युक्ताः, शुक्तिशकलादौ ज्ञाननाशेन ज्ञातत्वोपलक्षणनाशेऽपि निवृत्तस्याज्ञानस्य तद्विलासस्य वा पुनरुन्मज्जनादर्शनात्, पुनरुद्भवतो रजतादिविभ्रमस्याज्ञानान्तराधीनत्वात्। **सिद्धैवे**ति। तथा चाज्ञाननिवृत्तेः स्वरूपेण साध्यत्वेऽपि ज्ञातत्वोपलक्षितात्मस्वरूपेण सिद्धत्वान्न तदुच्छेदः, चरमवृत्त्युत्तरमुत्पन्नायास्तस्याः समुच्छेदकाभावात्, किन्तु ज्ञातत्वोपलक्षितात्मस्वरूपेणैवाऽवस्थानमिति न कोऽपि विरोध इति भावः। नन्वनर्थनिवृत्त्यादेः सिद्धत्वे प्रयोजनत्वं न स्यात्, साध्यस्यैव लोके प्रयोजनत्वदर्शनादित्यत आह—**लोकेऽपी**ति। तत्र प्राप्तप्राप्तेः प्रयोजनत्वमुदाहरति—**यथे**ति। परिहृतपरिहारस्य

**पुंसो "नायं सर्प" इत्याप्तवाक्यात् परिहृतस्यैव सर्पस्य परिहारः प्रसिद्धः। एवं प्राप्तस्याप्यानन्दस्य प्राप्तिः, परिहृतस्याप्यनर्थस्य निवृत्तिर्मोक्षः प्रयोजनम्।**

**स च ज्ञानैक-साध्यः, "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"ति श्रुतेः, अज्ञाननिवृत्तेर्ज्ञानैक-साध्यत्वनियमाच्च। तच्च ज्ञानं ब्रह्म-**

प्रयोजनत्वमुदाहरति—**यथा** वेति। **वलयिते**ति। वलयितं वेष्टितं चरणं यया तस्यामिति विग्रहः। **स्रजि** पुष्पमालायाम्। दृष्टान्तदृष्टं प्रयोजनत्वं दार्ष्टान्तिके योजयति—**एव-मि**ति। **प्रयोजनमि**ति। तथाच प्राप्तप्राप्ति-परिहृतपरिहार-स्थले प्राप्ते परिहृते च वस्तुनि स्ववृत्तितयेष्यमाणत्वरूपस्य प्रयोजनलक्षणस्य सद्भावाद् प्रयोजनत्वं युक्तमिति भावः।

तथाविधो मोक्षः केनोपायेन साध्य इत्यत्राह—**स चे**ति। मोक्षश्चेत्यर्थः। **ज्ञानैके**त्येकपदेनोपायान्तर-व्यवच्छेदः। तत्र श्वेताश्वतरश्रुतिं प्रमाणयति—**तमेवे**ति। तं विदित्वैवेत्यपि योज्यम्। **तम्** आत्मानं विदित्वा ज्ञात्वैवेत्यर्थः। **मृत्युं** जन्ममरणात्मकं संसारम्, अविद्यामिति यावत्। **अत्येति** अतिक्रामति। **अन्यः** ज्ञानादितरः। **पन्था** उपायः। **अयनाये**ति। अयनं मार्गः। तेन च गन्तव्यमुपलक्ष्यते। मोक्ष-प्राप्तये ज्ञानव्यतिरेकेणान्यो मार्गो नास्तीत्यर्थः। तत्र श्रुतिसिद्धं मोक्षस्य ज्ञानकसाध्यत्वं युक्त्या द्रढयति—**अज्ञान**निवृत्तेरिति। **ज्ञानैके**ति। अधिष्ठान-तत्त्वसाक्षात्कारमात्रे-त्यर्थः। अज्ञानस्य ज्ञानेनैव विरोधात् कर्मणा विरोधाभावादिति भावः। **नियमात्** दर्शनात्। रज्जुसर्पादिस्थलेऽधिष्ठानतत्त्वसाक्षात्कारमात्रादेव रज्जुसर्पोपादानाज्ञानस्य तत्-कार्यस्य रज्जुसर्पादिभ्रमस्य तत्प्रयुक्तस्य भयकम्पादेश्च निवृत्तिदर्शनात्। न हि रज्ज्वादि-शकलमाकलयतः सर्पादिभ्रमनिवृत्तिः स्नानाचमनादिकर्मापेक्षया विलम्बते। तथा चोक्त-नियमोपोद्बलितया श्रुत्या मोक्षस्य ज्ञानैकसाध्यत्वं सिद्धमिति भावः।

एतेन ज्ञानकर्मणोः समुच्चयोऽपि निराकृतो वेदितव्यः, विरोधात्। भेदज्ञानपूर्विका हि कर्मप्रवृत्तिरभेदज्ञानोदये स्थातुं नार्हति। तत् कथमनयोः साहित्यं भवेत्। विलक्षण-फलवत्त्वात्। उत्पत्त्याप्ति-विकृतिसंस्कृतयः कर्मणां फलम्; विद्यायाः पुनरविद्यास्तमयस्तत् कथमनयोः समुच्चयो भवेत्। मोक्षकारणतानिराकरणात्, "न कर्मणा न प्रजया धनेन" "नास्त्यकृतः कृतेने"त्यादिश्रुति"र्ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते। कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते"॥ इत्यादिस्मृतिश्च कर्मणो मोक्षकारणतां निराकरोति, तत् कथमनयोः सहभावो भवेत्। अपुनरावृत्तित्वव्याघाताच्च। मोक्षस्य कर्मसाध्यत्वे यत् कृतकं

**त्मैक्य-गोचरम्, "अभयं वै जनक प्राप्तोऽसि तदात्मानमेवावेदहं ब्रह्मास्मी"ति श्रुतेः, "तत्त्वमस्यादि-वाक्योत्थं ज्ञानं मोक्षस्य साधन"मिति नारदीय-वचनाच्च। तच्च ज्ञानमपरोक्षरूपम्, परोक्षत्वेऽपरोक्षभ्रम-निवर्त्तकत्वानुपपत्तेः।**

तदनित्यमिति न्यायानुगृहीतया श्रुत्या तस्यानित्यत्वापातेन मुक्तानां पुनरावृत्तावपुनरावृत्ति-व्याहता स्यात्। तत् कथं तयोः समुच्चयः। यत् तु—"अन्धं तमः प्रविशन्ति येऽविद्या-मुपासते। ततो भूय इव ते तमो य उ विद्यायां रताः"॥ "तपो विद्या च विप्रस्य निः-श्रेयसकरं परम्। तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते॥ तत्प्राप्तिहेतुर्ज्ञानञ्च कर्म चोक्तं महामुने। यथान्नं मधुसंयुक्तं मधु चान्नेन संयुक्त"मिति श्रुतिस्मृतिवचनानि समुच्चितयो-र्ज्ञानकर्मणोः मोक्षसाधनत्व-पराणीति। तदप्ययुक्तम्, न्यायानुगृहीतबहुश्रुतिविरोधात् तद्वचनानां यङ्यागवदारादुपकारकत्वप्रतिपादनपरत्वात्। अभ्युपगम्यते हि व्यवधानेन कर्मणां मोक्षसाधनत्वम्। व्यवधानत्वं च करणोपकारो न तदुत्पादकत्वम्।

नन्वस्त्वज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वम्। येन तु ज्ञानेन तस्य तदज्ञानं निवर्त्तनीयम्, तदिदानीं वक्तव्यम्। न हि येन केनचिद् ज्ञानेन यस्य कस्यचिदज्ञानस्य निवृत्तिर्दृष्टेत्यत आह—**तच्चे**ति। **ब्रह्मात्मै**क्यगोचरमिति। ब्रह्मण आत्मनश्च यदैक्यं, तद्विषयक-मित्यर्थः। सर्वानर्थोपादानस्य ब्रह्मात्मैक्याज्ञानस्य ब्रह्मात्मैक्यज्ञाननिवर्त्तनीयत्वात्, ज्ञानस्य च समानाश्रयविषयत्वेनैवाऽज्ञानविरोधित्वादिति भावः। तत्र बृहदारण्यक-वचनं प्रमाणयति—**अभयमि**ति। हे **जनक**! त्व**मभयं** जरामरणादिनिमित्त-भयशून्यं **वै प्राप्तोऽसि**। **तत्** स्रष्टृ ब्रह्म, नासि संसारीत्याचार्येण प्रतिबोधित**महं ब्रह्माऽस्मी**त्येवंप्रकारेणात्**मानमेवावेत्** वेदितवानित्यर्थः। तथा च जन्ममरणादिनिमित्त-भयनिवृत्तेर्ब्रह्मात्मैक्यज्ञानसाध्यत्व-श्रवणाद् ब्रह्मात्मैक्यज्ञानस्य मोक्षसाधनत्वं श्रुत्यैवोक्त-मिति भावः। स्मृतिमपि प्रमाणयति—**तत्त्वम**स्यादीति। **वाक्योत्थं** वाक्यजन्यम्। **ज्ञानं** ब्रह्मात्मैक्यविषयक-साक्षात्कारः। ननु ब्रह्मात्मैक्यगोचरं किंरूपं ज्ञानमज्ञान-निवर्त्तकम्, परोक्षरूपमपरोक्षरूपं वा? नाद्य इत्याह—**तच्चे**ति। ननु तत्त्वमस्यादि-वाक्यजन्य-ज्ञानस्य मोक्षहेतुत्वश्रवणात् परोक्षरूपस्यैव तस्याज्ञाननिवर्त्तकत्वं वाच्यम्, वाक्यस्य परोक्षज्ञानजनकत्व-स्वाभाव्यादित्यत आह—**परोक्षत्व** इति। **निवर्त्त**कत्वा-नुपपत्तेरिति। ब्रह्मात्मैक्यज्ञानं परोक्षरूपं चेन्नाविद्यानिवर्त्तकम्, आप्तवचनलिङ्गादिभि-र्दिगादितत्त्वनिश्चये जातेऽपि दिङ्मोहादेर्निवृत्त्यदर्शनादपरोक्षज्ञानस्यैवापरोक्षभ्रम-

**तच्चापरोक्षज्ञानं तत्त्वमस्यादि-वाक्यादिति केचित्, मनन-निदिध्यासन-संस्कृतान्तःकरणादेवेत्यपरे।**

**तत्र पूर्वाचार्याणामयमाशयः—संविदापरोक्ष्यं न करणविशेष-निबन्धनम्, किन्तु प्रमेयविशेष-निबन्धनमित्युपपादितम्। तथा च ब्रह्मणः प्रमातृ-जीवाभिन्नतया तद्गोचरं शब्दजन्यं ज्ञानमप्यपरोक्षम्। अत एव प्रतर्दनाधिकरणे प्रतर्दनं प्रति "प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपा-**

निवर्त्तकत्वाभ्युपगमात्। तथा च ब्रह्मात्मैक्यगोचरमपि ज्ञानमपरोक्षमेवाज्ञाननिवर्त्तकं वाच्यं न परोक्षमिति भावः। ननु तथाविधज्ञानस्योद्भवो न वाक्यात्, तस्य परोक्षज्ञानमात्र-जनकत्वादित्यत आह—**तच्चे**ति। **केचित्** विवरणानुयायिनः। **अपरे** भामत्यनुयायिनः।

ननु परोक्षज्ञानजननस्वभावाद् वाक्यात् कथमपरोक्षज्ञानमित्यतः पूर्ववादिनामाशयं विवृणोति—**तत्रे**ति। तयोर्मतयोर्मध्ये इत्यर्थः। **पूर्वाचार्याणां** विवरणानुयायिनाम्। **संविदा**परोक्ष्यं ज्ञानगतप्रत्यक्षत्वम्। **करणवि**शेषेति। इन्द्रियेत्यर्थः। इन्द्रिय-जन्यज्ञानस्यैव तैः प्रत्यक्षत्वाभ्युपगमादिति भावः। तर्हि किंनिबन्धनं ज्ञानगत-प्रत्यक्षत्वम्? तत्राह—**किन्त्वि**ति। **प्रमेय**विशेषेति। प्रमेयस्य विषयस्य यो विशेषोऽपरोक्षत्वं तन्निबन्धनमित्यर्थः। **उपपादि**तमिति। प्रत्यक्षपरिच्छेदे तत्तदिन्द्रिय-योग्येत्यादिग्रन्थेनेति शेषः। तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वमुपपादयति—**तथा चे**ति। संविदापरोक्ष्यस्य प्रमेयविशेषनिबन्धनत्वे चेत्यर्थः। **प्रमातृ**जीवाभिन्न-तयेति। तथा च शुद्धं ब्रह्मेति ब्रह्माकारवृत्तौ जायमानायां स्वस्वेतर-सकलोपाधिर्निवर्त्तते। ततश्चात्माऽपरोक्षब्रह्मरूपः प्रकाशते,अविद्याधीनस्य भेदस्याविद्यानिवृत्तौ निवृत्तेरिति भावः। **तद्गो**चरं ब्रह्मगोचरम्। **अपरोक्ष**मिति। तज्ज्ञानस्यापरोक्षार्थव्यवहारानुकूलत्वाद-परोक्षार्थव्यवहारानुकूलज्ञानत्वस्यैव ज्ञानगतप्रत्यक्षत्वप्रयोजकत्वादिति भावः। शब्दजन्यस्यापि ज्ञानस्य प्रत्यक्षत्वे बादरायणोक्तं प्रतर्दनाधिकरणं प्रमाणयति—**अत एवे**ति। अहं ब्रह्मास्मीति ज्ञानं शास्त्रदृष्टिशब्देनोक्तमिति वक्ष्यमाणेनास्यान्वयः। यस्माच्छास्त्रजन्यं ज्ञानं प्रत्यक्षम्, तस्मादित्यर्थः। **प्रतर्दना**धिकरण इति। अस्ति कौषितकीब्राह्मणोपनिषदीन्द्र-प्रतर्दनाख्यायिका। तस्यां श्रूयते—स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्यु-पास्स्व इति। किमिह प्राणशब्दस्य वायुपरत्वं देवतापरत्वं जीवपरत्वं ब्रह्मपरत्वं वेति सन्दिह्योपक्रमादिलिङ्गेन तस्य ब्रह्मपरत्वं निश्चितम्। तत्र भवत्ययमाक्षेपः—प्राणशब्दस्य

**स्स्वे"तीन्द्रप्रोक्त-वाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चिते सति 'मामुपास्स्वे'त्य-स्मच्छब्दानुपपत्तिमाशंक्य तदुत्तरत्वेन प्रवृत्ते "शास्त्रदृष्ट्या तूपदेशो वामदेववद्"दिति सूत्रे शास्त्रीया दृष्टिः शास्त्रदृष्टिरिति तत्त्वमस्यादि-वाक्यजन्यमहं ब्रह्मास्मीति ज्ञानं शास्त्रदृष्टिशब्देनोक्तमिति।**

**अन्येषां त्वेवमाशयः—करणविशेष-निबन्धनमेव ज्ञानानां प्रत्यक्षत्वम्, न विषयविशेष-निबन्धनम्, एकस्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्व-व्यवहार-दर्शनात्। तथा च संवित्साक्षात्त्वे इन्द्रियजन्यत्व-**

ब्रह्मपरत्वं नैव युक्तम्, इन्द्रधामगतं प्रतर्दनं प्रति प्राणोऽस्मि प्रज्ञात्मेतीन्द्रस्य प्राणात्मताभिधानात्। न हीन्द्रस्यात्मा प्राणो ब्रह्म भवितुमर्हति, तस्य देवत्वाद् वक्तृत्वाच्च। न हि ब्रह्मणो देवत्वं वक्तृत्वं वा युक्तम्, विग्रहाद्यभावात; तस्मान्नायं प्राणशब्दो ब्रह्मपर इत्याक्षिप्ते भवत्ययं समाधिः—इन्द्रस्य प्राणात्मताभिधानं नासङ्गतम्, प्राणस्य ब्रह्मत्वात्, शास्त्रात् तस्याहं ब्रह्मेति ब्रह्मसाक्षात्कारोदयात्। यो ह्यात्मानं प्राणत्वेन पश्यति, स आत्मानं प्राणत्वेनोपदेष्टुं शक्नुयात् प्राणोऽस्मीति। तस्मात् प्राणशब्दस्य ब्रह्मपरत्वं युक्तमिति प्रतर्दनाधिकरणसिद्धान्तः। **अस्म**च्छब्दानुपपत्तिरिति। प्राणस्य ब्रह्मत्वे इन्द्रस्य प्राणत्वेनात्मोपदेशो नैव युक्तः, अप्राणत्वात् तस्येति भावः। **तदुत्तर**त्वेन तादृशशङ्कोत्तरत्वेन। **शास्त्रदृष्टि**शब्देनोक्तमिति। अहं ब्रह्मास्मीति ब्रह्मात्मैक्यज्ञानस्य प्रत्यक्षवाचक-दृष्टिशब्देनोक्तत्वाद् वाक्यजन्यज्ञानस्य प्रत्यक्षत्वं बोध्यम्। तस्य परोक्षत्वे दृष्टिशब्देनाभिधानं न स्यादिति भावः।

भामत्यनुयायिनामाशयमाविष्करोति—**अन्येषामि**ति। भामतीकाराणामित्यर्थः। ज्ञानगतप्रत्यक्षत्वप्रयोजकं दर्शयति—**करण**विशेषेति। इन्द्रियेत्यर्थः। अनुमित्यादीनां व्याप्तिज्ञानादिरूपकरणविशेषनिबन्धनत्वेऽप्यप्रत्यक्षत्वादिन्द्रियजन्यत्वस्यैव ज्ञानगतप्रत्यक्षत्वप्रयोजकत्वमिति भावः। विवरणाद्यभिमतं ज्ञानगत-प्रत्यक्षत्वस्य विषयविशेषनिबन्धनत्वं निराकरोति—**न विषये**ति। तत्र हेतुमाह—**एकस्मि**न्नेवेति। **सूक्ष्मवस्तूनि** लिपिरेखादौ। **पटुकर**णेति। पटु सूक्ष्मवस्तुग्रहणसमर्थं करणं यस्य स पटुकरणः। अपटु सूक्ष्मवस्तुग्रहणासमर्थं करणं यस्य सोऽपटुकरणस्तयोरित्यर्थः। **प्रत्यक्षत्वे**ति। पटुकरणस्य सूक्ष्मवस्तुनि इदं पश्यामीति प्रत्यक्षत्वव्यवहारः। अपटुकरणस्य त्विदं न पश्यामीति प्रत्यक्षत्वाभावव्यवहारः। तथा च यदि विषयविशेषनिबन्धनं ज्ञानानां प्रत्यक्षत्वं स्यात्, तदा विषयस्यैकत्वादुभयोरेव प्रत्यक्षं ज्ञानं भवेन्नैकस्य।

**स्यैव प्रयोजकतया न शब्दजन्य-ज्ञानस्यापरोक्षत्वम्। ब्रह्मसाक्षात्कारेऽपि मनननिदिध्यासन-संस्कृतं मन एव करणम्, "मनसैवानुद्रष्टव्य"मित्यादि-श्रुतेः। मनोऽगम्यत्वश्रुतिश्चासंस्कृत-मनोविषया। न चैवं ब्रह्मण औपनिषदत्वानुपपत्तिः, अस्मदुक्तमनसो वेदजन्य-ज्ञानानन्तरमेव प्रवृत्ततया वेदोपजीवि-**

भवति त्वेकस्य। तस्माद् विषयविशेषनिबन्धनं न प्रत्यक्षत्वं किन्तु करणविशेषनिबन्धनमिति भावः। इन्द्रियजन्यत्वस्य प्रत्यक्षत्वप्रयोजकत्वे फलितमाह—**तथा चे**ति। इन्द्रियजन्यत्वस्य प्रत्यक्षत्वप्रयोजकत्वे चेत्यर्थः। **संवित्**साक्षात्त्वे ज्ञानस्य प्रत्यक्षत्वे। **इन्द्रिये**ति। अत्रेन्द्रियपदं मनसोऽप्युपलक्षणम्, तन्मते मनसोऽपीन्द्रियत्वात्, अन्यथा सुखादिज्ञानस्य प्रत्यक्षत्वं न स्यादिति भावः। **अपरो**क्षत्वमिति। इन्द्रियजन्यत्वाभावादिति भावः। ननु ब्रह्मान्यसाक्षात्कारे इन्द्रियस्य करणत्वेऽपि ब्रह्मणः साक्षात्कारे महावाक्यमेव करणम्, नेन्द्रियम्, तस्येन्द्रियाद्यगोचरत्वात्, "यन्मनसा न मनुते" इति तस्य साक्षात्कार-करणत्व-प्रतिषेधात्। तत् कथमुच्यते इन्द्रियजन्यत्वस्य प्रत्यक्षत्वप्रयोजकत्वमित्यत आह—**ब्रह्मे**ति। ब्रह्मान्यसाक्षात्कारो यथेन्द्रियजन्यस्तथा ब्रह्मसाक्षात्कारोऽपीति भावः। ननु ब्रह्मसाक्षात्कारे यदीन्द्रियं करणम्, तर्हीदानीमपि तत्साक्षात्कारः स्यात्, मनसः इन्द्रियस्य सद्भावादित्यत आह—**मनने**ति। तथा च केवलमनसो न करणत्वम्, किन्तु संस्कृतस्यैव मनसः। तस्य चेदानीमभावान्न ब्रह्मसाक्षात्कारापत्तिरिति भावः। **मन एवे**ति। एवकारेण शब्दस्य करणत्व-व्यवच्छेदः। मनसो ब्रह्मसाक्षात्कार-करणत्वे श्रुतिं प्रमाणयति—**मनसैवे**ति। **इत्यादी**त्यादिपदेन "एषोऽणुरात्मा चेतसा वेदितव्यः" "दृश्यते त्वग्र्यया बुद्ध्ये"त्यादि-श्रुति-परिग्रहः। ननु "यन्मनसा न मनुते" "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे"त्यादिमनोऽगम्यत्वश्रुतिविरोधाच्छब्दस्यैव तत्करणत्वम्, न मनसः। मनोगम्यत्वश्रुतिस्तु न करणत्वपरा, पूर्वोदाहृत-श्रुतिविरोधात्, किन्तु हेतुत्वमात्रपरा, शब्दसाक्षात्कारजननेऽपि तदैकाग्र्यस्यापेक्षितत्वात्, हेतुत्वमात्रेण तृतीयोपपत्तेः, 'मनसा ह्येष पश्यति, मनसा शृणोती'त्यादौ तथा दर्शनादित्याशङ्कां निराकरोति—**मनोऽ**गम्यत्वेति। मनोगम्यत्वश्रुतिविरोधादक्लृप्तकरणान्तर-कल्पनागौरवाद् "यतो वाचो निवर्त्तन्ते" इत्यादि-श्रुतौ ब्रह्मणः शब्दगम्यत्वनिषेधान्मनोऽगम्यत्वश्रुतीनामन्यपरत्वौचित्यादिति भावः। नन्वेवं ब्रह्मणो मनोगम्यत्वे "त्वं त्वौपनिषदं पुरुषं पृच्छामी"त्यादिश्रुतौ तस्यौपनिषदत्वाभिधानमसमञ्जसं स्यादित्यत

**त्वात्, वेदानुपजीविमानान्तर-गम्यत्वस्यैव वेदगम्यत्वविरोधात्। शास्त्रदृष्टि-सूत्रमपि ब्रह्मविषयक-मानसप्रत्यक्षस्य शास्त्रप्रयोज्यत्वादुपपद्यते। तदुक्तम्—**

**अपि संराधने सूत्राच्छास्त्रार्थ-ध्यानजा प्रमा।**
**शास्त्रदृष्टिर्मता तान्तु वेत्ति वाचस्पतिः परमिति॥**

आह—**न चैव**मिति। **अस्म**दुक्तेति। ब्रह्मसाक्षात्कारकरणस्य संस्कृतमनस इत्यर्थः। **वेदजन्ये**ति। वेदजन्यब्रह्मविषयक-परोक्षबोधानन्तरमित्यर्थः। तथा च ब्रह्मणः शास्त्रजन्य-परोक्षबोधे जाते मनसस्तत्साक्षात्कारे प्रवृत्तिः, शास्त्रजन्यबोधात् प्राक् तु नैवेति भावः। **वेदो**पजीवित्वात् वेदाधीनत्वात्, वेदपूर्वकत्वादिति यावत्। तथा चोपनिषत्प्रवृत्तेरनन्तर मनसः प्रवृत्तेर्ब्रह्मण औपनिषदत्वाभिधानं नानुपपन्नमिति भावः। ननु "तं त्वौप-निषदमि"त्यादिश्रुतिविरोधान्मनसैवानुद्रष्टव्यमित्यादिश्रुतेर्बाधान्मनसो न ब्रह्मसाक्षात्कार-करणत्वमित्यत आह—**वेदानु**पजीवीति। तथा च यत् प्रमाणं वेदान्तमनपेक्ष्यैव स्वातन्त्र्येण ब्रह्मज्ञानाय प्रवर्त्तते, तस्यैव वेदान्तनिरपेक्षस्य वेदान्तेन विरोधस्तेन तद्बाधश्च। मनस्तु न तथा, तस्य वेदान्तोपजीविनो वेदान्ताविरोधात्। एवञ्च शब्दकरणत्ववादिन्या श्रुत्या मनःकरणत्ववादिन्याः श्रुतेर्विरोधाभावेन बाधाभावात् सिद्धं मनसो ब्रह्मसाक्षात्कार-करणत्वमिति भावः। शास्त्रदृष्टिसूत्रविरोधं परिहरति—**शास्त्रदृष्टी**ति। तथा चास्मिन् सूत्रे शास्त्रदृष्टिशब्देन शास्त्रजन्यं प्रत्यक्षं नाभिधीयते, किन्तु शास्त्रप्रयोज्यं प्रत्यक्षम्। ब्रह्मविषयकमानसप्रत्यक्षञ्च शास्त्रार्थबोधोत्तरप्रवृत्त-मनोजन्यतया शास्त्र-प्रयोज्यमेव। तस्माच्छास्त्रमूलक-मनोगम्यत्वेन शास्त्रगम्यत्वस्य न विरोधो न वा बाध्य-बाधकभाव इति भावः। तत्र कल्पतरुकार-सम्मतिं दर्शयति—**तदुक्तमि**ति। वेदान्त-कल्पतरौ भगवदमलानन्दैरिति शेषः। **अपि** संराधने इति। शास्त्रदृष्ट्या तूपदेशो वामदेव-वदिति सूत्रे शास्त्रदृष्टिर्न शास्त्रजन्याऽपरोक्षप्रमा मताऽभिमता, किन्तु वेदान्तशास्त्रार्थ-ध्यानजा प्रमैव शास्त्रदृष्टिर्मता। तां शास्त्रदृष्टिपदवाच्यां शास्त्रार्थध्यानजां प्रमां वाचस्पतिरेव परं केवलं जानाति। शास्त्रार्थध्यानजा प्रमैव शास्त्रदृष्टिर्नान्येत्यत्र हेतुमाह—**अपि** संराधने सूत्रादिति। "अपि च संराधने प्रत्यक्षानुमानाभ्या"मिति तृतीयाध्यायद्वितीयपादस्य सूत्रादित्यर्थः। प्रपञ्चजातादन्यत् परं ब्रह्मास्ति चेत् कस्मान्न गृह्यते ? इन्द्रियाद्यग्राह्यत्वा-दित्युक्ते तत् किमप्रामाणिकमिति शङ्कायामनेन सूत्रेणोत्तरमाह। तद्भाष्यञ्च—अपि चैन-मात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले योगिनः पश्यन्ति। संराधनञ्च भक्तिध्यान-

**तच्च ज्ञानं पापक्षयाद् भवति। स च कर्मानुष्ठानादिति परम्परया कर्मणामुपयोगः। अत एव "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन**

प्रणिधानाद्यनुष्ठानम्। कथं पुनरवगम्यते संराधनकाले पश्यन्तीति। प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। श्रुतिस्तावत्—"कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इति। "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमान" इति चैवमाद्या। स्मृतिरपि—"यं विनिद्रा जितश्वासाः सन्तुष्टाः संयतेन्द्रियाः। ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः। योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनमिति चैवमाद्येति। तथा चास्मिन् सूत्रे संराधनकालिकस्य ब्रह्मदर्शनस्य श्रवणादिसंस्कृतमनोजन्यत्वाभिधानाच्छास्त्रप्रयोज्य-मनोजन्य-ब्रह्मप्रमैव शास्त्रदृष्टिपदग्राह्या। तस्मात् सिद्धं मनसः एव ब्रह्मसाक्षात्कार-करणत्वमिति भावः।

नन्वेवं सर्वेषां तत्त्वमस्यादिवाक्यमाकलयतां ब्रह्मज्ञानं स्यात्, तत्करणस्य मनसः शब्दस्य वा तत्र तत्र सद्भावादित्यत आह—**तच्चे**ति। **ज्ञानं** ब्रह्मसाक्षातकारः। **पापक्षया**दिति। तथा च तेषां तत्तत्करणसत्त्वेऽपि प्रतिबन्धकस्य पापस्य सद्भावान्न ब्रह्मज्ञानोदयः। क्षीणे तु पापे तदुदयः। तथा चोक्तं—"ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मण" इतीति भावः। नन्वेवं मनुष्येषु कस्यापि ब्रह्मानुभवो न स्यात्, पापवतां तेषां पापक्षयहेत्वभावादित्यत आह—**स चे**ति। पापक्षयश्चेत्यर्थः। **कर्मानु**ष्ठानादिति। नित्यनैमित्तिक-कर्मानुष्ठानादित्यर्थः। तथा चोक्तं—सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयमिति। मनुना च—पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति। पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतमिति। याज्ञवल्क्येनापि—निशायां वा दिवा वापि यदज्ञानकृतं भवेत्। त्रैकाल्यसन्ध्याकरणात् तत् सर्वं विप्रणश्यति॥ इति। प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेदिति च। संक्षेपशरीरककारास्तु यज्ञादिशब्दाविशेषात् काम्यानामपि कर्मणां विद्योपयोगित्वमाहुः। ननु पापानां कर्मनाश्यत्वं न युक्तम्, तेषां फलविनाश्यत्वात्, "नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी"ति वचनादिति चेन्मैवं, कर्मणां पापनाशकत्वस्य शास्त्रसिद्धत्वात्, पापोत्पत्तेरिव पापक्षयस्यापि शास्त्रमात्रैकगम्यत्वात्, "तरति सर्वं पाप्मानं तरति ब्रह्महत्या"मित्यादिवचनविरोधान्नाभुक्तमित्यादिवचनानां प्रारब्धकर्ममात्रविषयत्वात्। **इति**र्हेतौ। **परम्परये**ति। कर्मानुष्ठानात् पापनिवृत्तिरूपा चित्तशुद्धिस्ततो विषयदोषदर्शनम्, ततो वैराग्यम्, ततः श्रवणादिक-

**दानेन तपसाऽनाशकेने"त्यादि-श्रुतिः, "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इत्यादि-स्मृतिश्च संगच्छते। एवं श्रवण-मनन-निदिध्यासनान्यपि ज्ञानसाधनानि, मैत्रेयीब्राह्मणे "आत्मा वा अरे द्रष्टव्य" इति दर्शनमनूद्य तत्-साधनत्वेन "श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रवण-मनन-निदिध्या-सनानां विधानात्। श्रवणं नाम वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणा**

मित्येवंपरम्परयेत्यर्थः। **उपयोगः** मोक्षोपयोगित्वम्। कर्मणां मोक्षोपयोगित्वे श्रुतिं
प्रमाणयति—**अत एवे**ति। कर्मणां परम्परया मोक्षोपयोगित्वादेवेत्यर्थः। **तमेतं** जीवा-
भिन्नपरमात्मानम्। **वेदानुवचनेन** वेदाध्ययनेन **विविदिषन्ति** वेदितुमिच्छन्ति। **अना-**
**शकेने**ति। अनशनादिलक्षणतपो-व्यावृत्त्यर्थमिदं तपसो विशेषणम्। **इत्यादीत्या**दिपदेन
"यस्यैतेऽष्टाचत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्राह्मणः सायुज्यमाप्नोतीत्यादिश्रुतिपरि-
ग्रहः। तथा चात्र तृतीयाश्रुत्या यज्ञादिकर्मणां ज्ञानसाधनत्वं दर्शितम्, शब्दत उपसर्जनस्यापि
वेदनस्य स्वर्गादिवत् साध्यतया पुरुषार्थतया च यज्ञादिफलत्वेन साधनेन यज्ञादिनाऽन्वयो-
पपत्तेः, अश्वेन जिगमिषतीत्यादावश्वादिरूपसाधनस्य गमनादावन्वयस्य व्युत्पन्नत्वाच्च।
तत्र यज्ञादिकर्मणां ज्ञानसाधनत्वं नैव साक्षात्, तेषामप्रमाणत्वात् किन्तु मलापकर्षणादि-
परम्परया। यदि कर्मणां परम्परयाऽपि ज्ञानसाधनत्वं न स्यात्, तदा श्रुत्यभिहितं तेषां
ज्ञानसाधनत्वमसङ्गतं स्यात्। तस्मात् परम्परया तेषां ज्ञानसाधनत्वमभ्युपगमनीयमिति
भावः। कर्मणां ज्ञानसाधनत्वे स्मृतिमपि प्रमाणयति—**कषाये** इति। **कशाये** आशये, पापे
इति यावत्। **पक्वे** नष्टे। **ततः** तस्माच्छ्रवणादितः। **प्रवर्त्तते** जायते। ब्रह्मज्ञानस्य
वहिरङ्गोपायान् निर्दिश्यान्तरङ्गोपायान् निर्दिशति—**एवमि**ति। क्रमवदित्यर्थः।
श्रवणादीनां ज्ञानसाधनत्वे बृहदारण्यकश्रुतिं प्रमाणयति—**मैत्रेयी**ति। बृहदारण्यके मैत्रेयीं
प्रति याज्ञवल्क्योपदेशप्रकरणे इत्यर्थः। **दर्शनम्** आत्मसाक्षात्कारम्। **अनूद्य** उद्दिश्य।
नन्वात्मा वा अरे द्रष्टव्य इत्यपूर्वविधिश्रुतेः पुरुषस्यात्मदर्शनक्रियायां नियोगोऽवसीयत इति
चेन्न, वस्तुतन्त्रस्य ज्ञानस्यापुरुषतन्त्रत्वाद् विधेयत्वानुपपत्तेः। **तत्साधनत्वेन** दर्शन-
साधनत्वेन। तथा च मानवोपपुराणम्—श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः।
मत्वा च सततं ध्येय एते दर्शनहेतवः॥ इति। **विधाना**दिति। श्रवणादीनां मानस-
व्यापाररूपत्वेन पुरुषतन्त्रत्वेन च ज्ञानत्वाभावाद् विधेयत्वयोगादिति भावः।

एतेन—वस्तुतस्त्वत्र नियमोऽपि न सम्भवति, व्यावर्त्याभावादिति शिखामणिकृतां

**नुकूला मानसी क्रिया। मननं नाम शब्दावधारितेऽर्थे मानान्तर-विरोधशङ्कायां तन्निराकरणानुकूल-तर्कात्मक-ज्ञान-जनकोमानस-व्यापारः। निदिध्यासनं नामानादि-दुर्वासनया विषयेष्वाकृष्यमाणस्य चित्तस्य विषये-भ्योऽपकृष्यात्मविषयक-स्थैर्यानुकूलो मानस-व्यापारः।**

**तत्र निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात् कारणम्, "ते ध्यानयोगा-नुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढ़ा"मित्यादिश्रुतेः। निदिध्यासने च मननं हेतुः, अकृतमननस्यार्थदाढ़र्याभावेन तद्विषयक-निदिध्यासना-**

विवरणवाक्यसमर्थितं श्रवणस्याविधेयत्वोपपादनपरं व्याख्यानं प्रत्युक्तम्, विवरणभावान-ववोधात्, तैः प्रथमवर्णके—"सर्वथा तावन्मनननिदिध्यासनाभ्यामङ्गभूताभ्यां सह श्रवण-विधानमस्त्येवे"ति श्रवणस्य विधेयत्वोपपादनात्। द्वितीयवर्णवाक्यस्य साक्षादापरोक्ष्य-फलक-निदिध्यासनविधिनिषेधपरत्वात्, मनःप्रणिधानाद्वैतपरभाषाप्रबन्धानुशीलन-स्वप्रयत्न-साध्य-वेदान्तश्रवणादीनां बहूनां व्यावर्त्यानां विद्यमानत्वाच्च।

दर्शनवच्छ्रवणादेरपि ज्ञानत्वादविधेयत्वं मन्यमानानां वाचस्पत्यनुयायिनां मत-मपाकर्त्तुं श्रवणादिस्वरूपं निरूपयति—**श्रवणमि**ति। **वेदान्ता**नामिति। वेदान्तानाम· द्वितीये ब्रह्मणि यत् तात्पर्यम्, तदवधारणानुकूला मानसी क्रियेत्यर्थः। तथा च श्रवणस्य तादृशमानसक्रियारूपत्वेन पुरुषतन्त्रत्वाद् युक्तं तस्य विधेयत्वमिति भावः। **शब्दाव**धारिते वाक्यावधारिते। **मानान्त**राविरोधेति। असम्भावनाबुद्धेरप्युपलक्षणम्। **तन्निरा**करणेति। मानान्तरविरोध-निराकरणेत्यर्थः। **अनादी**ति। जन्ममरणप्रवाह-स्यानादित्वाद् वासनाया अनादित्वमिति भावः। **वासना** विषयसंस्कारः। **आत्म-**विषयकस्थैर्येति। आत्मविषयक-मनःस्थैर्येत्यर्थः। ननु श्रवणादीनां त्रयाणां समुच्चितानां ज्ञानसाधनत्वमेकैकेषां वा? नाद्यः, तेषां युगपदनुष्ठानायोगात्, एकानुष्ठानकालेऽपरस्य विनाशेन समुच्चयासम्भवात्। न द्वितीयः। एकेनैव ज्ञानोत्पत्तावितरयोर्वैयर्थ्यप्रसङ्गा-दित्यत आह—**तत्रे**ति। तेषु त्रिविधेषु ज्ञानसाधनेष्वित्यर्थः। **साक्षादि**ति। अनेन श्रवणमननयोः परम्पराकारणत्वं सूचितम्। तत्र श्रवणस्य मनननिदिध्यासनद्वारा मननस्य निदिध्यासनद्वारेति भावः। निदिध्यासनस्य साक्षात् कारणत्वे श्रुतिं प्रमाणयति—**ते** इति। **इत्यादीत्या**दिपदेन—"ततस्तु तं पश्यते निष्कलं ध्यायमान" इत्यादिश्रुतिपरिग्रहः। ननु निदिध्यासनस्य साक्षात्कारणत्वे श्रवणमननयोः केन रूपेण कारणत्वमित्यत आह—

**योगात्। मनने च श्रवणं हेतुः, श्रवणाभावे तात्पर्यानिश्चयेन शाब्दज्ञानाभावेन श्रुतार्थ-विषयक-युक्तत्वायुक्तत्व-निश्चयानुकूल-मननायोगात्। एतानि त्रीण्यपि ज्ञानोत्पत्तौ कारणानीति केचिदाचार्या ऊचिरे।**

**अपरे तु—श्रवणं प्रधानम्। मनन-निदिध्यासनयोस्तु श्रवणात् पराचीनयोरपि श्रवणफल-ब्रह्मदर्शन-निर्वर्त्तकतयाऽऽरादुपकारकतयाऽङ्गत्वमि-**

**निदिध्या**सन इति। **अर्थ**दार्ढ्यंयति। निदिध्यासनविषय-निश्चयाभावेनेत्यर्थः। वेदैकवेद्येऽतिगम्भीरे विषये मानान्तरविरोधस्यासम्भावनाबोधस्य वोदये तदर्थनिश्चयो न भवति। तदर्थस्यानिश्चये तद्विषयकं निदिध्यासनं नोपपद्यते। मननेन तु तयोर्निरासे तदर्थनिश्चयात् तद्विषयकं निदिध्यासनमुपपद्यत इति सिद्धं मननस्य निदिध्यासनोपयोगित्वमिति भावः। श्रवणस्य परम्पराकारणत्वं दर्शयति—**मनन** इति। **तात्पर्या**-निश्चयेनेति। श्रवणस्य तात्पर्यावधारणानुकूल-मानसव्यापारत्वात् तदभावे तात्पर्यनिश्चयो न स्यादिति भावः। **शाब्द**ज्ञानेति। वाक्यार्थज्ञानाभावेनेत्यर्थः। तात्पर्यज्ञानस्य वाक्यार्थबोधहेतुत्वात् तदभावे वाक्यार्थबोधो न स्यादिति भावः। **श्रुतार्थे**ति वाक्यार्थेत्यर्थः। **कारणानी**ति। साक्षात् परम्परयेति भावः। **केचित्** भामतीकाराः। तथा चोक्तं मिश्रैः सर्वापेक्षाधिकरणभाष्यभामत्यां—ते एव च चिन्तामयीं तृतीयां प्रतिपत्तिं प्रसुवाते इति। तथाऽऽवृत्त्यधिकरणभाष्यभामत्याञ्च—श्रवणमनननिदिध्यासनाभ्यासस्यैव स्वगोचरसाक्षात्कार-फलत्वेन लोकसिद्धत्वादितीति भावः।

विवरणमतमाह—**अपरे** त्विति। **प्रधानं** साक्षात् कारणम्। **मनन**निदिध्यासनयोस्त्विति। अङ्गत्वमित्यग्रेतनेनास्यान्वयः। ननु मनननिदिध्यासनयोः श्रवणाङ्गत्वं नैव युक्तम्, तयोः श्रवणोत्तरकालीनत्वात्, पूर्वकालीनस्यैवाङ्गत्वनियमादित्यत आह—**पराची**नयोरिति। उत्तरकालीनयोरित्यर्थः। न हि पूर्वकालीनानामेवाङ्गत्वं नोत्तरकालीनानामित्यस्ति नियमः, उत्तरकालीनानामपीड़ाभक्षणादीनामङ्गत्वदर्शनात्। उक्तञ्च तन्त्रायप्रकाशे—"सन्निपत्योपकारकाणां पूर्वाङ्गानां तदुत्पत्तावुपयोगः। उत्तराङ्गाणां तेषान्तु तत्स्थितावुपयोग" इति। तथा चोत्तरकालीनयोरपि मनननिदिध्यासनयोरङ्गत्वं नैव विरुद्धमिति भावः। **श्रवण**फलेति। श्रवणस्य शक्तितात्पर्यविशिष्ट-शब्दावधारणरूपस्य ब्रह्मसाक्षात्कार-जनकत्वाद् ब्रह्मसाक्षात्कारस्य श्रवणफलतेति भावः। **निर्वर्त्तकतया** सम्पादकतया। यद्यपि परोक्षज्ञानजननसमर्थाच्छब्दाद् ब्रह्मण्यपरोक्षज्ञानं जायते। तथाप्य-

**त्याहुः । तदप्यङ्गत्वं न तार्त्तीय-शेषत्वरूपम्, तस्य श्रुत्याद्यन्यतम-प्रमाणगम्यस्य प्रकृते श्रुत्याद्यभावेऽसम्भवात्। तथा हि—न व्रीहिभिर्यजेतेति दध्ना जुहो-**

सम्भावनया विपरीतभावनया च प्रतिबद्धं तन्निश्चलं नावतिष्ठते। तत्र मननात्मकेन तर्केण जीवब्रह्मैक्यलक्षणस्यासम्भावनायां निरस्तायां निदिध्यासनेन चैकाग्र्यतायां जायमानायां शब्दजनितमपरोक्षज्ञानं निश्चलमवतिष्ठते इति सिद्धं मननिदिध्यासनयोर्ब्रह्मदर्शन-निर्वर्त्तकत्वमिति भावः। **आराद्**उपकारकतयेति। सामीप्योपकारकतयेत्यर्थः। अङ्गानि तावद् द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति। तत्र सिद्धरूपाणि जातिद्रव्यसंख्यादीनि। क्रियारूपाणि तावद् द्विविधानि सन्निपत्योपकारकाणि आरादुपकारकाणि चेति। तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानानि कर्माण्यवघात-प्रोक्षण-पेषणादीनि सन्निपत्योपकारकाणि। द्रव्याद्यनुद्दिश्य प्रधानसन्निधौ विधीयमानानि प्रयाजादीन्यारादुपकारकाणि। तथा च प्रोक्षणादीनां यथा यागकरणद्रव्याद्युपकारकत्वं नैवं मननिदिध्यासनयोर्ब्रह्मसाक्षात्कारकरण-श्रवणोपकारकत्वं, श्रवणगतफलानुत्पादकत्वात्; किन्त्वहङ्कारोपकारकत्वम्, अहङ्कारगतफलोत्पादकत्वात्, अहङ्कारगतानामसम्भावनादीनां ताभ्यामेव निरासात् प्रधानभूतश्रवणसन्निधावाम्नानाच्चेति सिद्धं तयोरारादुपकारकत्वमिति भावः। **अङ्गत्वं** पारार्थ्यम्, परोपकारकत्वमिति यावत्। नन्वेवमपि मननिदिध्यासनयोरङ्गत्वं नैव युक्तम्, तद्ग्राहकप्रमाणाभावात्, श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानामङ्गत्व-बोधकत्वात्, तेषाञ्चात्राभावादित्यत आह—**तदपी**ति। **तार्त्तीये**ति। पूर्वमीमांसा-तृतीयाध्यायनिरूपित-शेषत्वरूपमित्यर्थः। **तस्य** शेषत्वस्य असम्भवादित्यग्रेतनेनास्यान्वयः। तत्र हेतुमाह—**श्रुत्यादी**ति। आदिपदेन लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां परिग्रहः। तत्र श्रुतिस्तु साध्यत्वसाधनत्वादिवाचक-विभक्त्यादिरूपा। लिङ्गं शब्दानामर्थप्रकाशन-सामर्थ्यम्। वाक्यं साध्यसाधनत्वादिवाचक-द्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणम्। शेषशेषिणोः परस्पराकाङ्क्षा प्रकरणम्। स्थानञ्च समानदेशत्वम्। समाख्या यौगिकः शब्दः। तदुक्तं—श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्येति। तथा च श्रुत्यादि-भिरेव प्रमाणषट्कैरङ्गत्वबोधनादङ्गत्वस्य श्रुत्याद्यन्यतम-गम्यत्वमिति भावः। **प्रकृते** मनने निदिध्यासने च। **श्रुत्याद्य**भावे अङ्गत्वबोधकश्रुत्याद्यभावे। मननिदिध्यासनयोस्तार्त्तीयाङ्गत्वे श्रुत्यादिप्रमाणाभावमुपपादयति—**तथा ही**ति। तत्र श्रुत्यभावं दर्शयति

**तीत्यादाविव मननिदिध्यासनयोरङ्गत्वे काचित् तृतीया श्रुतिरस्ति। नापि बर्हिर्देवसदनं दामीत्यादि-मन्त्राणां बर्हिःखण्डन-प्रकाशनसामर्थ्यवत् किञ्चिल्लिंगमस्ति। नापि प्रदेशान्तर-पठितस्य प्रवर्ग्यस्याग्निष्टोमे प्रवृणक्तीति वाक्यवच्छ्रवणानुवादेन मनननिदिध्यासन-विनियोजकं किञ्चिद् वाक्यमस्ति। नापि**

—नेति। **यजेते**ति। अत्राख्यातांशेनोत्पादनापरपर्याया भावनाऽभिधीयते। सा च त्र्यंशा किं भावयेत् केन भावयेत् कथं भावयेदिति। तत्र किं भावयेदिति साध्याकाङ्क्षायां यज्धात्वर्थस्य यागरूपस्य कर्मणः श्रुत्यन्तरेण प्राप्तत्वाद् भाव्यत्वेनैवान्वयो यागं भावयेदिति। केनेति करणाकाङ्क्षायां व्रीहीणां करणत्वेनैवान्वयः व्रीहिभिर्यागं भावयेदिति। तथा चात्र तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वं बोधितमिति भावः। **तृतीया**श्रुतिरिति। यथा व्रीहिभिर्यजेत, दध्ना जुहोतीत्यादौ व्रीहीणां यागाङ्गत्वे दध्नश्च होमाङ्गत्वे तृतीयाश्रुतिः प्रमाणम्, न तथा मनननिदिध्यासनयोः श्रवणाङ्गत्वे तृतीया श्रुतिरस्ति। तस्मात् तयोरङ्गत्वं न तार्त्तीयशेषत्वरूपमिति भावः। लिङ्गाभावं दर्शयति—**बर्हि**रिति। कुशमित्यर्थः। **देवसदनं** देवावासम्। **दामि** लुनामि। तथा च दर्शपौर्णमासप्रकरणे एतन्मन्त्रमात्रं श्रूयते, न पुनरस्य विनियोजिका काचित् श्रुतिरनेन मन्त्रेणैतत् कार्यमिति। न च मन्त्रस्य विनियोजकाभावात् क्वचिद् विनियोगो न स्यादिति वाच्यम्, तस्याक्रियार्थतयाऽप्रामाण्यप्रसङ्गात्। न चाप्रमाणम्। तस्मात् तेनापि क्वचिद् विनियुक्तेन भवितव्यम्। विनियोजकश्चात्र लिङ्गमेव नान्यत्। अतोऽर्थप्रकाशनरूपाल्लिङ्गादेवास्य मन्त्रस्य कुशच्छेदनाङ्गत्वं बोध्यते, तस्य कुशच्छेदनप्रकाशनसामर्थ्यवत्त्वादिति भावः। **किञ्चि**ल्लिङ्गमिति। "बर्हिर्देवसदनं दामी"त्यादौ यथा मन्त्रस्य कुशछेदनाङ्गत्वे मन्त्रलिङ्गं प्रमाणमस्ति, न तथा मनननिदिध्यासनयोरङ्गत्वे मन्त्रलिङ्गं प्रमाणमुपलभ्यते, येन तयोरङ्गत्वं स्यादिति भावः। वाक्याभावं दर्शयति—**नापी**ति। **प्रदेशान्तरे**ति। अग्निष्टोमप्रकरणादन्यप्रकरणपठितस्येत्यर्थः। **प्रवर्ग्यस्य** प्रवर्ग्याख्यकर्मणः। **प्रवृणक्ति** प्रवर्ग्याख्यं कर्म कुर्यात्। **वाक्य**वदिति। प्रकरणान्तरपठितस्य प्रवर्ग्यकर्मणो यथाऽग्निष्टोमाङ्गत्वेऽग्निष्टोयीयं प्रवृणक्तीत्याकारकं वाक्यं प्रमाणम्, तद्वदित्यर्थः। **श्रवणा**नुवादेन श्रवणमुद्दिश्य। **वाक्य**मस्तीति। प्रकरणान्तरपठितस्य प्रवर्ग्यस्य कर्मणोऽग्निष्टोमाङ्गत्वे यथा वाक्यं प्रमाणमस्त्यग्निष्टोमे प्रवृणक्तीति। न तथा मनननिदिध्यासनयोरङ्गत्वे किञ्चित् वाक्यं प्रमाणमस्ति, येन तयोरङ्गत्वं वाक्यप्राप्तं भवेदिति भावः। प्रकरणाभावं दर्शयति

**दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यावगत-फलसाधनताक-दर्शपौर्णमास-प्रकरणे प्रयाजादीनामिव फलसाधनत्वेनावगतस्य श्रवणस्य प्रकरणे मनन-निदिध्यासनयोराम्नानम्।**

**ननु द्रष्टव्य इति दर्शनानुवादेन श्रवणे विहिते सति फलवत्तया श्रवणप्रकरणे तत्सन्निधावाम्नातयोर्मनन-निदिध्यासनयोः प्रयाजन्यायेन प्रकरणादेवाङ्गतेति चेन्न, "ते ध्यानयोगानुगता अपश्यन्"नित्यादि-श्रुत्यन्तरे ध्यानस्य दर्शन-साधन-**

—**नापि दर्शे**ति। **वाक्याव**गतेति। वाक्येनावगता फलसाधनता ययोर्दर्शपौर्णमासयोस्तयोः प्रकरणे इत्यर्थः। **प्रयाजा**दीनामिवेति। कृष्णयजुःसंहितायां प्रथमे काण्डे दर्शपौर्णमासप्रकरणे प्रयाजो नाम पञ्चविधो यागो दर्शेष्टेः पूर्वाङ्गतया विहितः। ते च समिद्, तनूनपात्, इट्, बर्हिः, स्वाहाकारश्चेति पञ्च यागाः समिधो यजति, तनूनपातं यजति, इड़ो यजतीत्येवंक्रमेण विहिताः। अत्र हीष्टविशेषरूपस्य फलस्यानिर्देशात् समिद्-यागेन किं भावयेदित्यस्ति साध्याकाङ्क्षा। दर्शपौर्णमासवाक्येऽपि दर्शपौर्णमासाभ्यां कथं स्वर्गं भावयेदित्यस्त्युपकारकाकाङ्क्षा। अत उभयाकाङ्क्षारूपात् प्रकरणाद् यथा प्रयाजादीनां दर्शपौर्णमासाङ्गत्वम्, तद्वदित्यर्थः। **फल**साधनत्वेन आत्मसाक्षात्काररूपफलजनकत्वेन।

नन्वात्मा वा अरे द्रष्टव्य इत्यात्मदर्शनमुद्दिश्य श्रोतव्य इति श्रवणविधानात् तस्य फलवत्त्वं लभ्यते। अस्ति च तस्येतिकर्त्तव्यताकाङ्क्षा श्रवणं कथं कर्त्तव्यमिति। तत्सन्निधौ च मनननिदिध्यासनयोर्विधानं दृश्यते मन्तव्यो निदिध्यासितव्य इति। अस्ति च तयोरप्युपकार्याकाङ्क्षा मननेन निदिध्यासनेन च किं भावयेदिति। तत्रोभयाकाङ्क्षारूपादेव प्रकरणान्मनननिदिध्यासनयोरङ्गत्वं प्रयाजादिवत् सिद्धम्। अत एवोक्तं—फलवत् सन्निधावफलं तदङ्गमिति। तत् कथमुच्यते श्रवणप्रकरणे मनननिदिध्यासनयोर्नाम्नानमितीत्याशङ्कते—**नन्वि**ति। **दर्शना**नुवादेन दर्शनोद्देशेन। आशङ्कां निराकरोति—**ने**ति। तत्र हेतुमाह—**ते** इति। **ध्यान**योगानुगताः निदिध्यासनावलम्बिनः। **अपश्यन्**निति। यद्यपि धानस्य प्रयाजादिन्यायेन नात्मसाक्षात्कारफलान्वयः, दर्शपौर्णमासविधायकवाक्ये फलकामपदश्रवणवद् ध्यानवाक्ये फलकामपदाश्रवणात्। तथापि सिद्धसाध्यन्यायेन फलान्वयो भवितुं युक्तः, फले सति साधनविधानस्य दृष्टत्वात्। न चात्र सिद्धसाध्यन्यायानवतारः, दर्शनस्य जन्यत्वेनासिद्धत्वात्, सिद्धस्यैव साध्यविधायकत्वादिति वाच्यम्, अजन्यत्वरूप-सिद्धत्वासम्भवेऽपि ज्ञातत्वरूप-सिद्धत्वसम्भवात्। तथा च सिद्धं ध्यानमात्म-

**त्वेनावगतस्याङ्गाकांक्षायां प्रयाजन्यायेन श्रवण-मननयोरेवाङ्गत्वापत्तेः। क्रम-समाख्ये च दूरनिरस्ते। किंच प्रयाजादिष्वङ्गत्व-विचारः सप्रयोजनः। पूर्वपक्षे**

साक्षात्कारसाधनमिति भावः। **इत्यादी**त्यादिपदेन तत्कारणं सांख्ययोगाभिपन्नमित्यादि-वाक्यपरिग्रहः। **श्रुत्यन्तरे** श्वेताश्वतरोपनिषदि। **ध्यानस्य** निदिध्यासनस्य। **अङ्गत्वापत्तेरिति**। फलवद्ध्यानसन्निधावफलयोः श्रवणमननयोराम्नानात्, फलवत्सन्निधावफलं तदङ्गमिति न्यायादिति भावः। न च श्रवणमननयोः फलवत्त्वान्नैवाङ्गत्वम्, अफलस्यैवाङ्गत्वनियमादिति वाच्यम्, सिद्धस्य दर्शनलक्षणफलस्य साधनाकाङ्क्षायां निदिध्यासनपदवेदनीयस्य ध्यानस्य साधनत्वेनान्वयात् तस्य साधनाकाङ्क्षाविरहेण श्रवणमननयोस्तत्र साधनत्वेनान्वयासम्भवेन तयोरफलत्वात्, सफलस्य ध्यानस्येतिकर्त्तव्यताकाङ्क्षायां तत्रैव तदन्वयस्यौचित्यात्। न च विनिगमनाभावात् सिद्धस्य दर्शनस्य साधनाकाङ्क्षायां श्रवणमननयोरेव प्रथमसङ्गत्वेनान्वयसम्भवात् कथं तयोरफलत्वमिति वाच्यम्, न्यायापेक्षया वाक्यस्य प्रबलत्वाद् दर्शनसाधनत्वेन ध्यानान्वयस्यैव प्राथम्यात्। अङ्गाङ्गिभावसाधकयोः क्रम-समाख्ययोरप्यत्राभावं दर्शयति—**क्रम**समाख्ये इति। क्रमश्च समाख्या चेति विग्रहः। तत्र क्रमो नाम स्थानम्। तच्चैकदेशत्वम्। तत्पुनर्द्विविधं पाठसादेश्यमनुष्ठानसादेश्यञ्चेति। तत्र पाठसादेश्यं पाठमात्रावगतैकदेशत्वम्। अनुष्ठानसादेश्यञ्चैकदेशानुष्ठेयत्वेन निर्दिष्टत्वम्। समाख्या च यौगिकः शब्दः। स पुनर्द्विविधो वैदिको लौकिकश्चेति। विस्तरस्तु न्यायप्रकाशादौ द्रष्टव्यः। **दूर**निरस्ते इति। आनुपूर्व्येणोपदिश्यमानानां यस्य पर्याये यमामनन्ति, तस्य तं प्रत्याकाङ्क्षाऽनुमीयते। सत्यामाकाङ्क्षायामेकवाक्यीभावस्तस्मात् ततो विनियोगः। यथा—ऐन्द्राग्नमेकादशकपालं निर्वपेत्, वैश्वानरं द्वादशकपालमित्येवं क्रमविहितेष्विष्टिष्वैन्द्राग्नादिषु यथासंख्यमाम्नातानां याज्यानुवाक्यमन्त्राणा"मिन्द्राग्नी रोचना दिव" "वैश्वानरोऽजीजनदि"त्यादीनां प्रथमस्य मन्त्रस्य प्रथमेष्ट्यङ्गत्वे द्वितीयस्य च मन्त्रस्य द्वितीयेष्ट्यङ्गत्वे स्थानं प्रमाणम्, अन्यथा यथासंख्यपाठानर्थक्यप्रसङ्गात्। तद्वदत्र श्रोतव्यवाक्ये यथासंख्यपाठाद्यभावात् समानदेशत्वरूपं स्थानं तदङ्गत्वे न प्रमाणम्। यथा वा पाचकस्य पाकक्रियाङ्गत्वं पाचक इति लौकिकसमाख्यया होतुश्च चमसकरणक-सोमभक्षणाङ्गत्वं होतृचमस इति वैदिकसमाख्यया। तद्वदत्र नोपलभ्यते समाख्या, यया तयोरङ्गत्वाववोधः स्यात्। तस्मादङ्गत्वज्ञापकप्रमाणाभावान्न तयोस्तार्त्तीयशेषत्वमिति भावः। ननु ध्यानवाक्ये यथा वाक्याद् ध्यानस्याङ्गत्वनिर्णय-

**विकृतिषु न प्रयाजाद्यनुष्ठानम्। सिद्धान्ते तु तत्रापि तदनुष्ठानमिति। प्रकृते तु श्रवणं न कस्यचित् प्रकृतिः, येन मनन-निदिध्यासनयोस्तत्रानुष्ठान-मङ्गत्व-विचारफलं भवेत्। तस्मान्न तार्त्तीयशेषत्वं मनननिदिध्यासनयोः। किन्तु यथा घटादिकार्ये मृत्पिण्डादीनां प्रधानकारणता, चक्रादीनां सह-कारि-कारणतेति प्राधान्याप्राधान्यव्यपदेशः। तथा श्रवण-मनन-निदिध्या-**

स्तथैव श्रवणवाक्येऽपि वाक्यादङ्गत्वनिर्णयः, शेषशेषिणोः सहोच्चारणरूपस्य वाक्यस्यो-भयत्र तुल्यत्वात्; न तु न्यायात्, विनियोजकप्रमाणाभावे एव तत्प्रसरात्, विनियोजक-स्यात्र सद्भावात्। तस्मात् प्रथमोपस्थितस्य निरपेक्षस्य श्रवणस्य वाक्यात् फलवत्त्वे निश्चिते तत्सन्निधावाम्नातयोस्तयोः सापेक्षयोः पराचीन-मनननिदिध्यासनयोस्तदङ्गत्वं युक्तमित्यस्वरसादाह—**किञ्चे**ति। **अङ्गत्व**विचारः तार्त्तीयाङ्गत्वविचारः। प्रयाजा-दीनामङ्गत्वविचारफलं दर्शयति—**पूर्वपक्षे** इति। प्रयाजादीनां दर्शपौर्णमासाङ्गत्वा-भावपक्षे इत्यर्थः। **विकृतिष्वि**ति। दर्शपौर्णमासविकृतिषु सौर्ययागादिष्वित्यर्थः। यत्राति-देशादङ्गत्वप्राप्तिः, सा विकृतिः। **न प्रया**जाद्यनुष्ठानमिति। यदि प्रयाजादीनां दर्शपौर्ण-मासाङ्गत्वं न स्यात्, तद्विकृतिषु तेषामनुष्ठानं न भवेत्, प्रकृत्यङ्गानामेव विकृतावनुष्ठेय-त्वात्, प्रकृतिवद् विकृतिः कर्त्तव्येति न्यायादिति भावः। **सिद्धान्ते** प्रयाजादीनां दर्श-पौर्णमासाङ्गत्वपक्षे। **तत्रापि** विकृतिष्वपि। **तदनुष्ठानं** प्रयाजाद्यनुष्ठानम्, प्रकृतिवद् विकृतिः कर्त्तव्येति न्यायादिति भावः। नन्वेवं मननादेरङ्गत्वविचारोऽपि सफलः स्यान्नेत्याह—**प्रकृते** त्विति। द्रष्टव्य इत्यादिवाक्ये त्वित्यर्थः। **येन** श्रवणस्य प्रकृतित्वेन। **तत्र** श्रवणविकृतिषु। **अङ्गत्व**विचारेति। तथा चात्र तार्त्तीय-शेषत्वविचारो निष्फल इति भावः। उपसंहरति—**तस्मादि**ति। तार्त्तीयाङ्गत्वविचारस्य निष्फलत्वादित्यर्थः।

ननु यदि मनननिदिध्यासनयोर्न तार्त्तीयाङ्गत्वम्, कीदृशं तर्हि तदङ्गत्वमित्याकाङ्क्षायां सदृष्टान्तं तदङ्गत्वं निरूपयति—**किन्त्वि**ति। **प्रधान**कारणतेति। कार्यं प्रत्युपादान-स्याश्रयतया सहभावितया च निमित्तकारणतः प्राधान्यादिति भावः। **तथा श्रवण-**स्येति। यथोपादानकारणानां प्रधानकारणत्वं निमित्तानाञ्चाप्रधानकारणत्वम्, तथैव श्रवणादित्रयेषु श्रवणस्य प्रधानकारणत्वं मनननिदिध्यासनयोस्त्वप्रधानकारणत्वम्। यदेव तयोरप्रधानत्वम्, तदेवात्राङ्गत्वं विवक्षितमिति भावः। नन्वप्रधानत्वमेवाङ्गत्वम्, न तु तार्त्तीयशेषत्वम्। तच्च मनननिदिध्यासनयोरेव न श्रवणस्येत्यत्र किं विनिगमकमित्या-

**सनानामपीति मन्तव्यम्। सूचितं चैतद् विवरणाचार्यैः—शक्तितात्पर्य-विशिष्ट-शब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति, प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात्। मनन-निदिध्यासने तु चित्तस्य प्रत्यगात्म-प्रवणतासंस्कार-परिनिष्पन्न-तदेकाग्रवृत्ति-कार्यद्वारेण ब्रह्मानुभव-हेतुतां प्रति-पद्येते इति फलं प्रत्यव्यवहित-कारणस्य तात्पर्यविशिष्ट-शब्दावधारणस्य व्यवहिते मनन-निदिध्यासने तदंगे अङ्गीक्रियेते इति।**

**श्रवणादिषु च मुमुक्षूणामधिकारः, काम्ये कर्मणि फलकामस्याधि-**

काङ्क्षायामाह—**सूचितमि**ति। **शक्तितात्पर्ये**ति। शक्तितात्पर्यरहिताच्छब्दात् प्रमेय-बोधानुत्पादाच्छक्ति-तात्पर्यविशिष्टेति शब्दविशेषणमुक्तमिति भावः। **प्रमेया**वगमं प्रमां, ब्रह्मानुभवमिति यावत्। **अव्यव**धानेनेति। साक्षादित्यर्थः, व्यापारं विनेति यावत्। अनेन शक्तितात्पर्यविशिष्ट-शब्दावधारणलक्षणस्य श्रवणस्य करणत्वं दर्शितम्, अव्यव-हितकारणस्यैव करणत्वात्। अव्यवधानमुपपादयति—**प्रमाणस्ये**ति। **अव्यव**धानात् व्यापाररूप-व्यवधानाभावात्। मननादेस्तु वैपरीत्यमाह—**मनने**ति। **प्रत्यगात्मे**ति। प्रत्यगात्मनि या प्रवणता तल्लक्षणो यः संस्कारः, तेन परिनिष्पन्ना या तदैकाग्र्यलक्षणा वृत्तिस्तदेव कार्यम्, तद्द्वारेणेत्यर्थः। **इति**र्हेतौ। **फलं** ब्रह्मानुभवम्। **अव्यव**हितेति। तथा च श्रवणं ब्रह्मानुभवं प्रत्यव्यवहितकारणत्वात् प्रधानं भवति। मनननिदिध्यासने तु ब्रह्मात्मैकाग्रतालक्षणवृत्तिद्वारा व्यवहितकारणत्वादप्रधाने भवत इति भावः। **तदंगे** इति। शब्दात् पुनः प्रथममपरोक्षज्ञानमुत्पन्नमप्यन्तःकरणगत-भ्रान्ति-विक्षेपसंस्कार-दोषात् परोक्षकल्पमप्रतिष्ठमवतिष्ठते। मनननिदिध्यासने त्वन्तःकरणगत-विक्षेपादिदोष-प्रतिबन्ध-निरासेनापरोक्षानुभव-प्रतिष्ठाहेतुतया श्रवणस्य प्रमाणस्य फलोपकार्यङ्गतामुपगच्छत इति ते तदङ्गे भवत इति भावः।

नन्वस्तु श्रवणादिकं ब्रह्मानुभवसाधनम्। तथापि तदस्माकं नानुष्ठेयम्, तत्राधिकार-निश्चयाभावात्, तदधिकारनिश्चयस्यैव तत्र प्रवृत्तिहेतुत्वादित्यतः श्रवणाद्यधिकारिणं निरूपयति—**श्रवणादिष्वि**ति। **मुमुक्षूणां** मोक्षकामानाम्, श्रवणादेर्मोक्षफलजनक-त्वेन तत्कामस्यैव तत्राधिकारौचित्यात्, तस्य तत्साधनत्वादिति भावः। ननु श्रवणादिषु सर्वेषामधिकारः स्यात्, शास्त्रस्य मनुष्याधिकारत्वादित्यत आह—**काम्ये** इति। **फल-कामस्ये**ति। फलसाधनत्वज्ञानं हि फलसाधने प्रवृत्तिमुत्पादयत् तत्रैव तत्फलकाममेवा-

**कारित्वात्। मुमुक्षायाश्च नित्यानित्य-विवेकस्येहामुत्रार्थ-फलभोग-विरागस्य शमदमोपरति-तितिक्षासमाधान-श्रद्धानां विनियोगः। अन्तरिन्द्रिय-निग्रहः**

धिकरोति नान्यत्रान्यं वा। काम्यं तु कर्म तत्तत्फलजनकत्वेन तत्तत्फलकाममेव तत्राधिकरोति नान्यम्। एवं मोक्षजनकमपि श्रवणादिकं मोक्षकाममेव तत्राधिकरोति नान्यम्। अतः सर्वेषां न तत्राधिकारः, तत्फलाभिलाषरहितत्वात्, किन्तु तत्फलकामस्यैव। तथा चोक्तं पद्मपादाचार्यैः पञ्चपादिकायां पञ्चमवर्णके—ब्रह्मज्ञानकामेनेदं शास्त्रं श्रोतव्यमितीति भावः। नन्वेवमपि श्रवणादिकं सर्वाधिकारकं स्यात्, सर्वेषां मुमुक्षुत्वात्, दुःखनिवृत्तिरूपस्यानन्दावाप्तिरूपस्य वा मोक्षस्य सर्वाभिलषणीयत्वात्, सुखं मे स्याद् दुःखं मा भूदित्याशिषः स्वरसवाहित्वादित्यत आह—**मुमुक्षा**याश्चेति। मुमुक्षाहेतुं साध्यसाधनक्रमेण दर्शयति —**नित्यानि**त्येति। नित्यानित्ययोर्वसतीति नित्यानित्यवस्तु, तद्धर्मः नित्यत्वमनित्यत्वञ्च, तस्य विवेको निश्चयस्तस्येत्यर्थः। तथा च धर्मिसामान्ययोस्तद्धर्मयोश्च विवेको नित्यानित्यवस्तुविवेकस्तेन न ब्रह्मविचारानर्थक्यप्रसङ्गः, इदं नित्यमिदमनित्यमिति विशेषतोऽनिश्चयात्, नित्यानित्यसमुदाये क्वचिन्नित्यत्वमस्ति क्वचिच्चानित्यत्वम्। यत्र तु नित्यत्वमस्ति, तन्नित्यं सुखम्। यत्र चानित्यत्वमस्ति तदनित्यं दुःखमित्येतावन्मात्रनिश्चयात्। सोऽयं नित्यानित्यवस्तुविवेको विशुद्धसत्त्वस्यैव भवति नान्यस्येति भावः। तद्विवेकफलभूतं मुमुक्षाहेत्वन्तरं दर्शयति—**इहा**मुत्रेति। अनर्थफलभोगे स्वतः एव सर्वेषां वैराग्यसिद्धेर्न तस्य विवेकसाध्यत्वमत उक्तम्—अर्थफलेति। सोऽयं विरागो नित्यानित्यवस्तु-विवेकाज् जायते, नित्यस्यास्थागोचरत्वादनित्यस्यानास्थागोचरत्वादिति भावः। तादृशवैराग्यस्य फलं मुमुक्षाहेत्वन्तरं दर्शयति—**शमद**मेति। अन्तःकरणेन्द्रियाणां स्वभावतो विषयप्रवणानां विषयवैराग्यं विना जयो नैव भवतीति शमो वैराग्यहेतुको बोद्धव्यः। जिते चान्तःकरणे तदधीनानामिन्द्रियाणां योऽयं व्यापारोपरमः, सोऽयं दमो मनोजयहेतुको मन्तव्यः। एवमुपरत्यादावपि बोद्धव्यम्। "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्ये"दिति बृहदारण्यक-श्रुतेरिति भावः। **विनियोगः** उपयोगः, साधनत्वमिति यावत्। यावदनित्यं नावैति तावन्नित्यं वस्तु न प्रतिपद्यते। यावच्च नित्यानित्यवस्तुविवेको न जायते, तावद् विरक्तो न भवति। यावद् विरक्तो न भवति, तावच्छमदमादयो नोत्पद्यन्ते। यावच्छमदमादयो नोत्पद्यन्ते, तावद् मुमुक्षा न जायते। तथा चैतानि परस्परं साध्यसाधनभावेन यस्मिन् पुरुषविशेषे

**शमः। बहिरिन्द्रियनिग्रहो दमः। विक्षेपाभाव उपरतिः। शीतोष्णादि-द्वन्द्व-सहनं तितिक्षा। चित्तैकाग्र्यं समाधानम्। गुरु-वेदान्त-वाक्येषु विश्वासः श्रद्धा। अत्रोपरमशब्देन सन्न्यासोऽभिधीयते। तथा च संन्या-सिनामेव श्रवणादावधिकार इति केचित्। अन्ये तूपरम-शब्दस्य संन्यास-**

समुत्पद्यन्ते, तस्यैव मोक्षेच्छा जायते नान्यस्येति न सर्वेषां मोक्षाधिकारः, किन्तु कस्यचित् पुरुषधौरेयस्येति भावः। ननु नित्यानित्यवस्तुविवेकादीनामधिकारनिमित्तत्वं कथम्? अन्येषामपि तत्सम्भवादिति चेत्, न, शास्त्रीयविधौ शास्त्रीयस्यैवाधिकार-निमित्तस्य वक्तव्यत्वात्, अन्येषां शास्त्रीयत्वासम्भवात्। नन्वेतेषां शास्त्रीयत्वं कथमिति चेत्? इत्थम्। "सोऽन्वेष्टव्य" इति विधिप्रकरणे "तद् यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति नित्यानित्यवस्तुविवेको दर्शितः। "परीक्ष्य लोकान् कर्मचितान्" "आत्मनस्तु कामाय सर्वं प्रियं भवती"ति चेहामुत्रार्थफलभोग-विरागो दर्शितः। "शान्तो दान्त" इत्यादिना शमादयो दर्शिताः। यद्यपि शमादयो ज्ञानविधिप्रकरणे-परिपठितास्तथापि तेषां विचाराधिकारनिमित्तत्वं नैव विरुद्धम्, ज्ञानस्य विधातुमशक्यतया तत्साधनस्य विचारस्यैव विधेयत्वात्। शमदमादीन् निरूपयति—अन्तःरिन्द्रियेति। **निग्रहः** व्यापारोपरमः। **विक्षेपा**भाव इति। अस्थेमबहूलानामन्तः-करणेन्द्रियाणां योऽयं विषयाद् विषयान्तर-सञ्चारः, स विक्षेपस्तदभाव उपरतिरित्यर्थः। **शीतो**ष्णादीति। आदिना सुखदुःखादिपरिग्रहः। **विश्वासः** दृढ़प्रत्ययः।

भाष्यकारास्तु शमदमादिशब्दानामन्यथार्थमाहुः। उपरतिशब्दार्थविवेचनेन श्रवणा-द्यधिकारिणं निरुपयितुं तत्र मतभेदान् दर्शयति—**अत्रे**ति। "शान्तो दान्त" इत्यादि-वाक्ये इत्यर्थः। **उपरम**शब्देन उपरतशब्देन। सन्न्यासस्योपरतिशब्दार्थत्वे तत्फलमाह—**तथा चे**ति। उपरतिशब्दस्य सन्न्यासाथकत्वे इत्यर्थः। **संन्यासि**नामेवेति। "ब्राह्मणो निर्वेदमायात्" "ब्राह्मणो व्युत्थाय" "ब्राह्मणः प्रव्रजेत्" इत्यादिकेषु सन्न्यासविधिवाक्येषु ब्राह्मण-ग्रहणात्, "अधिकारिविशेषस्य ज्ञानाय ब्राह्मणग्रहः। न सन्न्यासविधिर्यस्मात् श्रुतौ क्षत्रियवैश्ययो"रिति वार्त्तिकवचनाच्चेति भावः। न च "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद् वे"ति जावालश्रुतौ ब्राह्मणादिविशेषग्रहणाभावात्, "ब्राह्मणः क्षत्रियो वापि वैश्यो वा प्रव्रजेद् गृहादि"ति स्मृत्या च क्षत्रियवैश्ययोरपि सन्न्याससिद्धिरिति वाच्यम्, उदाहृतजावालश्रुतौ सन्न्यासविधिवाक्ये ब्राह्मणग्रहणाभावेऽपि सन्न्यासावस्थाया-

**वाचकत्वाभावाद् विक्षेपाभावमात्रस्य गृहस्थेष्वपि सम्भवाज्जनकादेरपि ब्रह्म-विचारस्य श्रूयमाणत्वात् सर्वाश्रम-साधारणं श्रवणादि-विधानमित्याहुः।**

**सगुणोपासनमपि चित्तैकाग्रय-द्वारा निर्विशेष-ब्रह्मसाक्षात्कारहेतुः। तदुक्तम्— निर्विशेषं परं ब्रह्म साक्षात्कर्त्तुमनीश्वराः।**
**ये मन्दास्तेऽनुकम्प्यन्ते सविशेष-निरूपणैः॥**

मयज्ञोपवीती कथं ब्राह्मण इति ब्राह्मण-परामर्शात्, द्विजाधिकारत्वे ब्राह्मणवत् क्षत्रिय-वैश्ययोरपि परामर्शौचित्यात्, स्मृतिवाक्यार्थस्य श्रुतिविरुद्धतयाऽग्राह्यत्वात्। **अधिकार** इति। उपरति-शब्दाभिधेयस्य सन्यासस्य श्रवणाधिकारनिमित्तत्वात् सन्यासे च ब्राह्मणानामेवाधिकारात्, तेषामेव तत्राधिकारो नान्येषामिति भावः। **केचिद्** भाष्यानुवर्त्तिनः।

मतान्तरमाह—**अन्ये** त्विति। वार्त्तिकानुयायिनस्त्वित्यर्थः। सर्वाश्रमसाधारणं श्रवणादिविधानमित्याहुरित्यग्रेतनेनास्यान्वयः। श्रवणादीनां सर्वाधिकारकत्वे हेतुमाह—**उपरम**शब्दस्येति। **वाचकत्वा**भावादिति। उपरमशब्दस्य सन्यासवाचकत्वे सन्यासिनामेव श्रवणाद्यधिकारः स्यात्, सन्यासस्य तन्निमित्तत्वात्। न चायं शब्दः सन्न्यासवाचकस्तस्मात् सन्न्यासिमात्राधिकारो नैव सिद्ध इति भावः। ननु मास्तु श्रवणादौ सन्न्यासिमात्राधिकारस्तथापि गृहस्थादीनामधिकारः कथं स्यात्, उपरतिशब्दार्थस्य कर्माभावस्यैषणाभावस्य वा संन्यासाधीनत्वात्, तेषाञ्च संन्यासाभावादत आह—**विक्षेपा**भावमात्रस्येति। तथा चोपरतिशब्दस्य विक्षेपाभावार्थकत्वे गृहस्थादीनामपि श्रवणाद्यधिकारो निर्बाधः स्यात्, अधिकारनिमित्तस्य विक्षेपाभावस्य तत्रापि सम्भवादिति भावः। नन्वियं कल्पना साध्वी स्याद्, यदि गृहस्थानां तदधिकारः प्रमाणसिद्धः स्यात्। न चैषः प्रमाणसिद्धः, प्रमाणाभावादित्यत आह—**जनकादे**रिति। आदिपदेन प्राचीनशालादीनां परिग्रहः। **ब्रह्म**विचारस्य ब्रह्मात्मैक्य-विचारस्य। वेदादिष्विति शेषः। **श्रूयमाण**त्वादिति। तथा च बृहदारण्यके—जनकस्य वैदेहस्य विजिज्ञासा बभूव—कः स्विदेषां ब्राह्मणानामनूचानतम इतीति। छान्दोग्येऽपि—ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसाञ्चक्रुः को न आत्मा किं ब्रह्मेतीति। वस्तुतस्त्वयं पक्षो नाचार्यसम्मतः, सूत्र-भाष्यादिष्वन्यथादर्शनात्। प्रपञ्चस्त्वाकरे द्रष्टव्यः।

श्रवणादीनां यथा ब्रह्मानुभव-साधनत्वमेवं सगुणोपासनस्यापीत्याह—**सगुणो**पासनमपीति। सगुणोपासनं नाम "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्य-

**वशीकृते मनस्येषां सगुण-ब्रह्मशीलनात्।**
**तदेवाविर्भवेत् साक्षादपेतोपाधिकल्पनम्॥**

**इति। सगुणोपासकानां चार्चिरादि-मार्गेण ब्रह्मलोकं गतानां तत्रैव श्रवणा-**

श्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्ण" इत्यादिना विहितमुपासनम्। ननु सगुणोपासनस्य निर्विशेषब्रह्मानुभवहेतुत्वं नैव युक्तम्, तस्य मानसक्रियारूपत्वात्, क्रियायाश्चानुभवाहेतुत्वात्, बह्वायाससाध्यानां श्रवणादीनामननुष्ठानप्रसङ्गाच्चेत्यत आह— **चित्तै**काग्र्यद्वारेति। एतच्चार्चिरादिप्राप्तेरप्युपलक्षणम्, "तं यथा यथोपासते, तदेव भवति, यथाक्रतुरस्मिन् लोके भवति, तथेतः प्रेत्य भवती"त्यादिश्रुतेः, "यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः"॥ इति स्मृतेश्च। तथा च ये तावदिह दुर्वासनावासितान्तःकरणा वैराग्याद्यभावाच्छ्रवणादिसाधनहीनाः केवलं सगुणमेवोपासते, ते तयैवोपासनया चित्तैकाग्र्यं सम्पाद्यार्चिरादिक्रमेण ब्रह्मलोकं गच्छन्तस्तत्रैव श्रवणादिना ब्रह्मानुभवमुत्पाद्यामृतत्वभाजो भवन्तीति न कश्चिद् विरोधो न वा श्रवणादिवैयर्थ्यम्, सगुणोपासनस्य पारम्पर्येण ब्रह्मानुभवहेतुत्वादिति भावः। तत्र कल्पतरुवचनं प्रमाणयति—**तदुक्त**मिति। **निर्विशेष**मिति। **ये मन्दाः** दुर्वासना-वासितान्तःकरणा वैराग्याद्यभावाच्छ्रवणादिसाधनहीना **निर्विशेषं परं ब्रह्म साक्षात्-कर्त्तुमनीश्वरा** अक्षमास्ते **सविशेषनिरूपणैः** सगुणब्रह्मोपासननिरूपणैः **अनुकम्प्यन्ते** अनुगृह्यन्ते। सगुणोपासनफलं दर्शयितुमाह—**वशीकृते** इति। **एषां** मन्दानां **सगुण-ब्रह्मशीलनात्** सगुणब्रह्मोपासनाभ्यासात् **मनसि वशीकृते** ब्रह्मण्येकाग्रे सति **तदेव** परं ब्रह्म **अपेतो**पाधिकल्पनम् अपेता अपगता उपाधिकल्पना यस्मात् तन्निरुपाधिकं सत् **साक्षात्** आविर्भवतीति श्लोकार्थः। ननु सगुणोपास्तेः फलं न निर्विशेषब्रह्मानुभवः, तदुपासनस्य ताद्रूप्यप्राप्तिहेतुत्वात्, अन्यथाऽतिप्रसङ्गादित्यत आह—**सगुणो**पासका-नामिति। ये तूपासनमान्द्याद् ब्रह्मलोकं नाधिगच्छन्ति, तेषां तदुपास्यप्राप्तिरेव तदुपास्तेः फलं न ब्रह्मानुभवः। ये तु पुरुषधौरेया उपासनोत्कर्षाद् ब्रह्मलोकमधिगच्छन्तस्तत्रैव श्रवणा-दिना ब्रह्मात्मैक्यमनुभवन्ति, तेऽमृतत्वभाजो भवन्ति, न च पुनरावर्त्तते इति श्रुतेः, "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पद"मिति स्मृतेश्च। तथा च सगुणोपासनानां श्रवणादिद्वारैव ब्रह्मानुभवहेतुत्वान्नातिप्रसङ्ग इति भावः। ब्रह्म-लोकगमनमार्गं दर्शयति—**अर्चिरा**दिमार्गेणेति। अर्चिराद्यभिमानिदेवताद्वारेणेत्यर्थः।

**दुत्पन्न-तत्त्वसाक्षात्काराणां ब्रह्मणा सह मोक्षः। कर्मवतां धूमादिमार्गेण पितृलोकं गतानामुपभोगेन कर्मक्षये सति पूर्वकृत-सुकृतदुष्कृतानुसारेण**

विगलितस्थूलकलेवराणां सूक्ष्मदेहवतां सङ्कुचित-करणग्रामाणां स्वातन्त्र्येण गमनासामर्थ्यात्, "चन्द्रमसो विद्युतं तत् पुरुषोऽमानवः स एनान् ब्रह्म गमयती"त्यमानवपुरुषस्य ब्रह्मगमयितृत्वश्रवणादिति भावः। "प्रपञ्चस्त्वातिवादिकस्तल्लिङ्गात्, उभयव्यामोहात् तत्सिद्धे"रित्यादिषु सूत्रेषु द्रष्टव्यः। आदिशब्देनाहरादिपरिग्रहः। मार्गक्रमस्त्वेषः—प्रथमतोऽर्चिषं ततोऽहस्ततः शुक्लपक्षं तत उत्तरायणं ततः संवत्सरं ततो देवलोकं ततो वायुं तत आदित्यं ततश्चन्द्रं ततो विद्युतं ततो वरुणं तत इन्द्रं ततः प्रजापतिं ततो ब्रह्मलोकं नयतीति। यद्यपि छान्दोग्यवाक्ये वायुवरुणेन्द्रादयो न श्रूयन्ते, तथापि श्रुत्यन्तरैकवाक्यात् तेषामप्यत्र ग्रहणं न्याय्यम्। ननु क्रममुक्त्यर्थानामुपासनानां यथा ब्रह्मानुभवहेतुत्वम्, सत्कर्मणामपि तथैव स्यात्, तेषामपि क्रममुक्त्यर्थत्वादित्यत आह—**कर्मवता**मिति। इष्टापूर्त्तादिकर्मजन्यादृष्टवतामित्यर्थः। **धूमादि**मार्गेणेति। धूमाद्यभिमानि-चेतनदेवता-द्वारेणेत्यर्थः। कर्मिमार्गस्त्वेषः—प्रथमतो धूमं ततो रात्रिं ततो कृष्णपक्षं ततो दक्षिणायनं ततः पितृलोकं तत आकाशमाकाशाच्चन्द्रमाप्नोतीति। तथा च छान्दोग्योपनिषत्—अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद् यान् षड् दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति। मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम्। एष सोमो राजेति। **पितृलोकं** चन्द्रलोकम्, "स सोमलोके विभूतिमनुभूय पुनरावर्त्तते" इत्यादि श्रुतौ चन्द्रमण्डले भोगसद्भावश्रवणादिति भावः। **उपभोगेने**ति। कर्मणोऽपूर्वस्य फलनाश्यत्वादुपभोगस्य तत्फलत्वादुपभोगेनैव कर्मणां क्षय इति भावः। न चादत्तफलं कर्म कर्त्तृकर्मादिनाशाद् विनश्यति, तद्विनाशस्य तन्निबन्धनत्वादिति वाच्यम्, कर्त्तृकर्मादिनाशस्य तदनाशकत्वात्, लौकिकस्य कर्मणः फलनाश्यत्वदर्शनाद् वैदिकस्यापि तथात्वकल्पनाया न्याय्यत्वात्, अन्यथा कृतप्रणाशाकृताभ्यागमप्रसङ्गात्, शास्त्राप्रामाण्यप्रसङ्गाच्च। तस्मादुपभोगस्यैव तन्नाशकत्वमभ्युपगमनीयम्। अत एवाह स्मृतिः—नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति। **कर्मक्षये** आमुष्मिकफलस्य कर्मणोऽपूर्वस्य क्षये। ननु यद्युपभोगेन तत्रैव कर्मणां क्षयः, कथं तर्ह्यवरोहः, तद्धेतोः कर्मण उपभोगेन क्षयादित्यत आह—**पूर्वकृते**ति। तथा चामुष्मिकफलस्यारब्धभोगस्य कर्मण उपभोगेन क्षयेऽप्यनारब्धफलस्य कर्मणस्तदुपभोगेनाक्षयात्।

**ब्रह्मादि-स्थावरान्तेषु पुनरुत्पत्तिः। तथा च श्रुतिः—रमणीय-चरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमिति। प्रतिषिद्धानुष्ठायिनान्तु रौरवादि-नरकविशेषेषु तत्तत्पापोचितं तीव्रदुःखमनुभूय श्व-शूकरादिषु तिर्यग्योनिषु स्थावरादिषु चोत्पत्तिरित्यलं प्रसङ्गागत-प्रपञ्चेनेति।**

न ह्यन्यकृतफलेनान्यफलस्य कर्मणः क्षयो दृष्ट उपपन्नो वा, अतिप्रसङ्गात्। अत एवाह स्मृतिः—कदाचित् सुकृतं कर्म कूटस्थमिह तिष्ठति। मज्जमानस्य संसारे यावद् दुःखाद् विमुच्यते॥ इति। तस्मादिष्टादिकारिणां नावरोहाभाव इति भावः। अवरोहस्थानं दर्शयति—**ब्रह्मादी**ति। आदिपदेन विश्वसृगादिपरिग्रहः। तथा चोक्तं मनुना—ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च। उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः॥ इति। गतिप्रपञ्चस्तत्रैव द्रष्टव्यः। उत्कृष्टापकृष्टगतिप्राप्तौ छान्दोग्यश्रुतिं प्रमाणयति—**तथा चे**ति। **रमणीय**चरणाः रमणीयं सत् चरणं कर्म येषां तथाविधाः प्रशस्तकर्माणः। यद्यपि चरणशब्दश्चारित्र्यपर्यायो यद्यपि च कर्मचरणयोर्भेदः श्रुतिसिद्धः, "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि यान्यस्माकं सुचरितानि तानि त्वयोपास्यानी"ति। तथापि चरणशब्देनात्र सुकृतदुष्कृते एव प्रत्याय्येते, आचारस्यापि धर्मविशेषरूपत्वात्। अत एवेष्टादिपुण्यकर्मकारिषु धर्मं चरन्तीति लौकिक-व्यवहारोऽप्युपपन्नो भवतीति भावः। **रमणीयां योनिं** ब्राह्मणादियोनिम्। **कपूयचरणाः** निन्दितकर्माणः। **कपूयां योनिम्** श्वशूकरादियोनिम्। नन्विष्टादिकारिणामिवानिष्टादिकारिणामपि चन्द्रलोके गतिः स्यात्, "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती"ति कौषितक्युपनिषद्विशेषेण सर्वेषां प्रेतानां चन्द्रलोकप्राप्तिश्रवणात्, देहारम्भस्य च चन्द्रलोकगमनमन्तरेणानुपपत्तेः, पञ्चम्यामाहुतावित्याहुति-संख्यानियमादित्यत आह—**प्रतिषिद्धे**ति। **रौरवादी**ति। आदिपदेन स्मृति-पुराणप्रसिद्धतामिस्रादिनरकपरिग्रहः। तथा चाह भगवान् याज्ञवल्क्यः—असिपत्रवनं चैव तपनं चैकविंशकम्। महापातकजैर्घोरैरुपपातकजैस्तथा। अन्विता यान्त्यचरितप्रायश्चिता नराधमा॥ इति। **श्वशूक**रादिष्विति। आदिपदेन खरोष्ट्रादिपरिग्रहः। तथा चोक्तं मनुना—श्वशूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम्। चण्डालपुक्कशानाञ्च ब्रह्महा योनिमृच्छतीति। **स्थावरा**दिष्विति। वृक्षादिष्वित्यर्थः। आदिपदेन कृमिकीटादिपरिग्रहः। तथा चोक्तं मनुना—शारीरजैः कर्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातितामिति। ननु ये तावन्न

**निर्गुण-ब्रह्मसाक्षात्कारवतस्तु न लोकान्तर-गमनम्, "न तस्य प्राणा उत्क्रामन्ती"ति श्रुतेः। किन्तु यावत्प्रारब्धक्षयं सुखदुःखेऽनुभूय पश्चादपवृ-**

विद्यासेविनो नापीष्टादिसेविनश्च तेषान्तु क्षुद्रजन्तूनां तृतीया काचिद् गतिः श्रूयते—"जायस्व म्रियस्वेत्येतत् तृतीयं स्थान"मिति। तद् गतिप्रकारोऽपि विशेषतो वक्तव्य इत्यत आह—**अलमि**ति। प्रसङ्गाद् गतिद्वयं निरूपितम्। एतत्तु प्रकृतोपयोगाभावादुपेक्ष्यत इति भावः। **प्रसङ्गागते**ति। स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः।

ननु सगुणोपासकानामिव निर्गुणोपासकानामपि लोकान्तरगतिर्वक्तव्या, विद्यावत्त्वाविशेषात्, "स एनान् ब्रह्म गमयती"ति लोकान्तरगतिद्वारैव ब्रह्मप्राप्त्यभिधानादित्यत आह—**निर्गुण**ब्रह्मेति। तत्र बृहदारण्यकवचनं प्रमाणयति—**न तस्ये**ति। **तस्य** आत्मैकत्व-साक्षात्कारवतोऽकामयमानस्य कर्माभावे गमनकारणाभावात् **प्राणाः** वागादयो **नोत्क्राम**न्तीति श्रुत्यर्थः। तथा चात्मसाक्षात्कारवत उत्क्रान्ति-प्रतिषेधात्, "ब्रह्म वेद-ब्रह्मैव भवती"ति विद्याब्रह्मप्राप्त्योः समकालताभिधानात्, गन्तृगन्तव्यादिविभागाभावान्न-लोकान्तरप्राप्तिपूर्विका ब्रह्मप्राप्तिः किन्तु विद्योदयसमकालमेव। ब्रह्मगमयितृत्व-श्रुतिस्तु न परब्रह्मपरा, "ब्रह्मलोकान् गमयति, ते तेषु ब्रह्मलोकेषु परा परावतो वसन्ती"ति तस्यैव ब्रह्मणो विशेषाभिधानात्, परस्य ब्रह्मणः प्रदेशाभावेन गन्तव्यलोकत्वाभावात्, सन्निवेश-विशिष्टायां भोगभूमावेव लोकशब्दस्य निरूढत्वात्। किन्तु कार्यब्रह्मपरा, तस्य गन्तव्यत्वाल्लोकत्वाच्चेति भावः। विस्तरस्तु कार्याधिकरणे द्रष्टव्यः। ननु ब्रह्मप्राप्तेर्विद्योदय-समकालत्वे विद्योदयसमकालमेव विदेहकैवल्यं स्यात्, विद्ययाऽविद्यानाशे तत्कार्याणां शरीरादीनां सुखादीनाञ्च नाशावश्यम्भावात्, उपादेयनाशस्योपादाननाशनिबन्धनत्वात्, निरुपादनस्य कार्यस्य स्थित्ययोगादित्यत आह—**किन्त्वि**ति। **प्रारब्धक्षयं** प्रारब्ध-कर्मणां क्षयं, येन कर्मजातेन जन्मायुर्भोगाः सम्पादिता विततश्च, तदेव कर्मजातं प्रारब्ध-कर्मेत्याख्यायते। तत्रैका विचारणा किमेकं कर्मैकस्य जन्मनः कारणमुतानेकस्येति। द्वितीया विचारणा किमनेकं कर्मानेकस्य जन्मनः कारणमुतैकस्येति। नाद्यः, अनादि-कालसञ्चितेष्वसंख्येयेषु कर्मस्वेकस्य कर्मण एकजन्मारम्भकत्वेऽवशिष्टस्य वर्त्तमानजन्मन्यनुष्ठितस्य च कर्मणः फलक्रमानियमाद् भाविपापादिनाऽनुष्ठीयमानपुण्यनाशसम्भवात् पुण्यानुष्ठानं प्रति लोकस्यानाश्वासप्रसङ्गात्। नापि द्वितीयः। अनेकस्मिन् जन्मन्याहितेष्वनेकेषु कर्मस्वेकस्य कर्मणोऽनेकजन्मारम्भकत्वेऽवशिष्टस्य विपाककालाभावात् कर्मवैफल्येन

**ज्यते। ननु "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादि-श्रुत्या**

तदननुष्ठानप्रसङ्गात्। नापि तृतीयः, तदनेकजन्मनां यौगपद्याभावेन क्रमिकत्वे प्रथमपक्षोक्तदोषप्रसङ्गात्। तस्माज्जन्ममरणयोरन्तराले कृतः पुण्यापुण्यकर्माशयप्रचयो गुणप्रधानभावेनावस्थितो मरणेनाभिव्यक्तो जन्मादिलक्षणे कार्ये कर्त्तव्य एकलोलीभावमापन्न एकमेव जन्म करोति नानेकमिति न पूर्वपूर्वपक्षोक्त-दोषावकाश इति भावः। **अनुभूये**ति। उपभोगं विना प्रारब्धक्षयायोगाद् देहादीनां तदापि विद्यमानत्वादिति भावः। न चैतदयुक्तमिति वाच्यं, विद्ययाऽविद्यानाशेऽपि निवृत्तसर्पभ्रमस्य संस्काराद् भयकम्पानुवृत्तिवद् दण्डसंयोगनाशेऽपि चक्रभ्रमवदविद्यालेशानुवृत्त्या देहाद्यनुवृत्त्युपपत्तेः। अविद्याया सूक्ष्मावस्था लेशः। यथा यागे गतेऽपि यागसूक्ष्मावस्थारूपमपूर्वं यागसाधनतानिर्वाहकं स्वीक्रियते। एवमज्ञाने गतेऽपि तत्सूक्ष्मावस्थारूपो लेशो देहादिप्रतीत्यनुकूलः स्वीक्रियते, स्वर्गजनकतानिर्वाहकश्रुतेरिवात्रापि जीवन्मुक्तिश्रुतेस्तादृगर्थस्वीकारादिति भावः। न चोपादानाज्ञानं विना कथं देहादिस्थितिरिति वाच्यम्। समवायिकारणं विना विनश्यदवस्थस्य कार्यस्य स्थितिवद् भुज्यमानकर्माभावसहकृताऽविद्याद्युपादाननाशस्य तावत्कालमभावात् स्थित्युपपत्तेः, प्रतिबन्धकाभावसहकृतोपादाननाशस्य कार्यनाशहेतुत्वात्। अधिकं प्रागेवोक्तम्। वस्तुतस्तु विचित्रशक्तिमदविद्यायाः कस्याश्चिच्छक्तेस्तत्त्वसाक्षात्कारेण नाशेऽप्यर्थाभासशक्तेरनुवृत्तेस्तच्छक्तिमदविद्याऽप्यनुवर्त्तते इति नोक्तदोषावकाशः। न चाविद्यायां सत्यां कथं मुक्त इति व्यपदेशः, शक्तिमात्रनाशात् तद्व्यपदेशोपपत्तेः। तथा च श्रुतिः—तस्याभिध्यानाद् योजनाद् तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिरिति। न च भूयःशब्दस्य योजनशब्देनान्वय इति वाच्यम्, विशेषणान्वयापेक्षया विशेष्यान्वयस्याभ्यर्हितत्वादन्तपदवैयर्थ्यप्रसङ्गाच्च। **पश्चात्** चरमदेहपातानन्तरम्, देहपातसमकालमिति यावत्, अनारब्धफलस्य कर्मणो ज्ञानेन नाशादारब्धफलस्य च कर्मण उपभोगेन क्षयाद् देहस्थितिहेतोरभावेन देहपात इति भावः। न च देहान्तरारम्भः, हेत्वभावात्, आरब्धफलस्य कर्मण उपभोगेनाऽनारब्धफलस्य च कर्मणस्तत्त्वज्ञानेन नाशाद् देहान्तरारम्भानुपपत्तेः। **अपवृज्यते** मुक्तो भवति। ननु तत्त्वज्ञानस्य कर्मनाशकत्वे आरब्धफलस्यापि कर्मणस्तेनैव नाशो युक्तस्तदवस्थानन्तु न युक्तम्, अविशेषात्, श्रुतिस्मृत्यादिष्वविशेषेण ज्ञानस्य सकलकर्मनाशकत्वश्रवणादित्याशङ्कते—**नन्वि**ति। तामिमां शङ्कां मुण्डकोपनिषदोपपादयति—**क्षीयन्त** इति। **तस्मिन् परावरे**

**"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" इति स्मृत्या च ज्ञानस्य सकल-कर्म-नाशहेतुत्व-निश्चये सति प्रारब्धकर्मावस्थानमनुपपन्नमिति चेन्न, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इत्यादि-श्रुत्या "नाभुक्तं क्षीयते**

परमात्मनि **दृष्टे**ऽहं ब्रह्मेति साक्षात्कृते **अस्य** तत्त्वज्ञानवतः पुरुषस्य **कर्माणि** च सर्वाणि सुकृतदुष्कृतानि च, कर्माणीत्यविशेषेण कर्मसामान्याभिधानात् क्षीयन्त इत्यर्थः। **इत्यादी-त्या**दिना "तद् यथेषीका तूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्त" इत्यादि-श्रुतिपरिग्रहः। न केवलं श्रुतिः सर्वकर्मणां ज्ञाननाश्यत्वं ब्रवीति, स्मृतिरपीत्याह—**ज्ञानाग्नि**रिति। **अनुप**पन्नमिति। प्रारब्धकर्मणामपि कर्मत्वाद् ज्ञानेन क्षयावश्यम्भावादिति भावः। श्रुतिस्मृतिभ्यां तामाशङ्कां परिहरति—**तस्ये**ति। आचार्योपदेश-जनित-तत्त्वज्ञानवतः पुरुषस्येत्यर्थः। सदात्मस्वरूपसम्पत्तेरिति शेषः। **तावदेव** तावानेव काल**श्चिरं** क्षेपः। कियान् कालश्चिरमित्यत्राह—**यावन्ने**ति। **विमोक्ष्ये** विमोक्ष्यते, येन कर्मणा शरीरमारब्धं तस्योपभोगेन क्षयाद् यावन्न देहपातस्तावत् क्षेप इति भावः। **अथ** तदैव देहपातस्य सत्सम्पत्तेश्च कालभेदाभावात् **सम्पत्स्ये** सम्पत्स्यते इति श्रुत्यर्थः। अनया श्रुत्या मोक्षात्मकसत्सम्पत्तेः शरीरपातावधिकत्वं दर्शितम्। **इत्यादि**श्रुत्येति। आदिपदेन—"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इत्यादिश्रुतिपरिग्रहः। **नाभुक्तमिति**। **अभुक्तम्** अदत्तफलं **कर्म न क्षीयते** उपभोगं विना न नश्यतीति स्मृतिवाक्यार्थः। अनया च स्मृत्याऽदत्तफलानां कर्मणामुपभोगैकनाश्यत्वं दर्शितम्, अस्याश्च स्मृतेरुत्तरवाक्येन—कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभमि"त्यनेनावश्य-भोक्तव्यत्वाभिधानात्। **इत्यादि-स्मृत्ये**ति। आदिपदेन—"न हि कर्म क्षीयते" इत्यादि-गौतमीय-स्मृतिवाक्य-परिग्रहः। तथा च सर्वकर्मणामुपभोगैकनाश्यत्वे मोक्षकथा दत्तजलाञ्जलितामीयात्, अनादिकाल-प्रचितस्यासंख्येयस्य बहुविचित्र-विपाक-निर्वर्त्तकस्य कर्मणो बहुकालव्यापिनाऽप्येकेन शरीरेणोपभोगायोगात्, केषाञ्चिदुपभोगेन नाशेऽप्यवशिष्टानां सञ्चितानां साम्प्रतिकानाञ्च क्रमवर्धमानानां क्रमोपभोगाय शरीरप्रवाहावश्यम्भावेन तदुच्छेदासम्भवात्। एवं सर्व-कर्मणां ज्ञाननाश्यत्वे श्रुति-स्मृतीहास-पुराणेषु विदुषामप्यपान्तरतमःप्रभृतीनां तत्तद्देहपरि-ग्रह-परित्यागौ श्रूयमाणौ नोपपद्येयाताम्। तथा "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति श्रूयमाणं क्षेमप्राप्तेः शरीरपातावधिकत्वं नोपपन्नं स्यात्। न हि सर्वकर्मणां

**कर्मे"त्यादि-स्मृत्या चोत्पादित-कार्य-कर्म-व्यतिरिक्तानां संचित-क्रियमाण-कर्मणामेव ज्ञान-विनाश्यत्वावगमात्। सञ्चितं द्विविधं—सुकृतं दुष्कृतं चेति। तथा च श्रुतिः—तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति।**

**ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्कार्य-प्रारब्धकर्मणोऽपि निवृत्तेः कथं ज्ञानिनो देहधारणमिति चेन्न, अप्रतिबद्ध-ज्ञानस्यैवाज्ञाननिवर्त्तकतया**

क्षये देहपात-प्रतीच्योपपद्यते। न चैषा चिरत्वपरा, श्रुत्यन्तरसिद्धचिरत्वानुवादेन देहपाता-
वधिमात्र-विधायकत्वात्, अन्यथा चिरत्वेऽवधिविशेषे चोच्यमाने वाक्यभेद-प्रसङ्गात्।
तस्मादुभयप्रामाण्यायारब्धफलस्य कर्मण उपभोगनाश्यत्वमनारब्धफलस्य तु ज्ञानैकनाश्यत्व-
मङ्गीकरणीयमिति भावः। **उत्पादिते**ति। उत्पादितं कार्यं जात्यायुर्भोगलक्षणं येन
तदुत्पादितकार्यं तच्च तत्कर्म चेति तदुत्पादित-कार्यकर्म, तद्व्यतिरिक्तानामित्यर्थः।
**सञ्चिते**ति। सञ्चितानि जन्मान्तरकृतान्यनारब्धफलानि। क्रियमाणानि अस्मिन् जन्मनि
कृत-क्रियमाणान्यनारब्धफलानि। सञ्चितं विभजते—**सञ्चित**मिति। एतच्च क्रियमाण-
स्याप्युपलक्षणम्। तथा चानारब्धफलानां सञ्चितानां क्रियमाणानाञ्च सुकृतदुष्कृतानां
तत्त्वज्ञाननाश्यत्वम्; आरब्धफलानान्तु भोगनाश्यत्वं श्रुतिस्मृतिप्रतिपाद्यमिति भावः।
सञ्चितद्वैविध्ये प्रमाणमाह—**तथा चे**ति। **तस्य** विद्यावतः **पुत्रा दायं** धनम् **उपयन्ति**
गृह्णन्ति। **सुहृदः साधुकृत्यां** सुकृतम्। **द्विषन्तः** शत्रवः **पापकृत्यां** दुष्कृतम् उपयन्ति।
तथा च विद्यासामर्थ्यादस्य विदुषः सुकृतदुष्कृते विधूयेते इति भावः।

नन्वनारब्धफलानां कर्मणां ज्ञाननाश्यत्वं नारब्धफलानामित्येतदयुक्तम्, अज्ञान-
कार्याणां कर्मणामज्ञाननाशे नाशावश्यम्भावात्। तथा चानारब्धफलानामिवारब्धफला-
नामपि कर्मणां नाशे विद्यावतो देहस्यापि तदैव नाशः स्यात्, तत्स्थितिहेतूनां कर्मणां
नाशादित्याशङ्कते—**नन्वि**ति। **तत्कार्ये**ति। मूलाज्ञानकार्येत्यर्थः। **देहधारण**मिति।
देहधारणहेतूनां कर्मणां नाशादिति भावः। समाधानहेतुमाह—**अप्रतिबद्धे**ति। तथा च
ज्ञानमात्रस्य नाज्ञाननिवर्त्तकत्वं किन्त्वप्रतिबद्धज्ञानस्य। प्रारब्धकर्मरूप-फलप्रतिबन्धक-
सद्भावदशायां ज्ञानं नाप्रतिबद्धं किन्तु प्रतिबद्धमेव। तेनाज्ञानस्य न निवृत्तिर्न वा प्रारब्ध-
कर्मणः। अतोऽज्ञानसद्भावाद् ज्ञानिनो देहधारणमुपपन्नमेवेति भावः। नन्वप्रतिबद्ध-
ज्ञानस्याप्यज्ञाननिवर्त्तकत्वं नैव युक्तम्, एकस्य तत्त्वज्ञानेनाज्ञाननिवृत्तौ युगपत् सर्वेषां

**प्रारब्धकर्मरूप-प्रतिबन्धक-दशायामज्ञाननिवृत्तेरनङ्गीकारात्। नन्वेवमपि तत्त्वज्ञानादेकस्य मुक्तौ सर्वमुक्तिः स्यात्, अविद्याया एकत्वेन तन्निवृत्तौ क्वचिदपि संसारायोगादिति चेन्न, इष्टत्वादित्येके।**

**अपरे त्वेतद्-दोषपरिहारायैवेन्द्रो मायाभिरिति बहुवचन-श्रुत्यनुगृहीतमविद्याया नानात्वमङ्गीकर्त्तव्यमित्याहुः। अन्ये त्वेकैवाविद्या। तस्या एवाविद्याया जीवभेदेन ब्रह्मस्वरूपावरण-शक्तयो नाना। तथा च यस्य ब्रह्मज्ञानं, तस्य ब्रह्मस्वरूपावरण-शक्तिविशिष्टाऽविद्यानाशो न त्वन्यं प्रति**

मुक्तिप्रसङ्गात्, अज्ञानस्यैकत्वात्; तस्य च नाशात्। न चेष्टापत्तिः, अस्माकं यथापूर्वं संसारित्वदर्शनादित्याशङ्कते—**नन्विति**। **एवमपि** अप्रतिबद्धज्ञानस्याज्ञाननिवर्त्तकत्वेऽभ्युपगम्यमानेऽपि। सर्वमुक्तौ हेतुमाह—**अविद्याया** इति। **तन्निवृत्तौ** अविद्यानिवृत्तौ। **क्वचिदपि** कस्मिंश्चिदपि पुरुषे। **संसारायोगादि**ति। संसारहेतोरविद्याया नाशादिति भावः। **इष्टत्वादि**ति। सर्वमुक्तेरस्मदभिमतत्वेनेष्टत्वात् तदापादनं नैव युक्तम्, अनिष्टस्यैवापादनीयत्वात्। बद्धमुक्तव्यवहारादिकन्तु स्वाप्नपुरुषान्तर-मुक्त्यादिकमिव कल्पितं न परमार्थतोऽस्तीति भावः। **एके** एकाज्ञानवादिनो विवरणीयाः।

नन्वेकमुक्तौ सर्वमुक्त्यङ्गीकारे शास्त्रसिद्धा बद्धमुक्तव्यवस्था न स्यात्, न स्याच्च श्रुतिस्मृतिसूत्रभाष्यादीनामाञ्जस्यमित्यपरितोषात् पक्षान्तरमाह—**अपरे त्वि**ति। अनेकाज्ञानवादिनो भामत्यनुयायिनस्त्वित्यर्थः। **एतद्दोषे**ति। सर्वमुक्त्यापत्तिरूपदोषेत्यर्थः। अविद्यानानात्वे प्रमाणमाह—**मायाभिरि**ति। तथा च प्रकृत्यर्थमायायाः प्रत्ययार्थे बहुत्वेऽन्वयाद् मायाया बहुत्वमवगम्यते। अजामेकामित्यादिकन्तु जात्यभिप्रायकमिति भावः। ननु लाघवतर्क-सहकृतानुमानानुगृहीतैकवचनश्रुतिविरोधाद् बहुवचनश्रुतेरविद्यागतशक्तिभेदपरत्वमेवोचितं नाविद्याभेदपरत्वम्। तत् कथमविद्यानानात्वसिद्धिः, तन्नानात्वग्राहकप्रमाणादर्शनात्। न च बद्धमुक्तव्यवस्थान्यथानुपपत्त्या तत्सिद्धिरिति वाच्यम्, वक्ष्यमाणरीत्या तद्व्यवस्थोपपत्तेरित्यपरितोषात् पक्षान्तरमाह—**अन्ये त्वि**ति। अविद्यांशवादिनो विवरणानुयायिनस्त्वित्यर्थः। **एकैवे**ति। प्रतिजीवमविद्याभेदकल्पने मानाभावात्, गौरवात् प्रयोजनाभावाच्चेति भावः। नन्वविद्याया एकत्वे सर्वमुक्त्यापत्तिस्तदवस्थैवेत्यत आह—**तस्या** इति। **नाने**ति। जीवस्य बहुत्वाच्छक्तीनां बहुत्वम्। यावन्तो जीवास्तावत्यः शक्तय इति भावः। आवरणशक्तेर्नानात्वे फलितमाह—**तथा**

**ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाश इत्यभ्युपगमान्नैकमुक्तौ सर्वमुक्तिप्रसङ्गः। अत एव च "यावदधिकारमवस्थितिराधिकारिकाणामित्यस्मिन्नधिकरणेऽधिकारि-पुरुषाणामुत्पन्न-ब्रह्मज्ञानानामिन्द्रादीनां देहधारणानुपपत्तिमाशङ्क्याधिकारापादक-प्रारब्धकर्मसमाप्त्यनन्तरं विदेहकैवल्यमिति सिद्धान्तितम्। तदुक्तमाचार्य-वाचस्पतिमिश्रैः—**

**उपासनादि-संसिद्धि-तोषितेश्वर-चोदितम्।**
**अधिकारं समाप्यैते प्रविशन्ति परं पदमिति॥**

**एतच्चैकमुक्तौ सर्वमुक्तिरिति पक्षे नोपपद्यते। तस्मादेकाविद्यापक्षेऽपि**

**चे**ति। आवरणशक्तेर्नानात्वे चेत्यर्थः। **शक्ति**विशिष्टाविद्यानाश इति। यद्यप्येतन्मते यावन्न सर्वमुक्तिस्तावच्छक्तिमात्रस्यैव नाशो नाविद्यायाः, तस्या एकत्वात्, तन्नाशे सर्वमुक्त्यापत्तेस्तादवस्थ्यप्रसङ्गात्। तथापि शक्तिशक्तिमतोरभेदात् तथोक्तिरिति बोध्यम्। **प्रसङ्ग** इति। अन्येषामावरणशक्तिमदविद्याया विद्यमानत्वान्न मुक्तिरिति भावः। स्वसिद्धान्तं वादरायणसूत्रेण द्रढ़यति—**अत एवे**ति। एकस्यावरणशक्तिनिवृत्तावप्यन्येषां तदनिवृत्तेरेवेत्यर्थः। **यावदि**ति। आधिकारिकाणां परमेश्वरेण तेषु तेष्वधिकारेषु वेदप्रवर्त्तनादिषु लोकस्थितिहेतुषु नियुक्तानामपान्तरतमःप्रभृतीनां सत्यपि सम्यग्दर्शने कैवल्यकारणेऽक्षीणकर्मत्वाद् यावदधिकारमवस्थितिः, स्थितेरधिकारतन्त्रत्वात्, तदवसाने च मुक्तिरिति सूत्रार्थः। "**उत्पन्न**ब्रह्मज्ञानानामिति। "अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाते"ति छान्दोग्यश्रुतेरिति भावः। **इन्द्रादी**नामिति। आदिपदेनादित्यादिपरिग्रहः। यद्यपि तदधिकरणे भाष्ये वेन्द्रादीनां स्वशब्देन ग्रहणं नास्ति। तथापि तेषां विद्यावतामाधिकारिकपुरुषत्वादत्र ग्रहणं नानुचितमिति मन्तव्यम्। **देह**धारणानुपपत्तिमिति। विद्यावतां तेषां विद्ययाऽविद्यानाशादिति भावः। **समाप्त्यनन्तर**मिति। तत्त्वज्ञानेन प्रारब्धकर्मक्षयायोगादिति भावः। **विदेहकैवल्यम्** स्थूलसूक्ष्मदेहलयलक्षणं कैवल्यम्। स्वसिद्धान्तं भामत्युक्त्या द्रढ़यति—**उपासना**दीति। आदिपदेन निष्कामकर्मपरिग्रहः। **एते** तत्त्वज्ञानवन्त आधिकारिकाः पुरुषाः **उपासनादीनां संसिद्ध्या तोषितेनेश्वरेण चोदितं** नियोजितम**धिकारं** समाप्य **परं पद**मपवर्गलक्षणं प्रविशन्ति प्राप्नुवन्तीति श्लोकार्थः। अनेन तत्त्वज्ञानवतोऽपि यावदधिकारं स्थितिर्दर्शिता। तेनैतेषामज्ञानसद्भावः सूचित इति भावः। उपासनादिसंसिद्धीत्यत्र

**प्रतिजीवमावरणभेदोपगमेन व्यवस्थोपपादनीया। तदेवं ब्रह्मज्ञानान्मोक्षः। स चानर्थ-निवृत्तिर्निरतिशय-ब्रह्मानन्दावाप्तिश्चेति सिद्धं प्रयोजनम्।**

**इति श्रीमन्महामहोपाध्याय-धर्मराजाध्वरीन्द्र-**
**विरचितायां वेदान्त-परिभाषायां**
**प्रयोजनपरिच्छेदः**

विद्याकर्मस्वनुष्ठानेति क्वचित् पाठः। स च कल्पतरुसम्मतः। **एतच्च** यावदधिकाराधिकरणञ्च। **नोप**पद्यत इति। सर्वमुक्तावाधिकारिकाणामपि पुरुषाणां मुक्तेस्तेषां यावदधिकारमवस्थानायोगादिति भावः। एकाविद्यापक्षे सर्वमुक्त्यभावनिरूपणमुपसंहरति—**तस्माद्**िति। **व्यवस्था** बद्धमुक्तादिव्यवस्था। उपक्रमोपसंहारयोरैक्यं दर्शयन् प्रकरणमुपसंहरति—**तदेव**मिति। मोक्षस्य प्रयोजनत्वमुपपादयति—**स चे**ति। मोक्षश्चेत्यर्थः।

वङ्गेषु दक्षिणे भागे मेदिनीपुर-मण्डले। मालञ्च-ग्रामिक-श्रेष्ठः काश्यपान्वय-सम्भवः॥
शिरोमणिरिति ख्यातः श्रीनाथचन्द्र-भूसुरः। जनको जननी यस्य गङ्गादेवी पतिव्रता॥
प्राचार्यो यस्य च महामहोपाध्यायलाञ्छनः। धर्मरत्नैकदीक्षश्च द्राविड़ो लक्ष्मणाभिधः॥
आचार्यौ यस्य च महामहोपाध्यायभूषितौ। दर्शनाध्यापकचरौ विश्वविश्रुतकीर्त्तिकौ॥
फणिभूषण-योगेन्द्रौ गीष्पतिप्रतिमावुभौ। पञ्चाननाभिधः सोऽहं कलिकातास्थलीस्थितः॥
स्वात्मज्ञानप्रकर्षाय यं समुद्यममाचरम्। परिभाषासंग्रहोऽयं तेनैव पूर्णतां गतः॥
अम्नयष्टवसुचन्द्रांके शाकाब्दे माघसंक्रमे। परमेशार्पितो मोदं विधत्तां स विपश्चिताम्॥
यदत्र सौष्ठवं किञ्चिद् तद् गुरोरेव मे न हि। यदत्रासौष्ठवं किंचित् तन्ममैव गुरोर्न हि॥

इति श्रीमन्महामहोपाध्याय-द्राविड़-लक्ष्मण-शास्त्रि-पूज्यपाद-शिष्य-
श्रीमन्महामहोपाध्याय योगेन्द्रनाथ-तर्कसांख्यवेदान्ततीर्थ-
श्रीचरणान्तेवासि-श्रीपञ्चानन-भट्टाचार्य-विरचिते
परिभाषा-संग्रहे प्रयोजनपरिच्छेदः

**समाप्तोऽयं ग्रन्थः**

## अशुद्धि-संशोधनम्

| अशुद्धिः | शुद्धिः | पृष्ठे | पंक्तौ | अशुद्धिः | शुद्धिः | पृष्ठे | पंक्तौ |
|---|---|---|---|---|---|---|---|
| रिसित | रिप्सित | ४ | ८ | न ही | न हि | १४३ | ५ |
| साया | सायाः | ७ | १० | तत्त्तद् | तत्तद् | १४५ | १७ |
| नगिता | नधिगता | ११ | १७ | त्वमह | त्वमर्ह | १४७ | १६ |
| न्द्रीयत्वे | न्द्रियत्वे | १४ | ३ | स्यात् | भवति | १४७ | ५ |
| सति | सती | १५ | १६ | श्रत्या | श्रुत्या | १५० | २२ |
| **मानागमा** | **मानोपमा-** | | | भूतस्य | भूताया आ | १५४ | २३ |
| | **नागमा** | १८ | ५ | मित्यथः | मित्यर्थः | १६३ | २३ |
| दुख | दुःख | २४ | ६ | वाखान | व्याख्यान | १६७ | १८ |
| तेषामनो | तेषां मनो | २५ | ७ | **रोदित्या** | **रोदिदित्या** | १७३ | ४ |
| विषयोः | विषययोः | ३६ | १६ | **वैयर्थं** | **वैयर्थ्यं** | १७४ | १ |
| यागात् | योगात् | ४६ | १७ | जहोति | जुहोति | १७५ | १३ |
| वादादौ | वादादादौ | ७० | १७ | वाक्यानाम् | वाक्यानाञ्च | १७६ | २४ |
| ाधि | पाधि | ७७ | २७ | चारयति | चरति | १७७ | १८ |
| विपय | विषय | ७६ | २२ | दथ | दर्थ | „ | २६ |
| च्छक्ति | च्छक्ति | ६८ | २५ | वाक्य | वाक्ये | १७६ | १३ |
| सद्रपेण | सद्रूपेण | १०१ | २७ | विषय | विषयी | १८२ | ६ |
| वयस्य | वयवस्य | १०३ | ४ | यीगित्वम् | योगित्वम् | २०० | १६ |
| **निषध** | **निषेध** | १०७ | २ | नेन्द्रिस्य | नेन्द्रियस्य | २०६ | ७ |
| शङ्क | शङ्ख | ११३ | ६ | मेयदा | मेयादा | २०७ | २४ |
| पौण | पौर्ण | ११८ | १७ | **ण्यननुप** | **ण्यनुप** | २११ | ४ |
| योंग | यौंग | „ | २३ | घटका ये | घटको यः | २२६ | ८ |
| योग | यौग | „ | २७ | येंरिति | यैंरिति | २३० | १८ |
| वाप्य | व्याप्य | २२० | ७ | धमहेतु | धर्महेतु | २३८ | ६ |
| र्वत्तते | र्वर्त्तते | १२४ | ८ | वित्यथः | वित्यर्थः | २३६ | २७ |
| धमाभाव | धूमाभाव | १२७ | २७ | **र्लिग** | **र्लिंग** | २४५ | ७ |
| न्नवत्त | न्नवृत्त | १३४ | १२ | धंमक | धर्मक | २७१ | १७ |

---

## भाषापरिच्छेदः

सिद्धान्त-मुक्तावलीसहितः, श्रीमत्-पञ्चानन-भट्टाचार्य-शास्त्रि-प्रणीतयातीव-सरलया सुविस्तृतया मुक्तावलीसंग्रहाख्यया मुक्तावलीव्याख्यया च सहितः, द्वितीय-संस्करणे सुसंस्कृतश्च। ... ... मूल्यम् ५)

## वेदान्त-परिभाषा

श्रीमत्-पञ्चानन-शास्त्रि-प्रणीतया प्रसन्नगम्भीरया परिभाषाप्रकाशिका-शिखामणिमतखण्डिन्या विस्तृतव्याख्यया भूषिता मूल्यम् ६)

## आगमानुसन्धान-समिति-प्रकाशित-ग्रन्थावली

१। **तन्त्राभिधानम्** ( बीजनिघण्टु-मुद्रानिघण्टु-सहितम्, द्वितीय-संस्करणे परिवर्द्धितं सुसंस्कृतञ्च ) ... मूल्यम् ३)

२। **षट्चक्रनिरूपणम्** ( टीकाद्वयोपेतम् ) तथा **पादुकापञ्चकम्** ( सटीकम्, द्वितीय संस्करणे परिवर्द्धितं सुसंस्कृतञ्च ) मूल्यम् ३)

३। **प्रपञ्चसारतन्त्रम्** (भगवच्छङ्कराचार्यविरचितम्, पद्मपादाचार्य-कृतया टीकया भूषितम् ) ... मूल्यम् १५)

४। **कालीविलासतन्त्रम्** ( विस्तृतभूमिकासहितम् ) मूल्यम् ३)

५। **कर्पूरादिस्तोत्रम्** ( विस्तृतव्याख्याभूमिकाद्युपेतम् ) मूल्यम् २)

६। **कौलोपनिषद्** ( त्रिपुरोपनिषद्-भावनोपनिषद्-बह्वृचोपनिषद-रुणोपनिषत्-कालिकोपनिषत्-सहितम्, भास्कररायकृतया टीकया भूषितम् ) ... मूल्यम् २)

७। **तन्त्रराजतन्त्रम्** ( सटीकम्, द्वितीयखण्डात्मकम् ) मूल्यम् ६)

८। **कौलावलीनिर्णयः** (कौलधर्मप्रकाशकोऽत्युत्कृष्टो ग्रन्थः) मूल्यम् ४)

९। **ब्रह्मसंहिता** ( जीवगोस्वामिपादकृतया टीकयोपेता ) तथा **विष्णु-सहस्र-नामस्तोत्रम्** ( शंकराचार्यकृत-टीकयोपेतम् ) मूल्यम् ३)

१०। **शारदातिलकम्** (राघवभट्टकृतया व्याख्यया सहितम् ) मूल्यम् १५)

११। **ताराभक्तिसुधार्णवः** ( तान्त्रिकक्रियापादात्मकः ) मूल्यम् ८)

१२। **शतरत्न-संग्रहः** ( उमापतिशिवाचार्यकृत-टीकयोपेतः ) मूल्यम् २।)

१३। **चिद्गगनचन्द्रिका** ( महाकवि-कालिदास-कृता ) मूल्यम् २)

---

## भाषापरिच्छेदः

सिद्धान्त-मुक्तावलीसहितः, श्रीमत्-पञ्चानन-भट्टाचार्य-शास्त्रि प्रणीतयातीव-सरलया सुविस्तृतया मुक्तावलीसंग्रहाख्यया मुक्तावलीव्याख्यया च सहितः, द्वितीय-संस्करणे सुसंस्कृतश्च। ... ... मूल्यम् ५)

## वेदान्त-परिभाषा

श्रीमत्-पञ्चानन-शास्त्रि-प्रणीतया प्रसन्नगम्भीरया परिभाषाप्रकाशिका-शिखामणिमतखण्डिन्या विस्तृतव्याख्यया भूषिता मूल्यम् ६)

## आगमानुसन्धान-समिति-प्रकाशित-ग्रन्थावली

१। **तन्त्राभिधानम्** ( बीजनिघण्टु-मुद्रानिघण्टु-सहितम्, द्वितीय-संस्करणे परिवर्द्धितं सुसंस्कृतञ्च ) ... मूल्यम् ३)

२। **षट्चक्रनिरूपणम्** ( टीकाद्वयोपेतम् ) तथा **पादुकापञ्चकम्** ( सटीकम्, द्वितीय संस्करणे परिवर्द्धितं सुसंस्कृतञ्च ) मूल्यम् ३)

३। **प्रपञ्चसारतन्त्रम्** (भगवच्छङ्कराचार्यविरचितम्, पद्मपादाचार्य-कृतया टीकया भूषितम् ) ... मूल्यम् १५)

४। **कालीविलासतन्त्रम्** ( विस्तृतभूमिकासहितम् ) मूल्यम् ३)

५। **कर्पूरादिस्तोत्रम्** ( विस्तृतव्याख्याभूमिकाद्युपेतम् ) मूल्यम् २)

६। **कौलोपनिषद्** ( त्रिपुरोपनिषद्-भावनोपनिषद्-बह्वृचोपनिषद-रुणोपनिषत्-कालिकोपनिषत्-सहितम्, भास्कररायकृतया टीकया भूषितम् ) ... मूल्यम् २)

७। **तन्त्रराजतन्त्रम्** ( सटीकम्, द्वितीयखण्डात्मकम् ) मूल्यम् ६)

८। **कौलावलीनिर्णयः** (कौलधर्मप्रकाशकोऽत्युत्कृष्टो ग्रन्थः) मूल्यम् ४)

९। **ब्रह्मसंहिता** ( जीवगोस्वामिपादकृतया टीकयोपेता ) तथा **विष्णु-सहस्र-नामस्तोत्रम्** ( शंकराचार्यकृत-टीकयोपेतम् ) मूल्यम् ३)

१०। **शारदातिलकम्** (राघवभट्टकृतया व्याख्यया सहितम् ) मूल्यम् १५)

११। **ताराभक्तिसुधार्णवः** ( तान्त्रिकक्रियापादात्मकः ) मूल्यम् ८)

१२। **शतरत्न-संग्रहः** ( उमापतिशिवाचार्यकृत-टीकयोपेतः ) मूल्यम् २।)

१३। **चिद्गगनचन्द्रिका** ( महाकवि-कालिदास-कृता ) मूल्यम् २)

---